*Prakrit Jaina Institute Research Publication Series, Vol. 6*

*General Editor*
DR. NATHMAL TATIA, M. A., D. Litt.

श्रीमज्जिनभद्रगणिक्षमाश्रमणविरचितं श्रीमत्कोट्याचार्यकृतवृत्तिविभूषितम्

# विशेषावश्यकभाष्यम्

*Edited by*
DR. NATHMAL TATIA,
M.A., D.Litt.




Research Institute of Prakrit, Jainology and Ahimsa
Vaishali (BIHAR)



The Government of Bihar established the Research Institute of Prakrit, Jainology and Ahimsa at Vaishali (Muzaffarpur) in 1955 with the object, inter alia, to promote advanced studies and research in Prakrit and Jainology, and to publish works of permanent value to Scholars. This Institute is one of the five others planned by this Government as a token of their homage to the tradition of learning and scholarship for which ancient Bihar was noted. Apart from the Vaishali Research Institute, four others have been established and have been doing useful work during the last few years, namely, the Mithila Institute of Post-Graduate Studies and Research in Sanskrit Learning at Darbhanga, the K. P. Jayaswal Research Institute at Patna, the Bihar Rastra Bhasa Parishad for Research and Advanced Studies in Hindi at Patna and the Nalanda Institute of Research and Post-Graduate Studies in Buddhist Learning and Pali (the Nava Nalanda Mahavihara) at Nalanda (Patna).

As part of this programme of rehabilitating and reorientating ancient learning and scholarship this is the Research volume No. 6, which is the critical edition of the *Viśeṣāvaśyakabhāṣyam* with the *Vṛtti* (*Vivaraṇa*) of Koṭyācārya edited by Dr. Nathmal Tatia. The Govt. of Bihar hope to continue to sponsor such projects and trust that this humble service to the world of scholarship and learning would bear fruit in the fulness of time.

# GENERAL EDITOR'S NOTE

The *Viśeṣāvaśyaka-Bhāṣya* is a commentary on the *Āvaśyaka-Niryukti* which, though a work composed by Bhadrabāhu the junior, contains earlier *saṃgrahaṇigāthās* and *niryuktigāthās*. This work of Ācārya Jinabhadra-gaṇi-kṣamāśramaṇa (c. A.D. 489-593) is a veritable storehouse of ancient Jaina traditions and their expositions. It can be compared to Kumārila's *Ślokavārttika* and *Tantravārttika* which constitute commentaries on the *Śabara-Bhāṣya* on the *Mīmāṃsāsūtras* of Jaimini. The *Āvaśyaka-Niryukti* contains records of the earliest traditions in Jaina history and philosophy. The scope of the *Viśeṣāvaśyaka-Bhāṣya*, however, is limited to only the first chapter of the *Āvaśayakasūtra*, *viz.* the Sāmāyika-Adhyayana which can be regarded as the earliest text dealing with the rudimentary duties of a Jaina monk. It explains the *gāthās* of the *Āvaśyaka-Niryukti* in detail, incorporating the latest developments in Jaina philosophy. As an example of the early traditions recorded in the *Āvaśyaka-Niryukti*, one can refer to the prophecy made by the Ādijina *Ṛṣabha* about the Parivrājaka *Marīci* that his soul was destined to be born as the twenty-fourth Tīrthaṃkara *Mahāvīra*, The antiquity of the tradition is made plausible by a similar prophecy by the Ādibuddha *Dīpaṃkara* about Tāpasa *Sumedha* that he would be born as the last Buddha. The prophecy about the Parivrājaka *Marīci* runs as follows (*gāthās* 1781-2 of our text):

तत्थ मिरीइणामं आदिपरिव्वाअओ उसभणत्ता ।
सज्झायझाणजुत्तो एगंते अच्छति महप्पा ॥
तं दाएति जिणिन्दो एव णरिन्देण पुच्छितो संतो ।
धम्मवरचक्कवट्टी अपच्छिमो वीरणामो त्ति ॥

The Dūrenidāna of the *Jātakaṭṭhakathā* states the prophecy of *Dīpaṃkara* Buddha about the *Sumedha* Tāpasa in the following verses:

दीपङ्करो लोकविदू आहुतीनं पटिग्गहो ।
उस्सीसके मं ठत्वान इदं वचनमब्रवि ॥
पस्सथ इमं तापसं जटिलं उग्गतापनं ।
अपरिमेय्ये इतो कप्पे बुद्धो लोके भविस्सति ॥

There is characteristic difference between the courses of life followed by the two incumbents after the prophecy, which is typical of the historical background of the two organizations, *viz.* the Jaina and the Buddhist. The subject will be discussed in the introduction to the second part of our book. The *Āvaśyaka-Niryukti* abounds with such informations,

a critical study whereof will enable the scholar to reconstruct the history of religious beliefs and historical traditions that were prevalent among the followers of Jainism in the early centuries of the Christian era, and also to evaluate the antiquity of similar contents of the Pali Aṭṭhakathās. It was naturally not possible for the author of the *Viśeṣāvaśyaka-Bhāṣya* to give any supplementary information in this field, though on the development of the philosophical concepts in later times, its contribution is unique and massive.

The present book contains the text of the *Viśeṣāvaśyaka-Bhāṣya* with the *Vṛtti* (*Vivaraṇa*) of Koṭyācārya. The following printed texts have been utilized for this edition:

1. Viśeṣāvaśyakabhāṣyam with the Śiṣyahitā Bṛhadvṛtti Commentary by Maladhāri-Hemacandra (published by Shah Harakhchand Bhurabhai, Benaras City, Vira Samvat 2441).
2. Viśeṣāvaśyakabhāṣyam with the Vivaraṇa of Koṭyācārya (Ratlam, 1936).
3. Viśeṣāvaśyakabhāṣya with Auto-Commentary and the Vivaraṇa of Śrī-Koṭyācāryavādigaṇi (from L. D. Bharatiya Samskriti Vidyamandir, Ahmedabad 9, 1966-8).

As regards the date of Koṭyācārya, it has not been possible to fix it firmly. But he must have flourished before the eighth century A.D. and might have been a contemporary of Ācārya Haribhadrasūri.

I had the good fortune of securing the thoroughly revised copy of the *Vṛtti* of Koṭyācārya, belonging to the Late Muni Puṇyavijayaji who handed over the same to me along with another copy containing the readings of a manuscript belonging to the Bhandarkar Oriental Research Institute, Poona (referred to by us by the Symbol P). Muni Puṇyavijayaji's corrections and emendations, even when not supported by P, have been accepted by us. The readings of P, not accepted by Muniji, have been given in the footnotes. In many a place, Muniji has revised the text, rejecting the readings of the printed text and we have followed him, mentioning, however, in plausible cases, those readings in the footnotes, provided these were not otherwise in P.

The text of the *Viśeṣāvaśyaka-Bhāṣya* has been printed in black types in single inverted commas in the commentary, while its Sanskrit renderings have been printed in running types in single inverted commas. The quotations from other sources (and also the other gāthās or their parts quoted from the *Viśeṣāvaśyaka-Bhāṣya* itself) have been given in double

inverted commas. The Niryukti-gāthās have been numbered in accordance with the Ahmedabad Edition of the *Viśeṣāvaśyaka-Bhāṣya*.

The present volume contains about half of the commentary. The rest will be published in the second part which will also contain an introduction and critical and comparative notes mentioning the sources of the quotations in the commentary.

My indebtedness to the Late Muni Puṇyavijayaji is too deep to be expressed in words. He handed over the valuable material to me without a hitch. The book was originally intended to be jointly edited. But his sudden death has deprived us of his valuable cooperation and guidance, and has created a vacuum which would continue to be felt for many years to come by scholars working in the field of Indology in general, and Jainology in particular.

I should also thank Dr. Nand Kishore Prasad and Dr. Atul Nath Sinha for the arduous task of reading the proofs which they voluntarily took up, and also Shri Rama Shankar Pandya, Proprietor of the Tara Printing Works, Varanasi, for printing the book with care and within a short period of one month.

NATHMAL TATIA
*Director*
Research Institute of
Prakrit, Jainology and Ahimsa

Vaishali
Mahāvīra Jayantī,
*March 27, 1972.*

# CONTENTS

।। नमो वीतरागाय ।।

।। श्री मज्जिनभद्रगणिक्षमाश्रमणविरचितं श्रीमत्कोट्याचार्यकृतवृत्तिविभूषितम् ।।

# ।। विशेषावश्यकभाष्यम् ।।

नतविबुधवधूनां कण्ठमाणिक्यभास-
श्चरणनखमयूखैरुल्लसद्भिः किरन् यः ।
अकृत कृतजगच्छ्रीर्देशनां मानवेभ्यो
जनयतु जिनवीरः स्थेयसीं वः स लक्ष्मीम् ।।१।।

विकचकेतकपत्रसमप्रभा, मुनिपवाक्यमहोदधिपालनी ।
प्रतिदिनं भवताममरार्चिता, प्रविदधातु सुखं श्रुतदेवता ।।२।।

यैर्भव्याम्बुरुहाणि ज्ञानकरैर्बोधितानि ते वः सन्तु ।
अज्ञानध्वान्तभिदे **जिनभद्रगणिक्षमाश्रमणपूज्यार्काः** ।।३।।

इह तैः सकलचरणकरणक्रियाकलापाधारत्वेनापवर्गप्राप्तिहेतुमावश्यकं विशेषेण व्याचिख्यासुभिरिदमादिगाथासूत्रमभ्यधायि—

[आवश्यकानुयोगकरणप्रतिज्ञा]

**कयपवयणप्पणामो वोच्छं चरणगुणसंगहं सयलं ।**
**आवस्सयाणुओगं गुरूवएसाणुसारेणं ।।१।।**

**'कयपवयण०'** इत्यादि । अथवाऽऽवश्यकानुयोगाभिधानेन स्वपरोपकारितामुत्पश्यन्तः सन्तः पूज्यपादाः शिष्टसमयपरिपालनार्थं विघ्नविनायकोपशान्तये मङ्गलार्थमभिधेयप्रदर्शनार्थं चादाविदमुक्तवन्तः—**'कयपवयणप्पणामो'** इत्यादि । तत्र शिष्टानामयं न्यायो यदुत शिष्टाः क्वचिदिष्टे वस्तुनि प्रवृत्तिमादधानाः सन्त इष्टदेवतानमस्कारपुरःसरं प्रवृत्तिमादधतीत्यतः शिष्टसमयपरिपालनार्थम् । तथाऽयमनन्तातिपरमकल्याणतयाऽतीव श्रेयान् । श्रेयांसि च बहुविघ्नानि भवन्ति ।

"श्रेयांसि बहुविघ्नानि, भवन्ति महतामपि ।
अश्रेयसि प्रवृत्तानां, क्वापि यान्ति विनायकाः ।।१।।"

इति वचनात् । अत एतदुपशान्तये मङ्गलार्थम् । तथा निरभिधेयं काकदन्तपरीक्षावदनादरणीयं स्यादित्यतोऽभिधेयवत्ताप्रतिपादनार्थं च । तत्राऽऽद्यपादेन इष्टदेवतानमस्कारं विघ्नोपशमं चोचुः ।

अत्र कश्चित् चोद्यचञ्चुश्चुचोदयिषुराह—कुतः पुनरिह प्रवचनमेवेष्टदेवता, येनोक्तं **'कयपवयणप्पणामो'** इति । ननूच्यतां **'कयअरिहंतपणामो'** इत्यादि । उच्यते, प्रायः प्रवचनोपदेशेनैवार्वाग्दर्शिभिर्विवक्षितगुणोपेतार्हदादिपञ्चक-

नमस्कार्यस्य संप्रज्ञायमानत्वात् । पुनरप्याह—एवं नामैतद्विघ्नोपशमस्तर्हि कथमस्मादिति ? उच्यते, प्रवचनस्य श्रुताधिष्ठातृरूपत्वात् श्रुतदेवतारूपत्वात्, तन्नमस्कृतौ च विघ्नप्रणाशात् । उक्तं च—'न नाम किञ्चिदसाध्यं गुणवद्देवताप्रसादस्ये'त्येवमादि । शेषपादैस्तु प्रायोऽभिधेयमाहुरिति समुदायार्थः ।

साम्प्रतमवयवार्थः प्रतायते—तत्र 'वोच्छं' मिति क्रिया । 'वोच्छं' वक्ष्ये, अभिधास्य इत्युक्तं भवति । किमित्यत आह—'**आवस्सयाणुओगं**' ति । अवश्यं कर्त्तव्यमावश्यकं, ज्ञानदर्शनचारित्रत्रयप्रसाधकप्रतिनियतकालानुष्ठेययोगपरम्पराप्रतिसेवनमित्यर्थः । एतदुक्तं भवति—मुखवस्त्रिकाप्रत्युपेक्षणादारभ्य सकलाहोरात्रान्तर्व्याप्यसपत्नकर्त्तव्यतोक्तचक्रवालसमाचार्याचरणमावश्यकमभिधीयते । अनुयोगो वक्ष्यमाणशब्दार्थोऽर्थान्वाख्यानं विधिप्रतिषेधाभ्यां प्ररूपणमित्यर्थः । आवश्यकस्यानुयोगः आवश्यकानुयोगस्तम् । किंविशिष्टः सन् ? इत्यत आह—'**कयपवयणप्पणामो**'त्ति । कृतो—विहितो निर्वर्तित इत्यर्थः । प्रवचनमुपदेशोऽर्हद्वचनमिति यावत् । प्रोच्यन्ते अनेनास्मादस्मिन् वा जीवादय इति प्रवचनम् । अथवा प्रगतं प्रधानं प्रशस्तमादौ वा वचनं प्रवचनम् । तथाहि—प्रगतमाहुर्जीवादिषु पदार्थेष्वन्तादन्तमनेकधा सम्यग्वाचकत्वेनावगाढत्वात्, प्रधानं **श्रीमन्महावीरवर्धमानस्वामि**वचनप्रदीपाभिव्यक्तत्वात्, प्रशस्तं प्रशस्तचेतोवृत्तेर्जनकत्वात्, आदौ वचनं प्राग्वचनत्वात्, 'नमस्तीर्थाय' इति वचनात् । एतद् द्वादशाङ्गं गणिपिटकम् । यद्वा प्रवक्तीति प्रवचनं—तदुपयोगानन्यत्वेन चतूरूपः श्रीश्रमणसङ्घभट्टारक इत्यर्थः । प्रणमनं प्रणामः पूजा नमस्कारो वन्दनमिति पर्यायाः । कृतः प्रवचनप्रणामो येन मया सोऽहं कृतप्रवचनप्रणामः । तेनैतदुक्तं भवति—विहितार्हदुपदेशोपचारः, तस्य हि सकलपारलौकिकव्यवहारसाधनेऽन्तरङ्गत्वात्, "तप्पुव्विया अरिहया" इत्येवमादिवचनात् । किंविशिष्टम् ? अत आह—'**चरणगुणसंगहं**' ति । 'चर् गतिभक्षणयो'रिति । चर्यत इति चरणं, मुमुक्षुभिरासेव्यत इत्यर्थः । अथवा चर्यते—गम्यते प्राप्यतेऽनेन संसारोदधेः परं कूलमिति चरणं, तच्च रात्रिभोजनविरतिषष्ठानि पञ्च महाव्रतानीति । आह च—"वयसमणधम्मसंजम" इत्येवमादि । तथा 'गुण गण संख्याने' गुण्यन्त इति गुणाः, ते च पिण्डविशुद्ध्यादय इति । आह च—"पिंडस्स जा विसोही" इत्येवमादि । अथवा चरणशब्देनोक्तलक्षणक्रियारूपं देशादेशभेदतो द्वेधा चारित्रं सम्बध्यते, गुणशब्देन तु दर्शनज्ञाने । संगृहीतिः संग्रहः । चरणं च गुणौ च चरणगुणास्तेषां संग्रहश्चरणगुणसंग्रहस्तम् । स चाधुनैकदेशसंग्रहोऽपि सम्भाव्यत इत्याह—'**सयलं**'ति । कला अंशा अवयवा इति पर्यायाः, सह कलाभिः सकलो—निःशेषः, पारमार्थिकगुणाक्रोडनेन सम्पूर्ण इत्यभिप्रायः । कथं ? **सामायिकाध्ययन** एव द्वादशाङ्गार्थपरिसमाप्तेः । वक्ष्यति च—"सामाइयंपि तिविहं सम्मत्त" इत्येवमादि । किञ्चामुना न संगृहीतमिति । अतस्तम् । तत्रैतत्स्याद्—यो ह्यावश्यकानुयोगः स चरणगुणसंग्रह एव, तस्यातत्त्वे तत्त्वायोगात्, ततश्चापार्थकं विशेषणमिति । उच्यते, सत्यम् । अयुक्तं विशेषणमिति चेत्, तन्न, व्यवच्छेद्यस्याभावेऽपि स्वरूपान्वाख्यानतया विशेषणप्रवृत्ति-

दर्शनाद् अग्निरुष्ण इति वचनात् । अथवा नामावश्यकानुयोगादेर्व्यवच्छेदायोक्तं चरणगुणसंग्रहमिति को दोषः ?

साम्प्रतं स्वपरार्थप्रसाधनमहाविद्यासाधनोद्यतानां पूज्यपादानामपान्तराल एव विभीषिकाप्रायः परश्योदयति—ननु चायं भवतः कथयतोऽपि न केनचित् श्रोतव्यः, छद्मस्थत्वे सति भवता स्वतन्त्रतया प्ररूप्यमाणत्वात् । अस्य प्रतिविधानमाह—'गुरूवएसाणुसारेणं' ति । गृणन्ति शास्त्रार्थमिति गुरवः—तीर्थकरगणधराचार्यादयस्तेषामुपदेश इति विग्रहः । तदनुसारेण, तत्पारतन्त्र्यमङ्गीकृत्येत्यर्थः । तदनेन सम्प्रदायस्य प्रामाण्यमाह, तदप्रामाण्ये सर्वागमक्रियालोपप्रसंगात् । न चायं दुःसम्प्रदाय इति भावनीयम्, अन्यत्र महता प्रपञ्चेन परिहृतत्वात् । एतदुक्तं भवति—यश्छद्मस्थः स्वमनीषिकयाऽभिधत्ते तदप्रमाणं, तद्यथा कालिदासादिकाव्ये शैलोपवर्णनमिति गाथार्थः ।

व्याख्यातैषा गाथा मध्यमभंग्या मया जडमतित्वात् । प्राज्ञैस्तु भाजनत्वादनेकधा चर्चनीयेति । उक्तं च—

"सर्वज्ञकेवलज्ञानसागरोक्त्यमलसलिलमवगाह्य ।
किं पुण्यवान् न लभते गुणवन्ति महार्थरत्नानि ॥२॥

इत्येवमादि ॥१॥

**'तस्स फलजोगमंगल०'** इत्यादि । कोऽस्य सम्बन्ध इति चेत् । उच्यते, इहाद्यगाथायामावश्यकानुयोगोऽभिधीयमानत्वादभिधेयतया विवक्षितः । नचाभिधेयाऽऽख्यानमात्रमेव मोक्षार्थिनां कुशलपक्षप्रवृत्तिहेतुः, तस्य षष्टितन्त्रादिष्वपि श्रूयमाणत्वात् । अतोऽत्र विशिष्टं फलाद्यभिधित्सुराह—

[ द्वारगाथा ]

**तस्स फल-जोग-मंगल-समुदायत्था तहेव दाराइं ।**
**तब्भेय-निरुत्त-क्कम-पओयणाइं च वच्चाइं ॥२॥**

**'तस्से'** त्यादि । द्वन्द्वश्च समासः । तत्र 'तस्य' इति प्राक्प्रक्रान्तस्यावश्यकानुयोगस्य 'फलं' प्रयोजनं वाच्यमिति योगः । तदनाख्याने प्रेक्षावतां प्रवृत्त्ययोगात् । तत्रैतत् स्यात्—शास्त्रपरिसमाप्तौ श्रोता स्वयमेवेदं ज्ञास्यत्यतः किमादावुक्तेनेति । न, तदनाख्याने प्रेक्षावतां प्रवृत्त्ययोगादित्युक्तत्वात् । आदौ व्याख्यातेऽप्यस्मिन् संशय एव, स च प्रागप्यासीदत आख्यानानाख्यानकालयोः कः प्रतिविशेष इति चेत् । उच्यते—सत्यमेतत्, किन्त्वनाख्यानकालात् पूर्वमविशिष्टः संशय आसीद् आख्यानकालात्तु विशिष्यत इति विशेषः । ततः किमिति चेत् । उच्यते—संशयविशेषस्य च प्रवृत्तिहेतुत्वमस्ति, तथा दर्शनात् कृषीवल इव । अपि च—संशयविशेषात् प्रवृत्तस्य फलावाप्तिरपि सम्भावितेत्यलं चसूर्या, प्रकृतमभिदध्मह इति । तथा तस्य 'योगः' प्रस्तावोऽवसरो वक्तव्य इति । एवं मङ्गलं वाच्यम् । आह—किं पुनः कारणमिदं पश्चादुपादीयत इति ? उच्यते—प्रयोजनादिमत्यस्मिन् प्रतिपन्ने सति मङ्गलकरणस्य युज्यमान-

त्वात् । यद्येवं ततः शिष्टप्रवृत्तेर्निवृत्तिः, तन्निवृत्तौ[1] फलयोगवानयमिति कथमिव ज्ञातुं शक्यते ? उच्यते—आदावपि "कयपवयणप्पणामो" इत्यनेन मङ्गलाभिधानतः शिष्टप्रवृत्तिप्रवृत्तेः । न च पुनरुक्तदोषः, तस्य सामान्यमङ्गलत्वेनास्य विशेषमङ्गलत्वात्, सामान्यविशेषयोश्च कथञ्चिद् भेदादपीति । 'समुदायार्थः'—पिण्डार्थः "सावज्जजोगविरई" इत्यादिकः । 'तहेव' त्ति तथैव यथैतस्य फलादयो वाच्या । एवं 'द्वाराणि'—उपक्रमादीनि वाच्यानि । तथा 'तद्भेदाः'—द्वारभेदाः षडादयो वाच्याः । एवं निश्चितमुक्तं 'निरुक्तं' तद् वाच्यं तेषामेव, यद्वक्ष्यति "उपक्रमणमुपक्रम" इत्येवमादि । तथैतेषामेवेत्थमुपन्यासे 'कम' इति क्रमकरणे प्रयोजनं वाच्यं, वक्ष्यति च—"नानुपक्रान्तं निक्षिप्यते" एवमादि । तथा प्रयोजनं चैषां वाच्यं नगरदृष्टान्तेन । अत्रापि च द्वन्द्व एव समासः । 'चः' समुच्चयार्थः । 'वाच्यानि' वक्तव्यानि । 'प्रयोजनं' शास्त्रोपकार इति द्वारगाथासमुदायार्थः ॥२॥

साम्प्रतं "यथोद्देशं निर्देश" इति न्यायावलम्बितया फलद्वारं कथयति । अत्राह परः—यन्निष्फलं न तत्प्रेक्षावता प्रारम्भणीयं, तद्यथा—पलालपरिमर्दनं व्यतिरेकेण कलमशालिदलनम् । तथा च निष्फलोऽयमतोऽनारम्भणीयः । प्रयोजनवत्त्वेनारम्भणीयत्वं व्याप्तं, ततश्चेतो व्यापको धर्मो निवर्त्तमानो व्याप्यमादाय निवर्त्तत इति व्यापकानुपलब्धिप्रयोगः । अत्रोच्यते, निष्फलत्वादित्यसिद्धो हेतुः, अस्य मोक्षाख्यफलसद्भावात् । तथा चाह—

[फलद्वारम्]

**नाणकिरियाहिँ मोक्खो तम्मयमावस्सयं जओ तेणं ।**
**तव्वक्खाणारम्भो कारणओ कज्जसिद्धि त्ति ॥३॥**

'णाणकिरियाहिँ' इत्यादि । ज्ञातिः—'ज्ञानं', यथावस्थितपदार्थस्वरूपावभासनमिति भावः । करणं—'क्रिया', यथाज्ञानमनुष्ठानमिति भावः । ज्ञानं च क्रिया च ज्ञानक्रिये, ताभ्यां 'मोक्षः'—अष्टप्रकारकर्मविच्युतिलक्षणो भावः साध्यते । दर्शनं तु ज्ञान एवान्तर्निहितत्वान्न भेदेनाभ्यधायि । आह—किमयमाभ्यां भवन्नावश्यकव्याख्यानारम्भाद् भवति येन हेतुरसिद्धः स्यादिति । एवमित्युच्यते । कस्मादित्यत आह—'तन्मयं' ज्ञानक्रियामय'मावश्यकं' प्राग्निरूपितशब्दार्थं 'यतो' यस्मात् कारणात् 'तेणं' त्ति तेन कारणेन 'तद्व्याख्यानारम्भो' ज्ञानक्रियात्मकावश्यकानुयोगव्याख्यानारम्भः । कुतः ? एतद्भावभावित्वात् ज्ञानक्रिययोः, ज्ञानक्रियाभावभावित्वाच्च मोक्षस्येति । तस्मान्मोक्षार्थिनेदानीं भव्यानाहूय संसदि आवश्यकानुयोगः कार्यः । शास्त्रकृदाह[2] च—'कारणओ कज्जसिद्धि'त्ति कायचा कारणात् कार्यनिर्द्धिरिति कृत्वा । अत्र च कारणकारणे कारणोपचारः स्वकारणजन्यत्वेऽपि परमार्थतस्तत्कार्यत्वात्, नारकदेवायुवदिव । अन्यथा वा कथञ्चिद् व्याख्येयं, विघ्नोपशमत्वाद् भाष्यकृद्वचनस्य । अन्यथा यतः कुतश्चिद् यत्किञ्चिदुत्पद्येतेति

1 P has °वृत्ते for °निवृत्तौ.

2 P has शास्त्रकृद्‌ for शास्त्रकृदाह.

विश्वमदरिद्रं स्यात्, मृत्पिण्डादपि कटककेयूरमणिमाणिक्यकुण्डलाद्युत्पत्तेः । अतः स्थितमेतत्—हेतोः[1] सिद्धेः फलवानेष इति गाथार्थः ।।३।। द्वारम् ।।

[योगद्वारम्]

अथ योगद्वाराभिधित्सयाऽऽह—

**भव्वस्स मोक्खमग्गाहिलासिणो ठियगुरूवएसस्स ।**
**आईए जोग्गमिणं वालगिलाणस्स वाऽऽहारं ।।४।।**

**कयपंचनमोक्कारस्स दिति सामाइयाइयं विहिणा ।**
**आवासयमायरिया कमेण तो सेसयसुयं पि ।।५।।**

'**भव्वस्से**'त्यादि । तत्रेहानादिपारिमाणिकभव्यभावयुक्तः सत्त्वविशेषो 'भव्य' उच्यते । भव्यो योग्यो दलमिति पर्यायाः । तस्य भव्यस्य । इयं च षष्ठी चतुर्थ्यर्थे द्रष्टव्या, तथा प्रक्रमाद् । ततश्चैवं भवति—भव्याय । स च

"नेरइयासुरएगिंदिविगलपंचिंदिया तिरिक्खा य ।
मणुया वंतर जोइस वेमाणी······ ।।"

इत्येवमाद्यविशिष्टचतुर्विंशतिदण्डकस्थोऽपि भवतीत्याह—'**मोक्षमार्गाभिलाषिणे**' निर्विण्ण[2] संसारप्रपञ्चायेत्यर्थः । अथवा भव्योऽनन्तवनस्पत्यादिरपि स्यादित्यत आह—'मोक्षमार्गाभिलाषिणे' संज्ञिने इत्युक्तं भवति । स चाविशिष्टोऽपि स्यादत आह—'स्थितः' परिणतः कर्त्तव्यतया 'गुरूपदेशो' यस्य स तथोच्यते । तस्मै गुणवदाचार्यकृतोपदेशायेत्यभिप्रायः । 'आदौ' प्रथममशेषार्हद्वचनाध्ययनकाले 'योग्यं'—प्रायोग्यम्, उचितत्वादिति भावना । '**इणं**' ति इदं सूत्ररूपमावश्यकमिति सम्बन्धः । कस्येव किमित्यत आह—वालस्येवाऽऽहारं—नवनीतादिं मातापितरा-विति गम्यते । तथा ग्लानस्येवाहारं पेयादिं भिषग्वरा इति गम्यते ।।४।।

किंविशिष्टाय भव्याय ? इत्यत आह—'**कयपंच०**' इत्यादि । 'कृतपञ्च-नमस्काराय' उपहितपञ्चनमस्कारमङ्गलाय । '**देंति**' त्ति ददति । किंविशिष्टं सूत्ररूपमावश्यकमित्यत आह—'**सामाइयाइयं** सामयिकमादिर्यस्य तत् सामायिका-दिकं, संज्ञायां कन् । कथं ददतीत्याह—'विधिना' प्रशस्तद्रव्यक्षेत्रकालभावलक्षणेन प्रशस्तदिगभिमुखाय वेति । के ? अत आह—'आचार्याः' धर्म्माचार्यादयः । तथा च—"पंचविहे आयरिए पन्नते, तंजहा—धम्मायरिए पव्वावणायरिए उवट्ठावणा० वायणा० वक्खाणायरिए" । तत ऊर्ध्वमस्मै किं न किञ्चिद्ददतीत्यत आह—'क्रमेण ततः शेषकमपि श्रुत'माचारादि तावद्यावत्समस्तश्रुतोदधेः परं पारं गत इति गाथार्थः ।।५।।

एवं तावत्सूत्रप्रदानक्रममभिधायाधुनाऽर्थप्रदानक्रममभिधित्सुराह—

**तेणेव याणुयोगं कमेण तेणेव याहिगारोऽयं ।**
**जेण विणेयहियत्थाय थेरकप्पवकमो एसो ।।६।।**

---

1 P adds अ.

2 P adds सकल.

'**तेणेव०**'इत्यादि । 'तेनैव च'—पञ्चनमस्कारक्षेत्रीकृतसूत्रप्रदानलक्षणेन 'क्रमेण' । कम् ? 'अनुयोगं'—सूत्रार्थान्वाख्यानं, भव्यायाचार्या ददतीति वर्त्तते । ननु चानयोः क्रमयोः कतमेनाधुनाऽधिकार इत्यत आह—'तेनैव च'—अनेनैव च, अनुयोगक्रमेणेत्युक्तं भवति । 'अधिकारः'—अधिकृतम् । 'अय'मिति योऽयमस्माभिरधिक्रियते, सूत्राध्ययनकालस्यातिक्रान्तत्वात् । कुत एवमयं क्रम इत्यत आह—'येन' कारणेन 'विनेयहितार्थाय' शिष्यजनानुग्रहाय । 'स्थविरा' नाम गच्छवासिनस्तेषां 'कल्पः'—आचरणविशेष इति स्थविरकल्पस्तस्मिन् 'क्रमः'—परिपाटी उत्तरोत्तरगुणान्तरप्राप्तिलक्षणेति । 'एष' इति वक्ष्यमाणलक्षण इति गाथार्थः ॥६॥

किंविशिष्टोऽसावित्यत आह—

**पव्वज्जा-सिक्खा-वय-मत्थग्गहणं च अनिअओ वासो ।**
**निप्फत्ती य विहारो सामायारी ठिई चेव ॥७॥**

'**पव्वज्जा०**' इत्यादि । इह हि प्रथमं "चत्तारि परमंगाणि दुल्लहाणि" इत्येवमादिप्रपञ्चश्रवणतोऽभिजातपरमाधिगमसम्यग्दर्शनतयानिर्विण्णसकलसंसाराय भव्यसत्त्वाय क्षयोपशमीभूतचारित्रावृतये प्रशस्तद्रव्यादिषु विधिनाऽष्टप्रकारकर्मरोगविरेचनभूता भगवदर्हदुक्ता 'प्रव्रज्या' दीयते । पुनश्च '**सिक्ख**'त्ति शिक्षामसौ ग्राह्यते ।

"सा पुण दुविहा सिक्खा—गहणे आसेवणे य नायव्वा ।
गहणे सुत्ताहिज्जण आसेवण तिप्पकप्पाती ॥१॥"

पुनश्चाधीतशस्त्रपरिज्ञाध्ययनोऽभिरुचितकृतषड्जीवनिकायपरिपालनः परीक्षितगुणः सन् 'वत'त्ति पञ्चमहाव्रतेषु रात्रिभोजनविरतिषष्ठेषु उपस्थाप्यते । वितिआदेसेणं सिक्खावयत्ति कोऽर्थः ? वारस संवच्छराइं सुत्तं पाढिज्जइ, वारस य वरिसाइं '**अत्थगहणं**' ति अर्थग्रहणं कार्यते, वारस य वरिसाइं '**अणियतो वासो**' त्ति अनियतवासं वसति, समस्तदेशदर्शनं करोति, नानादेशवेषभापाऽऽचरणादि जानन् सुखेनैव तत्तद्देशजनविनेयगणस्वभावज्ञतया सम्भाविको भवितुमर्हतीति । तच्च देशदर्शनं कुर्वन् अन्यान्निष्पादयति शिष्यत्वेन स्वयं च निष्पद्यते आचार्यत्वेन, समस्तगुणभृत्त्वात् । अत आह—'**निप्फत्ती य**'त्ति । पुनश्चैवमसौ निष्पद्यते—पुनश्च परिणमति । सति वयस्यनेनैव क्रमेणान्यस्मिन् योग्ये शिष्ये आचार्यपदे व्यवस्थापिते सत्यत्रान्तरे '**विहारो**'त्ति विहारमसौ प्रतिपद्यत इत्यर्थः । स च द्विविधो विहारः—अभ्युद्यतमरणं वा अभ्युद्यतविहारो वा । '**सामायारि**' त्ति द्विविधेऽपि सामाचारी वाच्या । तत्राद्ये—

"णिप्फाइया य सिस्सा सउणी जह अंडयं पयत्तेणं ।
वारस संवच्छरियं सो संलेहं अह करेइ ॥१॥
चत्तारि विचित्ताइं विगई निज्जूहियाइं चत्तारि ।
संवच्छरे य दोन्नि उ एगंतरियं च आयामं ॥२॥

नाइविगिट्ठो य तवो छम्मासे परिमियं च आयामं ।
अन्नेऽवि य छम्मासे होइ विगिट्ठं तवोकम्मं ।।३।।
वासं कोडीसहियं आयामं काउ आणुपुव्वीए ।
गिरिकंदरं तु गंतुं पायवगमणं अह करेइ ।।४।।"

अभ्युद्यतविहारे तु जिनकल्पप्रतिपत्त्यादौ, सा चैवम्—

"तवेण सत्तेण सुत्तेण, एगत्तेण वलेण य ।
तुलणा पंचहा वुत्ता, जिणकप्पं पडिवज्जतो ।।१।।
पढमा उवस्सयंमी विइया बाहिं तइया चउक्कंमि ।
सुन्नहरम्मि चउत्थी अह पंचमिया मसाणंमि ।।२।।"

सत्त य से एसणाओ, तंजहा—

"संसट्ठमसंसट्ठा उद्धड तह होइ अप्पलेवा य ।
उग्गहिया पग्गहिया उज्झियधम्मा य सत्तमिया ।।१।।
पंचसु गहो[1], दोसु अभिग्गहो, भत्तं पंथो य ततियाए ।"

एवमादि । तथा 'ठिती चेव' त्ति तत्र च द्विविधेऽपि विहारे स्थितिः—श्रुतसंहननादिका वक्तव्येति । यत एवमयं क्रमोऽतः तेणेव याधिकारोऽयमिति गाथार्थः ।।७।।

अधीतपञ्चनमस्कारायेदं ददतीत्युक्तमत आह—

**आईए नमोक्कारो जइ पच्छाऽऽवासयं तओ पुव्वं ।**
**तस्स भणिएऽणुओगे जुत्तो आवस्सयस्स तओ ।।८।।**

**'आदीए०'** इत्यादि । 'यदि' इत्यभ्युपगमप्रदर्शनार्थः । तेनैतदुक्तं भवति—यदि गुरुभिः शिष्य'स्यादौ' नमस्कारो दीयते पश्चा'दावश्यकं' 'ततः' तस्मात् 'पूर्वम्'—आदौ 'तस्य' नमस्कारस्य 'भणिते' कृते 'अनुयोगे' अर्थान्वाख्याने, 'युक्तो' घटमानः **'आवश्यकस्य'** षडध्ययनसमुदायात्मकस्य श्रुतस्कन्धविशेषस्य 'ततः' पश्चादनुयोगः । किं कारणम् ? इत्थमेव पठनक्रमात् "तेणेवयाणुयोगं कमेण" इति वचनादिति गाथार्थः ।।८।।

आचार्य आह—नैतदेवं, कारणसद्भावात्, तथाहि—

**सो सव्वसुअक्खन्धब्भन्तरभूओ जओ तओ तस्स ।**
**आवासयाणुओगादिगहणगहिओऽणुओगोऽवि ।।९।।**

**'सो सव्व'** इत्यादि । 'सः' नमस्कारः 'सर्वश्रुतस्कन्धाभ्यन्तरभूतो यतस्ततस्तस्यावश्यकाद्यनुयोगग्रहणगृहीतोऽनुयोगोऽपि', न केवलं स इति । 'आदि'शब्दस्तूक्तवद् भिन्नक्रम इति गाथार्थः ।।९।।

---

1 अग्गहो P.

आह—कथं पुनरसौ "सर्वश्रुतस्कन्धाभ्यन्तर" इत्येतदुक्तं भवति, कः पुनरत्रैवं प्रत्यय इत्यत आह—

तस्स पुणो सव्वसुयब्भंतरया पढममंगलग्गहणा ।
जं च पिहो न पढिज्जइ नंदीए सो सुयक्खंधो ।।१०।।

'तस्स पुण' इत्यादि । 'तस्ये' ति नमस्कारस्य । 'पुनः' शब्द आगमिकप्रत्ययविशेषोपदर्शनार्थः । 'सर्वश्रुतस्कन्धाभ्यन्तरता' प्रथममङ्गलग्रहणात् प्रतीयत इति । एतदुक्तं भवति—सर्वस्याः खल्वावश्यकश्रुतस्कन्धादिमङ्गलमालाया धुर्यत्वात् । 'जं च' त्ति यस्माच्चासौ नमस्कारो 'न पृथग्'—आवश्यकादिभ्यो भेदेन नन्द्यां पठ्यते श्रुतस्कन्धत्वेन, अस्ति चासावतः 'तस्स पुण सव्वसुतक्खंधब्भंतरते' ति प्रत्ययः । आह परः—किन्ति 'ण पिहो पढिज्जइ णंदीए सो सुयक्खंधो' आवश्यकश्रुतस्कन्धादिभ्यः, सूत्ररूपत्वात् दशवैकालिकादिश्रुतस्कन्धवत् ? उच्यते, सर्वश्रुतस्कन्धादित्वेन तदन्तर्भूतत्वज्ञापनार्थमेवेति भावितम् ।।१०।।

अमुमेवार्थं स्मरयन् प्रत्ययान्तरमाह—

तेणं चिय सामाइयसुत्ताणुगमाइओ नमोक्कारं ।
वक्खाणेउं गुरवो वयंति सामाइयसुयत्थं ।।११।। दारं।।

'तेणं चिए'त्यादि । 'तेणं चिय' त्ति अत एव सकलश्रुतनमस्कारपूर्वकत्वादेव 'सामायिकसूत्रानुगमादौ नमस्कारं व्याख्याय गुरवः' श्रीमद्भद्रबाहुस्वामिमिश्रा 'वदन्ति' व्याख्यानयन्ति 'सामायिकसूत्रस्यार्थम्' । अतः "आदीए नमोक्कारो जइ पच्छाऽऽवासयं ततो पुव्व" मित्यादि चोद्यमचोद्यमिति गाथार्थः ।।११।।द्वारम्।।

[मङ्गलद्वारम्]

अथ मङ्गलद्वारमाह—

बहुविग्घाइं सेयाइं तेण कयमंगलोवयारेहिं ।
घेत्तव्वो सो सुमहानिहिव्व जह वा महाविज्जा ।।१२।।

'बहु' इत्यादि गाथा कण्ठ्या । नवरं येनेति कर्त्तव्यं, यत्तदोर्नित्याभिसम्बन्धात् ।।१२।।

तच्च मंगलं शास्त्रस्य क्वेष्यत इत्यत आह—

तं मंगलमाईए मज्झे पज्जन्तए य सत्थस्स ।
पढमं सत्थत्थाऽविग्घपारगमणाय निद्दिट्ठं ।।१३।।

'तं मंगलमि'त्यादि । 'तन्मङ्गलमादौ शास्त्रस्य' क्रियते, तथा 'मध्ये पर्यवसाने चे'ति । एकैककरणप्रयोजनमाह—'प्रथमं शास्त्रार्थाविघ्नपारगमनाय निर्दिष्ट'मिति गाथार्थः ।।१३।।

तस्सेव य थेज्जत्थं मज्झिमयं अंतिमंपि तस्सेव ।
अव्वोच्छित्तिनिमित्तं सिस्सपसिस्साइवंसस्स ।।१४।।

'तस्सेवे'त्यादि । 'तस्यैव' शास्त्रार्थस्य प्रथममंगलकरणप्रसादादविघ्नेन परं पारमुपागतस्य सतः 'स्थैयार्थ मध्यमं', निर्दिष्टमिति वर्तते । तथा'ऽन्त्यमपि तस्यैव' प्रथममंगलकरणात् तथाभूतस्य सतः 'अव्यवच्छित्तिनिमित्तम्' । कस्येत्याह—'शिष्यप्रशिष्यादिवंशस्य' । निर्दिष्टमिति वर्त्तते । नात्मार्थमेव शास्त्राधिगतिरिष्यत इति गाथार्थः ॥१४॥

यदुक्तं "तं मंगलमाईए' इत्यत्राह चोदकः—

**मंगलकरणा सत्थं न मंगलं अहव मंगलस्सावि ।**
**मंगलमओऽणवत्था न मंगलममंगलत्ता वा ॥१५॥**

**'मंगलकरणा'**दित्यादि । तत्र शास्यन्ते जीवादयोऽनेनेति 'शास्त्रम्' । तच्छास्त्रं धर्मित्वेनोपादीयते । 'न मङ्गलमि'ति साध्यो धर्मः । धर्म्मधर्म्मिसमुदायः पक्षः । कुत इत्याह—'मंगलकरणात्' । कोऽभिप्रायः ? मंगलकरणान्यथानुपपत्तेः, अमङ्गलाविनाभूतत्वान्मङ्गलविधानस्येत्युक्तं भवति । एप एको दोषः । अथ द्वितीयदोषनिदानमाह—'अथवा मङ्गलस्यापि मङ्गल'मुपादीयते, ततश्च नामंगलाविनाभूतमेव मङ्गलविधानमित्यत आह—'अतः' । एवं च सति—यदि मङ्गलाविनाभूतमेव मंगलविधानमिति भावना । 'अनवस्थानम्' अनाश्वासोऽविराम इति यावत् । प्रयोगः—शास्त्रमङ्गलमन्यमंगलसहायं सदात्मकार्यं करोतु मंगलत्वात् शास्त्रवत् । भवति च विशेषे पक्षीकृते सामान्यं हेतुर्यथाऽनित्यो वर्णात्मकः शब्दः शब्दत्वान्मेघशब्दवत् । एवमन्यमङ्गलमपि मङ्गलत्वाच्छास्त्रमंगलवत् । एवमन्यदन्यन्मङ्गलमपि मंगलत्वाच्छास्त्रमंगलवदित्यनवस्था । अथैवमनिवारितप्रसराऽप्यापतन्तीयं नाभ्युपेयते, ततस्तृतीयदोषमाह—**'न मंगलं'** ति । न शास्त्रमंगलं मंगलं । प्रयोगः—यदन्यमंगलशून्यं तन्मंगलमपि सन्मंगलं न भवति, तद्यथा शास्त्रम् । अन्यमंगलशून्यं च शास्त्रमंगलम् । तस्मादिदं मंगलमपि सन्न मङ्गलमिति स्थितम् । ततः किमनिष्टमत आह—**'अमंगलत्ता व'**त्ति त्रैलोक्येऽपि सकलमङ्गलाभाव इत्यर्थः, अन्यमङ्गलशून्यत्वात् । तत्त्वे च मङ्गलस्याप्यमङ्गलत्वादमङ्गले च मङ्गलाभावात् । अथवा **'अमङ्गलत्ता वा, न मङ्गल'** मिति कृत्वैवं नारब्धव्यमिति । अथवा मङ्गलकरणाच्छास्त्रं न मङ्गलमित्येको दोषः । अथवेह मङ्गलात्मकस्यापि मङ्गलमतोऽनवस्था । न चेदियमिष्यते स्ववचनप्रमाणतया शास्त्रमङ्गलस्यान्यस्य वा क्वचित् स्वत एव मङ्गलत्वप्रतिष्ठानादिति, हन्त प्रथमस्य तथाभावे प्रद्वेषः किंनिबन्धन इति वाच्यम् । अथेदानीमाद्यो दोषो निगम्यते—न चेदनवस्थाऽङ्गीक्रियते ततः स्थितमेतत्—न मङ्गलं शास्त्रमिति सामर्थ्याद् गम्यते, स्वतोऽमङ्गलरूपत्वात्, मङ्गलान्मङ्गलीभवमानत्वात् । अथेष्यतेऽनवस्था तत इदमपरमाह—अमङ्गलता वा अपरस्याभावे पौरस्त्याभावात् तावद्यावच्छास्त्रमङ्गलाभावे शास्त्रस्याभावादिति चोदकगाथार्थः ॥१५॥

अत्रोच्यते—सर्वमेतदाकाशरोमन्थनं, तथा चाभ्यधायि—

"नामङ्गलत्वं शास्त्रस्य, नानवस्थापि बुध्यते ।
न चापि मङ्गलस्योक्तिर्निष्फलेत्येतदाह च ॥१॥"

सत्थऽत्थन्तरभूयम्मि मंगले होज्ज कप्पणा एसा ।
सत्थम्मि मंगले किं अमंगलं काऽणवत्था वा ॥१६॥

'सत्थत्थन्तर' इत्यादि । काक्वा 'सत्थऽत्थंतरभूतंमि मङ्गले होज्ज कप्पणा' परिकप्पणा 'एसा' यदुत मङ्गलकरणादि । अत्र भवतो वयमपि सहाया इत्यभिप्रायः । शेषस्त्वत्र चर्चः स्वयमेव कार्यः, न तु क्रियते ग्रन्थविस्तरभयादिति । अथवा शास्त्रा[1]न्तरभूते मङ्गलेऽभ्युपगम्यमाने सत्यस्माभिः 'होज्ज कप्पणा एस'त्ति स्यादियं कल्पना—युज्येतेयं परिकल्पना भवतो यदुत मङ्गलकरणादित्येवमादि, यावता 'सत्थम्मि मंगले' त्ति साक्षात् शास्त्रस्यैव मङ्गलस्वभावत्वे सति मङ्गलोपादाने च शास्त्रादनर्थान्तरे सतीति भावनीयम् । 'किं अमंगलं' ति तदमङ्गलं यद्देवानांप्रियेणोत्प्रेक्षितमिति प्रथमदोषपरिहारः । द्वितीयदोषपरिहारमाह—'काऽणवत्था व'त्ति का वाऽनवस्था नाम ? तृतीयदोषपरिहारस्तु मूलच्छेदात्, मूलच्छेदस्तु शास्त्रानर्थान्तरभूतमङ्गलाभ्युपगमादिति । यद्येवं किं मङ्गलोपादानमिति चेत् । उच्यते—वक्ष्यति, मा त्वरिष्ठाः, "सीसमतिमंगलपरिग्गहत्थमेत्तं तदभिधाण" मिति वचनादिति गाथार्थः ॥१६॥

साम्प्रतं साहाय्ये प्रतिपन्नेऽपि समर्थवादितया दुर्घटमपि पराभ्युपगमं घटयन्नाह—

अत्थंतरेऽवि सइ मङ्गलम्मि नामंगलाऽणवत्थाओ ।
सपराणुग्गहकारिं पईव इव मंगलं जम्हा ॥१७॥
मंगलतियंतरालं न मंगलमिहऽत्थओ पसत्तं ते ।
जइवा सव्वं सत्थं मंगलमिह किं तियग्गहणं ॥१८॥
सत्थे तिहा विहत्ते तदन्तरालपरिकप्पणं कत्तो ।
सव्वं च निज्जरत्थं सत्थमओऽमंगलमजुत्तं ॥१९॥
जइ मंगलं सयं चिय सत्थं तो किमिह मंगलग्गहणं ।
सीसमइमंगलपरिग्गहत्थमेत्तं तदभिहाणं ॥२०॥
इह मंगलंपि मंगलबुद्धीए मंगलं जहा साहू ।
मंगलतियबुद्धिपरिग्गहेऽवि नए कारणं भणिअं ॥२१॥

'अत्थंतरे वि'त्यादि । 'अर्थान्तरेऽपि सति मङ्गले' मते, यस्यापि शास्त्रादर्थान्तरं मङ्गलमित्युक्तं भवति, 'नामङ्गलवत्ता' शास्त्रस्य, 'नापि चानवस्था' कस्मादित्याह—'यस्माद् मङ्गलं स्वपरानुग्रहकारि' । एतदुक्तं भवति, यथा मङ्गलमात्मनि मङ्गलपरिणामं करोतीत्येवं शास्त्रेऽपि मङ्गलपरिणामं कारयतीति वक्ष्यमाणोऽभिप्रायः । 'पईव इव' त्ति दृष्टान्तः । तथा हि प्रदीपः स्वात्मानं प्रकाशयति तथा गृहरन्ध्रान्तर्वर्तिघटपिटकपिठरस्थस्तम्भेभादि च, न पुनरात्मनि प्रकाशयितव्येऽन्यत्प्रदीपान्तरमपेक्षते येनानवस्था स्यात् । न च लवणमलवणं सल्लवणीकरोतीत्यत्रापि विपर्यय इति भावनीयं, देशतो दृष्टान्ताभ्युपगमात् ।

---

1 P adds र्थ.

अन्यथा "आहरणे तद्देसे तद्दोसे चेवुवन्नासे" इत्यादेर्निर्विषयत्वं स्यात्। अत उच्यते—"तं मंगलमाईए मज्झे पज्जंतए य सत्थस्से" ति गाथार्थः ॥१७॥

अत्र पुनरप्याह चोदकः—'मंगलतिय' मित्यादि। मङ्गलस्य त्रयमादिमध्यान्तभेदादिति समासः। तस्यान्तरमिति विग्रहः। तद् न मङ्गलम्, 'इह'—अस्मिन् मङ्गलप्रघट्टे 'अर्थतः' अर्थगत्या प्राप्तं सत् तत् 'ते' तव सूरेः। किं कारणम्? मङ्गलेनाव्याप्तत्वादनभिमतशास्त्रान्तरवत्। इदं परिजिहीर्षोः सूरेर्मतमाशङ्क्याह—'यदि वा' अथ चेदं विशेषेण 'सर्वं शास्त्रं मङ्गलमिह' अतः 'किं त्रितयग्रहणं' येनोच्यते "तं मंगलमादीए" इत्येवमादि। अपान्तरालामङ्गलत्वं वा प्रतिपद्यस्व मङ्गलत्रयग्रहणं वा मा कृथा इति चोदकगाथार्थः ॥१८॥

गुरुराह—'सत्थे' इत्यादि। 'शास्त्रे' सम्पूर्णे मंगलात्मके बुद्धया 'त्रिधा विभक्ते' विच्छिन्ने सति 'तदन्तरालपरिकल्पनं' शास्त्रापान्तरालपरिकल्पनं 'कुतः'? कस्मात्? येन तदव्याप्तेस्तत्रामंगलता स्यात्। ननु सुविवेचितवक्तारो धीधना भवन्ति, नहि धर्मिण्यसति धर्मा भवितुमर्हन्ति। प्रयोगः—यत्सम्पूर्णं त्रेधा विवक्ष्यते तस्यापान्तरालाभावः, तद्यथा मोदकस्य, तथा च शास्त्रमिति तदसम्भवः, अतश्चापान्तरालद्वयासम्भवः। 'सव्वं चे' त्यादि पच्छद्धं कंठम्। 'सर्वं शास्त्रं मंगलं निर्जरार्थत्वात्' तपोवदिति गाथार्थः ॥१९॥

एवं तावच्चोद्यद्वयं परिहृतमथ यदुक्तं प्रथमचोद्यं परिहरता "सत्थम्मि मंगले किं अमंगलं" ति तदधिकृत्याधुना विप्रतिपन्नमतिश्चोदक आह—'जदी' त्यादि। 'यदि मंगलं स्वत एव शास्त्रमि'[1]ष्यतेऽनवस्थादिभयादितः 'किमिह' शास्त्रे मंगलग्रहणं, येनोच्यते "तं मंगलमादीए" इत्येवमादि? कं हि तत्त्रोपादीयमानमतिशयमाधत्त इत्युक्तं भवति। आचार्यः पश्चार्धमाह—शिष्यस्य मतिः शिष्यमतिः। तस्या मंगलपरिग्रहः। सोऽर्थो यस्याभिधानस्य तत्तथा। शिष्यमतिमङ्गलपरिग्रहार्थमेव 'शिष्यमतिमङ्गलपरिग्रहार्थमात्रम्'। 'तदभिधानं'—मङ्गलाभिधानम्। एतदुक्तं भवति—नार्थान्तरभूतमिदमुपादीयते, किन्तु मङ्गलमित्येतदित्येवं ज्ञाप्यते, मङ्गलरूपेऽप्यस्मिन् तद्धिया खल्वव्यवहरन्तं व्यवहारिणमिदं व्यवहारयति, कथं नु नामामुतो मङ्गलमिदमित्येवं शिष्योऽभिगृह्णीयाद्, अतो भिन्नमङ्गलोपादानमिति यावदिति गाथार्थः ॥२०॥

किं मंगलमपि अतद्बुद्धया गृह्यमाणं मंगलकार्यं न करोति? उच्यते, न करोति। तथा च—'इहे' त्यादि। 'इह' लोके 'मङ्गलमपि' सद्वस्तु 'मंगलबुद्धया'ऽभिगृह्यमाणमभिनन्द्यमानं वा 'मंगलं' भवति, न विपर्यये। उदाहरणमाह—'यथा साधुः'। साधुर्हि मंगलभूतोऽपि संस्तद्बुद्धयाऽभिगृह्यमाणः प्रशस्तचेतोवृत्तेर्भव्यस्य मङ्गलकार्यं करोति, न पुणो मङ्गलंपि अमङ्गलबुद्धीए मङ्गलं भवति यथा साधुरेव कालुष्योपहतचेतोवृत्तेरभव्यस्य। ननु चैवममङ्गलंपि मङ्गलबुद्धीए मङ्गलं, जहा

1 दी P.

असाहू व्यतिरेकसामर्थ्यात्। न, असाधोः स्वतो मङ्गलशून्यत्वात्। तथाहि सत्यमणिमेव सत्यमणितयाऽभिगृह्य विपणौ गौरवमाप्नोति, नेतरम्। ननु यदि "सीसमतिमङ्गलपरिग्गहत्थमेत्तं तदभिहाण" मिति स्थितं, तत एकमेव तर्हि मङ्गलमस्तु, किं त्रितयपरिकल्पनयेत्यत आह—'मङ्गलत्रयबुद्धिपरिग्रहेऽपि ननु कारणं भणितं' "पढमं सत्थत्थाविग्घपारगमणाय निद्दिट्ठ" मित्येवमादि। पुनरप्याह—एकमेव मङ्गलं शास्त्रार्था[1]विघ्नपारगमनादिफलं भविष्यतीति। उच्यते, यथा हि—साधुमङ्गलं मङ्गलबुद्धिग्रहणापेक्षं सदात्मकार्यं करोति, एवं शास्त्रमप्यादिमङ्गलबुद्धिपरिग्रहणापेक्षमेवात्मकार्यं करोति। एवं मध्यान्तयोरपीत्यतः सकलापायशुद्धं मङ्गलमुपादेयमिति स्थितिमिति गाथार्थः ॥२१॥

मङ्गलं शान्तिर्विघ्नकलापविद्रावणमिति पर्यायाः। अथास्य तत्त्वं शब्दार्थरूपमभिधित्सुराह—

मंगिज्जएऽधिगम्मइ जेण हिग्रं तेण मंगलं होइ।
अहवा मंगो धम्मो तं लाइ तयं समादत्ते ॥२२॥
अहवा निवायणाओ मंगलमिट्ठत्थपगइपच्चयओ।
सत्थे सिद्धं जं जह तयं जहाजोगमाओज्जं ॥२३॥
मं गालयइ भवाओ व मं लमिह एवमाइनेरुत्ता।
भासंति सत्थवसओ नामाइ चउव्विहं तं च ॥२४॥

'मंगिज्जए' इत्यादि। तत्र मङ्गिगत्यर्थस्यालच्प्रत्ययान्तस्य मङ्गलमिति रूपं भवति। ततश्च 'मङ्ग्यते' किमुक्तं भवति? 'अधिगम्यते'ऽनेन मङ्गलेन हितं प्राप्यते 'येन' कारणेन 'तेन' कारणेन 'मङ्गलं भवति'। 'अथवेति' प्रकारान्तरप्रदर्शनार्थः। 'मङ्ग इति धर्मस्याऽऽख्या'। "ला आदाने"। ततश्च मङ्गं 'लातीति मङ्गलं धर्ममादत्ते', धर्मोपादानहेतुरित्यर्थः। इति गाथार्थः ॥२२॥

'अथवे'त्यादि। 'अथवा निपातनान्मङ्गलं' क्रियते। कथमित्याह—'इष्टार्थप्रकृतिप्रत्ययतः'। तत्र इष्टो यथाविवक्षितोऽर्थो यासां प्रकृतीनां ता इष्टार्थाः प्रकृतयः। तद्यथा—"मकि मण्डने", "मन ज्ञाने", "मदी हर्षे", "मुद मोदनस्वप्नगतिषु", "मह पूजाया" मित्येवमादि। प्रत्ययस्तासामलच् इति। ततश्च मङ्गलमिति रूपं भवति। तेनैतदुक्तं भवति—मङ्क्यते—अलंक्रियतेऽनेन शास्त्रमिति मङ्गलम्। एवं मन्यते—ज्ञायते नानेनात्र विघ्नो भवतीत्येवं प्रतीयत इति भावना। तथा माद्यन्ति—हृष्यन्ति। तथा मुदिता भवन्ति; एवं शेरते—अनेन विघ्नाभावतो निष्प्रकम्पा भवन्तीति; तथा गम्यते—अन्तं नीयतेऽनेनेति मङ्गलम्। एवं महान्तेऽनेनेति मङ्गलमेवमादि। एवं 'शास्त्रे'—व्याकरणे 'सिद्धं'—प्रतिष्ठितमुपलब्धं वा 'यद्' मङ्गलं 'यथा' येन प्रकृतिप्रत्ययविधानेन 'तद्यथायोगं'—यथाभिप्रेतार्थ'मायोज्यम्'—आयोजनीयं स्वधिया, परिज्ञानफलत्वात् शास्त्राध्ययनस्येति। अथवा निपातनान्मङ्गलं, किंविशिष्टात्? इष्टार्थौ प्रकृतिप्रत्ययौ यस्मिन् तत्तथा

1 P omits र्था.

तस्मात्। किमत आह—'सत्थे' इत्यादि। पच्छद्धं पूर्ववत्। अथवा निपातनान् मङ्गलं, किमुक्तं भवतीत्याह—इष्टार्थप्रकृतिप्रत्यययोरुपादानात्। शेषं प्राग्वत्। अथवा निपातनान्मङ्गलं, यदा चैवं तदा 'इट्ठत्थे'त्यादि सर्वं पठनीयं भावनीयं चेति गाथार्थः ॥२३॥

'मं ग'लयती'त्यादि। 'मां गालयतीति भवाद्वेति मङ्गलम्', गालनमपनयनं, भवः—संसारः। शास्त्रस्य वा मा भूद् गालो—विघ्नो भविष्यतीति, गलनं गालो नाश इत्यर्थः। मार्गलयनाद्वा मङ्गलं, स च सम्यग्दर्शनादिः। उपसंजिहीर्षुराह—'इह'—अस्मिन् प्रस्तावे 'एवमादि नैरुक्ताः'—शब्दविदो 'भाषन्ते'—व्याचक्षते। 'शास्त्रवशतो'—व्याकरणानुसारेण। कियदत्र पुनर्व्याख्यास्यामः! साम्प्रतं "तत्त्वपर्यायभेदैर्व्याख्ये"ति भेदत आह—'**नामाइ चउव्विहं तं चे**' ति गाथार्थः ॥२४॥

[नामादिनिक्षेपव्याख्या]

तत्र नाममङ्गलं स्थापनामङ्गलं द्रव्यमङ्गलं भावमङ्गलं चेत्यतो नामलक्षणाभिधित्सया तावदिदमाह—

**पज्जायाणभिधेयं ठिअमण्णत्थे तयत्थनिरवेक्खं।**
**जाइच्छिअं च नामं जावदव्वं च पाएणं ॥२५॥**
**जं पुण तयत्थसुन्नं तयभिप्पाएण तारिसागारं।**
**कीरइ व निरागारं इत्तरमियरं व सा ठवणा ॥२६॥**
**जह मंगलमिह नामं जीवाजीवोभयाण देसीओ।**
**रूढं जलणाईणं ठवणाए सोत्थिआईणं ॥२७॥**

'**पज्जायाणभिधेयं०**' इत्यादि। इह पर्याया अभिन्नार्थप्रतिपादका इन्द्रः शक्रः पुरन्दरो मघवान् वज्रपाणिरित्यादयोऽभिधेयपरिणामास्तैरनभिधेयमिति 'पर्यायानभिधेयम्'। किं तदिति चेद्। उच्यते—भृतकदारके यदिन्द्रनाम—इन्द्रसंज्ञेति सामर्थ्याद् गम्यते। कथं स्थितमित्याह—'स्थितमन्यार्थे' प्रतिष्ठितमन्यस्मिन् पिण्डे, परमार्थतो देवाधिपेऽवस्थानात्। अथवा 'स्थितमन्वर्थे'—प्रतिष्ठितमन्वर्थसंज्ञानिवन्धनवतीन्द्रार्थे इन्दनाद् इन्द्र इति कृत्वा। अत एवाह—'तदर्थनिरपेक्षं' इन्द्रार्थनिरपेक्षं, संज्ञासंव्यवहारायारोप्यमाणत्वात्। इदं नाम्नो लक्षणम्। अथवा 'यादृच्छिकं नाम', अन्यत्रावर्तमानत्वात्, डित्थवत्, विवक्षया देवदत्ताद्यप्यन्वर्थशून्यत्वात्। तथा 'यावद्द्रव्यभावि च' यत्। किं यावद्द्रव्यभाव्येव? नेत्याह—'प्रायेण'—प्रायशो वाहुल्यमङ्गीकृत्य कस्यचिदपान्तराल एवापनीयमानत्वात्। यत्तु सूत्रोपदिष्टं "नाम आवकहियं"ति तत्प्रतिनियतजनपदसंज्ञामेवाङ्गीकृत्य, **यथोत्तराः कुरव**

इत्यादि ।[1] नमनाद् नाम, मंगलं तु अभिधीयमानम् । नाम च तद् मंगल चेति नाममङ्गलमिति गाथार्थः[1] ।।२५।।

'जं पुण' इत्यादि । 'यत्पुनः' पुनः शब्दो नाम्नः स्थापनाया लक्षणवैलक्षण्य-प्रतिपादनार्थः । यत्पुनर्वस्तु 'तदर्थशून्यं' सद्भावार्थशून्यं सत् 'तदभिप्रायेण'—भावेन्द्राभिप्रायेण 'क्रियते'—स्थाप्यते, काष्ठपुस्तचित्रकर्म्माक्षनिक्षेपादाविति गम्यते । कथं तदभिप्रायेणेत्याह—'तारिसागारं निराकारं वा', 'वा'शब्दस्य भिन्न-क्रमत्वात् । कियन्तं कालमित्याह—'इत्वरं'—स्तोकं कालम् । 'इतरं व' त्ति यावत्-कथिकं कालम् । तत्रेत्वरकालमिह स्याद्, इतरं तु देवलोकादौ । ि.ष्ठतीति स्थापनेतिकृत्वा 'सा ठवण'त्ति तद्वस्तु स्थापना । स्थापना चासौ मङ्गलं च स्थापनामङ्गलमिति गाथार्थः ।।२६।।

उभयत्रोदाहरणमाह—'जहे'—त्यादि । 'यथा मंगलमिह नाम रूढं' संज्ञा प्रवृत्ता 'ज्वलनादीनां देशीतः' । तत्र जीवस्य, मंगलमिति नाम सिन्धुविषयेऽग्नेः । अजीवस्य, लाटदेशे दवरकवलनस्य । उभयस्य, वन्दनमालायाः । स्थापनायाः स्वस्तिकादेः स्थापनामंगलता रूढेति गाथार्थः ।।२७।।

द्रव्यलक्षणमाह—

दवए दुयए दोरवयवो विगारो गुणाण संद्दावो ।
दव्वं भव्वं भावस्स भूअभावं च जं जोग्गं ।।२८।।
आगमओऽणुवउत्तो मंगलसद्दाणुवासिओ वत्ता ।
तन्नाणलद्धिसहिओऽवि नोवउत्तोत्ति तो दव्वं ।।२९।।
जइ नाणमागमो तो कह दव्वं दव्वमागमो कह ण ।
आगमकारणमाया देहो सद्दो य तो दव्वं ।।३०।।

'दवए०' इत्यादि । 'दवते दव्वं'ति सर्वपदेषु सम्बन्धः । किमुक्तं भवति ? "दु द्रु गतौ" । ततश्च 'द्रवती'ति द्रव्यं, स्वपर्यायान् याति क्षरति चेति भावः । तथा 'द्रूयत' इति—स्वपर्यायैर्गम्यते मुच्यते चेति भावना । "विविक्षातश्च कार-काणी"ति । तथा 'दोरवयवो'त्ति 'द्रु' इति सत्ता तस्या 'अवयवो विकारो' वा । तथा गुण्यन्त इति 'गुणाः', संख्यायन्त इत्यर्थः, तेषां संद्रवणं 'संद्रावः', समुदायभवन-मित्यर्थः । ततश्च रूपादिसमुदायो द्रव्यमिति भावनीयम् । तथा 'भव्यं'—योग्यं 'भावस्य'—भाविनः पर्यायस्य यत्तद् द्रव्यमिति वर्त्तते । तथा 'भूतभावं चे'ति भूतो भावो यस्य तत्तथा तच्च, 'च'शब्दात् पुरस्कृतपश्चात्कृतभावं वेति गृह्यते । तथा 'जं जोग्गं'ति । इह तु विशेषेण भव्यमधिक्रियते, योग्यं यदित्यर्थः । द्रव्यं च तन्मङ्गलं चेति द्रव्यमङ्गलमिति गाथार्थः ।।२८।।

तच्च द्वेधा—आगमनोआगमभेदात् । तत्र आगमतस्तावदाह—'आगमतो' इत्यादि । 'आगमतः' आगममाश्रित्य, आत्मदेहशब्दानधिकृत्येत्यभिप्रायः । द्रव्य-मंगलमिति गम्यते । कोऽसावित्यत आह—'अनुपयुक्तो वक्ते'ति सम्बन्धः ।

[1]...[1] Wanting in P.

उपयोगशून्यो मंगलाध्येता, ज्ञानशून्यः प्रज्ञापक इति यावत् । किंविशिष्ट इत्यत आह—'मंगलशब्दानुवासितो' मंगलशब्दार्थज्ञानावरणक्षयोपशमसंस्कारानुरञ्जितमनाः, तज्ज्ञानलब्धिमानित्यर्थः । ननु यदि तज्ज्ञानलब्धिमान् किमिति तर्हि द्रव्यमंगलमयमित्यत आह—'तण्णाणलद्धिसहितोवि' मंगलज्ञानावरणक्षयोपशमवानपि 'नोपयुक्त'स्तत्रेति, यस्मादेवं 'तो' ततः 'द्रव्य'मिति गाथार्थः ।।२९।।

तत्रैतत्स्यात्—कोऽयमागमो यमाश्रित्यायं द्रव्यमंगलमिति । अत्रोच्यते, ज्ञानम् । चोदक आह—'जती' त्यादि । 'यदि ज्ञानमागमस्ततः कथं द्रव्यं' येनायमागमतो द्रव्यमंगलं स्यात् ? 'द्रव्यं चेत् कथमागमो' ? द्रव्यस्य द्रव्यत्वादागमस्य च ज्ञानत्वात् । तस्मादागमतो द्रव्यमंगलमिति विरुद्धम् । उच्यते, 'आगमस्य' कार्यरूपस्य 'कारणं' मूलम् । किमत आह—'आत्मा देहः शब्दश्च' । 'तो' ततो 'द्रव्य'मागमः, देहादिषु तदुपचारतया कारणे कार्योपक्षेपादिति गाथार्थः ।।३०।।

अधुना को नयः किमागमतो द्रव्यमंगलमिच्छतीत्यस्यां जिज्ञासायामिदं सूत्रम्—

एगो मंगलमेगं णेगा णेगाइं णेगमनयस्स ।
संगहनयस्स एक्कं सव्वं चिय मंगलं लोए ।।३१।।

एक्को (क्कं) निच्चं निरवयवमक्कियं सव्वगं च सामन्नं ।
निस्सामन्नत्ताओ नत्थि विसेसो खपुष्फं व ।।३२।।

चूओ वणस्सइच्चिय मूलाइगुणोत्ति तस्समूहो व्व ।
गुम्मादओऽवि एवं सव्वे न वणस्सइविसिट्ठा ।।३३।।

सामन्नाउ विसेसो अन्नोऽणन्नो व होज्ज जइ अण्णो ।
सो नत्थि खपुष्फंपिवऽणण्णो सामन्नमेव तयं ।।३४।।

नविसेसत्थंतरभूअं अत्थि सामण्णमाह ववहारो ।
उवलंभव्ववहाराभावाओ खरविसाणं व ।।३५।।

चूयाईएहिंतो को सो अण्णो वणस्सई नाम ।
नत्थि विसेसत्थंतरभावाओ सो खपुष्फं व ।।३६।।

जं णेगमववहारा लोअव्ववहारतप्परा सो य ।
पाएण विसेसमओ तो ते तग्गाहिणो दोऽवि ।।३७।।

तेसिं तुल्लमयत्ते को णु विसेसोऽभिहाणओ अन्नो ।
तुल्लत्तेऽवि इहं नेगमस्स वत्थंतरे भेओ ।।३८।।

जो सामण्णग्गाही स नेगमो संगहं गओ अहवा ।
इयरो ववहारमिओ जो तेण समाणनिद्देस ।।३९।।

'एगो मंगलमेगं०' इत्यादि । नैगमनयस्य हि 'एगो'ऽणुवउत्तो 'एगं' दव्वमंगलं', 'णेगा' अणुवउत्ता 'णेगाइं' दव्वमंगलाइं, सामान्यविशेषसङ्ग्राहित्वात् । "लोए वसामि", "जंबुद्दीवे वसामी"त्यादिवचनात् । 'संग्रहनयस्य' तु 'सर्वस्मिन्नपि

लोके एकमेव द्रव्यमंगलं', सर्वेषां मंगलत्वसामान्याव्यतिरेकाद्, व्यतिरेके चातत्त्वप्राप्तेः, सामान्यस्य च भुवनेऽप्येकत्वादिति गाथार्थः ॥३१॥

आह च—'एक्कमि'त्यादि ।' एकम्'—एकसंख्योपेतमसहायत्वात् । एकमपि क्षणिकं स्यादित्यत आह—'नित्य'मनपायि । नित्यमप्याकाशवत् सावयवं स्यात्, निरवयवत्वे पतंगस्योदयास्तमयायोग इत्यत आह—'निरवयवं' निरंशं पूर्वापरकोटिशून्यत्वात् । निरवयवमप्यणुवत् स[1]क्रियं स्यादत आह—'अक्रियं' [2]परिस्पन्दानालीढस्वभावत्वात्[2] । यतश्चैकमक्रियं च 'सर्वगं' च सकललोकावाप्तसत्ताकं च, एवं च कृत्वेदमेवेहास्ति, नान्यद्वस्त्वन्तरमनवबुद्ध्यमानत्वात् । तथाहि—'निस्सामन्नत्तातो' सामन्नविरहियत्तातो 'णत्थि विसेसो खपुप्फं व' । विशेषो[3] घटादिः । तस्मादस्यैकमेव मंगलं, सर्वेषां मंगलसामान्यानुगमादिति गाथार्थः ॥३२॥

अथैतद् विजिघटयिपुर्व्यवहारश्चोदयति—नैकमिदं, किन्त्वनेकानि । कथम् ? यथा वनस्पतिरित्याकारिते वृक्षगुल्मलतावितानवीरुदादय एव विशेषाः प्रतीयन्ते, एवं मंगलमित्युक्ते तद्विशेषानेव प्रतिपत्स्यामह इत्यतः किमेवं शून्य इवास्मिन् जगतीदमभिहितं, यदुत "निस्सामन्नत्तात" इत्येवमादि । संग्रह आह—ननु यत एव वनस्पतिरित्याकारिते वृक्षादयः प्रतीयन्ते, अत एव ते तदनर्थान्तरास्तत्प्रत्ययहेतुत्वात् हस्तस्येवांगुल्यः । कि[4] नाम हस्त इत्याकारितेऽङ्गुल्यः प्रतीयन्ते किमेतावताऽत्र तद्व्यतिरिक्ते तद्बुद्धिरनुभूयते येनैवं भवता गर्ज्यत इति । अथैतन्मतमेवास्थाय सुहृद् भूत्वा सूरिरमुमेवार्थमाह—'चूतो' इत्यादि । इह 'चूतो' वृक्षविशेषः विशेषतया परिकल्प्यमानो 'वनस्पतिरेव'—सामान्यमेवेति प्रतिज्ञा । मूलकन्दस्कन्धत्वक्पत्रप्रवालादिगुणत्वाद् चू[5]तादि'समूहवत्' । सिद्धश्च दृष्टान्त आवयोरिति । एवं गुल्मोऽपि, तत एव हेतोस्तद्वदेवेति । आह च—'गुल्मादयोऽपि' विशेषा 'एवं'—यथोक्तं, न 'वनस्पतेर्विशिष्टाः', न भिन्ना इत्यर्थः । भेदे मृदादिमयत्वप्रसंगात् ॥३३॥

अथ व्यवहारं प्रतिकूलं ज्ञात्वा संग्रह उपचयमाह—'सामण्णओ०' इत्यादि । प्रथमविकल्पे दूषणं—'यद्यन्यो नास्त्य'सौ निःसामान्यत्वात् 'खपुष्पवत्', 'अथानन्यः सामान्यमेवासौ' तदनन्यत्वात् तत्स्वात्मवत् । सामान्ये वाऽतिपक्षपातितया विशेषोपचारः क्रियते, नचोपचारेणार्थतत्त्वं चिन्त्यते, वस्तुस्थितिस्थितत्वाद् धीधनानाम् । तस्मादेकमेव तद् द्रव्यमंगलमिति गाथार्थः ॥३४॥

एवं संग्रहेण स्वपक्ष उक्ते व्यवहारनैगमांशावाहतुः—ननु त्वयाप्ययं वनस्पतिर्बकुलचम्पकाशोकपुन्नागनागाश्वत्थसर्ज्जार्जुनादिभ्योऽर्थान्तरो वा कल्प्येतानर्थान्तरो वा? अर्थान्तरश्चेन्नास्ति वनस्पतिविशेषार्थान्तरभावान्निर्विशेषत्वात्

1 सत् P.
2...2 परिस्पन्दरहितं P.
3 विपक्षो P.
4 P adds यदि.
5 भू P.

खपुष्पवत् खरविषाणवदेव वा । अनर्थान्तरश्चेत् त एवासौ, तदनर्थान्तरत्वात् तन्मूर्तिवत् । विशेषेषु वाऽत्यनुरागितया वनस्पतिरित्युपचारः क्रियते, न चोपचारेणार्थतत्त्वं चिन्त्यते, वस्तुस्थितिस्थितत्वाद् बुद्धिविभवानाम् । तथा चैतन्मतमास्थायाधुना सूरिराह—'ण विसेस०' इत्यादि, 'ण विसेसेहिंतो अत्थंतरभूतं सामण्णं' वणस्सइत्ति । क एवमाहे'त्याह व्यवहारः' । विशेषसामान्ययोः व्यवनाद्धरणाच्च व्यवहारः । तथा नैगमांशश्च, एकग्रहणे ग्रहणं तज्जातीयानामिति कृत्वा, तज्जातीयत्वं च विशेषाभ्युपगमाविशेषात् । कुत इत्याह—'उवलम्भावात्' । अत्यन्तानुपलब्धेरित्यर्थः । 'खरविषाणवदि'ति दृष्टान्तः । तथा 'व्यवहाराभावात्' । शेषं तदेवेति गाथार्थः ॥३५॥

तथाहि—'**चूता०**' इत्यादि । '**चूताईएहिंतो को सो अण्णो वणस्सई नाम**' यो व्रणलेपादावुपयुज्यते ! तम्हा '**णत्थि सो विसेसत्थंतरभावातो**'—विसेसेहिंतो संतरूवेहिंतो अत्थंतरत्तणओ 'खपुष्पवत्'—आगासकुसुमं वेति गाथार्थः ॥३६॥

किं पुनरिमावेवं प्रतिपन्नावित्यत आह—'**जं णेगम०**' इत्यादि । 'यतो नैगमव्यवहारौ लोकसंव्यवहारप्रवणौ, स च' त्यागादानादिव्यवहारः 'प्रायेण विशेषैरित्यतस्तौ विशेषग्राहिणा'विति गाथार्थः ॥३७॥

अत्राह—'**तेसिं**'मित्यादि । 'तयो' र्नैगमांशव्यवहारयोः । 'तुल्यमतत्वे'—प्रभूतद्रव्यमंगलाभ्युपगमतः सदृशाभिप्रायत्वे 'को नु विशेषोऽन्यो' ? न कश्चिदित्यभिप्रायः । किं सर्वथा नेत्याह—'अभिधानतो' ऽभिधानतस्त्वस्तीत्यभिप्रायः । 'तुल्यत्वेऽपि'—समानतायामपि । 'इह'—द्रव्यमंगलाधिकारे, 'नैगमस्य' व्यवहारेण सह 'वस्त्वन्तरे' सामान्यविशेषाभ्युपगमलक्षणे 'भेदो' बोद्धव्यः, अर्थतोऽपीति वाक्यशेषः । यथा वा वस्त्वपेक्षया सर्वनयानां द्रव्यपर्यायास्तिकनयद्वयेऽव(वि)रोधस्तथाऽनयोरपि विशेषमात्रतायामपीति गाथार्थः ॥३८॥

'**जो**' इत्यादि । कोऽस्य सम्बन्धः ? अथवा तेसिं तुल्यमतत्वख्यापनेन सामान्यविशेषद्वयग्राहिणो नैगमस्य द्वितीयतृतीयनययोरव(वि)रोधो द्रष्टव्यस्तमाह—'**जो**' इत्यादि । भावितार्थैवेति । आह—एवमेतावेव वस्तुसन्तौ, नायं, परिकल्पितत्वादिति । अत्रोच्यते, नैतदेवमुपरिष्टाद् विशेषाभिधानादिति व्यवहार इति गाथार्थः ॥३९॥

**उज्जुसुअस्स सयं संपयं च जं मङ्गलं तयं एक्कं ।**
**नातीतमणुप्पन्नं मङ्गमिट्ठं परक्कं च ॥४०॥**
**नातीयमणुप्पन्नं परकीयं वा पओअणाभावा ।**
**दिट्ठंतो खरसिङ्गं परधणमहवा जहा विफलं ॥४१॥**

'**उज्जुसुतस्स**' इत्यादि । 'ऋजु'—अकुटिलं सूचयतीति 'ऋजुसूत्रस्तस्य ऋजुसूत्रस्य' । किमत आह—'यन्मंगलं तदेकम्'—असहायम् । किं विशिष्टमित्यत आह—'स्वक'मात्मनीनमपरायत्तम् । किं यद् नयान्तरदर्शनेनापि ? नेत्याह—

'साम्प्रतं' वर्त्तमानक्षणभाव्येव। अत्रैवानभिमतप्रतिषेधमाह—**'नातीतमणुप्पन्नं'** नातीतानुत्पन्नक्षणभाव्यपीत्यर्थः। **'मङ्गलमिष्टं'** मंगलमभिरुचितम्। द्वितीयानभिमतप्रतिषेधमाह—**'परक्कं वा'** परकीयं वा। अर्थापत्तिगम्योऽपि चार्थ उच्यते, शिष्यमतिपरिकर्मणार्थत्वादस्य शास्त्रारम्भस्य। त्रिविधाश्च शिष्याः—केचिदुद्घटितज्ञाः, केचिन्मध्यमधियः, केचित् तु प्रपञ्चितवेत्तार इति गाथार्थः ।४०॥

अमुमेवार्थं यथायोगं प्रयोगद्वारेणाह—**'णातीत'**मित्यादि। नातीतानुत्पन्नमृजुसूत्रस्यास्ति, 'प्रयोजनाभावात्'—प्रयोजनाकरणात्। **'दिट्ठंतो खरसिङ्गं'** खरविषाणवत्। **'परधणमहवा जहा विफलं'** ति, अथवा परधनवत्। यथा परधनं प्रयोजनाकरणान्मम नास्ति एवमतीतानुत्पन्नमपीति। **'परकीयं वे' ति**[1] परकीयमपि नास्ति प्रयोजनाकरणात्। **'दिट्ठंतो'** खरविषाणमिति गाथार्थः ॥४१॥ इति ऋजुसूत्रः।

शब्दादयस्त्वागमतो द्रव्यमंगलमिति न प्रतिपद्यन्ते, कस्मात् ?—

**जाणं नाणुवउत्तोऽणुवउत्तो वा न जाणई जम्हा।**
**जाणंतोऽणुवउत्तोत्ति विति सद्दादयोऽवत्थुं ॥४२॥**
**हेऊ विरुद्धधम्मत्तणा हि जीवो व्व चेअणारहिओ।**
**न य सो मङ्गलमिट्ठं तयत्थसुन्नोत्ति पावं व ॥४३॥**

'जाण'मित्यादि। 'जम्हा' इति, यस्मात् 'जानन्' अवबुध्यमानो, मंगलमिति गम्यते। 'नानुपयुक्तो'—न ज्ञानशून्यो भवति, ज्ञस्य ज्ञा[न]नान्तरीयकत्वात्। तथा'ऽनुपयुक्तो वा' तत्र 'न जानीते' नावबुध्यते, तदिति गम्यते। यस्मात् 'जाणए अणुवउत्ते'त्ति 'ब्रुवते शब्दादयः'—शब्दसमभिरूढैवंभूता 'अवस्तु' असदिति गाथार्थः ॥४२॥

हेतुमाह—'हेतू' इत्यादि। 'विरुद्धधर्माध्यासितत्वाच्चेतनारहितजीववत्'। एतदुक्तं भवति—यथा जीवश्चेतनारहितश्चेत्येतदवस्तु, विरुद्धत्वाद्, एवमागमतोऽपि द्रव्यमंगलमिति। यदि ज्ञोऽनुपयुक्तो न, अनुपयुक्तो ज्ञो न, माता मे वन्ध्यावदिति भावना। अपि च—'न चासावनुपयुक्तो मंगलमिष्टं, तदर्थशून्यत्वात्'—मंगलार्थशून्यत्वात्, 'पापवत्'। तस्मादमी भावमंगलग्राहिण एव। उक्तमागमतो द्रव्यमंगलमिति गाथार्थः ॥४३॥

अथ—

मङ्गलपयत्थजाणयदेहो भव्वस्स वा सजीवोऽवि।
नो आगमओ दव्वं आगमरहिओ त्ति जं भणिअं ॥४४॥
अहवा नो देसम्मि नोआगमओ तदेगदेसाओ।
भूयस्स भाविणो वाऽऽगमस्स जं कारणं देहो ॥४५॥

1 व' त्ति P.

जाणयभव्वसरीराइरित्तमिह दव्वमंगलं होइ ।
जा मंगल्ला किरिआ तं कुणमाणो अणवउत्तो ।।४६।।
जं भूयभावमंगलपरिणामं तस्स वा जयं जोग्गं ।
जं वा सहावसोहणवन्नाइगुणं सुवण्णाई ।।४७।।
तंपि य हु भावमंगलकारणओ मंगलं ति निद्दिट्ठं ।
नोआगमओ दव्वं नोसद्दो सव्वपडिसेहे ।।४८।।

'मंगल' इत्यादि । 'नोआगमओ दव्वं' ति नोआगमतो द्रव्यमंगलमुच्यते । तच्च त्रेधा सूत्रोक्तं "जाणयसरीरदव्वमंगल"मित्येवमादि सर्वमुच्चारणीयं । आद्यं तावदाह—'मंगलपयत्थजाणयदेहो' व्यवगतचूतचइयादिगुणविसिट्ठोत्ति वाक्यशेषः । यथा 'भव्वस्स वा सजीवोऽवि' देह इति वर्त्तते । एकमतीतकालनयानुवृत्त्या, अपरं त्वेष्यत्कालनयाऽनुवृत्त्या, मधुघृतघटदृष्टान्तादिति भावः । गाथापादत्रयस्यापि भावार्थमाह—'आगमरहितोत्ति जं भणितं' ति आगमरहितत्वादिति यदुक्तं भवति । कुत एवं चेत्, उच्यते, 'नो'शब्दस्य सर्वप्रतिषेधवचनत्वादिति गाथार्थः ।।४४।।

'अहवे'त्यादि प्रकारान्तरार्थः । ततश्च 'नो' इति णोकारः । 'देसंमि'त्ति देशवचनो वा विवक्ष्यते । ततश्च 'नोआगमतो दव्वमंगल'मिति कोऽर्थ इत्याह—'तदेगदेसातो' त्ति मंगलज्ञानैकदेशात् । किं ? अयं देहो नोआगमतो द्रव्यमंगलमिति प्रक्रमः । कुत इत्यत आह—'भूतस्स' वृत्तस्य 'भाविनो' वा वर्त्स्यद्वृत्त्या 'आगमस्य' मंगलज्ञानलक्षणस्य 'यद्' यस्मात्'कारणं' निमित्तं 'देहो' शरीरम् । एतदुक्तं भवति—मंगलज्ञानं कार्यं कारणं देहः । कारणं च कार्यस्यैकदेशे वर्त्तते यतोऽतः 'नोआगमतो' इत्यागमैकदेशतः । कारणस्य च कार्यैकदेशतायामुदाहृतिः—

"नत्थि पुढवीविसिट्ठो घडोत्ति जं तेण जुज्जइ अणण्णो ।
जं पुण घडोत्ति पुव्विं[1] नासी पुढवी ततो अन्नो ।।१।।"

अथ ब्रूषे—मंगलज्ञानाख्यमतिज्ञानस्य समवायिकारणमात्मा, न तु शरीरम् । अतः कथं शरीरस्य कार्यैकदेशतेति ? उच्यते, संसारिशरीरसंसार्यात्मनोरेकान्तेन विभागाभावात् । उक्तञ्च—

"अन्नोऽन्नाणुगयाणं इमं व तं वत्ति विभयणमजुत्तं ।
जह खीरपाणियाणं [जावन्ति विसेसपज्जाया] ।।"

इत्येवमादि । अथ वक्ष्यसि "आगमकारणमाता देहो सद्दो य" त्ति वचनात् शरीरमेवागमतो द्रव्यमंगलमुक्तमासीदिहापि च तदेवेत्यविशेषात् पौनरुक्त्यदोष इति । तन्न, तत्र मंगललब्ध्याधारस्य विवक्षितत्वात्, अनयोस्तु तच्छून्ययोरिति गाथार्थः ।।४५।।

---

1 व्वं P.

अथ—'जाणए'त्यादि । पुव्वद्धं कंठं । कतमदित्याह—'या माङ्गल्यक्रिया' मुखवस्त्रिकादिप्रत्युपेक्षणलक्षणा 'तां कुर्वन्ननुपयुक्तश्च' "अनुपयोगो द्रव्य"मिति वचनात्, आगमतोऽनुपयुक्तद्रव्यमंगलवत् । व्यतिरिक्तत्वं त्वस्य तयोर्ज्ञानापेक्षित्वादस्य तु क्रियापेक्षित्वादिति गाथार्थः ।।४६।।

अथ क्रियापेक्षयैवैतदाह—'जं भूत०' इत्यादि । 'तं पि य हु०' इत्यादि । 'यद्'—आत्मशरीरं वस्तु 'भूतो'—वृत्तः 'भावरूपः क्रियामंगलपरिणामो' यस्य तत्तथा । 'नोआगमतो दव्वं' ति नोआगमतो द्रव्यमंगलम् । 'नोसद्दो सव्वपडिसेहे' त्ति नोशब्दस्य सर्वप्रतिषेधत्वात्, ज्ञानपक्षे ज्ञशरीरद्रव्यमंगलवत् । तथा 'तस्स वा' भावमंगलपरिणामस्स 'जं जोग्गं' । शेषं प्राग्वत् । तथा 'जं वा स्वभावेनैव शोभनवर्णादिगुणम्' । किञ्च तदित्याह—'सुवर्णम्' । 'आदि'शब्दान्मरकतवज्रेन्द्रनीलवैडूर्यपद्मरागादिपरिग्रहः । तत्किमित्यत आह—'तदपि च भावमंगलकारणत्वान्मङ्गलमेवेति निर्दिष्टं', "ज्ञशरीरभव्यशरीरव्यतिरिक्तं दध्यक्षतसुवर्णादी" ति वचनादिति गाथाद्वयार्थः ।।४७-४८।।

तदेवमुक्तं द्रव्यमंगलम् । अथ भावमंगलम् ।

"भावो विवक्षितक्रियानुभूतियुक्तो हि वै समाख्यातः ।
सर्वज्ञैरिन्द्रादिवदिन्दनादिक्रियानुभवात् ।।१।।"

भावतो मंगलं भावमंगलम् । अथवा भावश्चासौ मंगलं चेति । तद् द्विभेदमागमनोआगमभेदात् । तत्र—

**मंगलसुयउवउत्तो आगमओ भावमंगलं होइ ।**
**नोआगमओ भावो सुविसुद्धो खाइयाईओ ।।४९।।**

**अहवा सम्मद्दंसणनाणचरित्तोवओगपरिणामो ।**
**नोआगमओ भावो नोसद्दो मिस्सभावंमि ।।५०।।**

**अहवेह नमुक्काराइनाणकिरिआविमिस्सपरिणामो ।**
**नोआगमओ भण्णइ जम्हा से आगमो देसे (सो) ।।५१।।**

'मंगल०' इत्यादि । मंगलं च तत् श्रुतं चेति 'मङ्गलश्रुतम्' मंगलज्ञानमित्यर्थः । तस्मिन्नुपयुक्तो 'मङ्गलश्रुतोपयुक्तः' । वक्तेति गम्यते । 'आगमतो भावमंगलं भवति' ज्ञातुस्तन्मयत्वात् । ननु कथमिह मंगलोपयोगमात्रात्तन्मयता ? नह्यग्निज्ञानोपयुक्तो माणवकोऽग्निरेव भवितुमर्हति, तदर्थक्रियाऽप्रसाधकत्वादित्यभिप्रायः । उच्यते—उपयोगो ज्ञानं संवेदनमिति पर्यायाः । ततश्च "अर्थाभिधानप्रत्ययास्तुल्यनामधेया" इति सर्वप्रवादिनामविसंवादस्थानम् । यथा कोऽयं ? घटः । किमयमाह ? घट इति । किमस्य ज्ञानं ? घट इति । तथाऽग्निरिति च यज्ज्ञानं तदव्यतिरिक्तो ज्ञाता तल्लक्षणोऽभिगृह्यते, अन्यथा तज्ज्ञाने सत्यपि नोपलभेत, अतन्मयत्वात्, प्रदीपहस्तान्धवत्, पुरुषान्तरवद्वा । न चानाकारं तज्ज्ञानं, पदार्थान्तरवद्विवक्षितपदार्थस्याप्यपरिच्छेदप्रसंगात् । वन्वाद्यभावश्च,

ज्ञानाज्ञानसुखदु:खपरिणामस्यान्यत्वादाकाशस्येव । न चानलः सर्व एव स्वसत्तां विभ्रदात्मकार्यं करोति, भस्मच्छन्नेन व्यभिचारात्, न चासौ नाग्निरिति, लोकादिप्रतीतेरिति । द्वारं । 'नोआगमतो' त्ति नोआगमतो भावमंगलमिति । किमित्याह- 'भावः' । किंविशिष्ट इत्याह—'सुविशुद्धः' पटीयान् । कोऽसावित्याह— 'क्षायिकादिः' । तत्र क्षायिकश्चारित्रं दर्शनं च । 'आदि'शब्दादौपशमिको दर्शनचारित्रादि, सर्वप्रतिषेधवचनत्वात् नोशब्दस्येति । अथवाऽऽगमवर्ज्जं ज्ञानचतुष्टयमिति गाथार्थः ।।४९।।

'अहवे'त्यादि । 'अहवा सम्मद्दंसणणाणचरित्तोवयोगपरिणामो' जो स न आगम एव, चारित्रादिसद्भावात्, नाप्यनागमः, ज्ञानस्यापि सद्भावात् । अतोऽसौ 'नोआगमतो भावमंगलं', यतः 'नोसद्दो मीसभावम्मी'ति गाथार्थः ।।५०।।

'अहवे'त्यादि । 'अथवे'ति प्रकारान्तरार्थः । 'इह' नोआगमतो भावमंगलाधिकारे नमस्करणं 'नमस्कार', अर्हदादिप्रणतिरित्यर्थः । स आदिर्येषां स्तोत्रादीनां ते नमस्कारादयस्तेषु ज्ञानम्—उपयोगो 'नमस्कारादिज्ञानम्' । 'क्रिया'—शिरसि करकमलमुकुलविधानादिका । नमस्कारादिज्ञानं च क्रिया च नमस्कारादिज्ञानक्रिये, ताभ्यां 'विमिश्र' इति विग्रहः । पुनर्विशेषणसमासः । स किमित्यत आह— 'नोआगमतो भण्यत' इति । कस्मादित्याह—'यस्मात् से' अस्य एतावतः परिणामस्य 'आगमो'—नमस्कारज्ञानोपयोग 'एकदेशो'ऽवयवभूतः । तदेवं मंगलचतुष्टयमावेदितमिति गाथार्थः ।।५१।।

तदेवं मंगलस्य भेदतो व्याख्यायां कृतायां कश्चिद् अभिधानस्याकारद्रव्याविनाभूतत्वाद् "जस्स णं जीवस्स वा अजीवस्स वे"त्येवमादिवचनात्, आकारस्य चाभिधानद्रव्यताऽऽलिंगितत्वाद् "यत् स्थाप्यत" इति वचनात्, द्रव्यस्यापि चाभिधानाकाररूपत्वात्, "द्रवती"त्येवमादिवचनात् त्रयस्यापि च भावशून्यत्वेनाविशेषाद् विशेषमपश्यन्नाह—

**अभिहाणं दव्वत्तं तयत्थसुन्नत्तणं च तुल्लाइं ।**
**को भाववज्जिआणं नामाईणं पइविसेसो ।।५२।।**
**आगारोऽभिप्पाओ बुद्धी किरिया फलं च पाएण ।**
**जह दीसइ ठवणिंदे न तहा नामे न दव्विंदे ।।५३।।**
**भावस्स कारणं जह दव्वं भावो अ तस्स पज्जाओ ।**
**उवओगपरिणइमओ न तहा नामं नवा ठवणा ।।५४।।**
**इह भावो च्चिय वत्थुं तयत्थसुन्नेहिं किं य सेसेहिं ।**
**नामादओऽवि भावा जं तेऽवि हु वत्थुपज्जाया ।।५५।।**

'अहिहाण'मित्यादि । इह नामस्थापनाद्रव्येषु 'अहिहाण'मिति नाम । 'दव्वत्तं' ति द्रव्यता । आद्यन्तग्रहान्मध्यवर्तिनी च [1]करणिरुपगृह्यते[1], तथा 'तदर्थ-

1......1 सादृश्यं स्थापनेति P.

शून्यत्वं [1]'च' भावार्थशून्यत्वं चैतानि[1] 'तुल्यानि' सदृशानि । अतः को 'भाववर्जितानां'—तदर्थशून्यानां 'नामादीनां'—नामस्थापनाद्रव्याणां 'प्रतिविशेषः'—अन्योऽन्यं[2] भेदो ? न कश्चिदित्यभिप्राय. । एकैकस्मिन् भावरहितत्रितयसद्भावादिति चोदकगाथार्थः ॥५२॥

साम्प्रतमेवमविशेषेऽपि यो विशेषस्तमभिधित्सुराचार्य आह—'आकारो' इत्यादि । 'आकारो'—ज्वलत्कुलिशधारणलोचनसहस्रकुण्डलकिरीटशोभितसिंहासनाध्यासितशचीसन्निधानजनितातिशयो देहसौन्दर्यभावः, कर्त्तुश्च सद्भूतेन्द्राभिप्रायः', द्रष्टुश्च तदाकारदर्शनात् तद् 'बुद्धिः', 'क्रिया' चोपसेवननमस्कृतिकृतिरूपा, 'फलं च' पुत्रोत्पत्त्यादिलक्षणं, 'प्रायेण यथा दृश्यते स्थापनेन्द्रे' लोके 'न तथा नामेन्द्रे नापि च द्रव्येन्द्रे' इत्ययं तावद्विशेषो, नामद्रव्याभ्यां स्थापनायाः । स्पष्टत्वाच्चादौ स्थापनाभेद उक्त इति गाथार्थः ॥५३॥

अथ नामस्थापनाभ्यां द्रव्यस्य भेदमाह—'भावस्से'त्यादि 'यथे' ति येन प्रकारेण 'द्रव्य'मिति द्रव्येन्द्रो 'भावस्य कारणं' भावस्य निबन्धनं, तथा 'भावश्च तस्य पर्यायो', यया स च भाव 'उपयोगा'त्मकः 'परिणतिमय'श्च, 'न तथा', क्व इत्यत आह—न तथा 'नाम' नापि च 'स्थापना', असम्भवात् । नाम्नस्त्वितराभ्यां भेदः पारिशेष्यादिति गाथार्थः ॥५४॥

तदेवं भेदव्याख्यापक्षे समर्थिते भूयोऽप्यपरेण कारणेनाह चोदकः, 'इह' इत्यादि । अथवैतत् त्रितयं घटितं सत्पुनरपि विघटयन्नाह—'इह' इत्यादि । 'इह' मंगलाधिकारे 'भावो च्चिय वत्थुं' परिणतिमान् 'किं य सेसेहिं' ? कुत इत्याह—'तदर्थशून्यत्वात्' मंगलार्थशून्यत्वात् भावार्थशून्यत्वाद्वा पापवत् । भावो वस्तु तल्लक्षणत्वात् तत्प्रयोजनत्वादित्युक्तं भवति । उच्यते, नैतदेवमसिद्धत्वाद्धेतोः । आह च—'नामादयोऽपि भावाः' नामादयो भावविशेषा इति भावनीयम् । कुत इत्याह—'यद्' यस्मात् 'तेऽपि वस्तुपर्यायाः' । तथाहि—अविशिष्ट इन्द्रशब्द आकारिते सति नामादिभेदचतुष्टयं प्रतीयते । अतोऽमीषां मंगलपर्यायत्वेन तदर्थाशून्यत्वम् । अतोऽसिद्धो हेतुः, तैरपि हि तत्प्रापणादिति । यद्येवं पुनरप्येकमेव मंगलमिति, तन्न, कथञ्चिदभेदेऽपि नामाद्युपाधिभेदभिन्नत्वादमीषामिति गाथार्थः ॥५५॥

**अहवा नामं ठवणा दव्वाइं भावमंगलंगाइं ।**
**पाएण भावमंगलपरिणामनिमित्तभावाओ ॥५६॥**

'अहवे'त्यादि । 'अथवे'त्यनेनामीषां प्रकारान्तरेण स्वातन्त्र्यमाह—'नामस्थापनाद्रव्याणि भावमंगलाङ्गानि', भेदाः, कारणानि वा । कुतः ? 'प्रायेण भावमंगलकारणत्वादि'ति गाथार्थः ॥५६॥

1……1 चेति चत्वार्यपि वस्तूनि P.
2 न्य P.

उदाहरणमाह—

**जह मंगलाभिहाणं सिद्धं विजयं जिणिंदनामं च ।**
**सोऊण पेच्छिऊण य जिणपडिमालक्खणाईणि ॥५७॥**

'**जह०**'इत्यादि । 'यथा मंगलमित्यभिधानं सिद्धादि नाम च श्रुत्वा, दृष्ट्वा च जिनप्रतिमालक्षण' पंक्तिस्थापनाम् । 'आदि'शब्दादनगारपदादीति गाथार्थः ॥५७॥

तथा द्रव्योदाहरणमाह—

**परिनिव्वुयमुणिदेहं भव्वजइजणं सुवन्नमल्लाई ।**
**दट्ठूण भावमङ्गलपरिणामो होइ पाएणं ॥५८॥**
**किं पुण तमणेगंतियमच्चन्तं च न जओऽभिहाणाई ।**
**तव्विवरीअं भावे तेण विसेसेण तं पुज्जं ॥५९॥**
**अहवा वत्थुऽभिहाणं नामं ठवणा य जो तयागारो ।**
**कारणया से दव्वं कज्जावन्नं तयं भावो ॥६०॥**

'**परी**'त्यादि । 'परिनिर्वृतमुनिदेहं' सिद्धशिलातलगतं, 'भव्ययतिजनं' भविष्यत्साधुजनवृन्दं, 'सुवर्णमाल्यादि' दध्यादि च 'दृष्ट्वा' । पुनः क्रियाभिधानं भिन्नाभिधेयत्वख्यापनार्थम् । '**भावमंगलपरिणामो होइ पाएणं**' सनिमित्तत्वादपि तथापरिणामस्येति गाथार्थः ॥५८॥

किं भावमङ्गलवत् तान्यपि पूजनीयानि ? इत्यत आह—'**किं पुणे**' त्यादि । स्पष्टा ॥५९॥

अत एवमेतद्भेदसिद्धिः । अथवैकवस्तुन्येव चतुष्टयमायोज्यत इत्याह—'**अहवे**'त्यादिना । 'अथवा वस्तुनो यदभिधानं तन्नाम' यथोर्ध्वकुण्डलोष्ठायतवृत्तग्रीवालक्षणो घट इति । 'स्थापना तु यस्तदाकार' ऊर्ध्वादिः । भाविकपालापेक्षया '**से**' तस्य 'कारणता द्रव्यम्' । 'तदेव कार्यापन्नं' मृत्पिण्डावस्थायाः शेखरीभूतं सद् 'भाव' उच्यते, भवनं भाव इति कृत्वा । तदेवं सर्वं वस्तु चतूरूपाविनाभूतं दृष्टम् । एवमेव सम्यग्दर्शनव्यवस्थानात् सर्वनयसमूहात्मकत्वादिति गाथार्थः ॥६०॥

विपक्षे विवादलक्षणां बाधामाह—

**वत्थुसरूवं नामं तप्पच्चयहेउओ सधम्म व्व ।**
**वत्थुं नाणभिहाणा होज्जाऽभावो विवावच्चो ॥६१॥**
**संसयविवज्जया वाऽणज्झवसाओऽहवा जदिच्छाए ।**
**होज्जऽत्थे पडिवत्ती न वत्थुधम्मो जया नामं ॥६२॥**
**वत्थुस्स लक्खलक्खणसंववहाराविरोहसिद्धीओ ।**
**अभिहाणाहीणाओ बुद्धी सद्दो य किरिया य ॥६३॥**
**आगारो च्चिय मइसद्दवत्थुकिरियाफलाभिहाणाई ।**
**आगारमयं सव्वं जमणागारं तयं नत्थि ॥६४॥**

न पराणुमयं वत्थुं आगाराभावओ खपुप्फं व ।
उवलंभव्ववहाराभावाओ नाणगारं च ॥६५॥
दव्वपरिणाममित्तं मोत्तूणाऽऽगारदरिसगं किं तं ।
उप्पायव्वयरहिअं दव्वं चिय निव्वियारं तं ॥६६॥
आविब्भावतिरोभावमेत्तपरिणामकारणमचिंतं ।
निच्चं बहुरूवंऽपिय नडो व्व वेसंतरावन्नो ॥६७॥
पिंडो कारणमिट्ठं पयं व परिणामओ तहा सव्वं ।
आगाराइ न वत्थुं निक्कारणओ खपुप्फं व ॥६८॥
भावत्थंतरभूअं किं दव्वं नाम भाव एवायं ।
भवनं पइक्खणं चिय भावावत्ती विवत्ती य ॥६९॥
न य भावो भावन्तरमवेक्खए किन्तु हेउनिरवेक्खं ।
उप्पज्जइ तयणन्तरमवेइ तमहेउअं चेव ॥७०॥
पिंडो कज्जं पइसमयभावाओ जह दहिं तहा सव्वं ।
कज्जाभावाओ नत्थि कारणं खरविसाणं व ॥७१॥
एवं विवयंति नया मिच्छाभिनिवेसओ परोप्परओ ।
इयमिह सव्वनयमयं जिणमयमणवज्जमच्चंतं ॥७२॥
नामाइभेदसद्दत्थबुद्धिपरिणामभावओ निययं ।
जं वत्थुमत्थि लोए चउपज्जायं तयं सव्वं ॥७३॥

'वत्थु' इत्यादि । वसन्त्यस्मिन् गुणपर्याया इति 'वस्तु'—घटादिलक्षणम् । तस्य वस्तुनः 'स्वरूपम्' । किं तत् ? अत आह—'नाम' अभिधानम् । कुत इत्याह—'तत्प्रत्ययहेतुत्वात्' वस्तुप्रत्ययहेतुत्वात् । दृष्टान्तमाह—'स्वधर्मा इव'—रूपादय इव । सिद्धश्चावयोर्हेतुर्घटशब्दात् पटादिव्यवच्छेदेन घटप्रतिपत्त्यनुभूतेः । न च स्वग्रहणमनर्थकं दृष्टान्तस्योभयवैकल्यदोषनिवारणार्थत्वात् । आह—एवं ध्वनिपरिणामं नाम विवक्षितवस्तुप्रतिपत्तिहेतुत्वात् तत्स्वधर्मा इव । तन्न, तेषामपि ध्वनिपरिणामरूपत्वात्, शब्दब्रह्ममात्रत्वाद् धर्मधर्मिणोरिति । शेषं तु न्यायानुसारितया स्वधियाऽनुसरणीयम् । अथ विपक्षे बाधादर्शनार्थमाह—'वत्थुं न होज्ज' त्यत्राभिसम्बन्धः । तेनैतदुक्तं भवति । इत्थं चैतदङ्गीकर्त्तव्यम्, अन्यथा वस्तु वस्त्वेव न स्यात् । 'अणभिहाणादि' ति अभिधानरहितत्वा'दवाच्योऽभाव इव', अभिधानरहिता शुकुशुकेवेत्यर्थः । तत्रैतत्स्यात्—[1]सङ्गीतिमात्रं तत्प्रत्ययहेतुर्नाभिधानं, अकृतसङ्केतस्य नालिकेरद्वीपवासिनोऽभिधानश्रवणेऽपि वाच्यार्थाप्रतिपत्तेः । उच्यते, न, रूपादिष्वपि [2]तत्समानत्वात्, ततश्च स एवा-[3]नभिलापदोष इति गाथार्थः ॥६१॥

---

1 संकेतः P.

2 संगीतिमात्रस्य धर्मित्वं प्रति P.

3 ऽनभिधानान्न यस्त्विति P.

अपि च विशेषोपलम्भार्थमाह—**'संसय'** इत्यादि। 'संशयविपर्यया'विति। 'यदा न वस्तुधर्मो नाम' तदा घट इत्युक्ते वक्त्रा श्रोतुः 'संशयः' स्यात्—किमयमाह? इति। 'विपर्ययो' वा पट एव प्रतिपत्तेः। 'अथवाऽनध्यवसायः' स्यात्—चित्तव्यामोहः स्यात्। 'अथवा यदृच्छया'—अनियमलक्षणया स्यादर्थे—पटलक्षणे[1] प्रतिपत्तिरिति गाथार्थः ॥६२॥

अपि च—**'वत्थुस्से'**त्यादि। 'वस्तुनो' जीवादेः। किमत आह—**'अभिहाणाहीणाओ'** त्ति अभिधानायत्ताः। का इत्याह—लक्ष्यं च लक्षणं च संव्यवहारश्चेति 'लक्ष्यलक्षणसंव्यवहारा'स्तेषा'मविरोधेन'—अविपर्ययेण 'सिद्धयः'—प्रतिष्ठा इति विग्रहः। तत्र लक्ष्यं जीवः, लक्षणमुपयोगः, संव्यवहारोऽध्येषणप्रेषणादिः। तथा 'बुद्धि'र्निश्चायकरूपा। **'सद्दो य'**त्ति शब्दसामान्यम्। 'अभिधानं' तु प्रतिविशिष्टाकारा संज्ञेति। तथा 'क्रिया' चोत्क्षेपणादिका। किम्? 'अभिधानाधीना' इति। शब्द एव वस्तुसन् तदायत्तात्मलाभत्वादितरस्य तु शुक[2]शुकात्वात्। अपि चायं व्यवहारः शब्दवता वा क्रियेताशब्दवता वेति? नाशब्दवता, अवाच्याभावस्यापि तत्प्रसंगात्। इतरेण चेदस्मदिष्टसिद्धिरिति शब्दनय इति गाथार्थः ॥६३॥

आकारनय आह—**'आगा[3]रो च्चिय'** इत्यादि। आक्रियत इत्याकारो, निरंशो भाव इति भावः। असौ आकार एव। 'एव'कारेणानभिमतप्रतिषेधमाह। किमत आह—**'मती'**त्यादि। द्वन्द्वः। कथम्? 'मते'स्तावदात्मगुणत्वात् तस्य[4] च ज्ञेयालम्बनत्वेनाकारवत्त्वात्, अनाकारवत्त्वे चानभिमतपदार्थवदभिमतस्यापि परिच्छेदायोगात्[5]—नीलस्येदं संवेदनं न पीतस्येत्यप्राप्तेरित्यर्थः। 'शब्द'श्चाकारवान् पौद्गलिकत्वात्। 'वस्त्व'पि घटाद्याकारवत्, प्रत्यक्षसिद्धेः। 'क्रिया'ऽपि क्रियावतोऽनर्थान्तरत्वात् तस्य चाध्यक्षसिद्धत्वात्। 'फल'मप्याकारः कारणपर्यायत्वात्। 'अभिधान'मप्याकारः शब्देऽन्तर्भावात्। अत आह। पच्छद्धं कण्ठ्यम् ॥६४॥

प्रयोगः **'न'** इत्यादि। 'न परानुमतं वस्त्वि'ति। अत्र हि परशब्दमाह, द्रव्यभावनययोरप्य[6]भिमतत्वोपदर्शनाच्च। **'आकाराभावतो'** त्ति असदाकारत्वात् 'खपुष्पवत्'। अत्रैव पक्षे हेत्वन्तरमाह—'उपलम्भाभावात्'। न हि शृङ्गग्राहिकया सत् परेणेत्थं दर्शयितुं पार्यत इति भावः। तथा 'व्यवहाराभावा-दि'ति। तदेव विकल्पद्वयं यदभ्यधायि आद्येनेति। "विधिप्रतिषेधाभ्यां शास्त्रप्रवृत्ति" रिति स्वपक्षे त्वस्तित्वस्थितिं प्रतिजानीमहे—आकारस्यैवाभ्युपगमाद्

1 णेऽपि P.
2 कु P. 3 का P. 4 तस्याः P.
5 P adds पीतादिपदार्थादर्शनादाप्यतदाकारत्वात्.
6 P adds न.

घटवदिति । आह च--'णाणगारं च' वस्तु, किन्तु साकारं सत्त्वाद् दधिवदित्याकारनय इति गाथार्थः ॥६५॥

द्रव्यनय आह—को हि नाम चेतनावानित्थमभिदध्यात् । तथा हि 'दव्वे' त्यादि । द्रवतीति द्रव्यमनादिमदुत्प्रेक्षितपर्यायशृङ्खलाधारं मृदादि । धर्म्ममात्रतिरोभाव[1] धर्ममात्राविर्भावः परिणामः । द्रव्यस्य परिणामो द्रव्यपरिणामः । द्रव्यपरिणाम एव 'द्रव्यपरिणाममात्रम्' । 'मात्र'शब्दः प्रतिसमयमुत्प्रेक्षितविचित्रावस्थाप्रतिषेधार्थः । तत् 'मुक्त्वा'—हित्वा[2] 'तदाकारदर्शन'मन्यद् यदुच्यते—"आकारो च्चिय" एवमादि । ननु द्रव्यमेव तत् । किंविशिष्टम् ? उत्पादव्ययरहितं यतो निर्विकारम्—अवस्थितं पूर्वापरकोटिविप्रमुक्तं कारणमात्रमुत्फणविफण[3]कुण्डलिताकारसमन्वितसर्पद्रव्यवत्, "किं हि तत्रापूर्वमुत्पन्नं विद्यमानं वा न जात"मिति वचनादिति गाथार्थः ॥६६॥

अथैतत्स्याद्, अहिद्रव्ये उत्फणादिकार्यस्य प्रत्यक्षसिद्धत्वात् कार्यत्वाच्च, सम्बन्धिशब्दत्वेन च कार्यव्यपदेशप्रवृत्तेर्न कारणमात्रं वस्त्विति । उच्यते, नैतदस्ति, आविर्भावतिरोभावमात्र एव कार्योपचाराद्, उपचारस्य चावस्तुत्वाद् । आह च—'आविब्भाव' इत्यादि । 'आविर्भावश्च तिरोभावश्च' तौ । तावेव तन्'मात्रम्' । तदेव 'परिणामः' । तस्य 'कारणं' यतो द्रव्यं, प्रदीप इव ध्वान्तघटयोरिति । तस्मान्नैतदिति । प्रकृतमाह—यद्येवं कस्मात्तर्ह्येकस्वभावत्वादनन्तकालभाविनोरप्यनयोर्हेलयैव कारणं न भवतीत्यत आह—'अचिन्त्यम्' अचिन्त्यस्वभावं क्रमतस्तथावृत्तेः । आह—एवं बहुरूपत्वात् । प्रागवस्थात्यागेनोत्तरावस्थाधिष्ठानतया कस्मादनित्यं न भवतीत्यत आह—'नित्यं बहुरूपमपि च' सत्, यतो ह्यनेनैवानादिमताऽऽविर्भावतिरोभावाध्यासेन बहुरूपेण भवनीयम्, क इवेत्याह—'नट इव' । किंविशिष्टो नट इत्याह—'वेषान्तरापन्नो' । यथा हि नटो नायकविदूषककपिराक्षसादिपात्रविशेषाननुगच्छन् परमार्थवृत्त्या स एवासौ एवमत्रापीति गाथार्थः ॥६७॥

अपि च—कोऽयमवदातधियामप्यसदाकारग्रहस्तथाहि—'पिंडो' इत्यादि । 'पिण्डो'—मृत्पिण्डः 'कारणमिष्टं'—कारणमात्रमभ्युपगम्यते, 'परिणामित्वात् पयोवत्' । सिद्धश्च दृष्टान्तः । 'तया सव्व'न्ति यथा पिण्डस्तथा सर्वं मृत्स्थासकोशकुसूलादि त्रैलोक्यं चेति स्वपक्षसिद्धिः । परदूषणमाह—'आकारादि न वस्तु, निष्कारणत्वात्' कारणमात्रानभ्युपगमात् 'खपुष्पवदि'ति । स्वातन्त्र्यख्यापनार्थं चैतदिति पौनरुक्त्यायोगः । तथा चैषोऽत्र व्यवहारो—द्रव्येणाद्रव्येण चेति, सैव च [4]रभिकेति द्रव्यनय इति गाथार्थः ॥६८॥

1 वे P.
2 P adds किं.
3 णा P.
4 रीतिः Pटी.

भावनयः प्राह—'**भावत्थंतर०**' इत्यादि। भवनानि भूतयो भवन्तीति वेति 'भावाः'। तेभ्योऽर्थान्तरभूतं' किं द्रव्यं नाम येनोच्यते—"द्रव्यपरिणाममात्रमि"-त्येवमादि। ननु 'भाव एवायं' मुहुर्मुहुरुन्मंक्तिमासादयतीति। एतदुक्तं भवति—यदि हि किञ्चिदनादिकालीनमवस्थितं सद्वस्त्वन्तरारम्भे व्याप्रियेत ततो न्याय्या स्यादियं कल्पना। यावता '**भवणं पडिक्खणं चिय**' त्ति भवनं प्रतिक्षणमेवानुभूयते। किमुक्तं भवतीत्याह—'भावापत्ति'र्भावोद्भूति'विपत्ति'श्च विनाशश्च। एतदुक्तं भवति—पूर्वकः क्षणो निवर्तते उत्तरस्तूत्पद्यते, "आरग्गे सरिसवोवमा" इति वचनादिति ॥६९॥

यद्यसत्कारणं कुत उत्तरोत्पत्तिरिति चेत्। अथवा यदङ्गीकृत्य कार्यक्षण उदेति तत्कारणमिति चेत्। अत आह—'**न य**' इत्यादि। 'न च' नैव 'भावः' कार्यक्षणलक्षणो 'भावान्तरं' कारणक्षणलक्षणम् 'अपेक्षते'ऽङ्गीकरोति। किन्तु 'हेतुनिरपेक्षं' कारणक्षणव्यापारविमुखम् 'उत्पद्यते' समाविर्भवति, "पुञ्जो नत्थि अणागते" त्ति वचनात्। यथा 'तदनन्तरमपैति' उत्पत्त्यनन्तरं विगच्छति, "संस्कृतं क्षणिक" मिति वचनात्। 'तदि'ति तत्कार्यं क्षणरूपं, किं सहेतुकम्? नेत्याह—'अहेतुत एव'—निर्हेतुकमेव। अत एवोक्तम्—

"णेव्वुया णेव चिट्ठंति, आरग्गे सरिसवोवमा" इति।

अत्र हि भूरि वक्तव्यम्। तत्तुग्रन्थान्तरेभ्यो भावनीयमिति गाथार्थः ॥७०॥

अपि च—कोऽयं शास्त्रखेदितधियां द्रव्यमात्रग्रहः। तथाहि—'**पिंडो**' इत्यादि। 'पिण्डो' मृत्पिण्डः 'कार्यं', नतु कारणमित्यभिप्रायः। 'प्रतिसमयभवनाद् यथा दधी'ति सिद्धो दृष्टान्तः, "झटित्येव कथं युवे"ति वचनात्। 'तथा सर्वमि'ति प्राग्वत्। अनभिमतप्रतिषेधमाह—'**नत्थि कारणं कज्जाभावातो**'। कोऽस्यार्थः? पिण्डे प्रतिसमयभवनाभ्युपगमाभावात् 'खरविषाणवदि'ति। अपि चायं लोकव्यवहारो भावाद्वा भवेदभावाद्वेति सैव नीतिरिति भावनय इति गाथार्थः ॥७१॥

अथोपसंजिहीर्षुराह—'**एव**'मित्यादि। 'एव'मुक्तेन विधिना 'विवदन्ति' [1]विविधं वदन्ति विवदन्ति, विभाषन्तीत्यर्थः[1]। के? 'नयाः' शब्दादयः। कुत इत्याह—'मिथ्याभिनिवेशतो' मिथ्यात्वाभिमानादित्यर्थः[2]। '**परोप्परतो**' मिथः। प्रयोगश्चात्र—मिथ्यादृष्टयो नामादयः, एकांशग्राहित्वेनासम्पूर्णत्वग्राहित्वात्, गजमात्रभिन्नदेशसंस्पर्शने बहुविधविवादमुखरजात्यन्धवृन्दवत्। तस्मात् सावद्यमिदं दर्शनमित्यभिप्रायः। किं तर्ह्यनवद्यमित्याह—'इद'मनुभवप्रत्यक्षसिद्धं '**सव्वनयमयं**' सर्वनयविवादानास्पदम्। किञ्च तदित्याह—'जिनमतं' जिनप्रवचनम् 'अत्यन्तं' सुतराम् 'अनवद्यम्' अदोषम्। प्रयोगो—जिनमतं तथ्यं समस्तवस्तु-

1...1 विविधपदग्राहकादतो विभवन्तीत्यर्थः P.

2 स्वः P.

पर्यायाध्यासितपदार्थसंग्राहित्वात्, चक्षुष्मतः समन्तात् समस्तहस्तिदर्शनोल्लापवदिति गाथार्थः ॥७२॥

तथा च—'नामाती'त्यादि। नामादयश्च ते भेदाश्चेति 'नामादिभेदाः'। 'भेदाः' पर्यायाः। तेषु नामादिभेदेषु नामाकारद्रव्यभावेषु। शब्दार्थे बुद्धिः 'शब्दार्थबुद्धिः'। स एव परिणामः 'शब्दार्थबुद्धिपरिणामः'। तस्य भावः—उत्पत्तिः 'शब्दार्थबुद्धिपरिणामभावः'। तस्मात् 'नियतम्' अवि(व)स्थितं[1] सदाकालमिति यावत्। किमत आह—'यद्वस्त्वस्ति लोके चतुष्पर्यायं तत्सर्वमि'ति। प्रयोगः—यत्र शब्दार्थबुद्धिः प्रसूयते तत्र चतुष्पर्यायिता यथा घटे, विपक्षे शशशृङ्गं, चतुर्णामप्यन्योऽन्याविनाभाव इति भावनीयम्।

"आकारवियुतं नाम, आकारो नामवर्जितः।
क्व कदा"

इत्येवमादिवचनादिति गाथार्थः ॥७३॥

उपसंहारमाह—

**इय सव्वभेअसंघायकारिणो भिन्नलक्खणा एते।**
**उप्पायाइतियं पिव धम्मा पइवत्थुमाउज्जा ॥७४॥**

'इय' इत्येवमादि। 'इय' एवं 'एत' त्ति एते नामादयो धर्माः। किंविशिष्टाः? 'सर्वभेदकारिणः' 'सव्वसंघातकारिणो' य। तत्र सर्वभेदकारिणो' यथा मङ्गलमित्याकारिते प्रतिवस्तु अभिधानादिभेदादानन्त्यमिष्टतोऽध्यवसीयते। अथवा सर्वस्येन्द्रस्य भेदकारिणः सर्वभेदकारिणः, प्रतिभेदस्येष्टतः प्रतीतेः। एवं सर्वस्येन्द्रस्य सङ्घातकारिणः क्वचित्समस्तवस्तुकलापाध्यारोपेणैकत्वप्रतिपत्तेः। तथाहि—नामेन्द्र एवाभिधानाकारद्रव्यभावाः प्रतीयन्ते, इत्येवमादि। 'भिन्नलक्षणाश्चैते' भिन्नप्रत्ययहेतुत्वाद् घटपटकटशकटा इव। किमिवेत्याह—'उत्पादादित्रयमिव', उत्पादविगमध्रौव्याणीवेत्यर्थः। 'प्रतिवस्तु' प्रतिपदार्थं 'मायोज्याः' अनुसरणीया इति गाथार्थः ॥७४॥

इदानीमयं नामादिनिक्षेपः सामान्यतो विशेषतश्च नयैः परिमृग्यत इत्यत आह—

**नामाइतियं दव्वट्ठियस्स भावो य पज्जवनयस्स।**
**संगहववहारा पढमगस्स सेसा य इयरस्स ॥७५॥**
**जं सामन्नग्गाही संगिण्हइ तेण संगहो निययं।**
**जेण विसेसग्गाही ववहारो तो विसेसेइ ॥७६॥**
**सद्दुज्जुसुया पज्जायवायगा भावसंगहं बेंति।**
**उवरिमया विवरीआ भावं भिंदंति तो निययं ॥७७॥**

'नामादी'त्यादि। तत्र नामादिनिक्षेपत्रयं 'द्रव्यास्तिकस्य' मतं, तदर्थ-

---

1 अविस्तुलितं P.

शून्यत्वात्। तस्य [1]चाभावावलम्बित्वाद्[1] द्रव्यास्तिकत्वात्। **'भावो य पज्जवणयस्स'** मतं तदर्थाशून्यत्वात्। तथा 'संग्रहव्यवहारौ' द्वावपि **'पढमगस्स'** त्ति प्रथमनयमतावलम्बिनौ। 'शेषा'स्तु—ऋजुसूत्रादयः, 'इतरस्य'—द्वितीयस्य मतमालम्बत इति वाक्यशेषः। एतच्चाचार्यसिद्धसेनाभिप्रायेण उच्यते, न सूत्राभिप्रायेण। तथाहि सूत्रेऽभिहितं—"उज्जुसुतस्स एगे अणुवउत्ते एगं दव्वं आगमतो एगं दव्वावस्सयं पुहत्तं नेच्छति" इत्यतोऽसौ द्रव्यमिच्छन् कथं भावमात्रग्राहिणं पर्यायनयमालम्बत इति गाथार्थः ॥७५॥

उक्तमेवार्थं प्रपञ्चितज्ञविनेयजनानुग्रहार्थं पुनरप्याह—**'जमि'**त्यादि। यस्मात् 'सामान्यग्राही' संग्रहः, 'संगृह्णाति तस्मात्संग्रहः', त्रितयं नामाद्येकत्वेन। एतदुक्तं भवति—यावन्ति कानिचिद् भुवनविवरभाञ्जि नामानि तदेकं नाम, एवं स्थापना द्रव्यं चेति। यथा 'येन विशेषग्राही व्यवहारस्तेनासौ' नामादि 'विशिनष्टि'—भिनत्ति, प्रभूतानीच्छतीत्यर्थः। इति गाथार्थः ॥७६॥

"सेसा उ इतरस्स" त्ति विभावयिषुराह—**'सद्दुज्जु'** गाथा। शब्दऋजुसूत्रौ 'पर्यायवादिनौ भावसंग्रहं ब्रूतः', पर्यायशब्दैर्भावमिच्छत इत्यर्थः। तथा 'उपरितनौ समभिरूढैवंभूतौ एतद्विपरीतौ', पर्यायध्वनिभिरसंग्रहात्, नह्येतौ भावमङ्गलमिन्द्रं वा भिन्नप्रवृत्तिभिर्ध्वनिभिरभिधत्त इति भावना। 'तो' इति तस्मा'न्नियत'मासंसारं यावदिमौ 'भावं' भावमङ्गलादि। किं ? 'भिन्तः'। तथाहि—समभिरूढस्यान्योऽर्थो मङ्गलशब्देनोच्यते अन्यश्च विघ्नविघातकृदित्यनेन। एवंभूतस्य तु यदा साधुर्धर्मोपचयमादत्ते तदाऽसौ वस्तु, तत्कार्यकरणात्। अन्यदा त्ववस्तु, तत्कार्याकरणात् स्तम्भवत्। एवं तावत् तत्त्वभेदपर्यायैर्मङ्गलमाख्यातमिति गाथार्थः ॥७७॥

**मंगलमहवा नन्दी चउव्विहा मङ्गलं व सा नेया।**
**दव्वे तूरसमुदओ भावम्मि य पञ्च नाणाइं ॥७८॥**

**मंगल**'मित्यादि। अथवा नोआगमतो 'मङ्गलं नन्दी'। 'साऽपि च चतूरूपैव मङ्गलमिव' नामादिभेदात्। तत्र नामस्थापने प्राग्वत्। 'द्रव्ये'—द्रव्यविषया नन्दी 'तूर्यसमुदायो'। यथोक्तं "भम्भामुगुन्दमद्दलहुडुक्कझल्लरी" त्येवमादि। एषा च प्रक्रमात् व्यतिरिक्तेति गम्यते। तथा 'भावे च'—भावविषया नोआगमतो नन्दी। केत्यत आह—'पञ्च ज्ञानानी'ति गाथार्थः ॥७८॥

[ ज्ञानपञ्चकम् ]

**अभिणिबोहियनाणं सुयनाणं चेव ओहिनाणं च।**
**तह मणपज्जवनाणं केवलनाणं च पञ्चमयं ॥७९॥ नि० १॥**

**अत्थाभिमुहो निअओ बोहो जो सो मओ अभिनिबोहो।**
**सो चेवाऽऽभिणिबोहिअमहव जहाजोगमाउज्जं ॥८०॥**

---

1...1 ऽपर्यायाश्रयित्वात् P.

तं तेण तओ तम्मि व सो वाऽभिणिबुज्झए तओ वा तं ।
तं तेण तओ तम्मि व सुणेइ सो वा सुअं तेण ॥८१॥
तेणावहीयए तम्मि वाऽवहाणं तओऽवही सो य ।
मज्जाया जं तीए दव्वाइ परोप्परं सुणइ ॥८२॥
पज्जवणं पज्जयणं पज्जाओ वा मणम्मि मणसो वा ।
तस्स व पज्जायादिन्नाणं मणपज्जवं नाणं ॥८३॥
केवलमेगं सुद्धं सगलमसाहारणं अणन्तं च ।
पायं च नाणसद्दो नामसमाणाहिगरणोऽयं ॥८४॥

'आभिणिबोहियनाण' गाथा ॥७९॥ निर्युक्तिगाथा ॥१॥

बोधनं 'बोधः'—सम्बोधः । पञ्चानां ज्ञानानामाद्यो वर्त्तते । किंविशिष्टः ? 'अर्थाभिमुख' इति । तत्र "ऋ गतौ" विति, अर्यत इति 'अर्थः' । तमर्थं प्रत्यभिमुखः,' प्रवण इत्यर्थः । अर्थबलायाततया तन्नान्तरीयकप्रादुर्भूतिरिति भावना । स चैवमपटुत्वात् क्षयोपशमस्याविनिश्चिततत्त्वोऽपि स्यादत उच्यते 'नियतो'—निश्चितो रसाद्यपोहेन रूपमेवेदमिति प्रत्ययवधारणात्मकः । एवं चावग्रहोऽपि "निश्चितमवगृह्णाती" ति वचनात्, कार्यत उपलब्धेः । तत्रैतत् स्यात्—नियतस्यार्थाभिमुखताऽव्यभिचारान्नियतग्रहणमेवास्त्विति । तन्न, द्विचन्द्रप्रतिभासस्यापि तैमिरिकं प्रति नियतत्वे सत्यप्यर्थाभिमुखताऽभावात् । ततश्च '**अत्थाभिमुहो नियतो बोहो जो**' इत्येवमादिभाष्यगाथा । स एवं '**अत्थाभिमुहो नियतो बोहो जो**' स किमित्यत आह—'सो मतोऽभिनिबोहो' त्ति । 'स मतः'—अभिप्रेतस्तीर्थकरगणधरादीना'मभिनिबोधः' । 'सो चेवाभिनिबोधियं' ति स एव स्वार्थिकप्रत्ययोपादानादाभिनिबोधिकम् । 'अहव' त्ति अथवा नात्र स्वार्थिको विवक्ष्यते, किन्तु 'यथायोगं' यथासम्बन्धम् 'आयोज्यम्' आयोजनीयम् । तथाहि—अर्थाभिमुखो निश्चितो बोधोऽभिनिबोधः, अभिनिबोधे भवमाभिनिबोधिकं, न यत्संशयज्ञानं विपर्ययादि वेत्यभिप्रायः । अभिनिबोधेन वा निर्वृत्तं—घटितमित्याभिनिबोधिकं, न यद्विपर्ययादिज्ञानं संशयादि वेति । अथवाऽर्थाभिमुखनियतबोधमयं, न यदनध्यवसायज्ञानमितरे वेति । तत्प्रयोजनं वा अभिनिबोधफलं वाऽऽभिनिबोधिकं, न त्वनभिनिबोधकार्यमिति गुरवो व्याचक्षते । आभिनिबोधिकं च तत् ज्ञानं चेत्याभिनिबोधिकज्ञानमिति गाथार्थः ॥८०॥

अथवा—'तं तेण' इत्यादि । 'तमभिणिबुज्झइ' त्ति । कोऽस्यार्थः ? अभिनिबुध्यते आत्मा तदित्याभिनिबोधिकम्—अवग्रहादि । तस्य स्वसंवेद्यत्वेनाऽभिमुख्यतो निश्चीयमानत्वात् । 'अभिनिबुध्यते वाऽनेनाऽस्मादस्मिन् वे'त्याभिनिबोधिकं । किञ्च तत् ? क्षयोपशमः, कारणे कार्योपचारात् । 'सो व' त्ति 'अभिनिबुध्यते वाऽऽत्मा'त्याभिनिबोधिकम् । कोऽसौ ? आत्मा, तदभिन्नत्वात् । 'ततो वा तं' ति तस्माद्वा कारणादाभिनिबोधिकम् । अनेन प्रकारान्तरेण कारकवशाद् व्युत्पत्तिपक्षमस्याह । अथ श्रुतज्ञानव्युत्पत्तिं विवक्षुः पश्चार्द्धमाह—

'तं सुणेइ' त्ति । अस्यायमर्थः—'शृणोति तदि'त्यात्मेति श्रुतं, 'श्रूयते वाऽनेनाऽस्मादस्मिन् वे'ति क्षयोपशम एव । 'सो व' त्ति । 'शृणोत्यसाविति श्रुतमा'त्मैव । भावना प्राग्वत् । 'सुतं तेण' ति येनैवं तेन कारणेन श्रुतं, श्रुतं च तत् ज्ञानं चेति श्रुतज्ञानमिति गाथार्थः ।।८१।।

'तेणावहीयते' इत्यादि । 'अवधीयते' मर्यादया परिच्छिद्यते'ऽनेने'ति । 'तंमि व'त्ति । 'अवधीयतेऽस्मिन्' सतीत्यवधिः । 'अवधाणं वे' त्यवधानं वा—मर्यादया परिच्छेदनं वा । येन कारणेनैवं 'ततोऽवहि' त्ति तेन कारणेनावधिरित्याख्यायते । 'स चा'वधि'र्मर्यादा' 'यद्'—यस्मा'त्तेन' वावधिना, स्त्रीलिङ्गनिर्देशस्तु प्राकृतशैल्या, 'द्रव्यादि' द्रव्यक्षेत्रकालभावान् 'परस्परतो मुणति' जानाति । यत्तेन परस्परोपनिबन्धना द्रव्यादयोऽवधीयन्ते अतोऽवधिरिति भावनेति गाथार्थः ।।८२।।

'पज्जवण' मित्यादि । तत्र 'पज्जवणं' । "अव गत्यादिष्वि" ति वचनात्, 'अवनं' अवः, अवनं गमनं वेदनमिति पर्यायाः । परिः—सर्वतोभावे । 'पर्यवनं' पर्यवः—सर्वतः परिच्छेदनमिति भावः । क्व तदित्याह—'मणम्मि मणसो व' त्ति मनसि ग्राह्ये मनसो वा ग्राह्यस्य सम्बन्धी पर्यवो मनःपर्यवो । मनःपर्यवश्चासौ ज्ञानं च मनःपर्यवज्ञानम् । अथवा 'पज्जयणं' ति "अय वय मय" इत्यादि दण्डकधातुः, 'अयनम'यः, अयनं गमनं वेदनमिति पर्यायाः । परिः सर्वतोभावे । 'पर्ययनं' पर्ययः सर्वतः परिच्छेदनमिति भावः । क्व तदित्याह—'मणम्मि मणसो व' त्ति मनसि ग्राह्ये मनसो वा ग्राह्यस्य सम्बन्धी पर्ययो मनःपर्ययः, पुनः समानाधिकरणः । अथवा 'पज्जायो' त्ति । "इण् गतौ" । 'आयो' लाभः प्राप्तिरिति पर्यायाः । परिः सर्वतोभावे । समन्तादायः 'पर्यायः' । क्वासावित्याह—'मणम्मि मणसो व' त्ति मनसि ग्राह्ये मनसो वा ग्राह्यस्य सम्बन्धी पर्यायो मनःपर्यायः, मनःपर्यायश्चासौ ज्ञानं च मनःपर्यायज्ञानम् । एवं तावत्समानाधिकरण्यमङ्गीकृत्योक्तम् । अथ वैयधिकरण्यमङ्गीकृत्योच्यते—मनसः पर्यवाः पर्ययाः पर्याया भेदा धर्मा बाह्यवस्त्वालोचनप्रकारा इत्यर्थः । ततश्च 'तस्स वे' इत्यादि पच्छर्द्धं । 'तस्य वा' द्रव्यमनसः सम्बन्धिषु 'पर्यायादिष्व'धिकरणभूतेषु तेषां वा सम्बन्धि । 'आदि'शब्दात् पर्ययपर्यवयोर्ग्रहो 'ज्ञानं'—परिच्छेदनमिदमनेन चिन्तितमिति 'मनःपर्यायज्ञानमि'ति वैयधिकरण्यम् । अत एव वक्ष्यति—"पायं च णाणसद्दो नामसमाणाहिगरणोऽय"मिति गाथार्थः ।।८३।।

'केवल'मित्यादि । 'केवलमेकं शुद्धं सकलमसाधारणमनन्तं चे'त्यर्थः । 'ज्ञानशब्दश्च' सर्वत्रा'भिनिबोधिकादिसमानाधिकरणे' द्रष्टव्यः । तद्यथा, आभिनिबोधिकं च तज्ज्ञानं चेत्येवं सर्वत्र । 'प्रायो'ग्रहणादन्योऽपि समासः स्यात्, स च मनःपर्यायज्ञान उक्तः । एवमन्यत्रापि च सम्भवतः स्यादिति गाथार्थः ।।८४।।

ननु च केन पुनः कारणेनादौ मतिश्रुते उपन्यस्ते ? इत्यत आह—

जं सामिकालकारणविसयपरोक्खत्तणेहिं तुल्लाइं ।
तब्भावे सेसाणि य तेणाईए मइसुयाइं ।।८५।।

मइपुव्वं जेण सुयं तेणाईए मई विसिट्ठो वा ।
मइभेओ चेव सुयं तो मइसमणंतरं भणियं ॥८६॥
कालविवज्जयसामित्तलाभसाहम्मओऽवही तत्तो ।
माणसमित्तो छउमत्थविसयभावादिसामण्णा ॥८७॥
अन्ते केवलमुत्तमजइसामित्तावसाणलाभाओ ।
एत्थं च मइसुयाइं परोक्खमियरं च पच्चक्खं ॥८८॥

'जं' इत्यादि । 'यद्' यस्मा'त्तुल्ये'—समाने एते । कैरित्याह—'स्वामिकालकारणविषयपरोक्षत्वैः' । तत्र स्वामितुल्यता एकस्वामित्वात् "जत्थे" त्येवमादिवचनात् । कालतुल्यता सर्वकालानुच्छेदात्समानस्थितिकत्वाद्वा । कारणतुल्यतेन्द्रियानिन्द्रियनिमित्तत्वात् क्षयोपशमनिमित्तत्वाद्वा । विषयतुल्यता सर्वद्रव्यादिविषयत्वात् । परोक्षत्वतुल्यता परनिमित्तत्वात् । तथा 'तद्भावे च'—मतिश्रुतभावे 'च शेषाण्य'वध्यादीनि यस्मात् 'तेगाद्दी[1]ए मतिसुयाइं' इ[2]ति गाथार्थः ॥८५॥

अथ मतिरादौ किमित्यत आह—'मती'त्यादि । मतिः पूर्वमस्येति 'मतिपूर्वं' 'येन' कारणेन 'श्रुतं'—श्रुतज्ञानं 'तेन' कारणे'नादौ' 'मतिः'—मतिज्ञानमभ्यधायि भद्रबाहुस्वामिनेति गम्यत एवेति । अथवेन्द्रियानिन्द्रियनिमित्तत्वादुभयमप्यविशिष्टा मतिस्ततश्च 'विसिट्ठो मतिभेदो चेव सुतं' ति । विशिष्ट एव कश्चिन्मतिभेदः श्रुतमभिधीयते, परोपदेशमात्रभेदभागर्हद्वचनकारणश्चेति भावना । येन कारणेनैवं 'तो मतिसमणंतरं भणितं' ति गाथार्थः ॥८६॥

'काल' इत्यादि । मतिश्रुतसमानकालत्वाद् मिथ्यादर्शनपरिग्रहाच्च त'द्विपर्ययसाधर्म्यात्' 'स्वामित्वसाधर्म्यात्' क्वचि'ल्लाभ'कालैकत्वाच्च ताभ्यां समनन्तरोऽ'वधिरि'ति । तत'श्छद्मस्थस्वामिसामान्यात्', पुद्गलमात्र'विषयसामान्यात्', क्षायोपशमिक'भावसामान्यात्' प्रत्यक्षादिसामान्याच्च 'मानसमि'ति गाथार्थः ॥८७॥

'अंते' इत्यादि । 'अन्ते केवलमुत्तमत्वात्', सर्वशुद्धत्वादित्यर्थः । तथा 'यतिस्वामि'सामान्यात् स'र्वावसानलाभा'च्च । 'अत्र च[3]' ज्ञानपञ्चके 'मतिश्रुते परोक्षम्', 'इतरच्च' अवध्यादित्रयं 'प्रत्यक्षम्' । "तं समासओ दुविहं पन्नत्तं, तंजहा—पच्चक्खं च परोक्खं चे" ति वचनादिति गाथार्थः ॥८८॥

[ प्रत्यक्षपरोक्षनिरूपणम् ]

जीवो अक्खो अत्थव्वावणभोयणगुणण्णिओ जेण ।
तं पइ वट्टइ नाणं जं पच्चक्खं तयं तिविहं ॥८९॥

---

1 ई P. 2 P drops इ.
3 P drops च.

अक्खस्स पोग्गलकया जं दव्विन्दियमणा परा तेणं ।
तेहिंतो जं नाणं परोक्खमिह तमणुमाणं व ॥९०॥
केसिंचि इंदिआइं अक्खाइं तदुवलद्धि पच्चक्खं ।
तन्नो ताइं जमचेअणाइं जाणंति न घडो व्व ॥९१॥
उवलद्धा तत्थाऽऽया तव्विगमे तदुवलद्धसरणाओ ।
गेहगवक्खोवरमेऽवि तदुवलद्धाऽणुसरिया वा ॥९२॥
इंदियमणोनिमित्तं परोक्खमिह संसयादिभावाओ ।
तक्कारणं परोक्खं जदेह साभासमणुमाणं ॥९३॥
होन्ति परोक्खाइं मइसुयाइं जीवस्स परनिमित्ताओ ।
पुव्वोवलद्धसंबन्धसरणओ वाऽणमाणं व ॥९४॥
एगंतेण परोक्खं लिंगियमोहाइयं च पच्चक्खं ।
इंदियमणोभवं जं तं संववहारपच्चक्खं ॥९५॥

अथ प्रत्यक्षलक्षणमाह—'**जीवो**' इत्यादि । '**जीवो अक्खो**' त्ति इहाक्षशब्देन जीवो भण्यते । अत्र हेतुमाह—'**अत्थव्वावणगुणण्णिओ जेणं**' ति । अस्यायमर्थः—अर्थव्यापनगुणान्वितत्वात् । तेनैतदुक्तं भवति—ज्ञानात्मनाऽश्नुते व्याप्नोत्यर्थानित्यक्षः । अथवा '**जीवो अक्खो**' त्ति । कुत इत्याह—'**अत्थभोयणगुणण्णिओ जेणं**' ति, अर्थभोजनगुणान्वितत्वात् । तेनैतदुक्तं भवति—पालयति भुङ्क्ते चेत्यर्थः । अशेर्भोजनार्थत्वात् भुजेश्च पालनाभ्यवहारार्थत्वात् । अतः—'**तं पइ वट्टइ नाणं जं पच्चक्खं तयं**' ति । अक्षं प्रति यद्वर्त्तते ज्ञानं साक्षात्कारितया तत् प्रत्क्षमिति सञ्ज्ञीयते । तच्च 'त्रिविधम'वध्यादीति गाथार्थः ॥८९॥

अथ परोक्षलक्षणमाह—'**अक्खस्से**'त्यादि । 'अक्षस्य' जीवस्य 'पुद्गलकृतानि' पुद्गलैर्घटितानि । 'यद्' यस्मात् । कानि तानीत्याह—'द्रव्येन्द्रियमनांसि', द्रव्येन्द्रियाणि द्रव्यमनश्चेत्यर्थः । '**परा तेणं**' ति । तस्मात् तानि पराणीत्यर्थः, मूर्तामूर्तयोर्वैलक्षण्यात् । अत'स्तेभ्यः' पुद्गलमयेभ्य इन्द्रियमनोभ्यां 'यज्ज्ञानं'—रूपादिपदार्थपरिच्छेदनं '**तत् परोक्खमिह**' त्ति तदिह परोक्षमभिदध्महे, असाक्षादुत्पत्तेर्धूमादग्निज्ञानवदिति गाथार्थः ॥९०॥

एवं च स्थिते—'**केसिंची**'त्यादि । 'केषांचिद्' **वैशेषिकादीना**'मिन्द्रियाणि'—स्पर्शनादी'न्यक्षाणि', नाक्षोऽक्षाणि, अत'स्तदुपलब्धि'रिन्द्रियाणामव्यवधानेनोपलब्धिः 'प्रत्यक्ष'मुच्यते । उच्यतां, न दोष इति चेत् । अत आह—'**तन्न**', मिथ्यादर्शनत्वात् । कुत इत्याह—'तानि'—इन्द्रियाणि 'यद्'—यस्मा'दचेतनानि जानन्ति न घटवदि'ति दृष्टान्त इति गाथार्थः ॥९१॥

ननु च प्रत्यक्षविरोधिनीयं प्रतिज्ञा, इन्द्रियाणां साक्षात्कारेणानुभवात् । उच्यते, नैवं, भ्रान्तत्वादस्यानुभवस्य । तथाहि—'**उवलद्धा**' इत्यादि । '**तत्थ**' त्ति

तस्मिन् पौद्गलिकेन्द्रियरन्ध्रे तेन देहकुटीरकेन्द्रियगवाक्षकेण, करणभूतेनेत्यर्थः। किमत आह—'उवलद्धा आय' त्ति उपलब्धा आत्मा जीवो वर्त्तते। कुत इत्याह—'तद्विगमे'ऽपि—इन्द्रियरन्ध्रविगमेऽपीन्द्रियावरणक्षयोपशमविगमेऽपि 'तदुवलद्धसरणाओ' त्ति तदुपलब्धार्थानुस्मरणात्। क्षयोपशमविशिष्टेन्द्रियोपलब्धार्थानुस्मरणादिति भावना। दृष्टान्तमाह—'गृहगवाक्षोपरमेऽपि'—स्थगनेऽपि सति 'तदुपलब्धार्थानुस्मर्तृवत्'—गृहगवाक्षोपलब्धार्थानुस्मर्तृपुरुषवत्। एतदुक्तं भवति—यथा गृहस्थः पुरुषो गवाक्षेणोपलब्धा, न तु गवाक्षः, तद्विगमे तदुपलब्धार्थानुस्मरणाद्, एवमत्रापीति भावार्थः ॥९२॥

आह—कस्येदं दर्शनं स्वतन्त्राणीन्द्रियाणि उपलब्धिमन्ति ? नन्वेतावद् ब्रूमो—यदात्मन इन्द्रियमनोनिमित्तं तत्प्रत्यक्षम्। "आत्मा मनसा युज्यते, मन इन्द्रियेण, इन्द्रिमर्थेने"ति वचनात्। अत्रोच्यते, चीर्ण[1] चरसि गान्धारि! तथाहि—उक्तमेतत् प्राक् "अक्खस्स पोग्गलकया" इत्यादि गाथयेति गाथार्थः। इतश्च—'इंदिये'त्यादि। 'इन्द्रियमनोनिमित्तं परोक्षं', संशयविपर्ययानध्यवसायनिश्चयसद्भावात्। दृष्टान्तमाह—'यथेह साभासमनुमानं' तत्कारणत्वात् परोक्षमेवमत्रापीति। प्रयोगो[2]—यदि[3]न्द्रियमनोनिमित्तं तत्परोक्षं संशयविपर्ययादिसद्भावात्। इन्द्रियमनोनिमित्तासिद्धानैकान्तिकविरुद्धविषयानुमानाभासवत्। एवमिण्द्रियादिनिमित्तं परोक्षं निश्चयसद्भावादनुमानवत्। यच्च प्रत्यक्षं न तत्र संशयादयो यथाऽवध्यादिषु। न चावध्यादिषु निश्चयबुद्धिरिति व्यपदेशो ज्ञानविशेषत्वादिति गाथार्थः ॥९३॥

साम्प्रतं विशेषं पक्षीकुर्वन्नाह—'होंति' इत्यादि। इह हि 'जीवस्य'—आत्मनो 'मतिश्रुते परोक्षे परनिमित्तत्वाद'नुमानवत्। अथवाऽऽत्मन एते परोक्षे 'पूर्वोपलब्धसम्बन्धस्मरणद्वारेण' जायमानत्वात् धूमदर्शनादग्निज्ञानवत्। तस्मादिन्द्रियप्रत्यक्षं परोक्षं परनिमित्तत्वात्। अवध्यादि तु प्रत्यक्षमपरनिमित्तत्वात् ॥९४॥

आह च—'एगंतेण परोक्ख'मित्यादि। आह—नन्विन्द्रियप्रत्यक्षं परोक्षमित्युत्सूत्रमुक्तं—"पच्चक्खं दुविहं पण्णत्तं, तं जहा—इंदियपच्चक्खं च नोइंदियपच्चक्खं चे" ति वचनात्। उच्यते, सत्यमेवमेतत्, किन्तु यदात्मन इन्द्रियमनोभिर्बाह्यलिङ्गप्रत्ययमुत्पद्यते तदेकान्तेनेन्द्रियाणामात्मनस्तु[4], 'परोक्षम'नुमानत्वाद् धूमादग्निज्ञानवत्। 'अवध्यादि'त्वात्मनः 'प्रत्यक्षम'व्यवधानेनोत्पत्तेरिन्द्रियाणां धूमज्ञानावदिति मुख्यम्। यत्पुनः साक्षा'दिन्द्रियमनोनिमित्तं' तत्तेषामेव प्रत्यक्षमलिङ्गत्वादात्मनोऽवध्यादिवत्, आत्मनस्तु परोक्षं "अक्खस्स पोग्गलकता" इत्यादिना साधितत्वात्। अपि च—तेषामपीदं 'संव्यवहारतः प्रत्यक्षं', "तन्नो ताइं जमचेयणाइ" इत्यादिसिद्धत्वात्। आह—न सूत्रे विशेष्योक्तं यथा संव्यवहारत इदं

1 र्णं P. 2 गौ P. 3 दी P. 4 श्च P.

प्रत्यक्षमिति "इंदियपच्चक्खं चे" ति सामान्यश्रवणात् । तन्न[1], प्रदेशान्तरे उक्तत्वात्, "परोक्खं दुविहं पन्नत्तं—आभिणिबोहियणाणपरोक्खं च सुयणाणपरोक्खं चे" तिश्रवणात् । न चाभ्यामन्यदिन्द्रियनिमित्तमस्ति यदञ्जसेन्द्रियप्रत्यक्षं स्यात् । ननु यत् सांव्यवहारिकमलैङ्गिकत्वेन साक्षात्कारोद्भवं तदञ्जसा प्रत्यक्षमस्तु, यत्त्वात्मनो लैङ्गिकमिन्द्रियाणां च धूमादनलज्ञानमिव तत्तु मतिश्रुते भविष्यत इति को दोषः ? उच्यते, नैतदेवं, लैङ्गिकस्येन्द्रियनिमित्तत्वाभावाद्, इन्द्रियस्य प्रत्युत्पन्नमात्रविषयत्वात्, मतिश्रुतयोश्चेन्द्रियानिन्द्रियनिमित्तत्वात् । इन्द्रियप्रत्यक्षमेव तर्हि मतिश्रुतयोरन्यदस्तु इति चेत्तन्न, षष्ठज्ञानप्रसङ्गात् । आह—एवमिन्द्रियनिमित्तं परोक्षमिति श्रद्दध्महे, मनोनिमित्तं तु न । उच्यते, यथेदं परनिमित्ततया परोक्षमिति श्रद्धत्से एवमिदमपि कस्मान्न श्रद्धीयत इति । सूत्रेऽनुपदिष्टत्वात् "इंदियपच्चक्खं चे" ति सामान्येनाभिधानादिति चेत् । सूरिराह—यद्येवं तत्तत्र प्रत्यक्षमपि नोक्तं, सामान्येनैवाभिधानात् । आह—एवं द्वितीयावयवे विशेष्य प्रत्यक्षमुक्तं "नोइन्दियपच्चक्खं चे" ति वचनात् । नोइन्दियं च मन इत्यभिप्रायः । उच्यते, न, सर्वनिषेधवचनत्वेन नोशब्दस्य तत्रावधिज्ञानादिविशेषणात् । तत्रैतत् स्यात्—नोइन्द्रियं मनः, ततश्च तन्निमित्तमवध्यादि भविष्यत्यतो नोन्द्रियनिमित्तं परोक्षमिति न श्रद्दध्महे इति । एतदपि नास्ति, मनःपर्याप्त्या अपर्याप्तकस्यावधिज्ञानाभावेन तदुपयोगाभावतोऽनिष्टापत्तिप्रसङ्गात् "चुतेमित्ति जाणती"त्यस्यासम्बध्यमानत्वात्, सिद्धस्य चाज्ञत्वप्रसङ्गः स्यादमनस्कत्वात् । तस्मात् स्थितमेतद्—यथेन्द्रियप्रत्यक्षं परोक्षमुक्तं मतिश्रुतयोः परोक्षत्वेन पठितत्वात्, एवं मतिश्रुतपरोक्षवचनादेव मनोनिमित्तमपि तदन्तर्गतत्वादेव परोक्षमिति श्रद्धातव्यं, मतेश्चाष्टाविंशतिभेदभिन्नत्वात्, अन्यथाऽस्यापि षष्ठत्वप्रसङ्गात् । न च तदिष्टमिति । साम्प्रतं गाथाक्षरार्थः प्रतन्यते । 'एकान्तेन परोक्षं लैङ्गिकमा'त्मनः, परनिमित्तत्वात् । 'अवध्यादि च प्रत्यक्षमा'त्मनोऽपरनिमित्तित्वात् । इन्द्रियादिज कथं तर्हि प्रत्यक्षमित्यत आह—'संव्यवहारतः' साक्षादिवेन्द्रियाणां तदुत्पत्तेः । अन्यथोक्तं—"नोइंदियाइं उवलद्धिमन्ति विगतेसु विसयसंभरणा" इत्येवमादि । तदेवं ज्ञानपञ्चकं परोक्षं प्रत्यक्षं चेति लक्षणत उक्तमिति गाथार्थः ॥९५॥

## [ मतिश्रुतयोर्नानात्वम् ]

अथ परोक्षाधिकार एव परश्चोदयति—मतिश्रुतयोः स्वामिकालादिसामान्यादेकत्वमेवास्तु, मा भूद् भेदकल्पना । तथोक्तं[2] —"जत्थ मइणाणं तत्थ सुतणाणं, जत्थ सुतणाणं तत्थ मतिणाणं"ति, तथा चाह—

**सामित्ताइविसेसाभावाओ मइसुएगया नाम ।**
**लक्खणभेआदिकयं नाणत्तं तयविसेसेऽवि ॥९६॥**

---

1 P has सत्यं for तन्न. 2 P adds च.

'सामि' इत्यादि । 'स्वामित्वादिभिर्विशेषाभावः' । तस्मात् किमत आह—'मतिश्रुतयोरेकता' एकत्वम् 'नाम' इति निपातः । निपातस्य चानेकार्थत्वादयमर्थः—अस्त्विति । अचार्य आह—'लक्षणभेदकृतम्' । 'आदि'शब्दात् कार्यकारणभावादिकृतं 'नानात्वं' तयोर्बोद्धव्यम् । 'तदविशेषेऽपि' स्वाम्याद्यविशेषेऽपि सत्ताद्यविशेषेऽपि घटाकाशयोरिवेति । उक्तं च पूर्वाचार्यैः—

"लक्खणभेदा हेतुफलभावतो भेद इंदियविभागा ।
वागऽक्खर मूएरभेदा[1] भेदो[2] मतिसुताणं ॥'

ति गाथार्थः ॥९६॥

किंचेह तद्वस्त्वस्ति यत्केनचिदन्यधर्म्मिसम्बन्धिना धर्म्मेण न तुल्यमिति यथोक्तम्—"जत्थ मइनाणं तत्थ सुयनाण"मित्यादिवचनादेकत्वमनयोरस्त्विति । ननु तत्राप्यनन्तरं लक्षणभेदेन भेदमभिदधतोक्तं "तह वि पुणोऽत्थायरिया नाणत्तं पण्णवयंती"ति कथमित्यतः सौत्रं विधिमभिधित्सुराह—

**जमभिनिबुज्झइ तमभिनिबोहो जं सुणाइ तं सुयं भणियं ।**
**सद्दं सुणइ जइ तओ नाणं तो नाऽऽयभावो तं ॥९७॥**

**सुय कारणं जओ सो सुयं व तक्कारणंति तो तम्मि ।**
**कीरइ सुओवयारो सुयं तु परमत्थओ जीवो ॥९८॥**

**इंदियमणोनिमित्तं जं विण्णाणं सुयाणुसारेणं ।**
**नियअत्थुत्तिसमत्थं तं भावसुयं मई सेसं ॥९९॥**

**जइ सुयलक्खणमेयं तो न ममेगिंदियाण संभवइ ।**
**दव्वसुयाभावम्मिऽवि भावसुयं सुत्तजइणो व्व ॥१००॥**

**भावसुयं भासासोयलद्धिणो जुज्जए न इयरस्स ।**
**भासाभिमुहस्स जयं सोऊण व जं हवेज्जाहि ॥१०१॥**

**जह सुहुमं भाविंदियनाणं दव्विंदियावरोहेऽवि ।**
**तह दव्वसुयाभावे भावसुयं पत्थिवाईणं ॥१०२॥**

**एवं सव्वपसंगो न तदावरणाणमक्खओवसमा ।**
**मइसुयनाणावरणक्खओवसमओ मइसुयाइं ॥१०३॥**

'जमभिणी'त्यादि । 'यद्' वस्त्व'भिनिबुध्यते' तथाक्षयोपशमबलादाभिमुख्येन 'तमभिनीबोध' त्ति । 'तद्' वस्त्व'भिनिबोध'मभिधीयते, कारण एव कार्योपचाराद्, अभिनिबोधस्यात्मगुणत्वात् । तथा 'जं सुणइ तं सुयं भणितं' ति । यच्छृणोति—यदाकर्णयति तत् श्रुतं भणितं—तत् श्रुतज्ञानमभिहितम् । एवमुक्ते पर आह—ननु 'शब्दं शृणोति' शब्दमाकर्णयति । ततः किमत आह—'जइ तओ नाणं' यद्यसौ शब्दो ज्ञानं 'तो' ततः 'नात्मभावो' नात्मपरिणाम-

---

1 P adds इ. 2 P omits भेदो.

3 P adds मतिज्ञानं वल्कलयं श्रुतज्ञानं च दवारिकातुल्यं.

'स्तत्'—श्रुतं प्राप्नोति । आत्मगुणश्च तदावेदितम् । किमित्येवं चेत्, शब्दस्य श्रूयमाणत्वात्, तस्य[1] पुद्‌गलगुणत्वेनानात्मगुणत्वादिति चोदकगाथार्थः ।९७।।

अत्रोच्यते—कारणे कार्योपचाराददोप इत्याह—'सुयकारणमि'त्यादि । 'यतो'—यस्मा'दसौ'—शब्दो वक्त्राऽभिधीयमानः 'श्रुतकारणं' श्रुतनिमित्तं वर्त्तते, श्रोतुरिति गम्यते । तथा 'श्रुतं वा'—भावश्रुतं वक्तृगतं 'तत्कारणं'—बाह्यशब्दकारणं, यतः सिद्धमालोच्य व्याख्यानकरणादौ 'ततस्तस्मिन्'—कारणे कार्ये वा शब्दे 'क्रियते' विधीयते 'श्रुतोपचारः' श्रुताध्यारोप इति न कश्चिद्दोप इति । परमार्थ त्वाह—'परमार्थतः' पुनः 'श्रुतं जीव' एवेत्यात्मभावादनन्यत्वादिति गाथार्थः । आह एवमपि शृणोतीति श्रुतमात्मभावश्चेति विरुध्यते, न, कर्तृसाधनपक्षे शृणोतीति श्रुतमित्यात्मस्वभावस्तदुपयोगानन्यत्वात् । कर्मसाधनपक्षे तु प्रागुक्ते शृणोति तदिति श्रुतमिति द्रव्यश्रुतम् ।।९८।।

अथ किं तद्भावश्रुतमित्यत आह—'इंदिए'त्यादि । अथवा प्रकारान्तरेणापि लक्षणभेदमभिधित्सुराह—'इंदिए'त्यादि । 'इन्द्रियाणि'—स्पर्शनादीनि । 'मन'स्तु—अन्तःकरणम् । इन्द्रियं च मनश्चेति 'इन्द्रियमनसी' ते 'निमित्तं' यस्य तत्तथा । 'यद्विज्ञानं' यच्छब्दार्थसंवेदनं त्रिकालविपयमाविर्भंति । कथमित्यत आह—'श्रुतानुसारेणे' ति श्रुतग्रन्थानुसारेणान्तर्जल्पाकारेण शब्दोल्लेखेन शब्दार्थालोचनद्वारेण घट इत्येवं तद्भावश्रुतम् । न चात्रेन्द्रियस्य व्यापारो नास्ति, श्रोत्रेन्द्रियादिनिमित्तत्वात् । केवलमनोव्यापारत्वेऽपि चाविरोधः । एतच्चैवं मूकस्यापि स्यात्, तथाऽव्यक्तध्वनिश्रवणात्, वधिरस्यापि स्यात्, तथा क्रियादर्शनात् । किंविशिष्टमित्याह—निजश्चासावर्थश्चेति 'निजार्थः', अभिलाप्य इत्यर्थः । तस्मि'न्नुक्तिः' भणनमिति 'निजार्थोक्तिः' । तस्यां 'समर्थ'—प्रत्यलम् । अत्राह—इन्द्रियनिमित्तं श्रुतानुसारेण चाविर्भवदपि किं किञ्चिद् भावश्रुतं निजार्थोक्त्यसमर्थं भवति येन व्यवच्छेदार्थमिदं विशेषणान्तरमुच्यत इति । उच्यते—नेदं व्यवच्छेदार्थं, स्वरूपान्वाख्यानत्वात् तस्य[2], इत्थं ज्ञानस्य सदा निजाऽर्थोक्त्यव्यभिचारात् । यदत्रान्यत्तदुद्धरन्नाह—'मती सेसं' ति । 'शेषं'—यदिन्द्रियमनोनिमित्तं विज्ञानमप्यश्रुतानुसारेण निजार्थोक्त्यसमर्थं सा 'मतिः'—तन्मतिज्ञानम् । एतदुक्तं भवति—सामान्यार्थावग्रहादारभ्य वह्वादिग्रहणवशाच्छब्दादिज्ञानं सांव्यवहारिकार्थावग्रहादि च मतिः, साम्प्रतकालीनवस्तुविपयत्वात्, यत्र शब्दमात्रापोहः सा मतिः, यत्र त्वर्यलोचना तच्छ्रुतमिति भावनेति गाथार्थः ।।९९।।

चोदक आह—'जदी'त्यादी । यदि भाव'श्रुतलक्षणमेतद'भ्युपगम्यते, यदुक्तमनन्तरगाथायां 'तो' ततः 'न तद्'—भावश्रुत'मेकेन्द्रियाणां'—पृथिव्यादीनां 'सम्भवति', न ह्येकेन्द्रियाणामक्षरलब्धिरस्ति, येन श्रुतग्रंथानुसारिविज्ञानयोगादेते तद्वन्तः स्युः । तथा च सत्यनिष्टं "सव्वजीवाणं पि य ण" मित्युक्तत्वात् । उच्यते,

1 P adds च.  2 अस्य P.

तेषां द्रव्यश्रुतं नास्ति, करणाभावात्। तदभावे भावश्रुतमपि मा भूदिति चेदत आह—'द्रव्यश्रुताभावेऽपि' च तेषां 'भावश्रुतम'शब्दकारणं तदावरणक्षयोपशममात्रं जीवत्वनिबन्धनमस्त्येवेति शेषः। कस्येवेत्याह—'सुप्तयतेरिव'। यथा हि सुप्तस्य साधोः सहकारिकारणाभावेन द्रव्यश्रुतं नास्ति, तथापि लब्धिरूपं विद्यत इत्येवं तेषामपीति को दोषः ? एतदुक्तं भवति—यथा पयसि नवनीतघृतमात्रमनुमीयते, उत्तरकालं स्पष्टीभवमानत्वात्, एवमेतेष्वप्येतद्, यथा च तत्र तयोरन्योन्यानुवेध एवमेतेष्वप्यनयोरिति वल्ल्यादौ स्पष्टदर्शनात्। अत्राह—प्राक् श्रूयते तदिति श्रुतमित्युक्तमिह च सुप्तयतौ द्रव्यश्रुतनिषेध उक्तः, तदभावे च श्रुतोपयोगस्याप्यभाव इति किमुच्यते—'सुत्तजइणो व्व' त्ति। उच्यते, इष्टतो विग्रहात्। तथाहि—श्रृणोत्यसाविति श्रुतं तेन तस्मिन् वा, यदा च यत्र च सोऽन्यो वेति, अतः क्षयोपशमस्य विवक्षितत्वादुपयोगस्य चाविवक्षितत्वात्, सुप्तयतौ च क्षयोपशमसद्भावात् सुष्ठूच्यते—'सुत्तजइणो व्व' त्ति गाथार्थः ॥१००॥

साम्प्रतं साधितमर्थं दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यापादनेन विघटयन्नाह—'भावसुत'मित्यादि। इह च 'भावश्रुतं युज्यते' घटते, साधोरिति गम्यते। कुत इत्याह—'भाषालब्धिमत्त्वात् श्रोत्रलब्धिमत्त्वाच्च', उत्थितस्य कार्या[1]दर्शनात्, यत् किंविशिष्टमित्याह—'भासाभिमुहस्स जयं' भवेज्जाहि 'सोऊण वा' सद्दं 'जं हवेज्जाहि'। प्रस्तुतार्थयोजनां कुर्वन्नाह—'न इतरस्स' त्ति नैकेन्द्रियस्य तद् युज्यते, कार्यादशनात्। अतो न तमेगेंदियाण संभवति त्ति गाथार्थः ॥१०१॥

उच्यते—कार्यादर्शनादित्यसिद्धो हेतुः। आह च—'जह'त्यादि॥ 'यथा' येन प्रकारान्तरेण 'सूक्ष्मभावेन्द्रियज्ञान'मणीयसी लब्धीन्द्रियपञ्चकावृतिक्षयोपशमोद्भवा विज्ञानशक्तिरस्ति। केषामित्याह—'पत्थिवाईणं' ति। पृथिव्याद्येकेन्द्रियाणामित्यर्थः। कदेत्यत आह—'द्रव्येन्द्रियावरोधेऽपि'निर्वृत्त्युपकरणेन्द्रियावृत्तावपि। कुत एतदिति चेत्, वकुलाशोकादेः पंचेन्द्रियार्थोपभोगदर्शनात्। मतिश्चायं रूपादिविज्ञानमात्रत्वात्। दार्ष्टान्तिकोपसंहारमाह—'तथा द्रव्यश्रुतस्य'—निर्वृत्त्युपकरणद्वयानावृतिकल्पस्य 'अभावे भावश्रुतं' लब्धीन्द्रियपञ्चकावृतिक्षयोपशमोद्भवशक्तिकल्पम्, अत्यन्तास्पष्टाक्षरानुसार्योघज्ञानं श्रद्धातव्यं, केषांचिदन्येषामश्रुतत्वात् तेषामेव। अतः श्रुतग्रन्थानुसरणेऽसत्यप्यमीषां यच्च यावच्चैतदस्तीति नातद्वन्त इमे, न चानिष्टप्राप्तिरिति सिद्धमिति गाथार्थः॥१०२॥

अत्राह—'एव'मित्यादि। 'एवं'—भावश्रुतवत्, 'सर्वप्रसङ्गो'ऽवध्यादिज्ञानप्राप्तिप्रसङ्गो। न चैत[2]दुपपन्नं, "पशवश्चाप्यनिवृत्तकेवला" इति वचनात्। उच्यते, 'न' इति नैतदेवम्। किं कारणमित्याह—'तदावरणानाम्'—अवध्यादित्रयज्ञानावरणाना'मक्षयोपशमाद'क्षयाच्च, पशव इत्याद्यस्य च शक्तिमात्रोपवर्णनात्। व्यतिरेकमाह—'मतिश्रुते' तु स्यातां 'तदावरणक्षयोपशमसद्भावात्'। "सव्वजीवाणं पि अ ण"मित्येवमादिवचनात्। यथा जात्यन्धस्य क्षयोपशममात्रमवशिष्यते न तु सहकारिकारणमित्येवमत्रापीति गाथार्थः ॥१०३॥

1 र्थ P. 2 दनु P.

इतश्चानयोर्भेद इत्याह—

मइपुव्वं सुयमुत्तं न मई सुयपुव्विया विसेसोऽयं ।
पुव्वं पूरणपालणभावाओ जं मई तस्स ॥१०४॥

पूरिज्जइ पाविज्जइ दिज्जइ वा जं मइएँ नामइण ।
पालिज्जइ य मईए गहियं इहरा पणस्सेज्जा ॥१०५॥

णाणाणऽण्णाणाणि य समकालाइं जओ मइसुयाइं ।
तो न सुयं मइपुव्वं मइणाणे वा सुयऽन्नाणं ॥१०६॥

इह लद्धिमइसुयाइं समकालाइं न तुवओगो सिं ।
मइपुव्वं सुयमिह पुण सुओवओगो मइप्पभवो ॥१०७॥

सोऊण जा मई भे सा सुयपुव्वत्ति तेण न विसेसो ।
सा दव्वसुयप्पभवा भावसुयाओ मई नत्थि ॥१०८॥

कज्जतया न उ कमसो कमेण को वा मइं निवारेइ ।
जं तत्थावत्थाणं चुयस्स सुत्तोवओगाओ ॥१०९॥

दव्वसुयं मइपुव्वं भासइ जं नाविचिंतियं केई ।
भावसुयस्साभावो पावइ तेसिं न य विसेसो ॥११०॥

दव्वसुयं बुद्धीओ सावि तओ जमविसेसओ तम्हा ।
भावसुयं मइपुव्वं दव्वसुयं लक्खणं तस्स ॥१११॥

सुयविण्णाणप्पभवं दव्वसुयमियं जओ विचिंतेउं ।
पुव्वं पच्छा भासइ लक्खिज्जइ तेण भावसुअं ॥११२॥

'**मती**'त्यादि । इह 'मतिपूर्वं श्रुतमुक्तं', न तु विपर्यय इत्ययमनयोर्विशेषः, कार्यकारणयोः कथञ्चिद् भेदात् । तथा च '**जं मती तस्स**' त्ति । 'यद्'—यस्मात् कारणात् 'मतिः'—मतिज्ञानं 'तस्य' श्रुतज्ञानस्य । किम् ? अत आह—'**पुव्वं**' ति पूर्वम् । कुतः ? "पॄ पालनपूरणयोः" । 'पूरणपालनभावादि'ति गाथार्थः ॥१०४॥

एतदेव भावयन्नाह—'**पूरिज्जती**'त्यादि । 'यद्'—यस्मात् '**मतिए**' त्ति मत्या इदं श्रुतमिति गम्यते । किम् ? अत आह—'**पूरिज्जइ**' परावर्त्तनेन पोष्यत इत्यर्थः । तथा 'प्राप्यते'—लभ्यतेऽन्यत इदं मत्यैव अन्यो वेदं प्राप्यत इति । एवं 'दीयते' चान्यस्मै मत्यैव, 'नामत्या' । तथा श्रोत्रेदं गृहीतं सत् 'पाल्यते'—परावर्त्तनादिनाऽनुसन्धीयते 'मत्यैव' । 'च'शब्दाद्दीयते चेत्येवमादि । एवं चैतत् । 'इतरथा'—अन्यथा मतिपूर्वत्वाभावे 'प्रणश्येत्' तत् । अतः पूर्वापरभावाद् भेदोऽनयोरिति गाथार्थः ॥१०५॥

अथेमं विजिघटयिषुरेतद्भावे दोषान्तरमाविष्कुर्वन् पर आह—'**णाणाण**' इत्यादि । प्रसिद्धार्था । एतदुक्तं भवति—मतिश्रुतयोरावरणक्षयोपशमः क्रमेण

वा भवेद् यौगपद्येन वा ? यौगपद्येन चेत् "श्रुतं मतिपूर्व"मिति सूत्रविरोधः, समकालोत्पन्नयोः सव्येतरगोविषाणयोरिव पूर्वापरभावाभावात् । क्रमेण चेन्मतिज्ञाने श्रुताज्ञानप्रसङ्गः, तदुत्पत्तौ तदनुत्पत्तेः, तदनुत्पत्तौ चेतरस्याद्याप्यनिवृत्तेः, इतरानिवृत्तिश्च क्रमपक्षादिति गाथार्थः ।।१०६।।

उच्यते—ध्यान्ध्यविजृम्भितमेतद् अभिप्रायापरिज्ञानात् । तथाहि—द्विविधे ते—लब्धिरूपे चोपयोगरूपे चेति । लब्धिमङ्गीकृत्य यौगपद्यं दृष्टत्वात् सव्येतरगोविषाणयोरिव, उपयोगं त्वङ्गीकृत्य क्रमभावः तथास्वाभाव्यात्, केवलज्ञानदर्शनयोरिवेति । आह च भाष्यकारः—'इहे'त्यादि गतार्था । नवरं तथाहि—नासञ्चिन्त्य मत्या श्रुतग्रन्थानुसारि विज्ञानं प्रादुरस्तीति गाथार्थः ।।१०७।।

एवं च मत्युपयोगस्यापि श्रुतपूर्वकत्वादविशेषः किलेति । आह च चोदकः—'**सोऊणे**'त्यादि । प्रागर्धं गतार्थम् । आचार्य आह—'**सा**' मतिः 'द्रव्यश्रुतप्रभवा' कारणद्रव्यश्रुतजनिता । किं तया ? सर्वथैतावद् ब्रूमो—'भावश्रुतात्' सकाशात् 'मतिर्नास्ति' । किं सर्वथा नेत्याह—'**कज्जतये**'त्यादि । 'कार्यतया' फलतया निषेधोऽयं 'न तु' नैव 'क्रमशो' निषेध इति, आजन्म श्रुतमात्रोपयोगप्रसङ्गात् । तथा च श्रुतोपयोगात् 'क्रमेण' भवन्तीं '**मतिं को वा** निषेधति' ? न कश्चिदित्यर्थः । किं कारणमित्याह—'यस्मात्' कारणात् 'श्रुतोपयोगात्' श्रुतचिन्तनोपयोगात् 'चु'तस्य' उपरतस्य सतः 'तत्र' तस्यां मतौ 'अवस्थान' प्रतिष्ठा भवत्यनुभवसिद्धत्वात् । अतः "श्रुतं मतिपूर्व"मित्यत्र सूत्रे श्रुतोपयोगोऽधिक्रियत इति स्थितमिति गाथाद्वयार्थः ।।१०८-१०९।।

तदेवं स्थिते—'**दव्वसुत**'मित्यादि । "श्रुतं मतिपूर्व"मित्यत्र केचिद् व्याचक्षते—'द्रव्यश्रुतं मतिपूर्वं', न भावश्रुतम् । किं कारणं ? '**भासति जं णाविचिंतियं**' ति मत्याऽसञ्चिन्त्य भाषणस्यासम्भवात् । तेषां को दोष इत्याह—'भावश्रुतस्याभावः प्राप्नोति', 'तेषामे'वंव्याख्यायिनां मत्यनन्तरं शब्दमात्रोत्थानात् । तथा च 'न च विशेषो' न च भेदो मतिश्रुतयोस्तेषां प्राप्नोति । भावो ज्ञानमभावो द्रव्यश्रुतं, भावाभावयोर्भेदाभिधानस्यायुज्यमानत्वात् ।

"किं वा नाणेऽहि'मते सद्दविते तेण[2] सोऽविय न जुत्तो ।
जं मइ तक्कारणमो सो विय मइकारणं भणिओ ।।१।।

तम्हा भावसुयं चिय मतिपुव्वं जं [3]मतीण [ऽ] चिंतेतुं[3] ।
नो अत्थि सुयग्गंथाणुसारि णाणं ति भणियमिणं ।।२।। "

ति गाथार्थः ।।११०।।

तथा चाह—'**दव्वसुयं**'मित्याद्याद्यपादत्रयमुक्तार्थम् । 'द्रव्यश्रुतं' यत् तत् परैर्मतिपूर्वकमभिधीयते । 'लक्षणं' चिह्नं गमकमिति यावत् । 'तस्या'स्मत्पक्ष-

1 च्चु P.　　2...2 गए सद्दविहेतेण.　　3...3 मतीए अचिंतेउं P.

भाविनोभावश्रुतस्येति गाथार्थः ।।१११।।

कुत एतदित्यत आह—'सुयविण्णाणे'त्यादि । स्पष्टार्था । अन्ते चेयं युक्तिस्तत्पूर्वकत्वात्, तत्पूर्वकत्वं च "भसाइ जं णाविचिंतिय"मित्यभिप्रायात् । तस्मादस्ति तत् श्रुतं यदस्य कारणमिति गाथार्थः ।।११२।।

अथानुषङ्गिकम्—यथैव मतिश्रुतयोः कार्यकारणभावभेदाद् भेदः, एवं मतेरपि सम्यग्मिथ्यादृष्टिकृतो भेदः श्रुतस्य चेति । उक्तञ्च सूत्रकृता "अविसेसिया मती"त्याद्युच्चारणीयम् । एतदेवाह भाष्यकारः —

**अविसेसिया मइ च्चिय समद्दिट्ठिस्स सा मइण्णाणं**
**मइअन्नाणं मिच्छद्दिट्ठिस्स सुयंपि एमेव ।।११३।।**
**सदसदविसेसणाओ भवहेउ जदिच्छिओवलम्भाओ ।**
**नाणफलाभावाओ मिच्छद्दिट्ठिस्स अण्णाणं ।।११४।।**

'अविसेसिते'त्यादि । गतार्था । किं पुनः कारणं मिथ्यादृष्टेर्मतिश्रुते अज्ञानम् ? ननु यथा सम्यग्दृष्टिराभ्यां घटं जानीते व्यवहरति चैवमितरोऽपीत्यतः कुत एतदेवमित्यत आह—'सदसते'त्यादि । '**मिच्छद्दिट्ठिस्स अन्नाणं**' मिथ्यादृष्टेर्मतिश्रुते अज्ञानम् । कुतइत्यत आह—'सदसतोरविशेषात्' । तथाहि—असौ सन्तमपि पुरुषे देवादिधर्मं न प्रतिपद्यते, अस्ति पुरुष एवेति प्रतिपत्तेरेकान्तवादित्वात् । तथाऽसन्तमपि पुरुषे पटादिधर्मं प्रतिपद्यते, अस्त्येवेत्यभ्युपगमादेकान्तवादित्वादेव । तथा 'भवहेतुत्वात्' मिथ्यादर्शनवत्, तथा 'यदृच्छोपलब्धे'रुन्मत्तवत्, तथा विरत्यभावेन 'ज्ञानफलाभावाद्'न्धहस्तप्रदीपवत् ।।११४।।

तथा भेदभेदाद् भेद इत्याह—

**भेयकयं च विसेसणमट्ठावीसइविहंगभेयाइं ।**
**इंदियविभागओ वा मइसुयभेयो जओऽभिहियं ।।११५।।**
**सोइंदिओवलद्धी होइ सुयं सेसयं तु मइनाणं ।**
**मोतूणं दव्वसुयं अक्खरलंभो य सेसेसु ।।११६।।**

'भेद' इत्यादि । 'भेदकृतं चा'नयो'र्विशेषणं' नानात्वम् । तथाहि—मतिज्ञान'मष्टाविंशतिविधम्' । कथं तत् । उच्यते—

"छच्चउक्क चउव्वीसं चउवंजण होंति अट्ठवीसं तु ।
आदी उभयत्थावि य, सभेदपक्खावगो णेओ ।।१।।"

ततश्च श्रुतमङ्गानङ्गप्रविष्टमनेकधेति गाथाऽर्द्धार्थः । 'इन्दिए'त्याद्युत्तरगाथासम्बन्ध इति गाथार्थः ।।११५।।

सा चेयं "**सोइंदियोवलद्धी**' इत्यादि । 'इन्द्रो' जीवस्तस्येद'मिन्द्रियम्' । श्रूयतेऽनेनेति 'श्रोत्रम्' । श्रोत्रं च तदिन्द्रियञ्चेति 'श्रोत्रेन्द्रियम्' । उपलम्भन'मुपलब्धि'र्विज्ञानम् । श्रोत्रेन्द्रियेणोपलब्धिरिति तृतीयासमासः । श्रोत्रेन्द्रियस्य

वोपलब्धिः 'श्रोत्रेन्द्रियोपलब्धि'रिति षष्ठीसमासः। श्रोत्रेन्द्रियेणोपलब्धिर्यस्य वेत्यन्यपदार्थेन शब्दः। तेनैतदुक्तं भवति—तृतीयाषष्ठीसमासाभ्यां भावश्रुतमधिक्रियते, बहुव्रीहिणा तु द्रव्यश्रुतमिति। असौ श्रोत्रेन्द्रियोपलब्धिः 'श्रुतं भवति'। इह च व्यवच्छेदफलत्वात् सर्वं वाक्यं सावधारणकं भवति। इष्टतश्चावधारणविधिरिति न्यायः। तथा चोक्तम्—

"अयोगं योगमपरैरत्यन्तायोगमेव च।
व्यवच्छिनत्ति धर्मस्य, निपातो व्यतिरेचकः ॥१॥
विशेषणविशेष्याभ्यां, क्रियया च सहोदितः।
विवक्षातोऽप्रयोगेऽपि, तस्यार्थोऽयं प्रतीयते ॥२॥
व्यवच्छेदफलं वाक्यं, यथा चैत्रो धनुर्धरः।
पार्थो धनुर्धरो नीलं, सरोजमिति वा यथा ॥३॥"

तदिहैवमवधारणमवगन्तव्यं—श्रुतं श्रोत्रेन्द्रियोपलब्धिरेव, अश्रोत्रेन्द्रियोपलब्धिर्न भवतीत्य[1]योगमेव व्यवच्छेदः[1]। श्रोत्रेन्द्रियोपलब्धिस्तु श्रुतं मतिर्वा, तद्यथा—चैत्रो धनुर्धर एवाधनुर्धरो न भवति, धनुर्धरस्तु चैत्रः कुसुमायुधो वेति प्रथमपादव्याख्येयमिति। 'सेसयं तु मइनाणं' ति शेषं [2]यच्चक्षुरादीन्द्रियच[2]तुष्टयोपलब्धिरूपं विज्ञानं तन्मतिज्ञानं भवतीति वर्त्तते। 'तु'शब्दो विशेषणार्थः। तेनैतदुक्तं भवति—श्रोत्रेन्द्रियोपलब्धिरपि काचिन्मतिज्ञानं भवति, तस्यामप्यवग्रहादिसद्भावात्। आह—एवं श्रोत्रेन्द्रियोपलब्धेः श्रुतमतिरूपत्वात्, यदुक्तं भवति सा श्रुतज्ञानं तदुक्तं भवति सा मतिज्ञानं, यदुक्तं भवति सा मतिज्ञानं तदुक्तं भवति सा श्रुतज्ञानमिति तदिदं शांतिकं कुर्वतां वै[3]तालोत्थानम्। नन्वेवमनयोरभेद एव सिद्धयतीत्यभिप्रायः। तन्न, श्रोत्रेन्द्रियोपलब्धाववग्रहेहावा[4]यमात्रस्य मतित्वात्, श्रुतग्रन्थानुसारितया शब्दार्थज्ञानस्य श्रुतत्वात्, शब्ददर्दरेणास्य त्वद्वचसोऽपकर्णनीयत्वात् मुग्धजनविस्मयाधायित्वादिति। अत्र च प्रथमपादे 'तु'शब्दौ श्रुतमत्यभिधायिनाविति भावनीयम्। अयं तु द्वितीयपादाक्षरार्थः। तदेवं सर्वस्याः शेषेन्द्रियोपलब्धेर्मतिज्ञानत्वे उत्सर्गेण प्राप्ते सत्यपवादमाह—'मुक्त्वा द्रव्यश्रुतं' मुक्त्वा पुस्तकपत्रकन्यस्ताक्षरविषयां शेषेन्द्रियोपलब्धि, तस्याः शब्दत्वेन श्रुतत्वात्, शेषं मतिज्ञानं वर्त्तते, इति तृतीयपादाक्षरार्थः। तथा 'यश्चाक्षरलाभः' असावपि यः श्रुताक्षरलाभो, नेतरः मतेरपि कथञ्चिदक्षररूपत्वात्। केषु? इत्याह—'शेषेषु' चक्षुरादीन्द्रियेषु। कथं? "सीता साडी दीहं च तण"मित्येवं यो भवति, स च श्रुतं भवतीति वर्त्तते, योग्यत्वादित्यभिप्रायः। अन्यथा 'मोत्तूणं दव्वसुतं, अक्खरलंभं च सेसेसु मोत्तूण' या श्रोत्रेन्द्रियोपलब्धिः सा श्रुतं स्यात्, सैव केवला आद्या श्रुतं स्यादित्यर्थः। तथा सति शेषेन्द्रियाक्षरलाभस्य श्रुतत्वं न लभ्येत, न चैतदिष्टमिष्टत्वात्तस्य। यद्येवं शेषेन्द्रियाक्षरलाभोऽपि श्रुतमतो यदादाववधारणं

1......1 अयोगव्यवच्छेदः P. 2.....2 यच्चक्षुरिन्द्रियादिच P.
3 वे P. 4 पा P.

कृतं श्रुतं श्रोत्रेन्द्रियोपलब्धिरेवेति, तन्न घटां प्राञ्चति, शेषेन्द्रियाक्षरलाभस्याश्रोत्रेन्द्रियोपलब्धित्वात्। उच्यते, प्राञ्चति, तस्यापि श्रोत्रेन्द्रियोपलब्धिरूपत्वात्। यदा च यत्र च तस्यान्यस्य वा श्रुतत्वेनाभिलापविषयत्वादिति **पूर्वगतगाथाक्षरार्थः** ॥११६॥

साम्प्रतमेवमश्रुतव्याख्यानापरश्चुचोदयिपुराह—

सोउवलद्धी जइ सुयं न नाम सोउग्गहादश्रो बुद्धी।
श्रह बुद्धी तो न सुयं श्रहोभयं संकरो नाम ॥११७॥

केई बेन्तस्स सुयं सद्दो सुणओ मइत्ति, तं न भवे।
जं सव्वो च्चिय सद्दो दव्वसुयं तस्स को भेयो ॥११८॥

किं वा नाणेऽहिगए सद्देणं जइ य सद्दविन्नाणं।
गहियं तो को भेयो भगओ सुणओ व जो तस्स ॥११९॥

भणओ सुणओ व सुयं तं जमिह सुयाणुसारि विण्णाणं।
दोण्हंपि सुयाईयं जं विन्नाणं तयं बुद्धी ॥१२०॥

सोइंदिओवलद्धी चेव सुयं न उ तई सुयं चेव।
सोइंदिओवलद्धीवि काइ जम्हा मइन्नाणं ॥१२१॥

तु समुच्चयवयणाओ काई सोइन्दिओवलद्धीवि।
मइरेवं सइ सोउग्गहादओ हुन्ति मइभेया ॥१२२॥

पत्ताइगयं सुयकारणंति सद्दो व्व तेण दव्वसुयं।
भावसुयमक्खराणं लाभो सेसं मइन्नाणं ॥१२३॥

जइ सुयमक्खरलाभो न नाम सोओवलद्धिरेव सुयं।
सोओवलद्धिरेवऽक्खराइं सुइसंभवाउत्ति ॥१२४॥

सोऽवि य सुयक्खराणं जो लाभो तं सुयं मई सेसा।
जइ वा अणक्खरच्चिय सा सव्वा, न प्पवत्तेज्जा ॥१२५॥

'सोतुवलद्धी'त्यादि। 'यदि श्रोत्रेन्द्रियोपलब्धिः श्रुतं' ततो **'न नामे'**ति—नैव 'श्रोत्रेन्द्रियावग्रहादयो बुद्धिः', तेषां श्रोत्रेन्द्रियोपलब्धित्वात्, तस्याश्च श्रुतत्वेनैवावधार्यमाणत्वात्। तथा—"सोतुवलद्धि जइ सुतं न नाम मइ अट्ठवीसभेदा तु" श्रोत्रेन्द्रियोपलब्धिः श्रुतमेवेत्यवधारणात्। 'श्रह बुद्धि'त्ति अथ बुद्धिः श्रोत्रेन्द्रियावग्रहादयो मतेरष्टाविंशतिभेदभिन्नत्वात् 'तो' ततो न श्रोत्रेन्द्रियोपलब्धिः 'श्रुत'मेव, तस्या मतित्वादपि, 'अथोभयं' सा श्रुतं मतिश्चेति ततः 'संकरो नाम' सङ्कीर्णमेव तर्हि तयोः स्वरूपं स्यात्। न चेत्सङ्करोऽभ्युपगम्यते तदैकत्वं तयोरिति घोटारूढस्य विस्मृतो घोट इति गाथार्थः ॥११७॥

अत्र **केचन** आचार्यदेशीयाः प्रौढवादितया श्रोत्रेन्द्रियोपलब्धेर्बहुव्रीह्यङ्गीकरणैकत्वपरिहारतो द्वित्वमुक्तवन्तस्तन्मतमुपन्यन्नाह—'केयी'त्यादि। **केचन** व्याख्यानयन्ति—प्रज्ञापकस्य 'ब्रुवतः' सतः 'शब्दः' श्रोत्रेन्द्रियोपलब्धिलक्षणः

वोपलब्धिः 'श्रोत्रेन्द्रियोपलब्धि'रिति षष्ठीसमासः। श्रोत्रेन्द्रियेणोपलब्धिर्यस्य वेत्यन्यपदार्थेन शब्दः। तेनैतदुक्तं भवति—तृतीयाषष्ठीसमासाभ्यां भावश्रुतमधिक्रियते, बहुव्रीहिणा तु द्रव्यश्रुतमिति। असौ श्रोत्रेन्द्रियोपलब्धिः 'श्रुतं भवति'। इह च व्यवच्छेदफलत्वात् सर्वं वाक्यं सावधारणकं भवति। इष्टतश्चावधारणविधिरिति न्यायः। तथा चोक्तम्—

"अयोगं योगमपरैरत्यन्तायोगमेव च।
व्यवच्छिनत्ति धर्मस्य, निपातो व्यतिरेचकः ॥१॥
विशेषणविशेष्याभ्यां, क्रियया च सहोदितः।
विवक्षातोऽप्रयोगेऽपि, तस्यार्थोऽयं प्रतीयते ॥२॥
व्यवच्छेदफलं वाक्यं, यथा चैत्रो धनुर्धरः।
पार्थो धनुर्धरो नीलं, सरोजमिति वा यथा ॥३॥"

तदिहैवमवधारणमवगन्तव्यं—श्रुतं श्रोत्रेन्द्रियोपलब्धिरेव, अश्रोत्रेन्द्रियोपलब्धिर्न भवतीत्य[1]योगमेव व्यवच्छेदः[1]। श्रोत्रेन्द्रियोपलब्धिस्तु श्रुतं मतिर्वा, तद्यथा—चैत्रो धनुर्धर एवाधनुर्धरो न भवति, धनुर्धरस्तु चैत्रः कुसुमायुधो वेति प्रथमपादव्याख्येयमिति। 'सेसयं तु मइनाणं' ति शेषं [2]यच्चक्षुरादीन्द्रियच[2]तुष्टयोपलब्धिरूपं विज्ञानं तन्मतिज्ञानं भवतीति वर्त्तते। 'तु'शब्दो विशेषणार्थः। तेनैतदुक्तं भवति—श्रोत्रेन्द्रियोपलब्धिरपि काचिन्मतिज्ञानं भवति, तस्यामप्यवग्रहादिसद्भावात्। आह—एवं श्रोत्रेन्द्रियोपलब्धेः श्रुतमतिरूपत्वात्, यदुक्तं भवति सा श्रुतज्ञानं तदुक्तं भवति सा मतिज्ञानं, यदुक्तं भवति सा मतिज्ञानं तदुक्तं भवति सा श्रुतज्ञानमिति तदिदं शांतिकं कुर्वतां वै[3]तालोत्थानम्। नन्वेवमनयोरभेद एव सिद्ध्यतीत्यभिप्रायः। तन्न, श्रोत्रेन्द्रियोपलब्धाववग्रहेहावा[4]यमात्रस्य मतित्वात्, श्रुतग्रन्थानुसारितया शब्दार्थज्ञानस्य श्रुतत्वात्, शब्ददर्दरेणास्य त्वद्वचसोऽपकर्णनीयत्वात् मुग्धजनविस्मयाधायित्वादिति। अत्र च प्रथमपादे 'तु'शब्दौ श्रुतमत्यभिधायिनाविति भावनीयम्। अयं तु द्वितीयपादाक्षरार्थः। तदेवं सर्वस्याः शेषेन्द्रियोपलब्धेर्मतिज्ञानत्वे उत्सर्गेण प्राप्ते सत्यपवादमाह—'मुक्त्वा द्रव्यश्रुतं' मुक्त्वा पुस्तकपत्रकन्यस्ताक्षरविषयां शेषेण्द्रियोपलब्धि, तस्याः शब्दत्वेन श्रुतत्वात्, शेषं मतिज्ञानं वर्त्तते, इति तृतीयपादाक्षरार्थः। तथा 'यश्चाक्षरलाभः' असावपि यः श्रुताक्षरलाभो, नेतरः मतेरपि कथञ्चिदक्षररूपत्वात्। केषु? इत्याह—'शेषेषु' चक्षुरादीन्द्रियेषु। कथं? "सीता साडी दीहं च तण"मित्येवं यो भवति, स च श्रुतं भवतीति वर्त्तते, योग्यत्वादित्यभिप्रायः। अन्यथा 'मोत्तूणं दव्वसुतं, अक्खरलंभं च सेसेसु मोत्तूण' या श्रोत्रेन्द्रियोपलब्धिः सा श्रुतं स्यात्, सैव केवला नाद्या श्रुतं स्यादित्यर्थः। तथा सति शेषेन्द्रियाक्षरलाभस्य श्रुतत्वं न लभ्येत, न चैतदिष्टमिष्टत्वात्तस्य। यद्येवं शेषेन्द्रियाक्षरलाभोऽपि श्रुतमतो यदादाववधारणं

---

1.....1 अयोगव्यवच्छेदः P. 2.....2 यच्चक्षुरिन्द्रियादिच P.
3 वे P. 4 या P.

कृतं श्रुतं श्रोत्रेन्द्रियोपलब्धिरेवेति, तन्न घटां प्राञ्चति, शेषेन्द्रियाक्षरलाभस्याश्रोत्रेन्द्रियोपलब्धित्वात् । उच्यते, प्राञ्चति, तस्यापि श्रोत्रेन्द्रियोपलब्धिरूपत्वात् । यदा च यत्र च तस्यान्यस्य वा श्रुतत्वेनाभिलापविषयत्वादिति **पूर्वगतगाथाक्षरार्थः** ।।११६।।

साम्प्रतमेवमश्रुतव्याख्यानापरश्चुचोदयिपुराह—

**सोउवलद्धी जइ सुयं न नाम सोउग्गहादओ बुद्धी ।**
**अह बुद्धी तो न सुयं अहोभयं संकरो नाम ।।११७।।**

**केई बेन्तस्स सुयं सद्दो सुणओ मइत्ति, तं न भवे ।**
**जं सव्वो च्चिय सद्दो दव्वसुयं तस्स को भेयो ।।११८।।**

**किं वा नाणेऽहिगए सद्देणं जइ य सद्दविन्नाणं ।**
**गहियं तो को भेयो भणओ सुणओ व जो तस्स ।।११९।।**

**भणओ सुणओ व सुयं तं जमिह सुयाणुसारि विण्णाणं ।**
**दोण्हंपि सुयाईयं जं विन्नाणं तयं बुद्धी ।।१२०।।**

**सोइंदिओवलद्धी चेव सुयं न उ तई सुयं चेव ।**
**सोइंदिओवलद्धीवि काइ जम्हा मइन्नाणं ।।१२१।।**

**तु समुच्चयवयणाओ काई सोइन्दिओवलद्धीवि ।**
**मइरेवं सइ सोउग्गहादओ हुन्ति मइभेया ।।१२२।।**

**पत्ताइगयं सुयकारणंति सद्दो व्व तेण दव्वसुयं ।**
**भावसुयमक्खराणं लाभो सेसं मइन्नाणं ।।१२३।।**

**जइ सुयमक्खरलाभो न नाम सोओवलद्धिरेव सुयं ।**
**सोओवलद्धिरेवऽक्खराइं सुइसंभवाउत्ति ।।१२४।।**

**सोऽवि य सुयक्खराणं जो लाभो तं सुयं मई सेसा ।**
**जइ वा अणक्खरच्चिय सा सव्वा, न प्पवत्तेज्जा ।।१२५।।**

**'सोतुवलद्धी'**त्यादि । 'यदि श्रोत्रेन्द्रियोपलब्धिः श्रुतं' ततो **'न नामे'**ति—नैव 'श्रोत्रेन्द्रियावग्रहादयो बुद्धिः', तेषां श्रोत्रेन्द्रियोपलब्धित्वात्, तस्याश्च श्रुतत्वेनैवावधार्यमाणत्वात् । तथा—"सोतुवलद्धि जइ सुतं न नाम मइ अट्ठवीसभेदा तु" श्रोत्रेन्द्रियोपलब्धिः श्रुतमेवेत्यवधारणात् । **'अह बुद्धि'**त्ति अथ बुद्धिः श्रोत्रेन्द्रियावग्रहादयो मतेरष्टाविंशतिभेदभिन्नत्वात् **'तो'** ततो न श्रोत्रेन्द्रियोपलब्धिः 'श्रुत'मेव, तस्या मतित्वादपि, 'अथोभयं' सा श्रुतं मतिश्चेति ततः **'संकरो नाम'** सङ्कीर्णमेव तर्हि तयोः स्वरूपं स्यात् । न चेत्सङ्करोऽभ्युपगम्यते तदैकत्वं तयोरिति घोटारूढस्य विस्मृतो घोट इति गाथार्थः ।।११७।।

अत्र **केचन** आचार्यदेशीयाः प्रौढवादितया श्रोत्रेन्द्रियोपलब्धेर्बहुव्रीह्यङ्गीकरणैकत्वपरिहारतो द्वित्वमुक्तवन्तस्तन्मतमुपन्यन्नाह—'केयी'त्यादि । **केचन** व्याख्यानयन्ति—प्रज्ञापकस्य 'ब्रुवतः' सतः 'शब्दः' श्रोत्रेन्द्रियोपलब्धिलक्षणः

'सुतं' ति श्रुतं भवति। तमेव शब्दं 'सुणतो' शृण्वतः श्रोतु'र्मतिरित्य'त एवमसौ किलोभयरूप इति सिद्धम्। आह—शोभनमेवैतत् कान्त्रपूर्वपक्षतेत्यत आह—'तन्न भवे' त्ति तदेतन्न भवति। किं वाङ्मात्रेण? नेत्याह—'यद्' यस्मात् 'सर्वः शब्दो' भाष्यमाणः श्रूयमाणश्च 'द्रव्यश्रुतं' वर्त्तते, अतस्तस्य 'को भेदः' को विशेषो येनासौ वक्तरि श्रुतं श्रोतरि तु मतिरिति? न कश्चिदिति गाथार्थः ॥११८॥

'किंवे'त्यादि। 'अथवा ज्ञानयोर्भेदाभिधानप्रक्रमे किं शब्देन'? न किञ्चिदित्यभिप्रायः, तस्य पुद्गलमयत्वात्। तत्रैतत्स्यात् न श्रोत्रेन्द्रियोपलब्धिः शब्द एव व्युत्पाद्यतेऽपि तु ज्ञानेऽपि तृतीयाषष्ठीसमाससम्भवात्। ततश्च श्रोत्रेन्द्रियोपलब्धिशब्देन शब्दज्ञानमागृह्यत इत्यत आह—'यदि चा'नेकव्युत्पत्तिसम्भवाच्छब्दज्ञानं गृह्यते द्वित्वप्रसाधनार्थं श्रोत्रेन्द्रियोपलब्धिशब्देनेति, एतदुक्तं भवति—यदि वक्तुः शब्दज्ञानं श्रुतमितरस्य तु मतिरिति गृहीतं 'तो' ततस्तस्येति शब्दज्ञानस्य भावश्रुतलक्षणस्य 'ब्रुवतः शृण्वतो वा यो विशेषो'—यो भेदः स कः? येनानयोर्वक्तृश्रोत्रोस्तन्मतिश्रुते स्याताम्। अपि च—यद्येवमभ्युपगम्य परिहारो दीयते ततः श्रोतुरपि श्रुत्यनन्तरमव्यवधानेन ब्रुवतः सैव शब्दोत्थापिता मतिरविशिष्टा श्रुतं प्रसजति, "सुणतो मतित्ति भणतो सुतं" त्यभ्युपगमात्, तस्य च श्रवणानन्तरमेव वक्तृत्वसम्भवादित्यैकत्वं मतिश्रुतयोरिति कोऽतिशयः कृतः सोऽतिशयः स्यात्? यदि च सर्वदैव शृण्वतो मतिः—मतिरेव ततः "आचार्यपारम्पर्येणेदं श्रुतमायात"मिति न वक्तव्यं, सर्वैः श्रुतत्वात्। तस्मान्न पुष्कलोऽयं परिहार इति गाथार्थः ॥११९॥

अधुनैतत्प्रकरणोपसंहारव्याजेन परमेव व्युत्पादयन्नुभयस्यापि चोभयमभिवित्सुराह—'भणत' इत्यादि। तस्मात् 'भणतो' यत् 'श्रुतग्रन्थानुसारि' ज्ञानं 'तत् श्रुतमे'वं श्रोतुरपि, एवं 'द्वयोरपि यत् श्रुतातीतं विज्ञानं' सा मतिरिति सिद्धान्ताभिप्राय इति गाथार्थः ॥१२०॥

कः पुनरत्र पुष्कलः परिहार इत्यतोऽधुना भाष्यकारो मूलगाथां विवरीपुराह—'सोतिं'दियोवलद्धो'त्यादि। 'सुतं सोतिंदियोवलद्धी चेव', 'न उ' सा 'सोतिदिओवलद्धी सुतं चेव', कुत इत्याह—पंचण्हं, स्पष्टार्थमिति गाथार्थः ॥१२१॥

'तु समुच्चये'त्यादि भावितार्थैवेति न व्याख्याता ॥१२२॥

'पत्ताती'त्यादि पूर्वार्धं गतार्थम्। 'भावसुतं' तु 'अक्खराण'[1] सद्दत्थरूवाणं 'लाभो', 'सेसं' जं आरओ होति सद्दरूवरसगंधफासाववोहमेत्तं तं 'मतिनाण'' ति गाथार्थः ॥१२३॥

आह—'जति'त्यादि। 'जइ सुयमक्खरलाभो' सेसिंदियसंबन्धी शब्दार्थरूप इत्यर्थः। तो 'ण णाम सोतोवलद्धिरेव सुतं' अस्याप्यविकृतस्य श्रुतत्वात्। उच्यते, शब्दार्थरूपाण्यक्षराणि 'सोतोवलद्धिरेव' 'श्रुतिसम्भवादि'ति गाथार्थः ॥१२४॥

1 तों P.

किं यावान् शेषेन्द्रियाक्षरलाभः स सर्वं श्रुतं ? नेत्याह—'**सोऽविए**' -त्यादि । 'असावपि' च शेषेन्द्रियाक्षर'लाभो यः श्रुताक्षराणां' तच्छ्रुतम्, अश्रुताक्षरलाभस्तु मतिरेव । 'जतिव' त्ति । अथ चेन्मतिरेकान्ततोऽ'नक्षरैव' ततश्च 'सा मतिः सर्वा न प्रवर्तेत' ईहापायधारणारूपेण, तस्या अक्षरात्मकत्वात् । यदीयमनक्षरैव स्यादवग्रहमात्रमेव स्यादिति गाथार्थः ।।१२५।।

एवं तावदनया गाथया श्रुतस्य मतेर्भेद उक्तोऽधुना श्रुतस्यैव प्रसङ्गतः स्वरूपमभिदधत्पूर्वगतगाथाया एव सम्बन्धगाथामाह—

दव्वसुयं भावसुयं उभयं वा किं कहं व होज्जत्ति ।
को वा भावसुयंसो दव्वाइसुयं परिणमेज्जा ।।१२६।।
बुद्धिद्दिट्ठे अत्थे जे भासइ तं सुयं मईसहियं ।
इयरत्थऽवि होज्ज सुयं उवलद्धिसमं जइ भणेज्जा ।।१२७।।
पूर्वगतगाथा ।।

जे सुयबुद्धिद्दिट्ठे सुयमइसहिओ पभासई भावे ।
तं उभयसुयं भन्नइ दव्वसुयं जे अणुवउत्तो ।।१२८।।
इयरत्थवि भावसुए होज्ज तयं तस्समं जइ भणेज्जा ।
न य तरइ तत्तियं सो जमणेगगुणं तयं तत्तो ।।१२९।।
सह उवलद्धीए वा उवलद्धिसमं तया व जं तुल्लं ।
जं तस्समकालं वा न सव्वहा तरइ वोत्तुं जे ।।१३०।।
केई बुद्धिद्दिट्ठे मइसहिए भासओ सुयं तत्थ ।
किं सद्दो मइरुभयं भावसुयं सव्वहाऽजुत्तं ।।१३१।।
सद्दो वा दव्वसुयं मइराभिणिबोहियं न वा उभयं ।
जुत्तं उभयाभावे भावसुयं कत्थ तं किं वा ।।१३२।।
भासापरिणइकाले मईएँ किमहियमहऽण्णत्तं वा ।
भासासंकप्पविसेसमेत्तओ वा सुयमजुत्तं ।।१३३।।
इयरत्थवि मइनाणे होज्ज सुयंति किह तं सुयं होइ ।
किह व सुयं होइ मई सलक्खणावरणभेयाओ ।।१३४।।
अहव मई दव्वसुयत्तमेउ भावेण सा विरुज्झेज्जा ।
जो असुयक्खरलाभो तं मइसहिओ पभासेज्जा ।।१३५।।
इयरम्मिवि मइनाणे होज्ज तयं तस्समं जइ भणेज्जा ।
न य तरइ तत्तियं सो जमणेगगुणं तयं तत्तो ।।१३६।।
किह मइसुओलद्धा तीरंति न भासिउं बहुत्ताओ ।
सव्वेण जीविएणवि भासइ जमणंतभागं सो ।।१३७।।

तीरंति न वोत्तुं जे सुओवलद्धा बहुत्तभावाओ ।
सेसोवलद्धभावा साभव्वबहुत्तओऽभिहिया ॥१३८॥

'दव्वसुत'मित्यादि गाथा स्पष्टार्था । एतदुक्तं भवति—एतस्यां गाथायां "मोत्तूणं दव्वसुय"न्ति वचनादनेनावयवेन 'द्रव्यश्रुत'मुक्तम्, "अक्षरलाभ"वचनात्तु 'भावश्रुतं', "श्रोत्रेन्द्रियोपलब्धि"वचनात्तु शब्दस्तद्विज्ञानं चेत्'युभय'श्रुतमित्यतः पृच्छति, 'किं' तत् ? 'कथं' चेति ? कियान् वा भावश्रुतांशो द्रव्यश्रुतं ? 'आदि'-शब्दादुभयश्रुतं वा 'परिणमेते'ति गाथार्थः ॥१२६॥

अत्रोच्यते—इह हि श्रुतज्ञानी उपयुक्तः श्रुतबुद्ध्याऽर्थान् विजानातीति । ततश्च—'बुद्धि'द्दिट्ठे'त्यादि । 'बुद्धिः'—श्रुतबुद्धिः श्रुतमतिरित्यर्थः । 'दृष्टा' उपलब्धाः पर्यालोचिता विषयीकृता इति यावत् । बुद्ध्या दृष्टा बुद्धिदृष्टास्तान् । कानित्याह—'अर्थान्', अभिलाप्यान् भावानितियावत् । एतदुक्तं भवति—अभिलाप्यान् भावान् मनसि स्फुरतः सतो 'यान् भाषते' यान् वक्ति तन्मतिसहित एवेति वाक्यशेषः, 'तं सुतं' ति तत् श्रुतमभिधीयते । कुतः पुनरयं वाक्यशेषो लभ्यत इति चेत्, नन्वाचार्यवचनात् । आह च—'मतीसहियं' ति श्रुतं मतिसहितमुभयश्रुतमित्यर्थः । एतच्चोपयुक्तस्यैव । एवं तावदेतत् । यान् पुनः प्राक् श्रुतबुद्ध्याऽऽलोचितानपि पश्चादभ्यासबलादनुपयुक्तो वक्ति तद् द्रव्यश्रुतम्, याँस्त्वालोचयत्येव केवलं न तु भाषते तद् भावश्रुतम् । एतच्च द्वयमर्थाल्लभ्यते । अत्र च भावश्रुतस्य उपयुक्तस्य अनुपयुक्तस्य वा वक्तुरनन्तिमो[2] भागो द्रव्योभयश्रुतत्वेन परिणमति, "सव्वेण आऊएणवि न पहुप्पइ जेण कालो से"त्ति वचनादिति पूर्वार्द्धार्थः । अथ 'इतरत्थवी'त्यादि पच्छर्द्धं । कोऽस्याभिसम्बन्धः ? उच्यते, यानुपयुक्तोऽनुपयुक्तश्च भाषते तदुभयश्रुतं द्रव्यश्रुतं चोक्तेः, इतरदिति भावश्रुतं गम्यते । तत्र च सम्भवतीयमाशङ्का—कस्मादत्राप्येतद् द्वयं न भवतीत्यत आह—'इतरत्रापि'—भावश्रुते उक्तलक्षणे इतरस्यापीत्यर्थाद् विभक्तिपरिणाम आधाराधेययोर्भेदोपचाराद्वा 'होज्ज' स्यात् 'श्रुतं' द्रव्यश्रुतमुभयश्रुतं वा, यदि किं स्यादित्याह—उपलम्भन'मुपलब्धिः'—श्रुतबुद्ध्यालोचितार्थविषयसंवेदनं तया 'समं' तया सह । एतदुक्तं भवति—तत्संवेदनमेवात्मप्रदेशेभ्यउन्मूल्य ध्वनिना सह यदि संक्रामयेत्—उपयुक्तोऽनुपयुक्तो वा 'भणेत्', उपलब्धिपरिमाणं वा उपलब्धिसमकालं वा, यदैवोपलभते तदैव 'यदि भाषेते'त्यर्थः ।

सर्वथा यावन्मानमुपलभते न तावदुपयुक्तोऽनुपयुक्तो वा वक्तुं शक्नोति, उपलब्धेर्बहुत्वात् परिमितत्वाच्चायुषः क्रमवर्त्तित्वाच्च वाचः ।

"उक्कडयोवतिताइं करेइ चोद्दस वि जेण पुव्वाइं ।
अंतमुहुत्तेणं च्चिय, सयपज्जाएहिं पुव्वधरो ॥१॥"

त्ति गाथार्थः ॥

1 स्तो P.
2 वक्तुरनन्तगमो P.

एनां च गाथां मतिश्रुतयोर्भेदः प्रक्रान्त इति तदर्थ एव केचन व्याचक्षते, वयं तु तथाऽपि वक्ष्याम इति ।।१२७।।

तत्र तावदभिहितार्थानुसारेणैतास्तिस्त्रो (१२८-१३०) भाष्यगाथाः—'**जे सुत**' इत्यादि । '**इयरत्थवी**'त्यादि । '**सद्द**' इत्यादि । उक्तार्थाः । नवरं '**तया व जं तुल्लं**' ति । यथा श्रुतं[1] वेदयंस्तदेवाभिधत्त इति भावनीयम् ।।१२८-१३०।।

अथ कथमन्ये एनां गाथां (१२७) मतिश्रुतभेदार्थे व्याख्यानयन्ति ? तदुच्यते—'**बुद्धीदिट्ठे**' इत्यादि । अस्या व्याख्यानान्तरम्—इह'बुद्धिः'—आभिनिवोधिकबुद्धिरधिक्रियते, तया 'दृष्टाः'—चिन्तितास्ता'नर्थान् यान् भाषते' बुद्धिसहित एवेति वाक्यशेषः । '**तं सुतं**' ति तच्छ्रुतमभिधीयते । किंविशिष्ट-मित्याह—'**मतिसहियं**' आभिनिवोधिकसहितमित्यभिप्रायः । एतत्किल श्रुतज्ञान-मनुपयुक्तस्य तु द्रव्यश्रुतमिति भावना । पारिशेष्यादितरत् मतिज्ञानम् । *आलोचिताभिलाप्यपदार्थपर्यायालोचनमात्ररूपमिति पूर्वार्द्धार्थः । अत्राह—अत्रापि* कस्मादिदं न भवतीति । उच्यते, '**इतरत्थऽवी**'त्यादि पच्छर्द्धं । इतरत्राप्युक्त-लक्षणे मतिज्ञाने '**होज्ज सुतं**' भवेत् श्रुतं मतिज्ञानोपयोगसंवलितं, यदि किं स्यादित्याह—'उपलब्धिसमं यदि भणेदि'ति प्राग्वदिति गाथार्थः ।।१२७।।

अत्र व्याख्याने भावश्रुताभावं दर्शयन् मतौ च श्रुतविरते विरोधमुद्भावयन् भाष्यकार आह—'**केई बुद्धीदिट्ठे**' इत्यादि । '**केचना**'**नुभववादिनो** व्याचक्षते—'बुद्धिदृष्टान्'—आभिनिवोधिकज्ञानाभोगितान् प्राक् पुन'र्मतिसहितान्' भाषते तदुपयुक्तस्य 'ब्रुवतः श्रुतं' भवति, श्रुतज्ञानमित्यर्थः, पूर्वपक्षानुवादः । अत्रोच्यते—'**तत्थ**' त्ति तत्रैवं कल्पनायां न विद्मः कतमद्भावश्रुतं ? तथाहि—'किं शब्दो' भाष्यमाणः किं वा तत्प्रेरिका 'मतिरा'होश्वि'दुभयमि'ति त्रयी कल्पना । किंचातः—'**भावसुतं सव्वहा अजुत्त**'मिति गाथार्थः ।।१३१।।

तथाहि—'**सद्दो**' इत्यादि । 'शब्दस्तावद् द्रव्यश्रुतम'भिधानात्, 'मतिस्त्वा-भिनिवोधिकं' सुप्रसिद्धत्वात् । इतरेतरसापेक्षमुभयं तदिति चेत् । उच्यते, 'न चोभयं युक्तं', तत्त्वेन उभयस्याप्युभयस्वभावत्वेनाविशेषात् । अत 'उभयस्य' स्वतंत्रस्यास्वतंत्रस्य वा 'अभावे' भावश्रुतत्वेन तद् 'भावश्रुतं क्व' शब्दादौ ? 'किं वा' तत् ? न किंचिदिति गाथार्थः ।।१३२।।

तत्रैतत् स्याद्—मतेर्भाषासंकल्पनापरिणामतः श्रुतत्वे नायमुपालम्भ इत्यत आह—'**भासा**' इत्यादि । '**मते**'रन्तर्ज्ञानविशेषस्य 'भाषापरिणतिकाले' भाषा-प्रारम्भवेलायां 'किमधिकं' पूर्वावस्थाया उत्तरावस्थाया रूपं जायते येनासौ ज्ञानान्तरं स्यात्, 'अथान्यथात्वं वे' ति निर्मूलतो वाऽन्यथात्वं किं

---

1 शूलं P.

भाषापरिणतिकाले मतेरिति वर्त्तते ? न किंचिदिति गाथार्द्धार्थः। अपि च—भाष्यत इति 'भाषा'। तस्याः 'संकल्पविशेषः' प्रारम्भविशेषः स एव 'तन्मात्रम्'। मात्रशब्दो मनागपि विकारभवनप्रतिषेधार्थः। ततः 'श्रुतमयुक्तं' सा। एतदुक्तं भवति—अन्तर्विज्ञानस्यैकत्वेनाविशिष्टस्य वाह्यक्रियाभेदेऽपि नान्यथात्वं भवितुमर्हतीति, अत्यन्तजातिभेदाभावात्, अत्यन्तजातिभेदाभ्युपगमे च धावनवल्गनास्फोटनादिविधानत आनन्त्यं मतेः स्यात्। एवं तावद् भावश्रुताभावाख्यानेन पूर्वार्धं व्याख्यातं दूषितञ्च। अथ यदाह पश्चादर्धे मतिज्ञानमेव सम्बन्धयन्तः पूर्वपक्षं कृत्वा—'इतरत्रापि मतिज्ञाने होज्ज सुयंती'त्येवमादि तदश्रव्यं प्रत्यनुभाष्य विरोधमुद्भावयन्नाह—'इतरत्थवी'त्यादि। ''इतरत्थ वि मतिणाणे होज्ज सुतं' ति यदुक्तं तत्रोच्यते—ननु 'कथं त'न्मतिज्ञानं 'श्रुतं भवति' ? नैवेत्यभिप्रायः। मतेस्तद् भविष्यतीत्यत आह—'कथं वा मतिः श्रुतं भवति' ? नैवेत्यभिप्रायः। कुत एतदित्याह—'स्वलक्षणभेदादावरणभेदाच्चे'ति। तस्मान्मद्व्याख्यानमेव ज्याय इति गाथार्थः ॥१३३-१३४॥

अथ मद्व्याख्याने नास्ति भवतः कथञ्चित् परितोष इत्यत इयमेव गाथा श्रुतज्ञानाभिलापं मुक्त्वा द्रव्यश्रुतवाग्योगमात्राध्यारोपं च कृत्वाऽन्यथा व्याख्यायतां न दोषोऽविरोधात्। तद्यथा—''बुद्धीदिट्ठे अत्थे जे भासइ तं सुतं मतीसहियं। आभिणिवोहियोवजुत्तस्स इतरंति—मतिनाणं, तत्थवि होज्ज दव्वसुत''मित्यादि, प्राग्वदिति गाथार्थः। एतदेव व्याचिख्यासुराह—'अहव मती'त्यादि। 'अथवा मतिर्द्रव्यश्रुतत्वमेतु', कारणत्वात्। आह यद्येवं भावश्रुतत्वमपि तर्ह्येपु[1], तन्न, यतो 'भावेन' भावश्रुतत्वेन 'सा' मति'विरुध्येत' व्याहन्येत, उक्तवत्—

''भावसुताभावातो संकरतो णिव्विसेसभावातो।
पुव्वुत्तलक्खणातो सलक्खणावरणभेदातो ॥१॥''

त्ति वचनाच्च। यद्येवं भावश्रुतत्ववत् द्रव्यश्रुतत्त्वमपि तर्ह्यसौ मैतु। उच्यते, किं रुष्यसि ? न हि क्रोधो विक्रीयमाणः काकणिमपि लभते, ननु उपशाम्यतां, 'जो अमुतक्खरलाभो तं मतिसहितो' तदुपयुक्तः सन्'प्रभाषते'त्यत उक्तम्–'अहव मती दव्वसुयत्तमेतु' त्ति गाथार्थः ॥१३५॥

पश्चार्धव्याख्यामाह—'इतरंमिवि' इत्यादि। 'इतरत्रापि मतिज्ञाने भवेत्तद्' द्रव्यश्रुतं यद्युपलब्धिसमं 'भणेद्', वाग्योगेनेति गम्यते, 'न ये'त्यादि प्राग्वत्। तस्मादियं गाथा न श्रुतमङ्गीकृत्य व्याख्येया, भावश्रुताभावप्रसङ्गात्, यत्त्वेवं व्याख्यायमाने वि[2]शिष्यते मतिद्रव्यश्रुतलक्षणं तदङ्गीकृत्य व्याख्येयेति न कश्चिद्दोष इति प्रकरण[3] इति गाथार्थः ॥१३६॥

---

1 तु P.  2 व P.
3 णार्थः P

एवमुक्ते सत्याह—'किहे'त्यादि । 'कथं मत्या श्रुतेन चोपलब्धाः शक्यन्ते न भाषितु'मिति । उच्यते, 'बहुत्वाद्' भूयस्त्वात् । न चागमार्थो[1] हेतुर्विशेषाभिधानात्[2], सामान्येन च तावदयमधिक्रियत इति । तत्रैतत्स्याद्—बह्वप्यभिधातुं शक्यत एव । उच्यते, सत्यं, किं त्विह **'सव्वेणावि जीवितेण सो'** णाणी **'अणंतभागं'** चेव जम्हा **'भासइ'** तम्हा भण्णइ 'बहुत्ताउ' त्ति गाथार्थः ॥१३७॥

साम्प्रतमुपन्यस्तहेतोरवरसरतो विशेषप्रति[3]भागमाह—**'तीरंती'**त्यादि । सर्वे 'श्रुतोपलब्धा' भावाः 'पार्यन्ते न वक्तुं' । कुत इत्याह—'बहुत्वभावात्' बहुत्वादेवेत्यवधारणीयं, न तु तत्स्वाभाव्यादित्यभिप्रायः । तथा **'सेसोवलद्धभावा साभव्व'** त्ति । 'शेष'मुपयुक्तादन्यन्मतिज्ञानं मत्यवधिमनःपर्यायकेवलानि वा 'तैरुपलब्धाः' । 'शेषोपलब्धाश्च ते भावाश्चे'ति समासः । ते तु 'तत्स्वाभाव्यात्' अनभिलाप्यस्वाभाव्यात् 'तीरंति न **वोत्तुं** जे' इति वर्तते । आह—इमे बहुत्वादपि न शक्यन्तेऽभिधातुमिति किमेकमेव कारणं नोच्यत इति । उच्यते, अभिलाप्यस्वाभाव्ये सति बहुत्वस्याप्रयोजकत्वाद्, बहोरपि द्राघीयसा कालेनान्तदर्शनात् । तथा चाह—'बहुत्तओ जहा भासितुं न तीरंति' तथोक्ताः शेषोपलब्धभावाः 'बहुत्ताओ' त्ति वचनात् मतेः शेषोपलक्षणत्वाच्छेषाणामपि चेहार्थगतिप्रापणे विवक्ष्यमाणत्वात् । पुनरप्याह—मत्याद्युपलब्धानामपि केषाञ्चिदभिलाप्यत्वात् । किमुच्यते **'सेसोवलद्धभावा साभव्व'** त्ति ? उच्यते, अमीषां तु श्रुतविषयेणैवाक्षिप्तयाऽभिधानशक्यतया समनुज्ञातत्वात् । एतदुक्तं भवति—तेऽवग्रहादितया सन्ति ज्ञायमाना मतिरक्षरोल्लेखेन तु श्रुतमिति गाथार्थः ॥१३८॥

आह—

**कत्तो एत्तियमेत्ता भावसुयमईण पज्जया जेसिं ।**
**भासइ अणंतभागं भण्णइ जम्हा सुएऽभिहियं ॥१३९॥**

**पण्णवणिज्जा भावा अणंतभागो उ अणभिलप्पाणं ।**
**पण्णवणिज्जाणं पुण अणंतभागो सुयनिबद्धो ॥१४०॥**

**जं चोद्दसपुव्वधरा छट्ठाणगया परोप्परं होन्ति ।**
**तेण उ अणंतभागो पण्णवणिज्जाण जं सुत्तं ॥१४१॥**

**अक्खरलंभेण समा ऊणहिया होंति मईविसेसेहिं ।**
**तेऽवि य मईविसेसे सुयनाणब्भंतरे जाण ॥१४२॥**

**जे अक्खराणुसारेण मईविसेसा तयं सुयं सव्वं ।**
**जे उण सुयनिरवेक्खा सुद्धं चिय तं मईनाणं ॥१४३॥**

---

1 Printed text has न च गतार्थो for न चागमार्थो.
P explains गतार्थः as निरर्थकः.
2 °धानानोऽभिधास्यमानत्वात् P.
3 वि P.
४

केइ अभासिज्जन्ता सुयमणुसरओऽवि जे मईविसेसा ।
मन्नंति ते मइच्चिय भावसुयाभावओ तन्नो ॥१४४॥
कह मइसुयनाणविऊ छट्ठाणगया परोप्परं होज्जा ।
भासिज्जंतं मोत्तुं जइ सव्वं सेसयं वुद्धी ॥१४५॥

'कत्तो' इत्यादि । 'कुत एतावन्तो भावश्रुतमत्योः पर्यायाः'—उपलब्धार्थविशेषविशेषा 'येषां' सर्वेणाप्यायुषाऽ'नन्तभागमात्रं भाषत' इति, 'भन्नति यस्मात् श्रुते भणितमि'ति गाथार्थः ॥१३९॥

'पन्नवणिज्जा' इत्यादि । प्रज्ञाप्यन्त इति 'प्रज्ञापनीयाः' । वचनपर्यायत्वेन श्रुतज्ञानगोचरा इत्यर्थः । के ? 'भावाः' ऊर्ध्वाधस्तिर्यग्लोकनिविष्टभूभवनविमानग्रहनक्षत्रतारकार्केन्द्रादयः । किमत आह—'अनन्तभाग' एव वर्तन्ते, न सङ्ख्येयभागे, नाप्यसङ्ख्येयभाग इति । केषामित्याह—'अनभिलाप्यानां,' अर्थपर्यायत्वेन मत्यवधिमनःपर्ययगोचराणामित्यर्थः । अनभिलाप्यवस्तुराशेरभिलाप्यवस्तुराशिरनन्तभागे वर्त्तत इति भावः । पुनश्च 'प्रज्ञापनीयानां' द्रव्याणाम'प्यनन्तभागो' अनन्तभागमात्रं 'श्रुतनिबद्धः'—चतुर्द्दशसु पूर्वेषु साक्षाद् ग्रथितो भगवद्भिर्गणधरैरिति गाथार्थः ॥१४०॥

कुतः प्रत्यय इत्यत आह—'जं'मित्यादि । 'यद्'—यस्मात् 'चतुर्द्दशपूर्वधराः षट्स्थानपतिताः परस्परं भवन्ति', न्यूनाधिक्येनेति शेषः । तथाहि—सकलाभिलाप्यवस्तुवेदितयोत्कृष्टचतुर्द्दशपूर्वविदः प्रतियोगी उक्तः, "अणंतभागहीणे वा असंखेज्जभागहीणे वा संखेज्जभागहीणे वा संखेज्जगुणहीणे वा असंखेज्जगुणहीणे वा अणंतगुणहीणे वा एवं अब्भहियेऽवि" । अतो येन कारणेनैवं 'तेन यत्सूत्रं'—चतुर्द्दशपूर्वलक्षणं 'तत्प्रज्ञापनीयानामनन्तभाग एवे'ति स्थितमिति गाथार्थः ॥१४१॥

आह—केवलिनामिवामीषामयं तारतम्यकृतो विशेषो न युक्तः, युक्तश्चेदुच्यतां कारणमित्यत आह—'अक्खरे'त्यादि । 'अक्षरलाभेन' चतुर्द्दशपूर्वसूत्रलक्षणेन 'समाः' तुल्याः, चतुर्द्दशपूर्वधरत्वात् । कैस्तु न समा इत्याह—'न्यूनाधिका भवन्ति' उक्तवत् 'मतिविशेषै'रक्षरलाभगतवुद्धिविकल्पैः, तैस्तैर्व्याख्यानकरणैरित्यर्थः, क्षयोपशमवैचित्र्यात् । केवलिनां त्वविशेषः क्षयैकत्वात् । इह च मतिविशेषग्रहणादाभिनिवोधिकविशेषास्ते मा भूवन्नित्यतो विशेष्यते—'तानपि च मतिविशेषान्' तन्न्यूनाधिक्यनिवन्धनान् गम्यान् 'श्रुतज्ञानान्तर्भाविन एव जानीहि' विद्धि । यद्येवं "तेऽवि य मतीविसेसे सुयणाणं चेवे"त्येवमेव प्रगुणमस्तु, तन्न, अस्यापि न्यायस्य दृष्टत्वादङ्गादिव्यपदेशवत् । यथा ह्यङ्गमेवाङ्गाभ्यन्तरमेवं श्रुतमेव श्रुताभ्यन्तरमित्युक्तं भवतीति भावः । छन्दोभङ्गभया'द्वाऽभ्यन्तर'ग्रहणमिति । अथवा 'सुतनाणे'त्यनेन चतुर्द्दशपूर्वाक्षरलाभमधिकुरुते— **'तेऽवि य मतीविसेसे सुयनाणअब्भन्तरे जाण'** त्ति तानपि गम्यान् पर्यायानेतदधिकरणेनैव विद्धि, श्रुतग्रन्थानुसारित्वादिति गाथार्थः ॥१४२॥

आह--किं ग्रन्थानुसारेणाविर्भवन्तः श्रुतं भवन्ति ? उच्यते, कः सन्देहस्तथाहि--'जे' इत्यादि । स्पष्टार्था । नवरं किमस्यापरमपि फलमिति । उच्यते, यदधस्तादभ्यधायि--"जं तत्थावत्थाणं चुयस्स सुत्तोवयोगातो" त्ति, तस्यैदमुदाहरणमिति ।।१४३।।

एवं च स्थिते—**'केयी'**त्यादि । 'केचन': प्रज्ञाभिमानिनोऽनुभववादिनो [1]नागम'मनुसरन्तोऽपि[1] ये मतिविशेषाः प्रस्फुरन्ति ते मतिरेवे'ति । कुतः । **'अभासिज्जन्त[2]'** त्ति अभाष्यमाणत्वात् । "सर्वासां निमित्तहेतुषु प्रायो दर्शन"मिति [3]न्यायात्[3] । मन्यन्तामिति चेत् । 'तन्न, भावश्रुतस्याभावात्', तत्स्थाने मतिपरिकल्पनादिति गाथार्थः ।।१४४।।

अपि च—**'कह मती'** त्यादि । **'भासिज्जंतं मोत्तुं जइ सव्वं सेसयं बुद्धी'** तो **'कह मति[4]सुतनाणविऊ[5] छट्ठाणगया परोप्परं होज्जा'** । नैवेत्यर्थः । एतदुक्तं भवति—एकस्थानपतिता एव स्युरनन्तगुणहीनो वाऽनन्तगुणाभ्यधिको वेति, मतेः सदैवाधिक्यात्, श्रुतस्य तु सदैव हीनत्वात्, तद्धीनत्वं च भाषकसंख्येयवर्षायुष्कत्वेन तत्संख्येयत्वादिति परस्थानमङ्गीकृत्य, स्वस्थानेऽपि श्रुतज्ञानिनां द्विस्थानमात्रं "संखेज्जभागहीणे वा संखेज्जगुणहीणे वा" ततश्च "जं चोद्दस पुव्वधरा" इत्येतच्च न घटां प्राञ्चति । तस्मादेतदपि—"केयी बुद्धीदिट्ठे मतिसहिते भासतो सुत"मित्यादिव्याख्यानवदभावितानुष्ठानत्वादनादरणीयमिति गाथार्थः ।।१४५।।

तदेवमियं पूर्वगतगाथा श्रुतस्वरूपाभिधायिप्रकारेण व्याख्याता । अधुना प्रकृतार्थेन व्याख्यायते, वयं तु तथापि वक्ष्याम इति प्राक्प्रतिपन्नत्वात्, "बुद्धिदिट्ठे अत्थे" इत्यादि । अस्याश्चतुर्थेन प्रकारेण व्याख्या—'बुद्धि'र्हीहाद्यधिकरणा सामान्येन मतिः श्रुतबुद्धिः परिगृह्यते । 'दिट्ठं' उपलब्धं यद् वस्तुजातम् । तत् किमित्यत आह—'तं सुतं' ति तद्वस्तुजातं श्रुतमुच्यते, कारणे कार्योपचारात् । आह—यद्येवमनभिलाप्यवस्तुनोऽपि श्रुतत्वप्रसङ्गः सामान्यबुद्धिविवक्षणात्, तस्याश्च तद्विषयत्वादपीत्यत आह—'जे भासइ' त्ति । अस्यायमर्थो यद्वस्तुजातं भाषते–प्रतिपादयति । इह च व्यवच्छेदफलत्वाद् वाक्यस्य सर्वं तत्सावधारणकं स्याद् इष्टतश्चावधारणविधिरित्यत एवमवधार्यते—यद्भाषत एवावश्यं कदाचिद्देशकालनरान्तरादिषु, एवं च सामान्यबुद्ध्युपलब्धानामभिलापविषयत्वे सत्यभाष्यमाणानामपि श्रुतत्वलाभतः श्रुतस्य महीयान् विषयो लब्धो भवतीति भावनीयम् । वक्ष्यति च भाष्यकारः "संभवमेत्तं गहियं ण उ भासणमेत्तं" । मतिदृष्टभाष्यमाणानामपि भावश्रुतप्रसङ्गात् । अत उच्यते—"बुद्धिदिट्ठे अत्थे जं भासति

1.....1 वा मन्यन्ते श्रुतमनुसरतोऽपि P.
2 न्ति P.
3.....3 पञ्चम्यर्थे प्रथमा P.
4 इ P.
5 दू P.

तं सुतं" ति । तच्च किंविशिष्टमित्याह—'**मतिसहितं**' ति मतिसहितं सामान्यबुद्धि-संवलितम् । एतच्च श्रुतोपयुक्तस्यैव भवतीत्यनेन मतिसहितमितिग्रहणेन नियम्यते, अतोऽन्या अभिलाप्यानभिलाप्योपलब्ध्यात्मिका ज्ञानशक्तिर्मतिज्ञानमिति भावना । ततश्च यादृशमुपलभते श्रुतं तादृशं वक्त्येव, तद्वाच्यस्यैवंरूपत्वात्, नत्वयं मतौ विधिरिति । आह च—'इयरत्थवी'त्यादि । पच्छद्धं पूर्ववदिति गाथार्थः ।

अस्या भाष्यं, तत्र—

**सामन्ना वा बुद्धी मइसुयनाणाइं तीएँ जे दिट्ठा ।**
**भासइ संभवमेत्तं गहियं न उ भासणामेत्तं ।।१४६।।**

**मइसहियं भावसुयं तं नियमभासओऽवि मइरन्ना ।**
**मइसहियंति जमुत्तं सुओवउत्तस्स भावसुयं ।।१४७।।**

**जे भासइ चेव तयं सुयं तु न उ भासओ सुयं चेव ।**
**केई मइएवि दिट्ठा जं दव्वसुयस्समुवयंति ।।१४८।।**

**एवं धणिपरिणामं सुयनाणं उभयहा मइन्नाणं ।**
**जं भिन्नसहावाइं ताइं तं भिन्नरूवाइं ।।१४९।।**

**इयरत्ति मइन्नाणं तओवि जइ होइ सद्दपरिणामो ।**
**तो तम्मिवि किं न सुयं भासइ जं नोवलद्धिसमं ।।१५०।।**

**अभिलप्पाणभिलप्पा उवलद्धा तस्समं च नो भणइ ।**
**तो होज्ज उभयरूवं उभयसहावंनि काऊण ।।१५१।।**

**जं भासइ तंपि जओ न सुयादेसेण किन्तु समईए ।**
**न सुओवलद्धितुल्लंनि वा जओ नोवलद्धिसमं ।।१५२।।**

'**सामण्णा वा**' इत्यादि । गतार्था । तदनया "बुद्धिद्दिट्ठे अत्थे जे भासति" इत्येतद्व्याख्यातम् ।।१४६।।

शेषं व्याचिख्यासुराह—'**मती**'त्यादि । '**तं अभासतोवि भावसुतं णिततं**' व्यवस्थापितमुक्तमित्यर्थः । किंविशिष्टमित्याह—'**मतिसहितं**' मतिसहितमेवैतद् भवतीति नियम्यते । तथा चाह—पच्छद्धं '**मती**'त्यादि । "बुद्धिद्दिट्ठे अत्थे जे भासइ तं सुय"न्ति भणिऊण "मतिसहिय" मिति यदुक्तं तत् किं ज्ञापयतोक्त-मित्यत आह—'श्रुतोपयुक्तस्यै'व—श्रुतमभ्युपयुक्तस्यैव तद्भावश्रुतमिति, विषय-विषयिणोश्चात्राभेदो दृश्यः । अथ योऽन्यो विषयभाग आस्ते तमधिकृत्याह—'मतिरन्न' त्ति इति भावितार्थमिति गाथार्थः ।।१४७।।

अथेष्टावधारणमाह—'**जे भासती**'त्यादि । क्वचिद् गतार्था स्पष्टा वेति ।।१४८।।

अथोपसञ्जिहीर्षुराह '**एव**' मित्यादि । 'ध्वनिपरिणाममेवश्रुत'मभिलाप्य-विषयत्वात् । ध्वन्यध्वनि परिणामं चेतरदभिलाप्यानभिलाप्यगोचरत्वात् । फलप्रधानाः समारम्भा इत्यतः 'ज'मित्यादि पच्छद्धं, स्पष्टम् ।।१४९।।

अथ मूलगाथापश्चादर्द्धमाह 'इतरत्ती'त्यादि । 'इतरदिति मतिज्ञानम'भिसम्बध्यते । तस्माच्च वाक्परिणामो भवतीति वाक्यशेषः । अत एवाह चोदकः—'ततोऽवी'त्यादि स्पष्टम् ।।१५०।।

तथाहि 'अभिलप्पा' इत्यादि । मत्योभयस्वभावा 'उपलब्धास्तत्सम'मभिलाप्यानभिलाप्योपलब्धिसमं 'च न भणति' अशक्तेः । आह—'ततो भवतु मतिज्ञानमुभयरूपं' मतिश्रुतरूप'मुभयस्वभावमिति कृत्वा', अभिलाप्यानभिलाप्यरूपत्वात् । अथ येनैवं यानुपलभते भाषते च तद्विज्ञानमस्याः श्रुतमेवास्तु, किं तत्र मत्येति गाथार्थः ।।१५१।।

उच्यते 'जमि'त्यादि । इह 'यदपि किञ्चिदसौ भाषते'ऽभिलाप्यं वस्तु 'तदपि न श्रुतानुसारेण' न श्रुतग्रन्थानुसारेण, 'किन्तु स्वमत्या', वाग्योगेनेत्यर्थः । द्वितीयामुपलब्धिमङ्गीकृत्याह—'न श्रुतोपलब्धितुल्यमिति वा यतः' । एतदुक्तं भवति—यथा जैनश्रुतग्रन्थानुसारेण भाष्यते न तथा मत्या, ततो 'नोपलब्धिसमं' भाषत इति मूलगाथार्थः ।।१५२।।

ततश्च सोऽयमिन्द्रियविभागकृतो भेदः समाप्त इति ।

इदानीं परोपन्यस्तवल्कसुम्ब[1]दृष्टान्तोपन्यासविघटनेन प्राक्साधितमेवार्थमभिधित्सुस्तन्मतमुपन्यस्यति—

अन्ने मन्नंति मई वग्गसमा सुंबसरिसयं सुत्तं ।
दिट्ठन्तोऽयं जुत्ति जहोवणीओ न संसहइ ।।१५३।।
भावसुयाभावाओ संकरओ निव्विसेसभावाओ ।
पुव्वुत्तलक्खणाओ सलक्खणावरणभेयाओ ।।१५४।।
कप्पिज्जेज्ज व सो भावदव्वसुत्तेसु तेसुवि न जुत्तो ।
मइसुयभेयावसरे जम्हा किं सुयविसेसेणं ।।१५५।।
असुयक्खरपरिणामा व जा मई वग्गकप्पणा तम्मि ।
दव्वसुयं सुम्बसमं किं पुण तेसिं विसेसेणं ।।१५६।।
इहइं जेणाहिकओ नाणविसेसो न दव्वभावाणं ।
न य दव्वभावमेत्तेऽवि जुज्जए सोऽसमंजसओ ।।१५७।।
जह वग्गा सुंबत्तणमुवेंति सुंबं च तं तओऽणण्णं ।
न मई तहा धणित्तणमुवेइ जं जीवभावो सा ।।१५८।।
अह उवयारो कीरइ पभवइ अत्थंतरंपि जं तत्तो ।
तं तम्मयंति भण्णइ तो मइपुव्वं जओ भणियं ।।१५९।।
भावसुयं तेण मई वग्गसमा सुंबसरिसयं तं च ।
जं चिंतेऊण तया तो सुयपरिवाडिमणुसरइ ।।१६०।।

---

1 म्प P.

'अन्ने' इत्यादि । 'अन्ये मन्यन्ते मतिर्हि वल्कप्रतिमा' कारणत्वात्, सैव शब्दतया सन्दर्भिता शब्देन सहोच्चरिता 'श्रुतं', यथा त एव वल्कास्तथाविधाकारान्तरं प्रापिताः 'सुम्ब'[1]मिति कार्यत्वात् । आह—शोभनमेवैतन् मन्यन्तां तदित्थं कोऽपराध इति । उच्यते, न, यत आह—'अयं दृष्टान्तो यथा तैरुपनीयते' इति साभिप्रायं 'तथा न युक्तिं संसहते', न विषहत इत्यर्थ इति गाथार्थः ।।१५३।।

कुत इत्याह—'भाव' इत्यादि । 'भावश्रुतस्याभावात्', तदभावश्च द्रव्यश्रुतस्यैव भावात् । अथ तत्रापि भावश्रुतकल्पना क्रियत इत्यतः स एव 'सङ्करः', तस्मात् । न चेत्सङ्कर इष्यते ततो 'निर्विशेषभाव'स्तस्माच्च । अस्तु विशेषाभाव इति चेत्, तन्न, 'पूर्वोक्तलक्षणाद्' अभिनिबुध्यतेत्यादेः, तथा 'स्वलक्षणभेदात्', ज्ञानस्य पञ्चविधत्वा'दावरणभेदा'च्चेति गाथार्थः ।।१५४।।

उक्तवन्नास्याभावः कर्तुं पार्यत इत्यतोऽयं दृष्टान्तो भावद्रव्यश्रुतयोर्योक्ष्यत इत्याह च—'कप्पी'त्यादि स्पष्टार्था । नवरं 'किं सुतविसेसेणं' ति किं श्रुतयोर्विशेषण ? भिन्ननाम्नोर्ज्ञानयोर्विशेषाभिधानप्रस्तावत्यादिति गाथार्थः ।।१५५।।

पुनरपि पराभिप्रायमेवाह—'असुते'त्यादि । 'अश्रुताक्षरपरिणामा वा या मति'रीहादिका 'वल्ककल्पना तस्यां', 'द्रव्यश्रुतं' तु 'सुम्बसमं', ततश्च योक्ष्यतेऽयं दृष्टान्त इत्यत उच्यते—'किं पुण तेसिं विसेसेणे' ति गाथार्थः ।।१५६।।

केन कारणेनेत्याह—'इहइ'मित्यादि । पूर्वार्द्धं स्पष्टम् । अथैतावन्मात्रनियत एवासौ भविष्यतीत्यत आह—'न च द्रव्यभावमात्रेऽपि युज्यतेऽसा'वज्जसा दृष्टान्तो'ऽसमञ्जसतो', दृष्टान्तदार्ष्टान्तिकयोर्वैधुर्यादिति गाथार्थः ।।१५७।।

तथाहि—'जहे'त्यादि, स्पष्टार्था ।।१५८।।

पराभिप्रायमाह—'अथ' इत्यादि, 'भावसुयं' इत्यादि । 'अथोपचारः क्रियते'—मतिपूर्वं द्रव्यश्रुतं, ततश्च "दव्वभावमेत्ते सो भविस्सति" । उपचारनिबन्धनमाह—'प्रभवत्यर्थान्तरमपि' सत् 'यद्' वस्तु यस्माद् वस्तुनस्'तत्तन्मयमिति भण्यते', यथा सोऽयं रूपक एवमवस्थां गत इति, एवं सैव मतिर्द्रव्यश्रुतावस्थां प्रापितेति । आचार्य आह—यद्येवं 'तो मतिपुव्वं जतो भणितं भावसुतं' ति ।अस्यायमर्थः —यत एवमुपचारवादी भवान् 'तो' ततः वरं मूढ ! काक्वा 'मतिपुव्वं' मतिकारणं 'भणित'मुक्तं 'भावश्रुतं', भावश्रुतमेवार्षत्वाद् यथाश्रुतं व्याख्येयम् ।।१५९।।

अथ पुरुषशक्तिपरिग्रहाद्वाचको भवतीति न्यायप्रदर्शनार्थमाह—"भावे'-त्यादि[2] । 'नेन मतिर्वल्कसमा' कारणत्वात्, 'सुम्ब'सदृशं च यत्तद्भावश्रुतं' कार्यत्वात् । कुत इत्याह—'यस्मात्'—'सञ्चिन्त्य' ज्ञात्वा मत्या 'तया' पश्चात् 'श्रुतपरिपाटीमनुसरति'—अयमस्यार्थ इत्येवमिति गाथार्थः ।।१६०।।

---

1 म्ब P.

2..2 This portion is wanting in P.

3 म्ब P.

अन्ने अणक्खरक्खरविसेसओ मइसुयाइं भिन्दन्ति ।
जं मइनाणमणक्खरमक्खरमियरं च सुयनाणं ॥१६१॥

जइ मइरणक्खरच्चिय भवेज्ज नेहादओ निरभिलप्पे ।
थाणुपुरिसाइपज्जायविवेगो किह णु होज्जाहि ॥१६२॥

सुयनिस्सियवयणाओ अह सो सुयओ मओ न बुद्धीओ ।
जइ सो सुयवावारो तओ किमन्नं मइन्नाणं ॥१६३॥

अह सुयओऽवि विवेगं कुणओ न तयं सुयं सुयं नत्थि ।
जो जो सुयवावारो अन्नोऽवि तओ मई जम्हा ॥१६४॥

मइकालेवि जइ सुयं तो जुगवं मइसुओवओगा ते ।
अह नेवं एगयरं पवज्जओ जुज्जए न सुयं ॥१६५॥

जइ सुयनिस्सियमक्खरमणुसरओ तेण मइचउक्कंपि ।
सुयनिस्सियमावन्नं तुह तंपि जमक्खरप्पभवं ॥१६६॥

जइ तं न सुएण तओ जाणइ सुयनिस्सियं कहं भणियं ।
जं सुयकओवयारं पुव्विं इण्हिं तयणवेक्खं ॥१६७॥

पुव्वं सुयपरिकम्मियमइस्स जं संपयं सुयाईयं ।
तं निस्सियमियरं पुण अणिस्सियं मइचउक्कं तं ॥१६८॥

उभयं भावक्खरओ अणक्खरं होज्ज वंजणक्खरओ ।
मइनाणं सुत्तं पुण उभयंपि अणक्खरक्खरओ ॥१६९॥

'अण्णे' इत्यादि । 'अन्ये अनक्षराक्षरविशेपतो मतिश्रुते भिन्दन्ति, यस्माद् किल मतिज्ञानमनक्षरमे'व व्यञ्जनशब्दापोढत्वात्, 'श्रुतज्ञानं त्वक्षरवदनक्षरवच्चे'ति । तत्राक्षरवद् भावतो व्यञ्जनाक्षरतश्च, अनक्षरवदुच्छ्वसितादि । कोऽभिप्रायस्तेपामेवं वदतामिति चेत्, उच्यते, मतौ व्यञ्जनाक्षरायोगात् श्रुत इवेति भावना । एतच्च परिफल्गु, भावाक्षरमङ्गीकृत्य मतिज्ञानस्याप्यनक्षराक्षररूपत्वात् ॥१६१॥

इत्थं चैतद्, अन्यथा—'जती'त्यादि । 'यदि मतिरनक्षरैव स्यात्', यदि मतिः सर्वथाऽवर्णविज्ञानरूपैव स्यात्, ततो 'नेहादयो' मतिविशेषा 'निरभिलाप्या'-र्थेऽनुप्रवर्त्तेरन्निति, तद्वर्णात्मकत्वात्, मतेश्चानक्षरत्वात् । आह—यद्यस्यामनक्षरायामीहादयोऽपि न प्रवृत्ताः क इव दोषः ? उच्यते, स्थाण्वादिविकल्पाभावः । तथा चाह—'स्थाणौ पुरुषादिपर्यायविवेकः' स्थाणुधर्माध्यारोपश्च 'कथं नु स्याद्' यदीयमनक्षरैवेति । तथाहि—याऽनक्षरा न तस्यामसौ, तद्यथा[1]ऽवग्रहे । तथा चेहादयस्तस्मान्नैतेष्वसाविति गाथार्थः ॥१६२॥

---

1 P has न यथा for तद्यथा.

तत्रैतत्स्यान्मतिः—श्रुतनिश्रिताऽश्रुतनिश्रिता चोक्तेत्यतः श्रुतादेवाक्षररूपादसौ भविष्यतीत्यतः किमक्षररूपमतिकल्पनया येन बाधोच्यते 'यदी'त्यादिना ? आह चोदकाभिप्रायम्—'सुत' इत्यादि । 'श्रुतनिश्रितवदनादथ' मन्यते 'स' इत्यनन्तराधिकृतः स्थाण्वादिपर्यायविवेकः 'श्रुततो मतो, न तु बुद्धे'रीहादिकाया इति । उच्यते, 'यद्यसा'वीहादिव्यापारः 'श्रुतव्यापारः' श्रुतपरिच्छेद इति कल्प्यते 'ततः किमन्यन्ममतिज्ञानम'वग्रहादन्यदिति वाक्यशेषः । निवृत्तेदानीमीहादिवार्त्ता, तद्‌व्यापारस्य श्रुतव्यापाराभ्युपगमात्, मतिश्रुतयोश्च भेदोक्तेर्न किञ्चिदिति गाथार्थः ॥१६३॥

अन्येन करणेन सूरिरुपतिष्ठन्नाह—'अहे'त्यादि । 'अथ' श्रुतनिश्रितवचनादेव 'श्रुततोऽपि विवेकं' स्थाण्वादिपर्यायलक्षणं 'कुर्वतो' विदधतो 'न तत् श्रुतं' मतिकथोच्छेदप्रसङ्गात् । किं तर्हि ? मतिरेवेति । उच्यते, 'श्रुतं' तर्हि 'नास्ति', श्रुतस्य तर्हि दीयतां जलाञ्जलिरित्यभिप्रायः । किं कारणमित्याह—'यो यः श्रुतव्यापारोऽन्योऽप्यसावसौ यस्मान्मतिः', त्वद्दर्शनेन सर्वं श्रुतं मतिर्वर्णविज्ञानरूपत्वादीहादिवत्, मतेस्त्वनक्षरत्वात्, मतिश्रुतवर्ण'त्वं नावबुध्यते पर इत्यभिप्राय इति गाथार्थः ॥१६४॥

तदेवं श्रुतनिश्रितवचनमात्रतो वाक्छलनेन दारुणं व्यसनमापन्नस्यापि परस्यासमीक्षिताभिधायीति कृत्वा अत्रैव दोषान्तराभिधित्सया सूरिरुपक्रमते—'मतो'त्यादि । अपि च—श्रुतनिश्रितवचनात् 'मतिकालेऽपि' मतिप्रादुर्भाववेलायामपि 'यदि श्रुतं ततो युगपद'क्रमेण 'मतिश्रुतोपयोगास्ते'—तव देवानांप्रियस्य प्रसक्तः । ततश्च प्रदेशान्तरोक्तविरोधो न "उवयोगो सि" तीष्टत्वात् । 'अथ नैवं" विरोध इष्यते, एकोपयोगस्यैवेष्यमाणत्वादिति । उच्यते—यद्येवं 'एकतरं' ति एकमुपयोगं 'प्रपद्यत' इच्छतो 'युज्यते' घटां प्राञ्चति, स्थाण्वादिपर्यायविवेकं कुर्वतो मतिरेवान्यत्रानवकाशत्वेनामतिकत्वात् । अनभिमतप्रतिषेधमाह—'न सुतं' ति न श्रुतमिह घटामियर्त्ति, तस्योत्तरकालं घटमानत्वादिति गाथार्थः ॥१६५॥

अपि च—यद्यस्माकं यथार्थवादिनां मतेरक्षरत्वेनेहादिप्रवृत्तितः स्थाण्वादिपर्यायपरिच्छेदं व्याचक्षाणानां त्वया खल्वयथार्थवादिना स्वमतमास्थाय मतेरनक्षरत्व एव सति श्रुतनि[1]श्रितवचनादसौ श्रुतानुसारेण भवतीति चोद्यते ततस्तवानेन न्यायेन प्रकृतज्ञापकत्वाद् बुद्धिचतुष्टयमपि श्रुतनिश्रितमापद्यते, तत्रापीहादिसद्भावाद्, ईहादिव्यापारस्य च श्रुतनि[2]श्रितत्वेन श्रुतव्यापाराभ्युपगमात् । आह च—'जतो'त्यादि । यदि च भवतः स्थाण्वादिपर्यायविवेकविधावीहादिवेलायां 'श्रुतनिश्रितं' तद् ज'मक्खरमणुसरतो'त्ति यदक्षरानुसरणाद्, यद्वर्णविज्ञानानर्थान्तरभावेन, मतिस्त्वनक्षरेति, विवादास्पदीभूतमेतदिति भावना । 'तेन मतिचतुष्कमपि' औत्पत्तिक्यादि 'श्रुतनिश्रितमापन्नं तवे'दानीम् । इयताप्युक्तेऽज्ञानेन धाष्ट्र्याद्वा

1 P adds नाना.

2 नि: P.

पर आह—किमित्येवमिति । आचार्य आह—'**तं पि जमक्खरप्पभवं**' ति । कोऽस्यार्थः ? तत्रापि सहजत्वेन अश्रवणसंस्काराविर्भाविनो वर्णविज्ञानात्मकाः खल्वीहादयो यस्माद् विद्यन्त एवेति, यत्र यत्रेहादिव्यापारस्तत्र तत्र श्रुतान्निश्चय इत्यभ्युपगमः । ततोऽत्रापीहादिव्यापारसद्भावात् श्रुतान्निश्चय इत्यश्रुतनिश्रित-प्रतिपत्तिरपि भ्रान्तेत्यतः कथमादौ श्रुतनिश्रितमश्रुतनिश्रितं च प्रतिपद्य श्रुतनि-श्रितादसौ भविष्यतीत्युक्तम् । तदेवं मतेरनक्षरत्ववादी परोऽन्धनाग इव पदे पदे प्रस्खलतीति गाथार्थः ।।१६६।।

तदेवं न्यायवादिना न्यायेन विलक्षीकृतोऽप्यसकृद्ग्राहममुञ्चन् परोऽद्या-पीदमाह—'**जती**'त्यादि । 'यदी'त्यभ्युपगमप्रदर्शनार्थः, '**तं**' थाणुपुरिसादिपज्जायं '**ण सुत्तेण**' सुतगंथाणुसारेण '**ततो**' त्ति सो नाणी '**जाणइ**'त्ति, विवेचयतीत्यर्थः, '**तो सुतणिस्सियं**' 'कथं' केन प्रकारेण 'भणितम्' उक्तम् ? अवग्रहादिसूत्रे सूत्र-कारेणेति सामर्थ्यात् गम्यते । अतस्तं श्रुतोपष्टम्भेन कुर्वतः सर्व मदीयं योक्ष्यते, मतिस्त्वनक्षरैवेति, काऽत्र स्खलनेति चोदकगाथार्द्धार्थः । अत्र **क्षमाश्रमणपूज्यपादा** अपि गजनिमीलिकयोक्तवन्तो—भवानेव प्रष्टव्यः य एवमाह—श्रुतमनुधावतः श्रुतनिश्रितमिति । अथ चेदिच्छाकारेण कथयितव्यमिति, हन्त ! प्रथममेव कस्मादेवं नोपसन्नोऽसि ? ननु 'ज'मित्यादि, पच्छद्धं । 'यद्'—यस्मात् 'श्रुतेन कृत उपकारः'—उपष्टम्भो यस्य तत्तथा । कदेत्याह—'पूर्व' प्राक् । 'इदानीं' पुन-रुत्पादकाले 'तदनपेक्षं', श्रुतातीतत्वादिति गाथार्थः ।।१६७।।

एतदेवाभिप्रसन्नचोदकानुग्रहार्थमाह—'**पुव्व**'मित्यादि । 'प्राक् श्रुतविस्फा-रितधियोऽधुना यत्तदतीत'मवग्रहादि 'तच्छ्रुतनिश्रित'माहुः, 'इतरत् पुन'रौत्पत्ति-क्यादि'बुद्धिचतुष्टयमनिश्रितं' सहजत्वादिति । तत्रापि काचित् श्रुतोपकारादेव जायते "तिवग्गसुत्तत्थगहियपेयाला" इति वचनादिति चेत् । उच्यते, वाहुल्यस्य विवक्षि-तत्वात्, स्वल्पस्य चाविवक्षितत्वाद् यथायोगं तदश्रुतनिश्रितमित्यदोषः । एतदुक्तं भवति—यथा हि यद्यपि सामान्येनावग्रहादयः श्रुतनिश्रिता उक्तास्तथापि 'श्रुत-परिकर्मितमति'गता एव श्रुतनिश्रिता उच्यन्ते, न सहजबुद्धिचतुष्टयगता अपि, यथायोगं ग्रहणाद्, एवमिहापीति । तस्मात् स्थितमेतद्यदुत—'**उभय**'मित्यादि । '**मतिनाणं**'ति आभिनिवोधिकज्ञानम् । किमत आह—'उभयं' उभयरूपं 'अणक्खरं अक्षरं चे'ति भावना । कथमित्यत आह—'**भावक्खरतो**' विण्णाणक्खरमहिकिच्च । एतदुक्तं भवति—अवग्रहज्ञानापेक्षयाऽनक्षरं निर्विकल्पकत्वेन सामान्यमात्रप्रति-भासतः संमुग्धाकारत्वात्, ईहादिज्ञानापेक्षया तु साक्षरं, परामर्शप्रत्ययत्वेन विशेषत्वतो वर्णविज्ञानात्मकत्वात् । अत्रैव यदङ्गीकृत्य मूढैरनक्षरा मतिरुक्ता तन्निमित्तमाह—'**अणक्खरं होज्ज वंजणक्खरतो**'त्ति, व्यञ्जनाक्षरं पुस्तकादिन्य-स्तमकारादि शब्दो वा तमाश्रित्य स्यादनक्षरा मति र्न कश्चिद्दोषः । न हि मतिर्द्रव्यमतिः स्यादरूढत्वात्, तदेवं भावाक्षरत एव मतेर्द्वित्वमभिधाय श्रुतस्य तु भावमभावं चाश्रित्याह—'**सत्तं पुण**'त्ति । सूत्रं पुनर्भावद्रव्यलक्षणं पृथक् पृथ'गु-

भयमपि'। कथमित्याह—'अणक्खरक्खरतो'त्ति, अनक्षरतोऽक्षरतश्च भावश्रुतमेवं द्रव्यश्रुतमपि। नवरमिदमनक्षरमुच्छ्वसितादि ॥१६८-१६९॥

अथापरव्याख्यानविशेषोपन्यासमाह—

सपरप्पच्चायणओ भेओ मूएयराण वाऽभिहिओ।
जं मूयं मइनाणं सप्परपच्चायगं सुत्तं ॥१७०॥

सुयकारणं ति सद्दो सुयमिह स य परविबोहणं कुणइ।
मइहेयवोऽवि हि परं बोहेंति कराइचिट्ठाओ ॥१७१॥

न परप्पबोहयाइं जं दोवि सरूवओ मइसुयाइं।
तक्कारणाइं दोण्हवि बोहेंति तओ न भेओ सिं ॥१७२॥

दव्वसुयमसाहारणकारणओ परविबोहयं होज्जा।
रूढंति व दव्वसुयं सुयंति रूढा न दव्वमई ॥१७३॥

सा वा सद्दत्थोच्चिय तयावि जं तम्मि पच्चओ होइ।
कत्तावि हु तदभावे तदभिप्पाओ कुणइ चिट्ठं ॥१७४॥

'सपर'इत्यादि। इह कैश्चिदनयोर्भेदोऽभिहितः'। कुतः? 'स्वपरप्रत्यायनतः', स्वप्रत्यायनेन परप्रत्यायनेन चेत्यर्थः। कयोरिवेत्याह—'मूकेतरयोरिव'। तथाहि—'यस्मान्मूकमेव मतिज्ञान'मपरप्रत्यायकत्वात्, 'श्रुतं' त्वमूकं 'स्वपरप्रत्यायकत्वात्'। अयं पूर्वपक्ष इति गाथार्थः ॥१७०॥

अत्रानयोराचार्यः परतस्तुल्यतापादनेनाभेदमाह—'सुतकारणंती'त्यादि। इह परावबोधचिन्तायां शब्दोऽक्षरविन्यासो वा श्रुतमुच्यते उपचारेण। किमित्यत आह—'सुतकारणं'ति श्रुतकारणत्वात्। 'स च परविबोहणं कुणइ' त्ति सचेत्परविबोधनं करोति प्रत्याय्यप्रत्यायनं करोति तत एतदपि परिफल्गु, अप्रयोजकत्वात्। अप्रयोजकत्वं च मतेरप्येवंजातीयप्रकारभावतः परप्रत्यायकत्वात्। 'हि'—यस्मात् 'करादिचेष्टा अपि'—हस्तमुखसंयोगादिका मतिसम्बन्धिन्यः 'परं बोधयन्ति'। कुतइत्याह—'मतिहेतवो'त्ति, मतिहेतुत्वात्। तस्मान्न द्रव्यश्रुतमङ्गीकृत्यायं भेदः सारो भवतीति गाथार्थः ॥१७१॥

एवं तावत् परतस्तुल्यतोक्ता। अथ स्वतोऽप्याह—'न परे'त्यादि। निगमनं चाह—'न परे'त्यादि। 'यस्माद् द्वे अपि मतिश्रुते न परबोधके', कथमित्याह—'स्वरूपतः' साक्षादित्यर्थं विज्ञानमयत्वादवध्यादिवत्। 'ततो' त्ति तस्मा'न्न भेदोऽयमनयो'रिति, किन्तु 'तक्कारणाइं दोण्ह वि बोधेन्ति'। तानि च तानि कारणानि च—द्रव्यश्रुतकरचेष्टादीनि द्वयोरप्यनयोर्बोधयन्ति यतः किमुच्यते—"जं मूयं मतिणाण"मित्येवमादि। ननूच्यतामुभयमप्युभयमनुभयं वेति उक्तवदिति गाथार्थः ॥१७२॥

एवं तावत्करादिचेष्टायाः सामान्येन मतिहेतुत्वाङ्गीकरणतः परोक्तं व्यभिचार्याचार्य एवाधुना प्राह—भवेद्वा द्रव्यश्रुतमप्यङ्गीकृत्यानयोरयं मूकेतर-

कृतो भेदो यदीयं शब्दार्थहेतुत्वतोऽपि निर्मूलतो द्रव्यश्रुतत्वेनैव विवक्ष्येत समर्थ्येत । कथमित्यत्र ब्रूमः—'**दव्वसुय**'मित्यादि । '**दव्वसुयं परविबोहयं होज्जा**', कुतः ? 'असाधारणकारणत्वात्,' श्रुत उत्पाद्ये भेरीशब्दन्यायेन, न करादिव्यापारा मतिज्ञानमेव, शब्दार्थहेतुत्वादपीत्यभिप्रायः । अथवा 'द्रव्यश्रुतं' जैनः शब्दराशिः 'परविवोधकं स्यात्', निर्वाणसाध'नासाधारणविज्ञानकारणत्वात्' । अथवा 'द्रव्यश्रुतं श्रुतमिति रूढं यस्मात्' तस्माद् युक्तमिदं यदुत "सपरप्पच्चायगं सुत्तं" त्ति । अनभिमतप्रतिषेधमाह—'**रूढा ण दव्वमति**' त्ति । न द्रव्यमती रूढा—न करादिचेष्टा द्रव्यमतित्वेन प्रख्याता । अत इदमपि युक्तं यदुक्तं—"**जं मूयं मइनाणं**" ति गाथार्थः ।।१७३।।

रूढा चेदत आह—'**सा वा**' इत्यादि । 'सा' करादिचेष्टा 'शब्दार्थ एव' वर्तते, तद्धेतुत्वाच्छब्दवत् । कुत एतदित्याह—'तयापि' करादिचेष्टया मुखं प्रतिविधीयमानया 'जं' ति 'यद्'—यस्मात् प्रतिपत्तु'स्तस्मिन्'—शब्दार्थे 'प्रत्ययो भवति'—अयं भोक्तुमीहत इत्येवं वोधो भवति । अपि च 'कर्त्ताऽपि च **तदभावे**' मुखरोगादौ सति शब्दाभावे 'तदाभिप्रायः' शब्दार्थद्योतनाभिप्रायः 'करोति चेष्टा'-मेवं करादिलक्षणां नतून्मत्ततयेत्यतोऽनया भङ्ग्या युज्येताप्येवमनयोर्विशेष इति गाथार्थः ।।१७४।।

## [आभिनिवोधिकनिरूपणम्]

साम्प्रतमेतत्प्रकरणोपसंहारव्याजेन प्रकृतं स्मारयन्नाह—

**मइसुयनाणविसेसो भणिओ तल्लक्खणाइभेएणं ।**
**पुव्वं आभिणिवोहियमुद्दिट्ठं तं परूवेस्सं ।।१७५।।**

'**मती**'त्यादि । एवमनयोर्भेद उक्तः । कथं ? 'तल्लक्षणादिभेदेन', तत्स्वलक्षणादिभेदेनेत्यर्थः । अत्र च ज्ञानपञ्चके 'प्रागाभिनिवोधिकमादिष्टं' **भद्रबाहुस्वामिना** 'तदि'दानीं 'प्ररूपयिष्य'त इति गाथार्थः ।।१७५।।

तत्रेयं सम्वन्धगाथा—

**इंदियमणोनिमित्तं तं सुयनिस्सियमहेयरं च पुणो ।**
**तत्थेक्केक्कं चउभेयमुग्गहोप्पत्तियाईयं ।।१७६।।**

'इंदिये'त्यादि । 'इन्द्रियमनोनिमित्तमि'त्यनेन प्रागुक्तानुवादमाह । 'तं' मिति आदिज्ञानं आभिनिवोधिकं 'सुतनिस्सितं' भवति । 'अथ अनन्तरं पुनरितरच्चे' ति अश्रुतनिश्रितं भवति । 'तत्रे' ति वाक्योपन्यासार्थः । '**एक्केक्क**' सुतनिस्सितमसुतणिस्सितं च '**चउब्भेदं**' चतूरूपं भवति । कथमित्यत आह—'**उग्गहोप्पत्तियादीयं**' ति सुयनिस्सियं अवग्रहादि, असुतणिस्सितं औत्पत्तिक्यादीति गाथार्थः ।।१७६।।

तत्रादित एव तावत् श्रुतनिश्रितमवग्रहाद्यभिधित्सुराह निर्युक्तिकारः —

उग्गहु ईह् अवाओ अ धारणा एव हुंति चत्तारि ।
अभिणिबोहिअनाणस्स भेअवत्थू समासेणं ॥१७७॥नि०२॥

अत्थाणं उग्गहणम्मि उग्गहो तह विआलणे ईहा ।
ववसायम्मि अवाओ धरणं पुण धारणं बिंति ॥१७८॥नि० ३॥

सामण्णऽत्थावग्गहणमुग्गहो भेयमग्गणमहेहा ।
तस्सावगमोऽवाओ अविच्चुई धारणा तस्स ॥१७९॥

सामण्णविसेसस्सऽवि केई उग्गहणमुग्गहं बेंति ।
जं मइरिदं तयंति च तं नो बहुदोसभावाओ ॥१८०॥

ईहा संसयमेत्तं केई न तयं तओ जमन्नाणं ।
मइनाणंसा चेहा कहमन्नाणं तई जुत्तं ॥१८१॥

जमणेगत्थालंबणमपज्जुदासपरिकुंठियं चित्तं ।
सेयइव सव्वप्पयओ तं संसयरूवमन्नाणं ॥१८२॥

तं चिय सयत्थहेऊववत्तिवावारतप्परममोहं ।
भूयाभूयविसेसायाणच्चायाभिमुहमीहा ॥१८३॥

केई तयण्णविसेसावणयणमेत्तं अवायमिच्छन्ति ।
सब्भूयत्थविसेसावधारणं धारणं बेंति ॥१८४॥

कासइ तयन्नवइरेगमेत्तओऽवगमणं भवे भूए ।
सब्भूयसमण्णयओ तदुभयओ कासइ न दोसो ॥१८५॥

सव्वोऽवि य सोऽवाओ भेए वा होंति पंच वत्थूणि ।
आहेवं चिय चउहा मई तिहा अन्नहा होइ ॥१८६॥

काऽणुवओगम्मि धिई पुणोवओगेयसा जओऽवाओ ।
सो नत्थि धिई भण्णइ इदं तदेवेति जा बुद्धी ॥१८७॥

नणु साऽवायब्भहिया जओ य सा वासणाविसेसाओ ।
जा य अवायाणन्तरमविच्चुई सा धिई नाम ॥१८८॥

तं इच्छन्तस्स तुहं वत्थूणि य पंच नेच्छमाणस्स ।
किं होऊ साऽभावो भावो नाणं व तं कयरं ॥१८९॥

तुज्झं बहुयरभेया भण्णइ मई होइ धिइबहुत्ताओ ।
भण्णइ न जाइभेओ इट्ठो मज्झं जहा तुज्झं ॥१९०॥

सा भिन्नलक्खणाविहु धिइसामन्नेण धारणा होइ ।
जह उग्गहो दुरूवो उग्गहसामन्नओ एक्को ॥१९१॥

'उग्गहो' इत्यादि । 'अवग्रहः' सामान्यार्थग्रहणम्, 'ईहा' तदर्थविशेषालोचनम्, 'अपायः' प्रक्रान्तार्थविनिश्चयः । 'च' शब्दोऽवग्रहादीनां पृथक् पृथक् स्वातन्त्र्यप्रदर्शनार्थः । तेनैतदुक्तं भवति—अवग्रहादेरीहादयः पर्याया न भवन्तीति । अवगतार्थविशेषावधारणं 'धारणा' । 'एव'कारः क्रमद्योतनार्थः । एवमनेनैव क्रमेण भवन्ति । 'आभिनिबोधिकज्ञानस्य' भिद्यन्त इति 'भेदाः'—विकल्पा'स्त एव वस्तूनि' कथं ? यतो नानवगृहीतमीह्यत इत्येवमादि । काक्वा वा नीयते—एवं भवन्त्या'भिनिबोधिकज्ञानस्य भेदवस्तूनि समासेन' संक्षेपेण विशिष्टावग्रहादिस्वरूपापेक्षया । विस्तरतोऽष्टाविंशतिभेदभिन्नत्वादस्येति गाथार्थः ।।१७७।। निर्युक्तिगाथा २।।

अथामीषां स्वरूपाभिधित्सयाऽऽह—'अत्थाण'मित्यादि । 'अर्थानां'—रूपादीनां प्रथमं दर्शनानन्तरं ग्रहण'मवग्रहणं' यत्त'दवग्रहं' ब्रुवत इति सम्बन्धः । 'तथे'त्यानन्तर्ये । 'विचारणं'—पर्यालोचनमर्थानामिति वर्त्तते, ईहन'मिहा' तां ब्रुवत इति सम्बन्धः । अवग्रहादुत्तीर्णस्यापायादेवाऽन्वयव्यतिरेकवद्धर्मघटनव्यतिरेकाभिमुखतामीहां प्राहुः । विशिष्टोऽवसायो 'व्यवसायः'—निर्णय'स्तस्मिन्नवायम'पायं वा ब्रुवत इति सम्बन्धः । अर्थानामिति च वर्त्तते । धृति'र्धरणम्' अर्थानामिति वर्त्तते । परिच्छिन्नस्य वस्तुनोऽविच्युतिस्मृतिवासनारूपं त'द्धरणं पुनर्धारणां ब्रुवते' । 'पुनः'शब्दोऽप्येवकारार्थः । 'ब्रुवते' इत्यनेन शास्त्रपारतन्त्र्यमाह—तीर्थकरगणधरोक्तानुसारित्वादिति गाथार्थः ।।१७८।। निर्युक्तिगाथा ३।।

अथैतदप्योघतो[1] भाष्यकृद्विवरीपुराह—'सामण्णे'त्यादि । सामान्यरूपः 'सामान्यम्', अशेषविशेषविनिर्लुठितत्वेन सम्मुग्धाकार इत्यर्थः । अर्यत इ'त्यर्थः' । सामान्यश्चासावर्थश्चेति 'सामान्यार्थः' । अवगृह्यतेऽनेने'त्यवग्रहणं', एक सामा[2]यिकमवच्छेदनमित्यर्थः । सामान्यार्थस्यावग्रहणमिति षष्ठीसमासः तृतीयासमासो वा । ततश्चायमर्थः—सामान्येनार्थस्यावग्रहणं 'सामान्यार्थावग्रहणम्', अनिर्देश्यार्थावग्रहणमिति भावना । तत्किमत आह—'अवग्गहो'त्ति तदवग्रहः प्रथमः श्रुतनिश्रितमतिज्ञानभेद उच्यते । ईहां व्याचिख्यासुराह—'भेदमग्गणहेह'त्ति । 'अथे'त्यनन्तरं तस्यैवावगृहीतस्यार्थस्य ईषदन्यतरक्षयोपशमसमुत्थानबलेन 'भेदमार्गणं,' किमत्र स्थाणुधर्मा वल्ल्युत्सर्पणादयो घटन्ते आहोस्वित् शिरःकण्डूयनादयः पुरुषधर्मा इति विशेषविमर्षणं 'ईहा' भण्यते । तदस्मा'दथ'शब्दोपादानात् क्रमाभिधानप्रयोजनमपि ख्यापितं भवति, अनवगृहीतस्यालोचनाऽयोगात् । अत एवाह—'तस्सावगमोऽवायो' त्ति । 'तस्य'—अवग्रहादनन्तरमीहितस्यार्थ'स्यावगमः'—परिच्छेद एकपक्षनिक्षेपलक्ष'णोऽवायो' भण्यते, अपायो वा, आलोचनानन्तरं निर्णयज्ञानोत्पत्त्यनुभूतेः । 'अविच्चुती धारणा तस्स'त्ति 'तस्य'

1 अथैतदोघतो P.

2 म P.

एवमवग्रहादिक्रमेणैकपक्षनिर्लोचि'तस्यार्थस्य या 'अविच्युति'रभ्रंशः पुरुषः पुरुषः पुरुष एवायमिति येयं प्रतिपत्तिः सा 'धारणो'च्यते चतुर्थो भेदो, निर्णयोत्तरकालभावित्वात्। इदं तावत् स्वरूपमात्रं, न चामीषामेकाधिकरणत्वं येनोच्येत "निष्पादितक्रिये कर्मण्यविशेषावायि साधन"मित्यापि साधनन्यायमतिपततीति, अनन्तधर्मात्मके वस्तुनि तत्तत्सहकारिकारणसन्निधानतस्तत्तद्धर्मान्तिरग्रहणाभ्युपगमादिति गाथार्थः ॥१७९॥

अत्र चावग्रहादारभ्य विप्रतिपत्तयः सन्तीति ता निराचिकीर्षुराह—'सामण्णे'त्यादि। सामान्यं चासौ विशेषश्च 'सामान्यविशेषं' तस्यापि, न केवलं सामान्यार्थस्ये'त्यपि'शब्दः। 'अवग्रहण'मवच्छेदनम्। 'केचन' व्याख्यातारः। किमत आह—'अवग्गहणं' ति अवग्रहत्वमभिदधत्यतिलव्वप्रसरत्वात्। किं कारणमित्याह—'जं मतिरिदं तदं ति च'त्ति। यस्मादमुतोऽनन्तरमिदं तदिति वेति विमर्षलक्षणा मतिरनुधावतीति। एतदुक्तं भवति—यदनन्तरमीहादिप्रवृत्तिः सोऽवग्रहः। तद्यथा—व्यञ्जनावग्रहचरमसमयभाव्येकसामयिकमर्थग्रहणम्। तथा च शब्दोऽयमित्यस्मात् अनन्तरमीहादि प्रवर्त्तते, किमयं रूपादिविच्छिन्नः शब्दः शाङ्खः आहोश्वित् शार्ङ्ग इति? तस्मादवग्रह एष इति। शार्ङ्गश्चेत् किं महिषीशृङ्गोद्भवो महिषशृङ्गोद्भव इति। महिषीशृङ्गोद्भवश्चेत् किं प्रसूतमहिषीशृङ्गोद्भव इत्येवमादि। यत ईहा न प्रवर्त्तिष्यते, अन्तगमनात् क्षयोपशमभावतो वा स त्वपाय इति पूर्वपक्षः। सम्भाव्यत एवास्येत्थमवग्रहत्वमित्यत आह—'तन्न'। कुत इत्याह—'बहुदोषभावात्'। वक्ष्याम इति गाथार्थः ॥१८०॥

'ईहे'त्यादि। 'केचना'भिदधति—'ईहा संशयमात्रम्', इतश्चेतश्च डोलायमानप्रत्ययरूपत्वात्। सूरिराह—'न तयं' ति न तद् घटां प्राञ्चति। कुत इत्याह—'तओ'त्ति असौ—संशयो 'यद्'—यस्माद् 'अज्ञानम्'—अनवबोधोऽप्रतिपत्तिमात्रं प्रवर्त्तते[2]। ततः किमत आह—'मतिज्ञानांशश्चेहा' वर्त्तते। "उग्गहो ईह [3]अवाअ धारण[3]"त्येवमादि। एवंचेदतः 'कथं' केन प्रकारेणा'ऽज्ञानम्' अनवबोधनं 'तई' असावीहा 'युक्तं' च[4]—घटते। इतश्चेतश्च डोलायमानप्रत्ययरूपत्वादितिचेत्तन्न, ईहाया डोलायमानप्रत्ययरूपत्वाघटनादिति गाथार्थः ॥१८१॥

तथा चेहासंशययोर्लक्षणमाह—'जमि'त्यादि। 'तंचिये'त्यादि (गाथा १८३)। 'यच्चित्तं'—यन्मनः 'अनेकार्थालम्बनम्' अनेकार्थप्रतिभासान्दोलितं न किंचिदध्यवस्यति। अत एवाह—'अपज्जुदासपरिकुंठितं' ति। 'अपर्युदासेन'—अप्रतिषेधेन, अविधिना चेति सामर्थ्यात् गम्यते। 'परिकुण्ठियं'—अपटूकृतम्। किम्बहुना, 'शेत इव सर्वात्मना'—स्वपितीव सर्वप्रकारैः, स्थाणुः स्यात् पुरुषो वेत्येतावन्मात्रनियतत्वेन डोलायमानरूपत्वात्। तत्किमित्यत आह—'तमन्नाणं'

---

1 ठि P.
2 P has वर्तते for प्रवर्त्तते.
3.. 3 अवायोपधारणे P.
4 P drops च.

ति तच्चेतोऽज्ञानम् । कुत इत्याह—'**संसयरूवं**' ति संशयरूपत्वाद्, ज्ञानस्य च निश्चयात्मकत्वादिति गाथार्थः ।।१८२।।

'**तं चिय ईहे**'ति । तदेव चित्तं ईहोच्यते । किंविशिष्टं सदित्याह—संश्चासावर्थश्च 'सदर्थः', विवक्षया वल्ल्युत्सर्पणादिः तथा 'हेतु'रन्वयव्यतिरेकधर्मघटनालोचनलक्षणः, 'उपपत्तिः'—सम्भवालोचनम् । यथा—

"अरण्यमेतत् सविताऽस्तमागतो,
न चाधुना सम्भवतीह मानवः ।
प्रायस्तदेतेन खगादिभाजा,
भाव्यं रतिप्रियतमारिसमाननाम्ना ।।१।।"

हेतुश्चोपपत्तिश्च 'हेतूपपत्ती' । सदर्थस्य हेतूपपत्ती 'सदर्थहेतूपपत्ती', ताभ्यां 'व्यापारः' स तथोच्यते । तस्मिं'स्तत्परं'—तदेकान्तनिष्ठमिति समासः । किमेतावत्फलमेव ? नेत्याह—'**अमोह**'मवन्ध्यं भाव्यपायज्ञानत्वात् प्रायोऽन्वयधर्मघटनाभिमुखत्वादिति पूर्वार्द्धार्थः । अथवा किमुक्तं भवति '**तं चिय सदत्थहेतूपपत्तिवावारतप्पर**'मिति ? अत आह—'**भूताभूतविसेसादाणच्चायाभिमुहं**' यथा—संख्यम् । यत एवमतः '**अमोहं**'ति प्राग्वादिति गाथार्थः ।।१८३।।

अथ 'केचन' ईहोत्तरकालं स्थाणौ व्यतिरेकान्वयाभ्यां निर्णये जायमानेऽपायधारणे व्याचक्षत इत्यतः पूर्वपक्षीकुर्वन्नाह—'केई'त्यादि । '**केई अवायमिच्छंति**'त्ति सम्बन्धः, कतममित्याह—'तस्य' स्थाणोर्योऽ'न्यो विशेषः' शिरःकण्डूयनादिस्त'दपनयनमात्रं', तददर्शनमात्रविज्ञानमित्यर्थः । तथा 'सद्भूतो योऽर्थः विशेष'स्तत्र वल्ल्युत्सर्पणादिस्त'दवधारणंतु 'धारणां ब्रुवते' वदन्ति । केचन इति वर्त्तते । ततश्चावग्रहेहापायावधारणान्येव श्रुतिनिश्रितमतो मतिचातुर्विध्यपूरणेऽन्यः प्रकारो दोष इति गाथार्थः ।।१८४।।

आचार्य आह—'**कस्स**' इत्यादि गाथा सपादा । तत्र '**न दोसो**'त्ति नास्माकं मतिचातुर्विध्यपूरणेऽन्यः प्रकारो दोषः, अपि तु तवैवायं, यतः '**सव्वोच्चिय सोऽवायो**'त्ति (गाथा १८६, प्रथमपादः) सर्वं एवासौ—अन्वयव्यतिरेकाभ्यां जायमानो निश्चयोऽपायश्चतुर्थो मत्यंशो भवति, न पुनस्तत्र धारणाऽपि, यदि नाम '**कस्सयि तदन्नवइरेगमेत्तओऽवगमणं भवे भूते**' तथा '**सब्भूतसमन्नयतो कस्सयि**' तथा कस्यचित्तदुभयत इति सपादगाथार्थः ।।१८५+१८६ प्रथमपादः।।

इत्थं चैतदङ्गीकर्त्तव्यमन्यथा '**भेदे वे**'त्यादि । भेदे वाऽवायस्येष्यमाणे '**भवन्ति' संपद्यन्ते 'पञ्च वत्थूनि**', आभिनिवोधिकज्ञानस्येति गम्यते । तद्यथा—"उग्गहो ईहा अवायोवधारणास'तीणि" स्मृतेरप्येतद्गतिकत्वेनापरित्याज्यत्वात् । अविच्युतिस्तु समानकालापाये त्वया प्रक्षिप्तेति भावः । तदेवं बोधितोऽपि मूर्खतया स्वमतमेवास्थाय चोदक 'आह'—'**एवं चिय चउहा मती भवति**' यदीयं न त्यज्यते,

---

1 तु P.

अत्यक्तव्या चेयं भवता यत'स्त्रिधाऽन्यथा भवति' मतिः। किं कारणं ? अवग्रहे-हापायमात्रत्वादेतन्मात्रत्वं च धृतेरयोगादिति गाथार्थः ॥१८६॥

तथा—'काऽणुव'इत्यादि। इह स्थाणौ स्थाणुतयाऽवगृहीते सत्यन्तर्मुहूर्त्ताच्चोपयोगात् परिभ्रष्टे सति यदा'ऽनुपयोगः'—अस्मरणं भवति तदा 'काऽणुवयोगंमि धिती' धारणा नाम ? नैव काचिदित्यर्थः। अन्वयमुखोपजायमानप्रत्ययस्य त्वपायत्वेनैवेष्टत्वादतस्त्रिधेति मन्यते। पुनरुपयोगे भविष्यतीत्येतदपि न, कुत इत्याह—'पुनरुपयोगे च सा' मतिः 'योऽपाय' एव भण्यते 'तो' ततस्तस्मात् कारणा'न्नास्ति'—न विद्यते 'धृति'र्धारणा, मत्पक्षस्यानभ्युपगम्यमानत्वादन्वयमुखोपजायमानायाः खल्वनिष्यमाणत्वादिति पूर्वपक्षः। अत्र 'भण्यते' इति। भण्यते उत्तरम्। "भेदे वा होंति पञ्च वत्थूणि"त्ति व्यवस्थिते इति वाक्यशेषः। किं भण्यत इत्याह—'इद तदेवेति जा बुद्धि'त्ति। पूर्वोपलब्धं स्थाण्वादिवस्तु विस्मृतं सत्पुनरध्यवस्यत इदं तदेव प्राग्दृष्टमिति या बुद्धिः ॥१८७॥

'णणु'इत्यादि। 'ननु सा' बुद्धिरेवंभूता 'अपायादभ्यधिका' वर्त्तते, वृत्तत्वात् तस्य। ततः किमित्यत आह—'सा धिती णाम'त्ति सा च स्मृत्याख्या धारणा भण्यते। तथा 'यतश्चासौ' स्मृत्याख्या धारणा 'वासनाविशेषात्' प्रत्यक्षीकृतवस्त्वाहितसंस्कारलक्षणादाविर्भवति 'सा' धिती णाम'त्ति सा च धारणा भण्यते, वासनारूपेति भावना। तथा 'या चापायानन्तर'भाव्यविच्युति[1]'रन्तर्मुहूर्तकालीया 'सा धिती णामे'ति' सा च धारणोच्यते, अविच्युतिरूपेति भावनेति गाथार्थः ॥१८८॥

एवं चेदतः किम् ? 'त'मित्यादि। तामपायाभ्यधिकामिच्छतस्तव उक्तेन प्रकारेण 'तव' चोदकस्य 'वस्तूनि पञ्च' अधुना प्राप्नुवन्ति, मतिज्ञानस्येति गम्यते, स्वपक्षस्याप्यभ्युपगम्यमानत्वात्, न च तान्युक्तानीति। अथेमां नेच्छसि, स्वपक्षस्यैवाभ्युपगम्यमानत्वादिति, अतस्तां 'नेच्छमाणस्स'—अप्पडिवज्जमाणस्स 'किं होउ सा' धारणा 'अभावो', आहोस्वद् 'भावः'। किं चातः ? न तावदभावोऽननुभवप्रसङ्गाद् घटादेरप्यभावप्रसङ्गः, अनुभूयमानत्वाद् भावश्चेत् ज्ञानमज्ञानं वा ? नाज्ञानं बोधात्मकत्वात्। 'ज्ञानं' चेत् पञ्चानां 'सा कतमदि'ति वाच्यम्। न तावदवग्रहादित्रयं साऽनभ्युपगमात्, नापि श्रुतादिचतुष्टयमनभ्युपगमादेव, नापि ज्ञानान्तरमनभ्युपगमादेव, पारिशेष्याद्धारणा सेति गाथार्थः ॥१८९॥

तदेवं निरुत्तरीकृतोऽप्यनेन करणेन प्राह—'तुज्झ'मित्यादि। चोदओ 'भणइ'—'तुज्झं बहुतरभेदा मती होइ'। किं कारणमित्याह—'धिइबहुत्ताओ', अवग्गहो ईहा अवायो अविच्चुती वासणा सुती चेव त्ति प्राप्तेः, षड्विधेत्यर्थः। सूरिराह—'भण्यते न मम जातिभेदो' व्यक्तिभेद 'इट्टो' विवक्षितः, "अवग्गहो ईहा अवायो य धारणा एव होंति चत्तारी"त्यभ्युपगमात्। 'जहा तुज्झं'ति यथा तव जातिभेद इष्टोऽपायस्य द्वैविध्यकल्पनात् ॥१९०॥

1……1 मविच्युति P.
2 त्ति P.

तथाहि—'सा' इत्यादि। 'सा' धृति'र्भिन्नलक्षणाऽपि' सती त्रैविध्येन 'धृति-सामान्याव्यतिरेकादे'कैवेत्यनेन[1] चतुर्द्धा मतिरिति। तत्रैतत्स्यात्—स्मृतिरूपत्वे सति धारणायाः, स्मृतेरतीतविषयत्वान्निर्विषयत्वाद्वा मतेः साम्प्रतकालविषयता विरुध्यत इति, तन्न, तावन्मात्रपरिच्छेदितया वर्तमानवदधिकृत्य प्रवृतेः, निर्विषयत्वे चाननुभूतविषयान्तरवदनुत्पत्तिरेवास्याः स्यादिति। अत्राह—किं भिन्नलक्षणमपि सामान्याङ्गीकरणत एकमभिहितं किञ्चिद्? उच्यते—अभिहितं, 'जहे'त्यादि। पश्चादर्धं स्पष्टमिति गाथार्थः ॥१९१॥

[ व्यञ्जनावग्रहव्याख्या ]

एतदेव व्याचिख्यासुराह—

तत्थोग्गहो दुरूवो गहणं जं होइ वंजणत्थाणं।
वंजणओ य जमत्थो तेणाईए तयं वोच्छं ॥१९२॥
वंजिज्जइ जेणऽत्थो घडो व्व दीवेण वंजणं तं च।
उवगरणिंदियसद्दाइपरिणयदव्वसंबंधो ॥१९३॥
अण्णाणं सो बहिराइणं व तक्कालमणुवलंभाओ।
न तदंते तत्तो च्चिय उवलंभाओ तओ नाणं ॥१९४॥
तक्कालम्मिवि नाणं तत्थऽत्थि तणुंति तो तमव्वत्तं।
बहिराईणं पुण सो अन्नाणं तदुभयाभावा ॥१९५॥
कहमव्वत्तं नाणं च सुत्तमत्ताइसुहुमबोहो व्व।
सुत्तादओ सयं चिय विन्नाणं नावबुज्झंति ॥१९६॥
लक्खिज्जइ तं सिमिणायमाणवयणदाणाइचिट्ठाहिं।
जं नामइपुव्वाओ विज्जंते वयणचिट्ठाओ ॥१९७॥
जग्गन्तोऽवि न जाणइ छउमत्थो हिययगोयरं सव्वं।
जंतऽज्झवसाणाइं जमसंखेज्जाइं दिवसेणं ॥१९८॥
जइ वण्णाणमसंखेज्जसमयसद्दाइदव्वसब्भावे।
किह चरमसमयसद्दाइदव्वविण्णाणसामत्थं ॥१९९॥
जं सव्वहा न वीसुं सव्वेसुवि तं न रेणुतेल्लं व।
पत्तेयमणिच्छंतो कहमिच्छसि समुदए नाणं ॥२००॥
समुदाए जइ नाणं देसूणे समुदए कहं नत्थि।
समुदाए वाऽभूयं कह देसे होज्ज तं सयलं ॥२०१॥
तन्तू पडोवगारी न समत्तपडो य समुदिया ते उ।
सव्वे समत्तपडओ तह नाणं सव्वसमएसु ॥२०२॥

'तत्थे'त्यादि। 'तत्रे'त्युपन्यासार्थः। 'अवग्रहो द्विधैव', अन्यस्य ग्राह्यस्याभावात्। कथमित्यत आह—'ग्रहणं यद् भवेद् व्यञ्जनानामर्थानां चे'ति।

1 P has अनेनैव प्रकारेण for अनेन.

षष्ठी पृथक् पृथगभिसम्बध्यते। यतश्च प्राप्यकारिष्विन्द्रियेषु 'व्यञ्जनतो'—व्यञ्जनावग्रहात्। 'अर्थ' इत्यर्थावग्रहो भवति। 'तेनादौ तं' व्यञ्जनावग्रहं 'वक्ष्य' इति गाथार्थः ॥१९२॥

अथ व्यञ्जनावग्रहनिरुक्तमाह—'**वंजिज्जती**'त्यादि। 'व्यज्यतेऽनेनार्थः' शब्दलक्षण इति व्यञ्जनम्। क इव केनेत्याह—'**घडो व्व दीवेण**'। '**त च**' त्ति तच्च व्यञ्जनं किमुच्यत इत्याह—'उपकरणेन्द्रियस्य' कदम्बपुष्पाद्याकृतेः 'शब्दादिपरिणतद्रव्याणां च यः सम्बन्धो'—यः अङ्गाङ्गीभावः तयोरुपश्लेष इति भावना। अथवा व्यञ्जनेन—श्रोत्रेन्द्रियेण व्यञ्जनानां—शब्दादिपरिणतद्रव्याणामवग्रहो व्यञ्जनावग्रह इति गाथार्थः ॥१९३॥

तत्रैतत् स्यात्—निर्मूलत एवेदं त्रुट्यति, किमस्य शब्दार्थनिरूपणयेति। आह च 'अन्नाण'मित्यादि। 'अज्ञानमसौ'—व्यञ्जनावग्रहः, 'तत्कालानुपलम्भात्' व्यञ्जनसम्बन्धकालेऽसंवेद्यमानत्वाद् 'बधिरादीनामिव'। उच्यते, 'न'—नैतदेवं, यतः—'**तओ**[2] **नाणं**' ति असौ ज्ञानं व्यञ्जनावग्रहः, 'तदन्ते' तज्ज्ञेयवस्तूपादानादे'वोपलम्भात्'। इह यस्य ज्ञेयवस्तूपादानाद् विज्ञानस्यान्ते तत एवोपलम्भो भवति तद् ज्ञानं दृष्टं, यथाऽर्थावग्रहपर्यन्ते तत एवेहासद्भावादर्थावग्रहो ज्ञानमिति गाथार्थः ॥१९४॥

न च सिद्धो हेतुर्यतः—'**तक्कालंमिवि नाण**'मित्यादि। 'तत्कालेऽपि' व्यञ्जनसम्बन्धकालेऽपि 'ज्ञान'मवबोधनं 'तत्र' तस्मिन्ननुपहतेन्द्रिये 'अस्ति' विद्यते, अव्यक्तमिति वाक्यशेषः। अथ कस्मादव्यक्तमित्यत आह—'**तणु**' त्ति तनीय इति कृत्वा'ऽप्रवल'मेकतेजोऽवयवप्रकाशवत्। 'तो'त्ति तस्मादसिद्धो हेतुः। दृष्टान्ताविप्रतिपत्तिमाह—अत्यन्त'बधिरोपहतघ्राणादीनां त्वसौ' व्यञ्जनोपादानकालः 'अज्ञानमि'ति अज्ञानमेवेति। सत्यं, किं कारणमित्याह—'तदुभयाभावाद्' —अल्पीयस्या अपि विज्ञानशक्तेरभावात्, कारणत्वाभावाच्च, कात्स्न्या वा। तत्रैतत्स्यात् ज्ञानमव्यक्तं चेत्ययुक्तं विरुद्धत्वात् प्रकाशतमोविधानवत् ॥१९५॥

तथा चाह—'**कथ**'मित्यादि। 'कथं ज्ञानमव्यक्तं च'? उच्यते, अनन्तरमेव सहेतुदृष्टान्तस्योक्तत्वात्। अथवा 'सुप्तमत्तादेः सूक्ष्मबोधवत्'। तथाहि—'सुप्तमत्तमूर्च्छितादयः सयं चिय'त्ति आत्मनीनमपि 'विज्ञानं नाववुध्यन्ते'—न संविद्रत इति गाथार्थः ॥१९६॥

आह—एवं तत्तेषां नास्तीति, तन्न, यतः—'**लक्खी**'त्यादि। 'लक्ष्यते'—अनुमीयते 'तत स्वप्नायमानभाषणात्', तथा 'आहूतवचनचेष्टाभ्यः', 'आदि'-शब्दाज्जङ्घाकण्डूयनादिचेष्टाभ्यश्च। समस्तपदं चैतत्। कस्मादित्याह—

1 त्रु P. 2 ओ P. 3 हू P.

'यस्मात् नामतिपूर्वा वाङ्दानादिचेष्टाः प्रवर्त्तन्ते', कार्यत्वादग्न्यपूर्वकधूमवत् । न च ताः सुप्तो बुद्धो वोपलभत इति गाथार्थः ॥१९७॥

'**जग्गंतो वी**'त्यादि । अपि च—'जाग्रदपि', आस्तां तावत् सुप्तः, 'न जानीते छद्मस्थः सर्वमपरिशेषं हृदयगोचरं' मनआलम्बनं, छद्मस्थत्वादेव । कस्मादित्याह—'यान्यध्यवसानानि'—चित्तविशेषलक्षणानि केवलिगम्यानि—'यद्'—यस्मा'दसंख्येयानि'—संख्यातीतानि 'दिससेन'—एकेनाह्ना । न च तानि न सन्ति, केवलिगम्यत्वादिति । एवं यथेदमस्तीति गम्यते, कायादिव्यापारतो गम्यमानत्वाद्, एवं व्यञ्जनावग्रहज्ञानमपीति प्रकृतमिति गाथार्थः ॥१९८॥

तदयमत्र भावार्थः—प्रथमशब्दपुद्गलप्रवेशसमयादारभ्य विज्ञानशक्तिराविर्भवन्त्यर्थावग्रहज्ञानमानतामापुष्णाति, अन्यथा तदनुन्मङ्क्तिरेव स्यात् । तथाहि—'**यदि चे**'[1]दि'त्यादि । 'यदि च' भवतो व्यञ्जनावग्रहाज्ञानवादिनः 'असंख्येयसमयप्रविष्टशब्दादिद्रव्यसद्भावे'ऽपि '**अन्नाण**'न्ति असावज्ञानं ततः पारिशेष्याच्चरमसमये ज्ञानं, तन्नु 'किह **चरिमसमयपविट्ठसद्दादिदव्वेसु विन्नाणसामत्थम**'त्थावग्गहसण्णितं श्रोतुः स्यात् ? न कथञ्चिदित्यर्थः । एतदुक्तं भवति—अर्थावग्रहज्ञानं हि प्रतिसमयासंख्येयसमयप्रविष्टशब्दादिद्रव्यसमूहे वाऽङ्गीक्रियेत चरमसमयमात्रप्रविष्टशब्दादिद्रव्येषु वा ? किञ्चातः ? ॥१९९॥

तत्र परमतमास्थायाऽऽद्यविकल्पं[2] प्राह—'**ज**'मित्यादि । 'यद्'—वस्तु 'सर्वथा' सर्वप्रकारैः '**ण वीसु**'त्ति न पृथक् पृथगिति । 'सर्वेष्वपि' समुदितेषु 'तन्नास्ति रेणुतैलवत्' । एवं चेदतः 'प्रत्येकं'- प्रतिसमय'मनिच्छन् ज्ञानं कथमिच्छसि समुदाये'—असंख्येयसमयमीलने ? तस्मात् तत्प्रत्येकमप्यस्ति तिलतैलवदिति गाथार्थः ॥२००॥

अपि च—समुदायज्ञानवादिन् —'**समु**' इत्यादि । 'यदि' प्रत्येकमभवत् 'समुदाये ज्ञानम'भ्युपेयते ततस्त'द्देशोने समुदाये कथं नास्ति' ? अस्त्येवेत्यभिप्रायः प्रमाणोपपन्नत्वात् । तथा व्यञ्जनादानसमयेष्वपि ज्ञानमस्ति, ज्ञानोपकारिद्रव्योपादानसमयसमुदायैकदेशत्वादर्थावग्रहज्ञानसमय इवेति । चरमं विकल्पमधिकृत्याह—'समुदाये चाभवद्विवक्षितं वस्तु कथं देशे' चरमसमयलक्षणे 'भवेत्' स्यात् 'सकलम्' अखण्डम् ? नह्येकदैवाकाशान्निपतन्निपतति, प्राप्यकारित्वाच्छ्रोत्रस्य, नैवेत्यर्थः । कुतः ? प्रमाणोपपन्नत्वात् । तथाहि—अंशसमूहत्वात्सकलस्य,[3] नैवेत्यर्थः । कुतः ? [4]'प्रमाणोपपत्तिविरोधात् । तथाहि—न चरमसमयोपात्तद्रव्येषु ज्ञानमस्ति, समयमात्रोपात्तत्वात्, भवति च विशेषे पक्षीकृते सामान्यं हेतुरिति न्यायः । व्यञ्जनावग्रहाद्यसमय इवेत्युपलक्षणम् । स्यादेतत्—प्रत्यक्षविरोधिनी प्रतिज्ञेति, चरमसमय एव ज्ञानोत्पत्त्यनुभवात् । तन्न, चरमसमय एव

---

1 P has वे for चेदि. 2 P adds चिजिघटयिपयेदं.

3 P has चेत्तस्य for सकलस्य. 4 P adds श्र.

समग्रसमयविज्ञानोत्पत्तिप्रतिपत्तिविरोधात्, चरमतन्तौ समस्ततन्तुपटप्रतिपत्तिवत्, समान[1]विरोधश्च व्यञ्जनादानसमयेष्वपि ज्ञानमस्तीति प्रमाणीकृतत्वात् ।।२०१।।

तस्मात्—'तंतू' इत्यादि । 'तन्तु'रेकः 'पटोपकारी', तमन्तरेण तस्यायोगात् । 'न समस्तपटः' स तन्तुस्तदेकदेशत्वात् । 'च'शब्दान्नाप्यपटः सः । किं तर्हि ? पटोऽप्यवयवे समुदायोपचारात्, किन्तु 'समुदितास्ते तन्तवः समस्तपटो'ऽभिधीयते मुख्य[2]दार्ष्टान्तिकोपसंहारमाह 'तथा ज्ञानं सर्वसमयेषु' भावनीयमिति गाथार्थः ।।२०२।।

तदेवं तत्त्वमुक्तमथ पर्यायाः । तत्र व्यञ्जनावग्रहो व्यञ्जनोपादानं कारणमिति पर्यायाः ।

[तत्र नयनमनसोरप्राप्यकारित्वम्]

नयणमणोवज्जिदियभेयाओ वंजणोग्गहो चउहा ।
उवघायाणुग्गहओ जं ताइं पत्तकारीणि ।।२०३।।

जुज्जइ पत्तविसयया फरिसणरसणे न सोत्तघाणेसु ।
गिण्हंति सविसयमियं जं ताइं भिन्नदेसंपि ।।२०४।।

पावंति सद्दगन्धा ताइं गंतुं सयं न गिण्हन्ति ।
जं ते पोग्गलमइया सक्किरिया वाउवहणाओ ।।२०५।।

धूमो व्व संहरणओ दाराणुविहाणओ विसेसेणं ।
तोयं व नियंवाइसु पडिघायाओ य वाउव्व ।।२०६।।

गेण्हंति पत्तमत्थं उवघायाणुग्गहोवलद्धीओ ।
वाहिज्जपूइनासारिसादओ कहमसंबद्धे ।।२०७।।

लोयणमपत्तविसयं मणो व्व जमणुग्गहाइसुण्णंति ।
जलसूरालोयाइसु दीसंति अणुग्गहविघाया ।।२०८।।

डज्झेज्ज पाविउं रविकराइणा फरिसणं व को दोसो ।
मणणेज्ज अणुग्गहंपिव उवघायाभावओ सोम्मे ।।२०९।।

गंतुं न रूवदेसं पासइ पत्तं सयं व नियमोऽयं ।
पत्तेण उ मुत्तिमया उवघायाणुग्गहा होज्जा ।।२१०।।

जइ पत्तं गेण्हेज्ज उ तग्गयमंजणरओमलाईयं ।
पेच्छेज्ज जं न पासइ अपत्तकारि तओ चक्खुं ।।२११।।

गंतुं नेएण मणो संबज्झइ जग्गओ व सिमिणे वा ।
सिद्धमिदं लोयम्मिवि अमुगत्त्थ गओ मणो मेत्ति ।।२१२।।

1 P has अनुमान for समान.
2 ख्यः P.

नाणुग्गहोवघायाभावाओ लोयणं व सो इहरा ।
तोयजलणाइचिन्तणकाले जुज्जेज्ज दोहिंपि ॥२१३॥

दव्वं भावमणो वा वएज्ज जीवो य होइ भावमणो ।
देहव्वावित्तणओ न देहबाहिं तओ जुत्तो ॥२१४॥

सव्वगउत्ति व बुद्धी कत्ताभावाइदोसओ तं ण ।
सव्वासव्वग्गहणप्पसंगदोसाइओ वावि ॥२१५॥

दव्वमणो विण्णाया न होइ गंतुं च किं तओ कुणउ ।
अह करणभावओ तस्स तेण जीवो वियाणेज्जा ॥२१६॥

करणत्तणओ तणुसंठिएण जाणिज्ज फरिसणेणं व ।
एतोच्चिय हेऊओ न नीइ बाहिं फरिसणं व ॥२१७॥

नज्जइ उवघाओ से दोबल्लोरक्खयाइ लिंगेहिं ।
जमणुग्गहो य हरिसाइएहिं तो सो उभयधम्मो ॥२१८॥

जइ दव्वमणोऽतिबली पीलिज्जा हिदिनिरुद्धवाउ व्व ।
तयणुग्गहेण हरिसादउ व्व नेयस्स किं तत्थ ॥२१९॥

इट्ठाणिट्ठाहारब्भवहारे होन्ति पुट्ठिहाणीओ ।
जह तह मणसो ताओ पोग्गलगुणउत्ति को दोसो ॥२२०॥

नीउं आगसिउं वा न नेयमालंबइत्ति नियमोऽयं ।
तण्णेयकया जेऽणुग्गहोवघाया य ते नत्थि ॥२२१॥

सो पुण सयमुवघायणमणुग्गहं वा करेज्ज को दोसो ।
जमणुग्गहोवघाया जीवाणं पोग्गलेहिंतो ॥२२२॥

सुमिणो न तहारूवो वभिचाराओ अलायचक्कं व ।
वभिचारो य सदंसणमुवघायाणुग्गहाभावा ॥२२३॥

इह पासुत्तो पेच्छइ सदेहमन्नत्थ न य तओ तत्थ ।
न य तग्गयोवघायाणुग्गहरूवं विरुद्धस्स ॥२२४॥

दीसंति का सइ फुडं हरिसविसादादयो विरुद्धस्स ।
सिमिणाणुभूयसुहदुक्खरागदोसाइलिंगाइं ॥२२५॥

न सिमिणविण्णाणाओ हरिसविसादादयो विरुज्झंति ।
किरियाफलं तु तित्तीमदवहबंधादओ नत्थि ॥२२६॥

सिमिणेऽवि सुरयसंगमकिरियासंजणियवंजणविसग्गो ।
पडिबुद्धस्सवि कस्सइ दीसइ सिमिणाणुभूइफलं ॥२२७॥

सो अज्झवसाणकओ जागरओऽवि जह तिव्वमोहस्स ।
तिव्वज्झवसाणाओ होइ विसग्गो तहा सुमिणे ॥२२८॥

सुरयपडिवत्तिरइसुहगब्भाहाणाइ इहरहा होज्जा।
सुमिण समागम (य) जुवईएँ न य जओ ताइं तो
विफला ॥२२९॥

नणु सिमिणओऽवि कोइ सच्चफलो फलइ जो
जहा दिट्ठो।
ननु सिमिणम्मि निसिद्धं किरिया किरियाफलाइं च॥२३०॥

जं पुण विण्णाणं तप्फलं च सिमिणे बिबुद्धमेत्तस्स।
सिमिणयनिमित्तभावं फलं च तं को निवारेइ ॥२३१॥

देहप्फुरणं सहसोइयं च सिमिणो य काइयाईणि।
सगयाइं निमित्ताइं सुभासुभफलं निवेएंति ॥२३२॥

सिमिणमिव मन्नमाणस्स थीणगिद्धिस्स वंजणोग्गहया।
होज्ज व न उ सा मणसो सा खलु सोइंदियाईणं ॥२३३॥

पोग्गल-मोयग-दन्ते फरुसग-वडसालभंजणे चेव।
थीणद्धियस्स एए आहरणा होंति तायव्वा ॥२३४॥

जह देहत्थं चक्खुं जंपइ चंदं गयंति न य सच्चं।
रूढं मणसोवि तहा न य रूढी सच्चिया सव्वा ॥२३५॥

विसयमसंपत्तस्सवि संविज्जइ वंजणोग्गहो मणसो।
जमसंखेज्जसमइओ उवओगो जं च सव्वेसु ॥२३६॥

समएसु भणोदव्वाइं गिण्हए वंजणं च दव्वाइं।
भणियं संबंधो वा तेण तयं जुज्जए मणसो ॥२३७॥

देहादणिग्गयस्सवि सकायहिययाइयं विचिंतयओ।
नेयस्सवि संबंधे वंजणमेवंपि से जुत्तं ॥२३८॥

गिज्झस्स वंजणाणं जं गहणं वंजणोग्गहो स मओ।
गहणं मणो न गिज्झं को भागो वंजणे तस्स ॥२३९॥

तद्देसचिन्तणे होज्ज वंजणं जइ तओ न समयम्मि।
पढमे चेव तमत्थं गेण्हेज्ज न वंजणं तम्हा ॥२४०॥

समए समए गिण्हइ दव्वाइं जेण मुणइ य तमत्थं।
जं चिदिओपयोगेऽवि वंजणावग्गहेऽतीते ॥२४१॥

होइ मणोवावारो पढमाओ चेव तेण समयाओ।
होइ तदत्थग्गहणं तदण्णहा न प्पवत्तेज्जा ॥२४२॥

नेयाउ च्चिय जं सो लहइ सरूवं पईवसद्द व्व।
तेणाजुत्तं तस्सासंकप्पियवंजणग्गहणं ॥२४३॥

'णयणे'त्यादि । 'नयनमनसी वर्जयित्वा व्यञ्जनावग्रहश्चतुर्धा' । "तंजहा—फासिंदियवंजणोग्गहे जिब्भिदियवंजणोग्गहे घाणिंदियवंजणोग्गहे सोतिंदियवंजणोग्गहे" । इन्द्रियत्वे तुल्ये का[1] ? इति चेत् । उच्यते, 'उवघाताणुग्गहतो' । 'यद्'— यस्मा'त्तानि'—स्पर्शादीनि 'प्राप्यकारीणि स्पृष्टार्थग्राहीणीति गाथार्थः ॥२०३॥

अत्राह—'जुज्जती'त्यादि । 'स्पर्शनरसनयोः सा युज्यते', अनुभविकत्वात्, 'न श्रोत्रघ्राणयोः, गृह्णीतः स्वविषयम्'—आत्मीयं ग्राह्य'मितः'—अस्मादिन्द्रियविवराद् 'भिन्नदेशमपि' विप्रकृष्टक्षेत्रव्यवस्थितमपि । दूरे ध्वनिः श्रूयत इति वचनात् । अतः किमुच्यते—"वंजणोग्गहो चउह"त्ति गाथार्थः ॥२०४॥

उच्यते नैतद्, भ्रान्तत्वाद् भवतः । तथाहि—'पावंती'त्यादि । 'धूमो व्व' इत्यादि (गाथा २०६) । इह 'शब्दगन्धावन्यत आगत्य प्राप्नुतः' । के ? 'ते'—श्रोत्रघ्राणे कर्मणी । 'ते तु श्रोत्रघ्राणे गत्वा विषयदेशं स्वयं न गृह्णीतः' येन ते अप्राप्यकारिणी स्याताम्, अवाह्यकारणत्वात् स्पर्शनवत् । आह—तावत्[2] कस्मात् प्राप्नुत इत्यत—आह—'यद्' यस्मा'त्तौ पुद्गलमयत्वे सति सक्रियौ' । कुत एतदित्याह—'वायुवहनाद्' धूमवत् । तथा सक्रियौ तौ 'संहरणतो'त्ति गृहादिषु पिण्डीभवनाद् धूमवदेव । तथा 'द्वारानुविधानतो विशेषेण', तोयवत्, तथा 'नितम्बादिप्रस्ख[3]लनात्मभूतव[3]'दिति गाथाद्वयार्थः ॥२०५-२०६॥

तस्मात्'गेण्हंति'त्यादि । श्रोत्रघ्राणे 'प्राप्तं सन्तमर्थं गृह्णीत उपघातानुग्रहोपलब्धेः,' स्पर्शनरसने इव । आह—अप्राप्यकारित्वे सतीयं भविष्यतीत्यनैकान्तिको हेतुरिति । तन्न, यतः—'बाहिज्जे'त्यादि प्रतिज्ञा, रोगहेतु[4]त्वादाकाशवदिति । अतो यदुक्तं "नयणे"त्यादि तत्स्थितमिति गाथार्थः ॥२०७॥

अथ कस्मादयं न षोढा ? उच्यते—नयनमनसोरप्राप्यकारित्वेन व्यञ्जनोपादानायोगाद् । आह च—'लोयण'मित्यादि । 'अप्राप्यकारि लोचन'मालम्ब्यकृ'तोपघातानुग्रहशून्यत्वान्मनोवत्' । तत्रैतत्स्याद् असिद्धो हेतुर्यतः 'जलघृतवनस्पतीन्दुमण्डलालोकनेऽनुग्रह उपलभ्यते' सूरसितभित्त्याद्यालोकने चोपघात इति गाथार्थः ॥२०८॥

तदेवमसिद्धीभूते हेतावाचार्य आह—'डज्झेज्ज' इत्यादि । इह चक्षू 'रविकरादिना' पुद्गलधर्मेण 'प्राप्य' आश्लिष्य 'दह्येत' भस्मीक्रियेत, विह्वलीक्रियेत वा 'स्पर्शनमिवा'न्वय्येव दृष्टान्तः, इत्यतः 'को दोषो', नैव कश्चिद्, दृष्टस्य वाधितुमशक्यत्वात् । तथा 'मन्येतानुग्रहमपि' चक्षुः स्पर्शनव'दुपघाताभावात् सौम्ये' जलघृतवनस्पतीन्द्वालोकने सति । अत्रापि को दोषः ? ॥२०९॥

---

1 P has कैयं मुखपरीक्षिका for का.    2 तावपि P.

3...3 लनात् मरुद्व P.    4 P omits हेतु.

काममेतत्, किन्तु—'गंतु'मित्यादि। इह हि चक्षुरुत्प्लुत्य 'गत्वा रूपदेश'मादित्यमण्डलादिलाञ्छितं 'न पश्यति'—नादत्ते, किं? रूपमेवेति गम्यते अन्यस्याश्रुतत्वात्। तथा—'पत्तं सयं व'त्ति स्वयं वाऽन्यतः स्वतन्त्रतयाऽऽगतं सद्रूपं चक्षुर्न गृह्णात्यञ्जनादिभिर्व्यभिचारात् श्रोत्रेन्द्रियं शब्दमिव। 'नियमोऽयमि'ति—एतदत्र नियम्यते वाचो युक्त्या, काक्वा। पच्छद्धमाह—'पत्तेण तु' चक्षुर्देशे 'मुत्तिमया' रविकरादिना 'उपघातानुग्रहौ, परितापाह्लादौ 'भवेतां'—यातामेतत्स्वभावत्वात् पुद्गलानाम्। वनस्पत्यादयस्तु दूरस्था एव गृह्यन्त इति गाथार्थः ॥२१०॥

अपि च—'जती'त्यादि। 'यदि तु प्राप्तं' सन्तमर्थमक्षि 'गृह्णीयात्'—तत'स्तद्गतं रजोमलाद्य'पि गृह्णीयात्, तस्यैव परमार्थप्राप्तेः। 'यतश्च न पश्यत्यत इदमप्राप्यकारी'ति गाथार्थः ॥२११॥

तत्रैतत्स्यात्—प्राप्यकारि चक्षुरावरणात् स्पर्शनवत्। न, मनसाऽनैकान्तिकत्वात्। अप्राप्यकारि चक्षुरावरणान्मनोवत्। तथा च मनः खल्वप्राप्यकारि भावसिद्धया विषादिभिश्चाव्रियत इति। रूपावरणेऽपि ह्यग्राहकं चक्षुर्बाह्यानुग्रहाभावान्मनोवत्। तथाहि—मनोऽप्राप्यकारित्वे सत्यप्येन्द्रियकेषु न क्वचिदनुप्रवर्त्तेत इति, इन्द्रियानुग्रहशून्यं सदिति। यस्य चाभिप्रायः खल्वप्राप्यकारिणा चक्षुषा बाह्यानुग्रहनिरपेक्षेणाप्यनु'वर्त्तितव्यं तस्य मनसाऽपीन्द्रियैः प्रकाशि'तेष्वप्रकाशि'तेषु वा विशेषेण सर्वार्थेष्वनुप्रवर्त्तितव्यम्। न चानुप्रवर्त्ततेऽत्यन्तमदृष्टाश्रुतादिष्विति। अथ द्वितीयश्चोदक आह—न चक्षुष इव मनसः अप्राप्यकारिता, ततो हेतुशुद्धावपि न ज्यायः प्राक्साधनं, साध्यविकलत्वाद् दृष्टान्तस्य। तथा च 'गंतु'मित्यादि। इह देहाद् 'गन्तुं' निर्गत्य 'ज्ञेयेन' मेरुशिखरस्थप्रतिमादिना 'मनः' अन्तःकरणं 'सम्बध्यते' आश्लेषमाप्नोति। कदेत्याह—'जाग्रतो वा स्वप्ने वऽनुभवसिद्धत्वात्। न चैतन्ममैव सिद्धं, यतः 'सिद्धमिदं लोकेऽपि', यत एवं वक्तारो भवन्ति - 'अमुत्र मे मनो गत'मिति गाथार्थः ॥२१२॥

अत्र साधनवाद्याह—'नाणुंग्गहो' गाहा। नैतदेवं—'न' मनो बहिर्निस्सरति, आलम्ब्यक्र'तानुग्रहोपघाताभावात् लोचनवदि'ति। एवं चैतत् 'सो इहर' त्ति। 'तत्' मनो'ऽन्यथा'—प्राप्यकारितायां सत्यां 'तोयज्वलनाद्या' चिन्तनकाले युज्येत द्वाभ्यामपि'—तापाह्लादाभ्यां, विषयेण सम्बद्धत्वात्, स्पर्शनादिवदिति गाथार्थः ॥२१३॥

अत्र हेत्वसिद्धिचो'दनामुत्पश्यन्नपि सूरिरपान्तराल एवेदं विकल्पद्वयमाह—'दव्व'मित्यादि। 'द्रव्यमनो वा व्रजेत्'—मेरुशिखरस्थजिनप्रतिमालम्बनार्थं यायात् भवतः, 'भावमनो वा'? ततः किमिति चेत्, अत आह—'जीव एव भावमनो भवति,' मनःक्रियापरिणामापन्नत्वात्। अमुमेवाश्रित्याह—'देहव्यापि-

1 P adds अ. 2 मि P 3 नि P.
4 °चालम्ब्य P. 5 श्चो P.

त्वाद्' देहमात्रवृत्तित्वात् न 'देहाद् वहि'र्मेरुशिखरादावपि '**तश्रो जुत्तो**' तद् भावमनो युक्तम् । प्रयोगः—जीवः शरीराद् वहिर्नास्ति अत्रैव तद्गुणोपलब्धेः शरीरसत्त्ववदिति गाथार्थः ।।२१४।।

अत्रापान्तराले पराभिप्रायमाह—'**सव्व**' इत्यादि । स्याद् 'बुद्धि'र्भवतः सर्वगतोऽयमात्मा, न देहमात्रव्यापी, अमूर्त्तत्वादाकाशवदिति । आचार्य आह—'**तं ण**'त्ति तदेतन्न युक्त्या घटते । कुत इत्याह—'कर्त्रभावादिदोषत' इति, कर्त्तुरभावः कर्त्रभावः स आदिर्यस्य स कर्त्रभावादिः कर्त्रभावादिश्चासौ दोषश्चेति कर्त्रभावादिदोषस्तस्मात् । अयमत्र भावार्थः—यद्येवं न तर्ह्ययमात्मा कर्त्ता, सर्वगतत्वादाकाशवदेव । न ह्यभ्युपगमा एव वाधायै भवन्ति । हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गं सावयवं परतन्त्रं व्यक्तं, विपरीतमव्यक्तमित्यतो निष्क्रियत्वादकर्त्तैवेति चेत्, तन्न, तदकर्तृत्वे भोक्तृत्वानुपपत्तेः । भोक्तृत्वस्य चेष्टत्वात् । प्रकृतिकृतं भोक्ष्यते "प्रकृतिः करोति पुरुषो भुङ्क्ते" इति वचनादिति चेत् । तन्न, अचेतनस्य कर्तृत्वानुपपत्तेर्घटादिभिरतिप्रसङ्गात् । अचेतना च प्रकृतिः "चैतन्यं पुरुषस्य स्वरूप"मिति वचनाद् । अतोऽवश्यं भोक्तृत्वात् स्वयमात्मा कर्त्तेत्यभ्युपगन्तव्यं, तच्च सर्वगतत्वे सत्युक्तवन्नोपपद्यत इति प्रकरणार्थः । '**आदि**'शब्दात्सुखदुःखसंसारादिर्न भवति सर्वगतत्वादाकाशवत् । एवमादि स्वधियोत्प्रेक्षणीयमिति । आह—किमेतावन्मात्रदोषत एवैतदाहोस्विदन्यतोऽपीत्यत 'सर्वग्रहणप्रसङ्गदोषतो' वा । अस्यायमर्थः—भावमनसः प्राप्यग्राहकत्वाभ्युपगमात् सर्वगतत्वेन च सकलत्रैलोक्यव्यापित्वाद्, अतः सर्वपदार्थग्रहणप्रसङ्गतः सर्वस्य सर्वज्ञताप्राप्तिदोषः, सर्वस्य सर्वगतत्वेन सर्वप्राप्तत्वात् प्राप्यग्राहित्वाभ्युपगमाच्च । न चेत् प्राप्तमपि तत्सर्वं गृह्णात्युक्तदोषादत उच्यते- '**असव्वगहणप्पसंगदोसादितो व**'त्ति । कोऽर्थः ? किञ्चिदपि मा गृह्णीयात् प्राप्तत्वात् सकलत्रैलोक्यवत् । प्राप्तत्वे तुल्ये सत्येकं न गृह्णात्यपरं तु गृह्णातीति व्यक्तमीश्वरचेष्टितम् । '**आदि**'शब्दात् सर्वासर्वदर्शनप्रसङ्गदोषतश्चेति सम्बध्यते । 'तन्ने'ति वर्त्तत इति गाथार्थः ।।२१५।।

यद्येवं द्रव्यमनस्तर्हि यास्यतीत्यत आह—'**दव्व**' इत्यादि । 'द्रव्यमनो विज्ञातृ न भवति'—द्रव्यमन आलम्बकं न भवति, पुद्गलमयत्वात्, पाषाणवत् । 'अतो गत्वाऽपि किं तत्करोतु' ? तस्मिन् मेरुशिखरजिनप्रतिमासन्निधाविति गम्यते । नहि तत्तत्र गतं सद् भगवन्तं स्तुतिस्तोत्रादिभिः स्तौति जडत्वाच्चिन्तामणिरिवेति । तस्मान्न भावमनसो द्रव्यमनसश्च पद्मनालतन्तुन्यायेन निर्गम इति । अत्र पराभिप्रायमाह—'अथ' मन्यसे 'करणभावतः'—करणत्वात्कारणात् 'तस्य'—द्रव्यमनसः 'तेन'—द्रव्यमनसा 'जीवो जानीयाद्' अवबुध्येत मेरोः शिरसि जिनप्रतिमाभिषेको वर्त्तत इति । प्रयोगः—आत्मा वहिर्निर्गतेन मनसा जानाति करणत्वात् प्रदीपवत् इति गाथार्थः ।।२१६।।

उच्यते—यद्येवं ततः—'**करण**' इत्यादि । 'करणत्वात् तनुसंस्थितेन' देहादवहिर्भूतेन 'जानीयात् स्पर्शनेनेव' अवाह्यकरणत्वान्मनसोऽपीति भावना ।

अत एव करणत्वादिति हेतोर्न निस्सरति देहाद्वहिर्मेरुशिखरादिं प्रति स्पर्शनेन्द्रियवत् । प्रदीपस्तु बाह्यकरणमिति गाथार्थः ।।२१७।।

तामिदानीं हेत्वसिद्धिमाह—'नज्जती'त्यादि । 'ज्ञायते'ऽनुमीयते 'उपघात' । उपद्रवः 'से' तस्य द्रव्यमनसः । कैरित्याह—'दौर्बल्योरःक्षतादिलिङ्गैः' । 'आदि'शब्दादतिचिन्ताप्रसक्तिः परिगृह्यते । 'यद्'—यस्मा'दनुग्रहश्च हर्षादिभि'र्यत् 'तो' ततः, 'सो' तत् द्रव्यमन 'उभयधर्मकम'तः "अणुग्गहोवघाताभावातो"त्ति हेतुरसिद्धो वर्त्तत इति गाथार्थः ।।२१८।।

अमुं परिजिहीर्षुराह—'जत्तो'त्यादि । 'यदि द्रव्यमनो'—मनस्त्वपरिणत द्रव्यपिण्डोऽनिष्टपुग्दलो पचितत्वे'नातिवलि' सत् 'पीडयेद'भिहन्यात् । कम् ? पुरुषमिति सामर्थ्याद् गम्यते । क इवेत्याह—'हृदि निरुद्धवायुवत्'—हृद्देशावरुद्ध'ककूटर्पमरुद्द्रव्यवदित्यर्थः[1] । तथा 'तदनुग्रहेण' इष्टातिप्रचितपुद्गलसम्भारानुग्रहेण 'हर्षादयो'—हर्षप्रमोदाह्लादादयो वा यदि, ततो 'ज्ञेयस्य'—मेरुशिखरस्थजिनप्रतिमादिलक्षणस्य 'किं तत्रा'यातं येनोच्यते तदनेनालम्ब्यते । ननूक्तं "दव्वं भावमणो वा वएज्ज"इत्येवमादि । नेमावस्य [2]तत्कृतौ, श्रोत्रेन्द्रियस्येव ध्वनिनेति । पुरुषस्यानेन[3] तौ, न त्वस्य[4] तो तेनेति भावनेति गाथार्थः ।।२१९।।

अमुमेवार्थं भावयन्नाह—'इट्ठे'त्यादि । इष्टो'दैवलौकिकादिः । अनिष्टो—नरकगत्यादिगतस्ततश्च 'इष्टानिष्टाहाराभ्यवहारात्' भवतः 'पुष्टिहानी यथा' येन प्रकारेण देवनारकादेर्भोक्तुरिति वाक्यशेषः, 'तथा' तेन प्रकारेण, मन्तुरिति सामर्थ्याद् गम्यते, 'मनसः' सकाशात् 'ते' पुष्टिहानी उक्तेन प्रकारेण । किं कारणमित्याह—'पुग्दलगुणत्वात्' तस्य, "जमणुग्गहोवघाता जीवाणं पोग्गलेहिंतो" त्ति वक्ष्यमाणत्वात् । कथं पुनरिदं द्रव्यमनो गम्यत इति चेत् । उच्यते—अमुत एव मन्तुस्तापाह्लादोपलब्धेरिति गाथार्थः ।।२२०।।

तस्मात्—'नीउ'मित्यादि । इदं द्रव्यमनो देहा'न्निर्गत्य आकुञ्ज[6] वा न ज्ञेयं'—मेर्वादिशिखरस्थ'मालम्बते' गृह्णाति, 'इति नियम' ए'वायम्' । एतावन्नियम्यत इत्युक्तं भवति । प्राप्यकारीदं न भवतीत्यर्थः । किमेतावदेव ? नेत्याह । तच्च 'तज्ज्ञेयं' यत्तदनेनालम्ब्यते 'तेन यौ कृतौ अनुग्रहोपघातौ तौ च न स्त' इति नियम्यत इति गाथार्थः ।।२२१।।

कः[7] पुनर्विधिरित्याह—'सो पुणे'त्यादि । 'तत्पुनः' द्रव्यमनः कर्मवशगस्य जन्तोः कथञ्चित्'स्वयमु'च्छूनावस्थीभव'दुपघातमनुग्रहं वा[8] कुर्यात्' । अनुभवसिद्धमेतत् जीवानाम् एतत्'पुद्गल'भावभावित्वादिति गाथार्थः ।।२२२।।

साम्प्रतं यदुक्तं पूर्वपक्षगाथायां "सुमिणे व"त्ति तदपाकुर्वन्नाह—'सुमिणो' इत्यादि । 'स्वप्नः' प्रसुप्तावस्थाविशेषः । 'न तयारूपो'—न परमार्थतस्तथा

---

1 ककुदमरुद्ग्रन्थिवदित्यर्थः P.
2 तत् = ज्ञेय P.
3 अनेन = मनसा P.
4 अस्य = मनसः P.
5 देवलौकादिः P.
6 आकृष्ट्वं P.
7 नन P.
8 च P.

यथोपलभ्यते । किं कारणमित्याह—'व्यभिचाराद्'—विसंवादात् । किंवदित्याह—'अलातचक्रवद्' । यथा ह्यलातमाशुसञ्चारित्वेन भिन्नदेशावगाह्यप्यभिन्नदेशावगाहनभ्रान्त्या चक्रमिवोपलभ्यमानं भ्रान्तिः । भ्रमणोपरतौ न किञ्चित् स्वभावस्थत्वात् । एवं सुप्तावस्थायां मनस्तथोपलभते । तद्विरमे च तत्सर्वमिन्द्रजालप्रतिममितिकृत्वा त एव दरास्त एव मेच'का इति । न चासिद्धो हेतुर्यत आह—'व्यभिचारश्च' स्वप्नस्य 'सदंसण'त्ति स्वात्मनोऽन्यत्र मेरुशिखरादौ दर्शनात् । स तत्रैव गत आसीदिति चेत् । न, इह व्यवस्थितैरिहैवोपलभ्यमानत्वात्, द्वयोश्चात्मनोरसंभवात् । प्रवुद्धस्येदानीं व्यभिचारमाह—'उपघातानुग्रहाभावा'च्च अध्वानजनितखेदाद्यभावादिति गाथार्थः ॥२२३॥

आह च— 'इहे'त्यादि । गतार्था । नवरं 'तद्गतमि'त्यध्वानगतमित्यादि भावनीयम् । तस्मादसत्या स्वप्ने मनः क्रियेति गाथार्थः ॥२२४॥

आह चोदकः—[2]नेयमसत्या[2] उत्थितस्यामुतः फलदर्शनात् तथाहि—'दीसंति' इत्यादि । 'दृश्यन्ते' उपलभ्यन्ते 'कस्यचित्' स्वप्नद्रष्टुः, न सर्वस्य । 'स्फुटं' द्रष्टव्य[3]मित्यत आह—'हर्षविषादादयः' । तत्र हर्षः—सुलब्धं ममाद्य जन्मेति प्रमोदः । अहमस्मिन् संसारेऽलब्धजन्मेति विषादः । 'आदि'शब्दादुन्मादग्रहमाध्यस्था[4]नि परिगृह्यन्ते । किंविशिष्टस्य सतइत्याह—'विबुद्धस्य' सुप्तोत्थितस्य सतः । किंविशिष्टा[5] इत्याह—'स्वप्नानुभूतयोः सुखदुःखयो रागद्वेषादौ' यानि 'लिङ्गानि' चिह्नानि । तथा चानुभवः —

"स्वप्ने दृष्टो मयाऽद्य त्रिभुवनमहितः पार्श्वनाथः शिशुत्वे,
द्वात्रिंशद्भिः सुरेन्द्रैरहमहमिकया स्नाप्यमानः सुमेरौ ।
तस्मान्मत्तोऽपि धन्यं नयनयुगमिदं येन साक्षात् स दृष्टो,
द्रष्टव्यो यो महीयानपहरति भयं देहिनां संस्मृतोऽपि ॥१॥"

इति हर्षः ।

प्राकारत्रयतुङ्गतोरणमणिप्रेङ्खत्प्रभाभ्याहता,
नष्टा क्वापि रवेः करा द्रुततरं यस्यां प्रचण्डा अपि ।
तां त्रैलोक्यगुरोः सुरेश्वरवतीमास्थायिकामेदिनीं,
हा ! यावत् प्रविशामि तावदधमा निद्रा क्षयं मे गता ॥२॥"

इति विषादः । उन्मादग्रहौ तु प्रतीतार्थौ, अत्यन्तकामोद्रेकचोदनाजनितत्वात् । माध्यस्थ्यं तु मुनेरिति गाथार्थः ॥२२५॥

[6]उच्यते 'णो' इत्यादि[6] । 'न स्वप्नविज्ञानाद्धर्षविषादादयो विरुध्यन्त' इति ब्रूमः, कार्यस्य कारणाव्यभिचारित्वात्, जाग्रद्विज्ञानहर्षादिवत् । के तर्हि विरुध्यन्त

1 छ P. 2…2 नेयमस्य P. 3 P has स्पर्ष्ट for द्रष्टव्यं.
4 स्थ्या P. 5 P adds य. 6……6 'न सिमी'त्यादि P.

इत्यत आह्—'क्रिया'—मेरुशिखरप्राप्त्यादिलक्षणा 'फलं'—कार्यम्। 'तु'शब्दः प्राप्यकारिता 'फलं वीजं[1] 'नास्ती'ति विशेषणार्थः। 'तृप्ति'र्व्युपरतिलक्षणा। 'मदः'—सुरादिपाने। 'वधः'—पीडा शिरश्छेदादौ। 'वन्धो' निगडादिभिः। 'आदि'शब्दः स्वभेदप्रख्यापक इति गाथार्थः ॥२२६॥

तत्रैतत् स्यात्—'सिमि' इत्यादि। स्पष्टोऽक्षरार्थः। नवरमयमस्याभिप्रायः—यत्र व्यञ्जननिःसर्गस्तत्र योषित्सङ्गमेनापि भवितव्यं, यथा विशिष्टमन्दारलता-गृहोत्सङ्गाध्यासिनि भूभाग इति। तथा च स्वप्ने तस्मादत्रापि तेन भवितव्यमिति कथं न प्राप्यकारि मन इति ॥२२७॥

[3]आ[०]। अत्र[3] नासौ तदविनाभूत इत्यनैकान्तिकतां हेतोर्दर्शयन्नाह—'सो' इत्यादि। 'सः'—व्यञ्जनविसर्गोऽ'ध्यवसायकृतो' न त्ववलासंटङ्कृत्य' इत्यभि-प्रायः। तदप्राप्तेः किमालजालचिन्तनादेवं भवतीत्यत्र दृष्टान्तमाह—'जाग्रतोऽपि यथा तीव्रमोहस्य तीव्राध्यवसानाद् भवति विसर्ग'स्तामन्तरेणेति शेषः, तथा 'स्वप्न' इति दार्ष्टान्तिकोपसंहार इति गाथार्थः ॥२२८॥

तस्मादसत्या स्वप्नक्रियेति। एवं चैतत्—'सुरत' इत्यादि। 'इतरथा' तत्सत्यत्वे सुरतसमागमयुवतेः 'सुरतप्रतिपत्ति'स्तत्क्रियाप्रतिपत्तिः 'रतौ' च 'सुखं' प्रतीतमेव केषाञ्चिद् 'गर्भाधानं' गर्भसम्वन्धः। 'आदि'शब्दाद् दौहृदापि परि-गृह्यते। न च यतस्तानि तस्यास्ततो विफलः स्वप्न इति कुतः प्राप्यकारिता? इति गाथार्थः ॥२२९॥

पर आह्—'नन्वि'त्यादि। 'ननु स्वप्नोऽपि कश्चित्सत्यफलो' भवति। कइत्यत आह्—'यो यथा दृष्ट'स्तथैव च 'फलदायी' देवताधिष्ठानात्। उच्यते 'ननु स्वप्ने निषिद्धं', स्वप्ने वितथमिति ब्रूमः। किमित्यत आह्—'क्रिया'—मेरुशिखरप्रवृत्तिरूपा, तथा 'क्रियाफलानि च'—श्रमखेदादीनीति गाथार्थः ॥२३०॥

क्व पुनर्विधिरित्याह्—'जं पुणे'त्यादि। 'जं पुण सुमिणे विन्नाणं' अ'नुभव-रूपं 'तं को निवारेति'त्ति सम्वन्धः। तथा 'विवुद्धे तप्फलं च' हरिसविसादादि 'तं को निवारेति'। 'च'शब्द एकः स्वगतानेकभेदप्रख्यापनार्थः। तथा सत्यस्वप्नस्य च भाविनि फले निमित्तभावं को निवारयति? न कश्चित् ॥२३१॥

किं कारणम्? यतस्त्रिविधं निमित्तं—कायिकवाचिकमनोभेदात्। अत एवाह्—'देह' इत्यादि। स्पष्टार्था ॥२३२॥

अपृष्ट एवाधुना सूरिराह्—'सिमी'त्यादि। 'वा' इत्यथवा। 'स्त्यानर्द्धि-मतः' पुंसः 'व्यञ्जनावग्रहता भवेत्'। एतच्च सामान्येन तावत्, किंविशिष्टस्य? इत्यत आह्—'स्वप्नमिव मन्यमानस्य'। आह्—यद्येवं सिद्धं साध्यमस्माकम्।

1······1 वीजं फलं P. 2 वि P. 3······3 अत्र P.
4 त P. 5 तथा P.

आचार्य आह—'**ण उ सा मणसो**'त्ति । न पुनरसौ मनसो व्यञ्जनावग्रहतेति । अत एव पूर्वार्द्धे 'इव' ग्रहणं कृतम् । एतदुक्तं भवति—नासौ स्वप्नो निद्रात्वान्नाप्यसौ व्यञ्जनावग्रहता तस्य श्रोत्रेन्द्रियादिसम्बन्धित्वात् । आह च—'सा श्रोत्रेन्द्रियादीनामेव' । 'खलु'शब्दस्यैवकारार्थे सति भिन्नक्रमत्वात् ।।२३३।।

तस्याश्चामून्युदाहरणानि । तद्यथा '**पो[1]गले**'त्यादि । **निषीथे** वक्ष्याम इति ।।२३४।।

तदेवमनेन ग्रन्थेन पूर्वपक्षगाथापूर्वार्द्धमपाकृतम् । अथ द्वितीयमपाकुर्वन् दृष्टान्तमाह—'**जह**' इत्यादि । 'यथा' येन प्रकारेण देहादनिश्चरितं सत् 'चक्षु'र्लोको 'जल्पति चन्द्रं गत'मिति, निर्निबन्धनमेव 'रूढम्' । '**मनसोऽवि तह**'त्ति तथा मनसोऽपीहस्थस्यैव बहिर्निर्गमनं रूढम् । एवं यात्विति चेत् न च सर्वा रूढिः सत्येति, 'वटे वटे वैश्रवण' इत्यादिलोकरूढेर्व्यभिचारदर्शनाद् रूढिमात्रत्वात् । *अतो न मनसोऽसौ, अप्राप्यग्राहकत्वात् चक्षुष इवेति स्थितम्* ।।२३५।।

आह—अद्यापि हेतोरगमकत्वात् दुष्टा प्रतिज्ञेति, आह च—'**विसयं**' इत्यादि । '**समये**' इत्यादि । 'विषयं' मेरुशिखरादिस्थजिनप्रतिमादि अग्निजलादिकं वा । 'असम्प्राप्तस्यापि' अनाश्लिष्टस्यापि आप्राप्य गृह्णतोऽपीति भावना । 'संविद्यते' योक्ष्यते । कोऽसावित्याह—'व्यञ्जनावग्रहो' व्यञ्जनोपादानम् । '**मनसो**' द्रव्यमनसः । अपरया भङ्ग्येति शेषः । तेनैतदुक्तं भवति– यथा जीवस्य श्रोत्रेन्द्रियेण ग्राह्यं व्यञ्जनादानमिष्यते, एवं जीवस्यैव नोइन्द्रियेण ग्राह्यवस्तुव्यञ्जनादानमुत्पश्यामः । कुत इत्याह—'यत्' यस्मात् सर्व एव उपयोगः स्पर्शनादिमनोन्तः[2] छद्मस्थस्य 'असंख्येयसामयिको'ऽसंख्येयसमयनिष्पत्तिरुक्तो भवद्भिः—"वद्धमाणे[3] न जाणति"त्ति वचनात् । यदि नामैवं ततः किं ? अत आह—'**जं च सव्वेसु समयेसु**'त्ति । यस्माच्च द्वयादिष्वसंख्येयतिमान्तेषु समयेषु । किमत आह—'**मणो**' इत्यादि । 'मनोद्रव्याणि' मनोदलिकानि 'गृह्णाति' आदत्ते । मन्ता इति शेषः । तथापि किमत आह—'दव्वाइं च वंजणं भणितं' त्वयैव । 'सम्बन्धो वा' ग्राह्यग्राहकयोः । अतो येन कारणेनैवं '**तेन तयं**' व्यञ्जनोपादानं 'युज्यते' घटते 'मनसो'ऽनया भङ्ग्या । नो चेत् न क्वचिदसावेष्टव्यः, प्रतिसमयद्रव्योपादानेऽप्यभावात् मनसीवेति निवृत्तेदानीं व्यञ्जनावग्रहवार्त्तेति गाथार्थः ।।२३६-२३७।।

अथ प्राप्यकारित्वमङ्गीकृत्यापरयैव भङ्ग्याऽस्यै[4]नं पर एवाह—'**देहा**' इत्यादि । दिह्यत इति देहस्तस्मा'द्देहादनिर्गतस्यापि', मेरुशिखरादि प्रतीति सामर्थ्याद् गम्यते । स्वः कायः 'स्वकायः' । तस्मिन् हृदयादि । तत् 'विचिन्तयतः' समालम्बतः, प्रतिसमयोपचीयमानमनोद्रव्यैरिति हृदयम् । 'ज्ञेयस्यापि' हृदयादेः 'सम्बन्धे' संयोगे । हृदि मनोद्रव्याभिश्लेषे सतीति यावत् । 'व्यञ्जनं'

---

1 पु P.  2 जः P.  3 P has चेवमाणे for वद्धमाणे.
4 अस्य = मनसः.

व्यञ्जनोपादानम् । 'एवमपि' अनयाऽपि भङ्ग्या 'से' अस्य मनसो 'युक्तं' घटमानम् । नो चेत् उक्त एव दोष इति पूर्वपक्षः ॥२३८॥

अत्र[1] प्रथमपक्षमविकृत्याचार्य आह—'गज्झस्से'त्यादि । इहाद्यविकल्पोऽयुक्तो, मनसः श्रोत्रादिसाधर्म्यायोगात् । तथाहि—'ग्राह्यस्य' आलम्ब्यस्य सम्बन्धिनां 'व्यञ्जनानां यद् ग्रहणं स व्यञ्जनावग्रहो मतः' स्पर्शरसगन्धशब्दद्रव्याणामिवेति जानाति भवानपि । अत्र तु नायं न्यायोऽस्ति, यतः 'गहणं मणो ण गज्झं' ति न मनो ग्राह्यं न मन आलम्ब्यं, तस्य मेर्वादिशिखराध्यासितत्वात् । किं तर्हि मन इत्यत आह—'ग्रहणं' गृह्यते—परिच्छिद्यतेऽनेनेति ग्रहणम् । कुत एतत् ? मनःशक्तिसामर्थ्यात्—प्रतिसमयोपचीयमानमनोद्रव्यकरणैः प्रतिसमयमेव बाह्यार्थपरिच्छेदभावात् । न चावद्धमूलत्वात् कथमादिसमये वहिः प्रवर्त्ततेति[2] चोदनीयं, मनःपर्याप्त्यनुगृहीतत्वेन दक्षत्वात् । तदिदमेतेषां करणत्वेनादिचोद्यं परिहृत्य निगमयन्नाह—अतः 'को भागः' कोऽवसरः 'व्यञ्जने' व्यञ्जनावग्रहभवने 'तस्य' प्रतिसमयोपचीयमानमनोद्रव्यराशेः करणत्वात् । ततश्च न व्यञ्जनावग्रहाभावोऽप्यन्यत्रेति । यच्चोक्तं द्वितीयविकल्पे तत्रापि स्वकायदेशसम्बन्धमात्रात् प्राप्यकारित्वमवसातुं न युक्तं, सर्वस्य मनसस्तदभिन्नत्वात्, भेदे सति प्राप्यकारित्वशब्दार्थोपपत्तेः । अतः पारिशेष्याद् वाह्यवस्त्वपेक्षयैव प्राप्याप्राप्यकारिचिन्तेति किं मुधा खिद्यते भवानिति चोद्यद्वयव्युदासः ॥ अमुमेवार्थमुत्तरवस्तुव्युत्पादनार्थमाह, अपि च—'तद्देसे'त्यादि । स चासौ देशश्चेति 'तद्देशः' स्वकायदेशो हृदयादिर्ग्राह्यधर्म्मी, तस्य 'चिन्तनं'—मनसा मननमिति 'तद्देश चिन्तनम्' । तस्मिंस्तद्देशचिन्तने, प्रतिसमयोपचीयमानमनोद्रव्यैरिति गम्यते । 'होज्ज वंजणं' स्याद् व्यञ्जनं हृद्देशग्राह्यधर्मिव्यञ्जनोपादानं, यदि किं स्यादित्याह—'जति तओ' त्ति यदि तत् मनः 'प्रथमसमय एव तमर्थं' हृदयार्थं 'न गृह्णीयात्' । गृह्णाति च, अन्यथा दोषसद्भावप्रसङ्गात् । तदेवं तत्प्रथमग्रहणतो द्वितीयचोद्यस्यापि स्पष्टतरेण वचनेनासाधुतामुपदर्श्य निगमयन्नाह—'तस्मान्न व्यञ्जनं' प्रतिसमयोपचीयमानद्रव्यराशेर्हृद्देशावलम्बिनः । तस्मादन्यापि नान्येन्द्रियेषु व्यञ्जनाभावप्रसङ्गः । प्रयोगः—हृद्देशसम्बन्धेऽपि मनसो व्यञ्जनावग्रहो नास्ति, अनुपलम्भकालासम्भवात् स्वविषयसम्बन्धे चक्षुष इव, व्यतिरेकेण श्रोत्रम् । न चाप्राप्यकारिणो चक्षुःश्रोत्रे इति व्यतिरेकासिद्धिश्चोदनीया, [4]सत्पक्षत्वादस्येति गाथार्थः ॥२३९-२४०॥

अथ कोऽस्याघुत्तरभावार्थ इत्यत आह—'समये'त्यादि । 'होई'त्यादि, अस्यादरयोजनया व्याख्या—तत्र 'जेण'त्ति येन कारणेन मनःशक्तिमान् जीवः 'समये समये' समयं समयं प्रति 'गृह्णाति' आदत्ते स्वीकरोति 'द्रव्याणि' मनोदलिकानि, सर्वलोकापन्नमनोद्रव्यवर्गणाभ्य इति गम्यते । तथा 'मनुते च तमर्थं' पर्यालोचयति च तमर्थं मेर्वादिकं तैर्येन समये समय इति वर्त्तते । एष तावत्

1 कथ P. 2 P has प्रवर्त्ता इति for प्रवर्त्ततेति. 3 P adds न्य.
4 P adds स.

सिद्धान्ताभिप्राय:। ततः किमित्यत आह—'**पढमाओ चेव तेण समयाओ होइ मणोवावारो**'त्ति। तिष्ठतु सांन्यासिकं तावदिति वक्ष्यामः। अथ द्वितीयमुपपत्त्यन्तरमाह—'**जं चिदिओवयोगेऽवि**'त्ति यच्चेन्द्रियोपयोगेऽपि—यस्माच्च श्रोत्रेन्द्रियाद्युपयोगमात्रेऽपि सत्यसंख्येयसमयभाविनि प्राक्, पुनः पश्चात् 'व्यञ्जनावग्रहेऽतिक्रान्ते' सति, किमित्यत आह—'**होइ मणोवावारो**'त्ति भवति मनसो व्यापारः प्रवोध-शक्तिरिति यावत्। कदा चेत्, उच्यते—अर्थावग्रहणसमय इति गम्यते। "जाता हुंति करेमि"त्ति वचनात्। अयं च द्वितीयः सिद्धान्ताभिप्रायः। तस्मान्न मनसः खल्वसंवेदनकालोऽस्ति। यदि पुनर्मनसोऽपि व्यञ्जनावग्रहः स्यात्तत इन्द्रियमिन्द्रियं प्रति स्याद्, इन्द्रियेन्द्रियव्यञ्जनावग्रहेण सहानुश्लिष्टिः स्यादिति भावनीयम्। ततश्चेन्द्रियानिन्द्रियपरिकल्पनमनर्थकं स्यात्। एतदुक्तं भवति—यदि व्यञ्जनावग्रहे इन्द्रियमात्रस्यैवोपयोगः स्यादर्थावग्रहे तूभयोस्ततो मनसोऽनवष्टम्भात् स्यादिन्द्रियानिन्द्रियनिमित्तता, नान्यथा। तथा यद्यस्यायं स्यादष्टाविंशतिविधता च मतेर्हीयते, नन्वेवं स्यात् २९, एवं वा ३२[1]। अतः येन कारणेनास्य व्यञ्जनाभ्युपगमेऽमी दोषास्तत उच्यते—प्रथमादेव ततो—मनःसमाधानसमयाद् भवति तदर्थग्रहणं—भवति तद्विषयावग्रहणम्। इत्थमेवेन्द्रियानिन्द्रियनिमित्ताद्युपपत्तेः। इत्थं चैतद् यतस्तत् मनो'ऽन्यथा'—प्रथमसमयव्यापारार्थग्रहणमन्तरेण 'न प्रवर्त्तेत' न प्रसरेत्। कुतः? "सङ्कल्पमयत्वाद्", आलोचनात्मकत्वादित्यर्थः। "अवधिवदि"ति साधर्म्यदृष्टान्तः। अयं चात्र पिण्डार्थः—यथाहि भाषको भाषयन् गृह्णाति भाषते चेत्येवं मन्ता अपि मनन् गृह्णाति मन्यते च। न पुनरन्यः कश्चित् प्रकृतोपघातकार्यपि व्यञ्जनादानकालोऽस्ति प्रथमादिसमयावग्रहादिसद्भावात्। उपयोगस्तु छद्मस्थस्य सर्वत्रान्तर्मौहूर्त्तिक एव, श्रोत्रादिषु प्राय ईहान्तत्वात् अवध्यादिष्वप्येवमेव विशेषग्राह्यपायान्तर्मुहूर्तप्रतिपादनवदिति **जिनभद्राचार्यपूज्यपादा** इति गाथाद्वयार्थः ॥२४१-२४२॥

अपि च—'**नेया**' इत्यादि। ज्ञायत इति 'ज्ञेयम्'। तस्मात् ज्ञेया'देव यद्' यस्मात् 'सो' मणो तन्मनो 'लभते स्वरूपं' प्राप्नोत्याविर्भावम्। मनुते मन्यते वा मन इत्यस्य क्रियाशब्दत्वात्। काविवेत्याह—'प्रदीपशब्दाविव', तथाहि—प्रकाशयन् प्रकाशकः स्वरूपतां लभते, अभिदधच्चाभिधानं स्वतत्त्वमाप्नोति, क्रियाशब्दत्वान्मनआदीनाम्। अत'स्तस्य' मनसो'ऽसंकल्पितानाम्'—अनालोचितानां 'व्यञ्जनानां' नास्ति 'ग्रहणमि'ति तदभावः। प्रयोगः—मनसो नानालोचनाकालोऽस्ति ज्ञेयादात्मलाभप्राप्तेः प्रदीपशब्दयोरिव। यथा हि प्रदीपस्यानालोचनकालो नास्ति तमः प्रतिघातादात्मलाभप्राप्तेः शब्दस्य च निजार्थादात्मलाभात्। तद्वन्मनसोऽप्यसौ नास्ति मन्यादात्मलाभात्, व्यतिरेकेण श्रोत्रं मनःपर्याप्तिकल्पं, तस्मान्न साध्यविकलो दृष्टान्तः। इतः स्थितमेतद् व्यवस्थानाच्च—

---

1 Printed edition adds : इन्द्रियनिरपेक्षस्य मनसः प्रवर्तमानस्य प्रथमसमयभाविनि व्यञ्जनावग्रहे प्रक्षिप्ते एवं २९, तथेन्द्रियजाश्चत्वारो मनसाऽपीन्द्रियानुगताश्चत्वार एवं ३२.

"णयणमणोवज्जिंदियभेदातो वंजणोग्गहो चउह"

त्ति प्रतिष्ठितमिति गाथार्थः ॥२४३॥

अत्रैवं व्यवस्थिते प्रसङ्गसाधनवादी परश्चोद्यशेषमाह—

जइ नयणिन्दियमप्पत्तकारि सव्वं न गिण्हए कम्हा ।
गहणागहणं　किंकयमपत्तविसयत्तसामन्ने ॥२४४॥

विसयपरिमाणमनियमपत्तविसयंति तस्स मणसो व्व ।
मणसोवि विसयनियमो न क्कमइ जओ स सव्वत्थ ॥२४५॥

अत्थग्गहणेसु मुज्झइ सन्तेसुवि केवलाइगम्मेसु ।
तं किंकयमग्गहणं अपत्तकारित्तसामन्ने ॥२४६॥

कम्मोदयओव सहावओव नणु लोयणेवि तं तुल्लं ।
तुल्लो व उवालंभो एसो संपत्तविसएऽवि ॥२४७॥

सामत्थाभावाओ मणो व्व विसय परओ न गिण्हेइ ।
कम्मक्खओवसमओ साणुग्गहओ य सामत्थं ॥२४८॥

'जती'त्यादि । यदि 'नयनेन्द्रियमा'भ्यां हेतुदृष्टान्ताभ्या'मप्राप्यकारि कस्मात् सकलं' त्रैलोक्यं 'न गृह्णाति' दृष्टान्तधर्म्मिमन इव ? अतः पश्चार्द्धं स्पष्टम् ॥२४४॥

तस्मात्—'विसये'त्यादि । 'तस्स'त्ति तस्य चक्षुषो 'विषयपरिमाणम्' आलम्बनपरिमाणम् 'अनियतम्' अनन्त'मप्राप्तविषयत्वात् मनस इव' । अत्राचार्यः साध्यविकलतां दृष्टान्तस्योद्भावयन्नाह—'मनसोऽप्य'प्राप्यग्राहिणो 'विषयेऽयं नास्त्येव, यस्मान्न तत् सर्वत्र क्रामती'ति ॥२४५॥

तथाहि—'अत्थे'त्यादि । 'अर्थगहनेषु' अर्थगुपिलेषु वस्तुष्वागमगम्येषु 'सत्स्वपि' विद्यमानेष्वपि कस्यचिन्मनो 'मुह्यति' कुण्ठीभवति, तथा 'केवलाति[1]-गम्येषु' च । अतोऽहमपि भवन्तं पृच्छामि—'तत्किं कृतं' मनसो'ऽग्रहणम्' ? अतीन्द्रियैन्द्रियकाणां भावानाम् । कस्मिन् सतीत्याह—'अप्राप्यकारित्वे सामान्ये' ग्राह्याग्राह्ये ष्विति गाथार्थः ॥२४६॥

एवं पृष्टः पर आह—'कम्मो' इत्यादि । 'कर्मोदयात् तत्स्वाभाव्याद्वा'-ऽप्राप्यकारित्वे सति ग्रहणाग्रहणम् । सूरिराह—'ननु लोचनेऽपि तद्'—ग्रहणाग्रहणं 'तुल्यं' 'कम्मोदयतो व्व सभावतो व्व'त्ति । तदेवं अप्राप्यकारिवादिना प्राप्यकारिवाद्युक्तप्रसङ्गसाधने परिहृते प्राप्यकारिवादिनोऽप्ययमुं दोषं गुणं वाऽभिवित्सुराह—'तुल्यो वा एष उपालम्भः'—सर्वासर्वग्रहणलक्षणः प्राप्यकारिवादिनोऽपि भवतः । कस्मिन् सतीत्याह—'संपत्तविषयेऽवि' त्ति । नयनमनसोः प्राप्तेऽप्ययं इत्युक्तं भवति । तथाहि—न यावता नयनमभिसम्बध्यते तत्सर्वमेव गृह्यतेऽञ्जन-

1 दि P.

रजोमलशलाकादिभिर्व्यभिचारात्। मनसा त्वनवस्थानान्न गृह्यते, गृह्यते च[1] सम्वद्धमप्यनुभवादिति गाथार्थः ।।२४७।।

अथ सद्भावमाह—'सामत्थे'त्यादि। नयनं 'विषयपरतो न गृह्णाति सामर्थ्याभावात् मनोवत्'। साधितश्च दृष्टान्तः। सामर्थ्यासामर्थ्यमेव कुत इत्याह—'कर्मक्षयोपशमात् सामर्थ्यं' विषये, तस्यैव वाऽक्षयोपशमादसामर्थ्यं विषये। तथा रूपालोकमनस्कारा'नुग्रहाच्च सामर्थ्यं', तस्यैव चाननुग्रहादसामर्थ्य-मिति गाथार्थः ।।२४८।।

[व्यञ्जनावग्रहविवरणम्]

तदेवं चोद्यशेषं परिहृत्यास्मिन्नेवाधिकारे यत् सूत्रकारेणा[2]पदिष्टं "वंजणोग्गहस्स परूवणं करे[3]स्सामि पडिवोहगदिट्ठंतेणं मल्लगदिट्ठंतेण य, से जहाणामए केयि इ[4]त्यादि जाव जाहे तं वंजणं पूरियं होती" त्येतच्छुशोधयिषुराह—

तोएण मल्लगं पिव वंजणमापूरियंति जं भणियं।
तं दव्वमिंदियं वा तस्संजोगो व न विरुद्धं ।।२४९।।

दव्वं माणं पूरियमिंदियमापूरियं तहा दोण्हं।
अवरोप्परसंसग्गो जया तया गिण्हइ तमत्थं ।।२५०।।

सामन्नमणिद्देसं सरूवनामाइ कप्पणारहियं।
जइ एवं जं तेणं गहिए सद्देत्ति तं किह णु ।।२५१।।

सद्देत्ति भणइ वत्ता तम्मत्तं वा न सद्दबुद्धीए।
जइ होइ सद्दबुद्धी ताऽवाओ चेव सो होज्जा ।।२५२।।

जइ सद्दबुद्धिमेत्तयमवग्गहो तव्विसेसणमवाओ।
नणु सद्दो नाद्दसो न य रूवाई विसेसोऽयं ।।२५३।।

थोवमियं नावाओ संखाइविसेसणमवाओत्ति।
तब्भेयाविक्खाए नणु थोवमियंपि नावाओ ।।२५४।।

इय सुबहुणाऽवि कालेण सव्वभेयावहारणमसज्झं।
तम्मि हवेज्ज अवाओ सव्वो च्चिय उग्गहो नाम ।।२५५।।

किं सद्दो किमसद्दोत्तऽणीहिए सद्द एव किह जुत्तं।
अह पुव्वमीहिऊणं सद्दोत्तिमयं तई पुव्वं ।।२५६।।

किं तं पुव्वं गहियं जमीहओ सद्द एव विन्नाणं।
अह पुव्वं सामण्णं जमीहमाणस्स सद्दोत्ति ।।२५७।।

अत्थोग्गहओ पुव्वं होयव्वं तस्स गहणकालेणं।
पुव्वं च तस्स वंजणकालो सो अत्थपरिसुण्णो ।।२५८।।

---

1 चा P. 2 णो P. 3 रि P. 4 मि P.

जइ सद्दोत्ति न गहियं न उ जाणइ जं क एस सद्दोत्ति ।
तमजुत्तं सामण्णे गहिए मग्गिज्जइ विसेसो ॥२५९॥

सव्वत्थ देसयंतो सद्दो सद्दोत्ति भासओ भणइ।
इहरा न समयमेत्ते सद्दोत्ति विसेसणं जुत्तं ॥२६०॥

अहव सुए च्चिय भणियं जह कोई सुणेज्ज सद्दमव्वत्तं ।
अव्वत्तमणिद्देसं सामण्णं कप्पणारहियं ॥२६१॥

अहव मई पुव्वंचिय सो गहिओ वंजणोग्गहे तेणं ।
जं वंजणोग्गहम्मिऽवि भणियं विण्णाणमव्वत्तं ॥२६२॥

अत्थि तयं अव्वत्तं न उ तं गिण्हइ सयंपि सो भणियं ।
नउ अग्गहियम्मि जुज्जइ सद्दोत्ति विसेसणं बुद्धी ॥२६३॥

अत्थोत्ति विसयगहणं जइ तम्मिवि सो न वंजणं नाम ।
अत्थोग्गहो च्चिय तओ अविसेसो संकरो वावि ॥२६४॥

जेणऽत्थोग्गहकाले गहणेहावायसंभवो नत्थि ।
तो नत्थि सद्दबुद्धी अहऽत्थि नावग्गहो नाम ॥२६५॥

सामण्णतयण्णविसेसेहावज्जणपरिग्गहणओ से ।
अत्थोग्गहेगसमओवओगबाहुल्लमावण्णं ॥२६६॥

'तोयेणे'त्यादि । 'जं भणियं' यदुक्तं सूत्रकारेण, किं तदित्याह—'व्यञ्जनमापूरितमिति' । केन किंवदित्याह—'तोयेनेव मल्लकं' शरावम् । तत्र 'तद् द्रव्यमिन्द्रियं वा तयोः वा सम्बन्ध' इति सर्वथाऽप्यविरोध' इति गाथार्थः ॥२४९॥

कथमित्यत आह—'दव्व'मित्यादि । यदा 'द्रव्यं' व्यञ्जनमधिक्रियते तदा "जाहे तं वंजणं पूरितं होइ"त्ति कोऽर्थ इत्यत आह 'माणं पूरितं' ति, तत्प्रमाणं प्रभूतीकृतत्वेन स्वप्रमाणमानीतम्, तत्स्वविषयव्यक्तौ स्पष्टीकृतमिति यावत् । यदा 'त्विन्द्रियं' तदा "जाहे तं वंजणं पूरितं होइ"त्ति कोऽर्थ इत्यत आह—'आपूरितं' व्याप्तं भृतं वासितमित्यर्थः । 'तया 'दोण्हं' ति द्वयोरपि मिथो यदा सम्बन्धोऽविक्रियते तदा "जाहे तं वंजणं पूरितं होति"त्ति अङ्गाङ्गीभावमानीतमनुपक्तं यदा भवति, इयं व्यञ्जनावग्रहसमाप्तिः । "ताहे हुंति करेति" त्ति व्याचिख्यासुराह—'तदा' त्रिप्रकारव्यञ्जनावग्रहोत्तरकालं 'गृह्णाति' आलम्बते 'तमर्थं' व्यञ्जनार्थमिन्द्रियमनोव्यापारेणेति गाथार्थः ॥२५०॥

"हुमि"ति कुर्वन्, किंविशिष्टं तं गृह्णातीत्यत आह—'सामण्ण'मित्यादि । 'सामान्यं' रूपादिभ्योऽव्यवच्छिन्नम् । स च सामान्यो गोत्वा[1]दिरपि वाच्यो भवत्यत आह—'अनिर्देश्यम्' अनभिलाप्यम् । अनभिलाप्योऽपि कैश्चिन्नि-

1 श्वा P.

रूपणानुस्मरणविकल्पविशिष्ट एव गृह्यत अत आह—'स्वरूपनामादिकल्पनारहितम्'। तत्र स्वरूपकल्पना शब्द इति। नामजातिगुणक्रियाकल्पनास्तु प्रसिद्धा एव। भेदाभिधानं च स्वरूपकल्पनाया अन्तस्तत्त्वज्ञापनार्थम्। एतदुक्तं भवति—सकलविशेषानवगुण्ठितत्वेनानाख्येयमित्यर्थः। कुत एतत्? "न उणं जाणइ के वेस सद्दाति" त्ति वचनात्। एवमुक्ते सत्याह चोदकः—'जइ एवं'ति। यद्येवं तदेत्येवमादि तो 'जं' ति जं सुत्ते भणितं, किं तदित्याह—'तेणं गहिते सद्दे' त्ति, तेणं सद्देति उग्गहिते, "ण उणं जाणइ के वेस सद्दे"त्ति 'तं कहण्णु' त्ति तत् कथं सूत्रमविरोधेन यास्यति? एवमवग्रहं व्याख्यानयतस्त[1] इति मन्यते ॥२५१॥

आचार्य आह, यतः—'सद्देत्ती'त्यादि। 'शब्द इति'—एवं 'भणति वक्ता'—अवग्रहप्रज्ञापको, न श्रोता, 'तम्मत्तं' ति अथवानेन श्रोत्रा शब्दमात्रमवगृहीतम्, अशेषविशेषविमुखमनाख्येयं वस्तुमात्रमित्यर्थः। कुत एतदिति चेत्। 'इति'करणनिर्देशात्। अनभिमतप्रतिषेधमाह—'ण सद्दबुद्धीए'त्ति न शब्दोऽयमिति बुद्ध्या तेन तदवगृहीतमेकसामयिकत्वात् तस्य। एवं चैतदङ्गीकर्त्तव्यमन्यथा 'यदि स्यात् शब्दबुद्धिः'—शब्दोऽयमिति धीस्तस्य तस्मिंस्ततः को न्यायः स्यादित्यत आह—'ततोऽपाय एवासौ स्यात्'। ततश्च षोडशभेदमात्रं श्रुतनिश्रितं स्यात्, सर्वत्रार्थविग्रहेहयोः पतितत्वादिति गाथार्थः ॥२५२॥

यदुक्तं प्राक् "तं णो बहुदोसभावातो"त्ति तदिदानीमव सरायातत्वादुच्यते। अत्राह परः—ननु विवक्षिताद्यसमय एव रूपादिव्यपोहेन शब्दोऽयमिति प्रत्ययोऽवग्रहज्ञानमस्तु, तदुत्तरोत्तरकालभावी तु शाङ्खोऽयमित्यपायः, सति चैवं यथाश्रुताक्षरव्याख्या लभ्यते—उत्तरालापकस्य सम्बन्धश्चा प्राप्नोति, यदाह—"तेणं सद्देत्ति उग्गहिते ण उणं जाणइ के वेस सद्दे ततो ईहं पविसती"त्येवमादि सुश्लिष्टमति स्यात्। इदमाचार्यः प्रत्यनुभाष्यानवस्थामाह—'जती'त्यादि। 'यदि' भवतो भगवदाज्ञामतिक्रम्य 'शब्दबुद्धिमात्रकं'—शब्दोऽयमिति विज्ञानमवग्रहः श्रुतनिश्रिताद्यभेदः, 'तद्विशेषणं' तु शाङ्खोऽयमिति तु विज्ञान'मपायो' वर्त्तते तत्। 'ननु शब्दोऽयं नाशब्दो—यतोनैव रूपादिः, अयं विशेषो' वर्त्तते। ततश्च न कश्चिद् भवतोऽवग्रहो नाम, प्रथममेवापायभवनात्, 'सद्दबुद्धिमेत्तयमवग्गहे'त्यभ्युपगमादिति गाथार्थः ॥२५३॥

अत्र परोऽस्यैवावग्रहतामन्यस्य चापायतां दर्शयन्नाह—'थोव'मित्यादि। 'इदं शब्दबुद्धिमात्रकं 'स्तोकत्वा'दल्पविशेषत्वा'न्नापायः', किन्तु अवग्रह इति भावना। कस्तर्ह्यपाय इत्यत आह—'शा[2]ङ्खोऽयमिति विशेषण'विशिष्टं यज् ज्ञानं 'तदवाय' इति। उच्यते, यदि यद् यत् स्तोकं तत्तन्नापाय एवं तर्हि निवृत्तेदानीं भवतोऽपायज्ञानस्य वार्त्ता स्तोकत्वाद्। आह च—'तद्भेदापेक्षातः' श[3]ङ्खभेदापेक्षायाः, 'ननु इदमपि' शाङ्खोऽयमिति ज्ञानं भवतो 'नापायः' 'थोवं'ति

1 P adds व.   2 ङ्ख P.
3 श P.   4 शा P.

स्तोकत्वात्। प्रयोगः—शाङ्खशब्दोऽयं[1] ज्ञानमपायो न भवति उत्तरोत्तरविशेषाकांक्षित्वाच्छब्दोऽयमिति ज्ञानवद् ।।२५४।।

अत एवाह—'इय' इत्यादि। 'एवम'भिहित[2]प्रयोगभावनया 'सुबहुनाऽपि कालेन' सर्वेणाप्यायुषा 'सर्वे'ऽपि शङ्खगता 'भेदा'—विशेषास्त'दवधारणम साध्यम्' अशक्यं कर्त्तुं, यत् किंविशिष्टमित्यत आह—'यत्र' भेदावधारणे यत्र भेदाकांक्षानिवृत्तौ 'भवेत्' संपद्येत 'अपायः'—एकपक्षनिक्षेपक्षमः प्रत्ययः, अनन्तत्वात् तद्भेदानाम्। तस्मात् 'सर्व एव' प्रत्ययो'ऽवग्रहो नाम' प्रसजति, सर्वस्य स्तोकविषयत्वात्। (ननु ?) "थोवमिणं नावायो", किं तर्ह्यवग्रह इत्यभ्युपगमादिति गाथार्थः ।।२५५।।

अपि च शब्दबुद्धिमात्रकावग्रहवादिन् 'किं'मित्याह 'किं सद्दो किमसद्दो' इति एवमन्तर्मुहूर्त्तमात्रं कालं 'अनिहिते' अपर्यालोचितेऽन्वयव्यतिरेकाभ्यां 'शब्द एवा'यं न रूपादिरिति, 'कथं' केन प्रकारेण 'युक्तं' ? नन्वाद्यसमयेऽपायज्ञानमयुक्तमनीहितत्वात्, किमिति मोहमाश्रितो देवानांप्रियः ? तदेवं परस्मै उपालम्भं दत्वा तदभिप्रायेणाह—'अथ मन्यसे पूर्वं' प्राक् 'ईहिऊणं' ईहित्वा पश्चा'च्छब्द इति' ज्ञानं भवतः, यद्येवमभिवाद्यसे, यतः 'तई' असौ ईहा 'पूर्वं' प्रथमं तावच्छब्दज्ञानात्सकाशात् सिद्धा, एतावन्मया भवतः सकाशाल्लब्धम्। इदानीं पृच्छामि भवन्तं—'किं त'मि[3]त्यादि। 'किं तदी'हायाः 'प्राग्गृहीतं यदीहमानस्य'—आलोचयतः 'शब्द एवा'यमिति 'विज्ञानमा'द्यसमय एव जायत इत्युच्यते। तदेवं क्षुभितस्योत्तरप्रदानासामर्थ्यं ज्ञात्वा तन्मुखविभापयिषयाऽर्थावग्रहसाधनार्थमाह—'अथ प्राक् सामान्यं' गृहीतमिति वर्त्तते, 'यदीहमानस्य शब्द इति' विज्ञानं जायते प्रथमसमय इति ।।२५६-२५७।।

अथ परं रमयन्नाह 'अत्थो' इत्यादि। यद्येवं ततस्'तस्य' सामान्यस्य 'ग्रहणकालेन अर्थावग्रहात् पूर्व'मादौ 'भवितव्यम'न्यत्रानवकाशत्वादर्थावग्रहानभ्युपगमाच्च। ततः किमिति चेत्। 'पूर्वं च'—प्राक् 'तस्या'र्थावग्रहस्य 'व्यञ्जनकालः'—पुद्गलादानकालः। ततोऽपि किमित्यत आह—स 'चार्थोपलब्धिशून्य' इन्द्रियमात्रव्यापारत्वात्। अतस्तत्रापि न सामान्यमात्रग्रहणम्। उच्यते चेत्तत्र त्वया "पुव्वं सामण्णं गहितं जमीहमाणस्स सद्दो"त्ति वचनात्, तस्मात् पारिशेष्यादर्थावग्रह एव सामान्यग्रहणं ततस्तदन्वयव्यतिरेकालोचनमीहाऽन्तमुहूर्त्तं ततोऽपायोऽन्तमुहूर्त्तमेव ततो धारणेत्ययं प्रवृत्तिक्रमः किमन्यया कुचिन्तिकयेति। तस्मात् "सद्देति भणति वत्ते" त्ति स्थितं, प्रथमसमये शब्द इत्येवमग्रहणादिति पौर्वापर्यमिति गाथार्थः ।।२५८।।

तदेवं प्रबोधितोऽप्यनन्तरसूत्रावयवमविकृत्य वासनापरीतः पुनरप्याह—'जत्तो'त्यादि। भो ! 'यदि' "हुमि"तिकरणसमय एव तेन प्रबोध्यमानश्रोत्रा 'शब्दोऽयमिति न गृहीतं' तद्वस्तु ततः 'ण उण जाणइ के वेस सद्दे'त्ति, 'जं'

---

1 P adds इति. 2 P adds भाव. 3 दि P.

ति यत्सूत्रोपदिष्टं तत् किमित्यत आह—'तदयुक्तम्' अघटमानकं त्वयाऽऽख्यातं भवति, न चैतद्, गणधरवचनत्वात् तस्य, तस्मान् मदभिप्राय एव श्रेयान्। तथा च 'सामान्ये' शब्दमात्रे रूपादिव्यवच्छिन्ने 'गृहीते' निश्चिते सति पश्चान् 'मृग्यते' अन्विष्यते 'विशेषः' किमयं शाङ्ख आहोश्विच्छाङ्र्ग इति। न चैतदेवं सूत्रमसाधु, अर्थशून्यत्वाद् भवदभिप्रायप्रातिलोम्यादिति गाथार्थः ॥२५९॥

उच्यते 'सव्वत्थे'त्यादि। 'सर्वत्र' सूत्रावयवे पूर्वे उत्तरे च 'दर्शयन्' प्रज्ञापयन्नवग्रहस्वरूपं 'शब्दः शब्द इति'—एवं 'भापको भणति' प्रज्ञापको भणति, न तु श्रोतेति, केयमनभिज्ञता भवतः? इत्थं चैतद्, 'इतरथा' यदीदं श्रोतृवचनं स्यात् ततो 'न समयमात्रेण' व्यञ्जनावग्रहपूर्णमात्राच्'छब्दोऽयमिति विशेषणे[1] युक्तं', तीर्थकरादिभिरनुक्तत्वादसम्भवात्। निभाल्यतां चैतत् स्वयमप्यक्षिणी निमील्य किमहं युक्तवाद्ययुक्तवादी वेति। नहि जानानैर्वस्त्वपलापः कर्त्तुं शक्यत इति चेत्, [2]तन्न न[2] यदि भवतोऽसद्ग्राहस्ततोऽयं सांव्यवहारिको भविष्यतीति मा त्वरिष्ठा इति गाथार्थः ॥२६०॥

अत्रैव सू[3]त्रं परिहारमाह—'अथवे'त्यादि। 'अथवा' पठन्'मूर्ख! 'श्रुत एवैतत् भणितं' यदुत प्रागर्थावग्रहः। कतमेन सूत्रावयवेनेति तदुच्यते—आद्येन। कश्चासावित्यत आह—'जह कोइ सुणेज्ज सद्दमव्वत्त''। तच्चेदं सूत्रं—"से-जहानामए केइ पुरिसे अव्वत्तं सद्दं सुणेज्जा"। पुनश्च "तेणं सद्देत्ति उग्गहिते न उण मेवमादि जाव ततो णं धरेइ संखेज्जं वा असंखेज्जं वा कालं"ति। तत्राव्यक्तमिति किमुक्तं भवतीत्यत आह—'अव्यक्तमनिर्देश्यं सामान्यं कल्पनारहितं' "हु[4]मि"ति समयेऽर्थं श्रोताऽवगृह्णातीत्येतच्चोक्तमेवेति। एतदपि कुत इति चेदवग्रहस्यानाकारोपयोगेऽन्तर्भूतत्वाद्, अनाकारोपयोगस्य चाव्यक्तविषयत्वात् सामान्यमात्रविषयत्वादिति भावनेति गाथार्थः ॥२६१॥

सूरिरेव पराभिप्रायमाशिशङ्कयिषुराह—'अहवे'त्यादि। 'अथ' चेत्स्यान्'मति'-र्भवतः 'प्रागेव सो'ऽव्यक्तः शब्दो 'गृहीत' उपात्तो 'व्यञ्जनावग्रहे' व्यञ्जनावग्रहवेलायाम्। 'तेन' श्रोत्रेति। कुत एतत् ज्ञायत इत्यत आह—'जं वंजणोग्गहंमिवि भणियं विण्णाणमव्वत्त'' त्वयैवेति स्मर्यतां, "सुत्तमत्तादिसुहुमवोहोव"त्ति वचनात्। तस्माद् यथाश्रुतमेव सूत्रमस्तु, आद्यालापकस्याव्यक्तग्रहणविषयत्वादिति गाथार्थः ॥२६२॥

उच्यते—'अत्थी'त्यादि। अयमत्र पौर्वापर्यानुविद्धो भावार्थो भावनीयः। तथाहि—'अस्ति तदव्यक्तं' श्रोतुर्व्यञ्जनावग्रहे ज्ञानं, [5]तस्यास्माभिरिदानीमपि भवत्कचगृहीतैरपलापः क्रियते, किन्तु 'नत्वात्मनीनमप्यसौ श्रोता तद् गृह्णाती'-त्येतदपि स्मर्यतां 'भणितं' प्रागस्माभिः।' ततश्च "सुत्तादयो सयं चिय विन्नाणं नावबुज्झंति"त्ति वचनात्, "न सो तेणं वंजणोग्गहे गहितो" त्ति चोद्यनिवृत्तिः।

---

1 णं P. 2..2 ननु P. 3 सौ P.
4 न्त P. 5 P adds न.

तत्रैतत्स्याद्—असौ व्यञ्जनावग्रहे व्यक्ततयाऽगृहीतोऽपि तच्चरमसमये व्यक्ततया ग्रहीष्यत इत्यत आह—'न च' नैव 'अगृहीते'ऽव्यक्ततया सामान्येन 'युज्यते' घटां याति, केत्याह—'शब्द इत्येवं विशेषणं' रूपा[1]व्यवच्छेदनं या लभते'बुद्धिः'सा, णमिति लोपाद्वा शब्द इत्येवं विशेषण रूपादिव्यवच्छेदेन शब्द इति विशेषबुद्धिरिति, तस्यास्तृतीयस्थानभावित्वादिति गाथार्थः ॥२६३॥

यदि पुनर्व्यञ्जनादानकालेऽप्यव्यक्तग्रहः स्यात् क इव तर्हि दोषः स्यादत आह—'अत्थोत्ती'त्यादि। 'अर्थ इति विषयग्रहणम्'—अर्थ इत्यव्यक्तशब्दाख्यार्थसंवेदनमुच्यते, ततश्च 'जति तंमिवि'त्ति यदि तत्रापि—व्यञ्जनादानकाले 'सो'त्ति अव्यक्तः शब्दस्ततनो 'न व्यञ्जनं नाम', निवृत्तेदानीं व्यञ्जनावग्रहवार्त्तेत्यभिप्रायः, यतो'ऽर्थावग्रह एवासौ' वर्त्तते, अव्यक्तग्रहणात्। सूत्रप्रामाण्यात् तथाऽप्यसावस्त्येवेति चेदत आह—'अविशेषो'ऽनानात्वं तयोरितरेतरावष्टब्धस्वभावत्वादितरेतरस्वात्मवदिति। न चेदेवं 'सङ्कर'स्तर्हि, अन्योऽन्यासक्तत्वान्मेचकमणिप्रभावदिति गाथार्थः। यतश्चैवमप्यमी दोषा अतोऽव्यक्तपक्षोऽप्यसाधुः। तथाहि—समुच्चयग्रहणेहापायाख्यका[2]रणत्रयादेव व्यक्तशब्दबुद्धिर्भवति नान्यथेति ॥२६४॥

अतः 'जेणे'त्यादि। 'येनार्थावग्रहकाले' येनाव्यक्तध्वनिश्रवणवेलायां 'ग्रहणेहापायसम्भवो नास्ति' साकल्येनेति मन्यते उत्सिद्धान्तत्वात्, 'तो' तेन कारणेन 'नास्ति' न विद्यते 'शब्दबुद्धिः' शब्दापायः, व्यञ्जनावग्रहचरमसमय इति प्रक्रमः। 'अयास्त्यत्र' सा व्यञ्जनादानकाल एवाव्यक्तस्य गृहीतत्वादिति ततो 'ना' सा'ववग्रहो नाम'। किं तर्हि?—अपाय एवासौ स्यात्। न चायमपायोऽवग्रहाद्यन्तरेणास्याभावात्। किं ते न संवेद्यन्त इति चेत्, कालस्य सूक्ष्मत्वादुत्पलपत्रशतव्यतिभेदवदिति गाथार्थः ॥२६५॥

अपि च—'सामण्णे'त्यादि। 'से'त्ति। 'से'—अस्य "हुमि"ति कर्त्तुः श्रोतु'रर्थावग्रहैकसमये'—"हुमि"तिकरणसमये 'उपयोगवाहुल्यमापन्नं'—प्राप्तं भवतश्चोदकस्य। कुत इत्याह—'सामन्ने'त्ति। 'सामान्यं'—शब्दसामान्यमुपात्तविषयावग्रहणम्। तच्चान्ये च 'तदन्ये'। तेषां विशेषा'स्तदन्यविशेषः'। तद्विषया ईहा 'तदन्यविशेषेहा'। 'वर्जनं' च हेयानां, 'परिग्रहणं' चोपादेयानामिति वर्जनपरिग्रहणवत्[3], तदन्यविशेषेहा च वर्ज्जनपरिग्रहणं च तदन्यविशेषेहावर्जनपरिग्रहणम्। सामान्यं[4] च तदन्यविशेषेहावर्ज्जनपरिग्रहणं [5]च 'सामान्य[5]तदन्यविशेषेहावर्जनपरिग्रहणं' तस्मादेतत् भवति, अतः "सद्देत्ति भणइ वत्त"त्ति, पुनरपि व्यवस्थितमिति गाथार्थः ॥२६६॥

विप्रतिपत्तिनिरासार्थोऽयमारम्भ इत्यय आह—

अण्णे सामण्णगहणं आहू बालस्स जायमेत्तस्स।
समयम्मि चेव परिचिय विसयस्स विसेस विन्नाणं ॥२६७॥

1 P adds त्रि 2 क P. 3 P has °वर्ज for°. वद्.
4 P drops सामान्यं. 5..5 सामान्यं च P.

तदवत्थमेव तं पुव्वदोसओ तम्मि चेव वा समये ।
संखमहुराइसुवहुयविसेसगहणं पसज्जेज्जा ॥२६८॥

अत्थोग्गहो न समयं अहवा समओवओग वाहुल्लं ।
सव्वविसेसग्गहणं सव्वमई वोगहो गिज्झो ॥२६९॥

एगो वाऽवाओ च्चिय अहवा सोऽगहियणीहिए पत्तो ।
उवक्कमवइक्कमा वा पत्ता धुवमोग्गहाईणं ॥२७०॥

सामण्णं त्त विसेसो सो वा सामण्णमुभयमुभयं वा ।
न य जुत्तं सव्वमियं सामण्णालंवणं मोत्तुं ॥२७१॥

'अन्ने' इत्यादि । 'अन्ये' प्रवादिनः । 'सामान्यग्रहणम्' अव्यक्तशब्दग्रहणम् । 'आहु'र्ब्रुवते । कस्येत्याह—'वालस्स' उत्तान—शायिनः शिशोः । किंविशिष्टस्येत्याह—'जातमात्रस्य', तत् क्षणमेव योनिविनिर्लुठितस्येत्यर्थः । तस्याव्यक्तत्वात्, व्यक्तस्य का वार्त्तेत्याह—'परिचितविषयस्य' तु 'समयंमिचेव' आद्यशब्दश्रवणसमय एव 'विशेषविज्ञानं' विशेषाववोधनं भवति, तस्य व्युत्पन्नत्वात् । ततः किल "तेणं सद्देति उग्गहिए" इत्येवमादि यथाश्रुतमेवास्त्विति गाथार्थः ॥२६७॥

अत्र परस्य प्रसङ्गमुद्भावयन्नाह—'तदे'[1]त्यादि । 'तदि' ति यत्तत्तैरेवमुच्यते 'तत्तदवस्थमेव' दूषणं ज्वलदास्ते । किं कारणमित्याह—'पूर्वदोषतः' प्रागुक्तदोषानतिवृत्तेः । उक्तं च—"सामन्न तदन्नविसेसेहे"त्येवमादि प्रपञ्चमारोपणीयम् । अथवा तदवस्थमेव 'तमपुव्वदोसतो'त्ति क्रियते । तथा चापूर्वदोषमुद्भावयन्नाह—'तस्मिन्नेव वा समये' विशिष्टार्थावग्राहित्वेन विशेषग्राहिणि । किमत आह—'शाङ्खस्य मधुरत्वादयो' ये 'वहवो विशेषा'स्तेषां 'ग्रहणं प्रसज्येत' भवत एवं वादिनः । एतदुक्तं भवति—यदि परिचितविषयत्वेनाद्यसमयेऽर्थावग्रहज्ञानं वाधित्वा शब्दज्ञानं प्राप्तमेवं परिचिततरविषयत्वेन शब्दज्ञानमपि वाधित्वा प्रथमसमय एवैकदेव मधुरोऽयमित्यपि प्राप्तं, तथा तथा परिचयभावभावित्वात् तत्तज्ज्ञानस्य, दृश्यते च पुरुषशक्तेस्तारतम्यमिति । यद्वोत्क्रमस्य भवता पक्षीकृतत्वादिति युक्तिर्वाच्येति । भवत्येव कस्यचिदिति चेत्, तन्न, "न उण जाणइ के वेस सद्दे"त्यस्यागमकत्वप्रसङ्गात् । विमध्यमपुरुषविषयमेतदिति चेत्, ननु वस्तुस्थितिविषयमेव किं न तावदङ्गीक्रियत इति गाथार्थः ॥२६८॥

अपि च—"समयंमि चेव परिचियविसयविसेस विन्नाण"वादिणो तुह—'अत्थोग्गहो न समय'मित्यादिगाथात्रयम् । 'अर्थावग्रहः' सामान्यार्थावग्रहः 'न समयं' न समयिकः प्राप्नोति, विरोधाघ्रातत्वात् । तथाहि—यदि स[2]विशेष-

---

1 दि P.  2 P has तत्र for स.

ज्ञानं चा[1]सौ समयनिष्पत्तिर्विशेषज्ञान[2]स्यासंख्येयसमयनिष्पत्तित्वात्। समयं चेन्न तत्र विशेषज्ञानं, तस्यैकसमयनिष्पन्नत्वात्। 'अहव'त्ति। अथवा किमस्माकं विरोधोद्भावनेन? "समयमवग्गहो" "उग्गहो एक्कं समयं" ति वचनात्। अत उच्यते—एवमपि 'समयोपयोगबाहुल्यं' भवतः, सदाऽद्य[3]समय एवापाभ्युपगमात्, तस्य चावग्रहेहानान्तरीयकत्वात्। ततः को दोषः स्यादित्याह—'सर्वविशेषग्रहणम्'। समय एव सर्वमतिज्ञानगम्यविषयपरिच्छेदनं स्यात्, द्वितीयसमयेतु श्रुताविर्भावः स्यात्, "श्रुतं मतिपूर्व"मिति वचनात्। न चेदेवमेकसमये उपयोगबाहुल्यादीष्यत इत्यत आह—'सर्वा मतिः अवग्रहो ग्राह्यः'—अवग्रह इति प्रतिपत्तव्यः, ईहादीनामनभ्युपगमादेकसामयिकत्वात्। "समयंमि चेव—परिचितविसयस्स विसेसविन्नाणं"ति वचनादेवमेतदिति गाथार्थः। अत एवाह—**'एगो वाऽवायो च्चिय'**त्ति। अथवैवमेक एवापायो मतिः, ग्राह्य इति वर्त्तते, अवग्रहादीनामनभ्युपगमादपायोऽन्तर्मुहुर्त्तमिति च विरोधः स्यात्। 'अहव'त्ति। अथवैवमयं दोषः—**'सो'**त्ति सो पढमसमयभावी अवायो **'अग्गहिए'** सामन्ने **'अणीहिए'** य उभयोमुखं **'पत्तो'** प्राप्तो भवतः। न चैतत्सम्भवत्याकाशादपतनात्। 'वा' इत्यथवा। एवं सति प्रथमसमयापायवादिनो 'ध्रुवं'—निश्चितम् 'अवग्रहादे'र्भेदचतुष्टय'स्योत्क्रमव्यतिक्रमौ प्राप्तौ'। तत्रोत्क्रमः—धारणापायेहाऽवग्रहपरिपाटी। उत्तरकालभाविन आदिकालभावित्वमिति भावना—धा-अ-ई-अ। प्रयोगो—धारणैव प्रागस्तूत्तरकालभावित्वाद् व्यञ्जनावग्रहचरमसमयशब्दज्ञानवत्। सिद्धश्च परस्यायं दृष्टान्तः "समयंमि चेव परिचियविसयस्स विसेसविन्नाणं" ति जी[4]तत्वात्। एवं पुनरपायः पुनरीहेत्येवमादि स्वधियाऽभ्यूह्यमिति। व्यतिक्रमस्तु—इतरेतरोल्लङ्घनलक्षणः। तथाहि—अवग्रहमतिक्रम्येहा, तामतिक्रम्यापायस्तमतिक्रम्य धारणेति—अ, ई, अ, धा। प्राग्ज्ञानमन्तरेणोत्तरकालज्ञानमस्तु अ[5]भाविताभिधानेन व्यवहाराद् अव्यक्तज्ञानमन्तरेण व्यक्तज्ञानवत्। न चासिद्धो हेतुः "उग्गहो ईह अवाओ य धारणे"त्येवमादिक्रमस्य गणधरभाषितत्वेनान्यजन्मन्यप्येवमेवावबुध्यमानत्वात्। सिद्धश्च दृष्टान्तः। एतदुक्तं भवति—पश्चानुपूर्वीभवनम् उत्क्रमोऽनानुपूर्वीभवनं तु व्यतिक्रम इति गाथार्थः। तथा यदि प्रथमसमयावगृह्यमाणं विशेषस्ततः[6] **'सामन्नं च विसेसो'**त्ति। सामान्यं नाम विशेषः, प्रथमसमये सामान्यस्यैव गृह्यमाणत्वात्। अर्थापत्त्या च विशेषः सामान्यमत आह—**'सो वा सामण्णं'** ति विपर्ययः। यथा कम्बलीं प्रावृणोति यस्य वणिगित्यौरभ्रिको नाम वणिक्, तथा वणिगौरभ्रिकः, प्रथमसमय एव ग्रहणात्, **'उभयं वा'**—विशेषसामान्यलक्षणं, किमत आह—**'उभयं'**त्युभयं च। एतदुक्तं भवति—विशेषः सामान्यं च, सामान्यमपि तद्विशेषश्चेति। आह—[7]'सर्वमेतदारं पर'[7] किमनेनैतावता

1 ना P. 2 त P. 3 घ P.
4 P has स्वीकृ for जी. 5 P drops अ. 6 P has यतः for स्ततः.
7...7 सर्वमेवत् सुन्दरं.

वाक्सन्दर्भेणेत्यत आह—'न च युक्तं सर्वमिदं' गोन्दलस्यामलत्वादुक्तवत् । किं सर्वथा नेत्याह—'सामान्यालम्बनं मुक्त्वा' व्यञ्जनावग्रहचरमसमय इति प्रकृतम् । ततश्चा[1]वग्रहः समयमस्य च प्राक् व्यञ्जनावग्रह इति स्थितमिति गाथा-त्रयार्थः ।।२६९-२७१।।

मिथ्यात्वव्यावृत्त्यर्थमयमारम्भ इत्यत आह—

केइ दिहालोयणपुव्वमोग्गहं बेंति तत्थ सामण्णं ।
गहियमहत्थावग्गहकाले सद्देत्ति निच्छिण्णं ।।२७२।।

तं वंजणोग्गहाओ पुव्वं पच्छा स एव वा होज्जा ।
पुव्वं तदत्थवंजणसंबंधाभावओ नत्थि ।।२७३।।

अत्थोग्गहोऽवि जं वंजणोग्गहस्सेव चरमसमयम्मि ।
पच्छावि तो न जुत्तं परिसेसं वंजणं होज्जा ।।२७४।।

तं च समालोयणमत्थदरिसणं जइ न वंजणं तो तं ।
अह वंजणस्स तो कहमालोयणमत्थसुण्णस्स ।।२७५।।

आलोयणत्ति नामं हवेज्ज तं वंजणोग्गहस्सेव ।
होज्ज कहं सामण्णग्गहणं तत्थऽत्थ सुण्णम्मि ।।२७६।।

गहियं व होउ तहियं सामण्णं कहमणीहिए तम्मि ।
अत्थावग्गहकाले विसेसणं एस सद्दोत्ति ।।२७७।।

अत्थावग्गहसमए वीसुमसंखेज्जसमइया दोऽवि ।
तक्कावगमसहावा ईहावाया कहं जुत्ता ।।२७८।।

खिप्पेयराइभेओ जमोग्गहो तो विसेसविण्णाणं ।
जुज्जइ विगप्पवसओ सद्दोत्ति सुयम्मि जं केई ।।२७९।।

'केयी'त्यादि । केचिद्वादिन 'इहा'स्मिन् प्रस्तावे । किमत आह—'उग्गहं बेंति' त्ति । 'अवग्रहम्' एकसामयिकमर्थग्रहणं 'ब्रुवते' व्याचक्षते । किंविशिष्टमत आह—'आलोयणपुव्वं' ति आलोचनापूर्वम् । किलान्यैरप्युक्तमेव—

"अस्ति ह्यालोचना ज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ।।१।।"

इत्यतः 'तत्थ' तत्रालोचने 'सामान्यं गृहीतम्', अव्यक्तः शब्दो गृहीतस्तेन श्रोत्रे ते गम्यते । ततः किमित्यत आह—'अत्थे'त्यनन्तरम् । क्वेत्याह—'अर्थावग्रह-काले' व्यञ्जनावग्रहचरमसमय इत्युक्तं भवति । 'शब्द' इत्येवं रूपादिव्यपोहेन

---

1 P adds र्था.

'निच्छिन्नं' निर्णीतं तद्वस्त्विति । अतः "से जहानामए केइ पुरिसे अव्वत्तं सद्दं सुणेज्जा तेणं सद्देत्ति उग्गहिए" इति । एवमपि यदि जयो न भविष्यति तूष्णीं तर्हि चोदकेनासितव्यम् । तन्नाम प्रेक्षावता भाषितव्यं यत्रात्मलाभं लभते, अन्यथा किं तथा[1]ऽऽत्मविडम्बनयेति गाथार्थः ।।२७२।।

अथैतदालोचनं व्यञ्जनावग्रहान्न भिद्यते, तस्य चार्थपरिशून्यत्वे न शोभनं चोदकः तपस्वी भणतीति साधयन् सूरिराह—'त'मित्यादि । 'तदा'लोचनं भवदुत्प्रेक्षितं 'व्यञ्जनावग्रहात्' सकलमतिज्ञानविशेषकारणभूतात् **'पुव्वं वा होज्जा, पच्छा वा होज्जा, स एव वा होज्जा'** ? अन्यत्रा[2]वस्थानाभावात् त्रयी कल्पना । किं चात अत आह—'पुव्वं नत्थि'त्ति । व्यञ्जनावग्रहात्पूर्वं तावत् 'त'न्नास्ति । कुत इत्याह—'अर्थव्यञ्जनसम्बन्धाभावतः' । नहि प्रसुप्तादिदेवदत्तादावनाहूय-माने द्रव्येन्द्रियसमाश्लेषोऽस्ति । नहि तदा खल्वालोचनीयमस्तीत्यभिप्रायः, शब्दस्याश्रुतत्वात् । अतः [4]पूर्वः पक्षोऽसङ्गतः[4] ।।२७३।।

पश्चात्पक्षस्तर्हि सङ्गतो भविष्यतीत्यत आह—**'अत्थोग्गहो वी'**त्यादि । 'अर्थावग्रहोऽप्ये'कसामयिको मतिविशेषः, 'यद्' यस्माद् 'व्यञ्जनावग्रहस्यैव' मत्याद्यकारणस्य 'चरमसमये' पर्यन्तसमये प्रादुर्भावमासादयति । 'तो' ततः 'पश्चादपि' पृच्छ्[5]तोऽपि व्यञ्जनावग्रहस्य 'न युक्तं' न घटते तदालोचनम् । ततः किमिति चेदुच्यते—यद्येवं ततः 'परिशेषं' पारिशेष्यसिद्ध्या तदालोचनं 'भवेद् व्यञ्जनावग्रहः' । स्यान्न कश्चिद्दोषो नाममात्रविप्रतिपत्तेरिति गाथार्थः ।।२७४।।

आह—क्रियतां तर्हि चोदकवर्गेण वर्द्धापनकमाचार्याभिप्रायाविसंवादला-भात् । सूरिराह—मा । किं कारणं ? विरोधात् । कथं विरोध इति । अत्रो-च्यते—तदालोचनमर्थस्य वा भवेत् व्यञ्जनानां वेति विकल्पद्वयम् । किं चातः ? तत्र, प्रथमविकल्पमनुवदन्नाह—'तं चे'त्यादि । 'तच्च समालोचनं'—तदा-लोचनम् । **'अत्थदरिसणं यदि'** सामान्यार्थोपलम्भ इति यद्यभ्युपगम्यते, **'न वंजणं तो तं'** ति । 'तो' ततस्तद् व्यञ्जनं न भवति, अर्थदर्शनस्य सामान्यग्राहि-त्वेनाशून्यत्वाद्, आलोचनारूपव्यञ्जनस्य शून्यत्वात्, "पुव्वं च वंजणोग्गहकालो सो अत्थपरिमुण्णो"त्ति साधितत्वात् । न ह्यग्रहणं ग्रहणं भवति येन त्वया वर्द्धापनकमारभ्यते इत्यभिप्रायः । द्वितीयं विकल्पमुररीकृत्याह—**'अह वंजणस्य'** त्ति । अथ मन्यसे 'व्यञ्जनस्य' विवक्षितस्य द्रव्यकलापस्य 'जं दरिसणं'—जं गहणं तत्समालोचनमिति गम्यते । **'तो कहमालोयणं'** तदिति प्रतिज्ञा । कुत इत्याह—**'अत्थसुन्नस्से'**त्यर्थग्रहणशून्यत्वादग्रहणावस्थावदिति गाथार्थः ।।२७५।।

आह—का पुनरस्य स्थानान्तरप्रसिद्धस्यालोचनस्य गतिरिति । आचार्य आह—न जानेऽहमपीदृशम् । तथापि भवन्त एव संशयच्छेत्तार इति चेत् ।

---

1 र्थो P.　　2 था P.　　3 P has अन्या for अन्यत्रा°

4...4 पूर्वपक्षो ऽसङ्गतः P.　　5 ष्ट P.

यद्येवं तस्मात्—'आलोयणं' तीत्यादि । 'आलोचनमित्येवं नाम भवेत्' द्वितीयं 'व्यञ्जनावग्रहस्यैव' । स्वतन्त्रैतन्नाम्नो घटमानत्वात्, तदिदं वर्द्धापनकमिति चेत् । तन्न[1] यतो 'भवेत् कथं सामान्यग्रहणं' ? 'तत्र' व्यञ्जनावग्रहोऽर्थग्रहण-शून्यत्वाद्' । अतः किमुच्यते—तत्थ सामन्नं गहियं, अह अत्थावग्गहकाले सद्दोत्ति निच्छिण्णं, नह्यविशिष्टाश्रयाश्रितेर्जयपताका हर्त्तुं शक्यत इति भावार्थः । यच्चोक्तं "अस्ति ह्यालोचनाज्ञान"मित्येवमादि तदर्थावग्रहज्ञानमालोचनं तद्—व्यतिरिक्तत्वादिति गाथार्थः ।।२७६।।

अथ दुर्बलं वादिनं दृष्ट्वाऽभ्युपगमोऽपि कर्त्तव्य इति न्यायप्रदर्शनार्थमाह—**'गहितं वे'**त्यादि । 'गृहीतं वा भवतु तर्हि' ति तत्र व्यञ्जनादानकाले । 'सामान्यं' वस्तुसामान्यम् । 'कथमनीहिते तस्मिन्' सामान्येऽन्तर्मुहूर्त्तमात्रं कालं, 'अर्थावग्रह-काले', एकसामयिक इति प्रक्रमाल्लभ्यते । 'विशेषणमेव शब्द' इति ।।२७७।।

ननु **'अत्थे'**त्यादि । 'अर्थावग्रहसमये' व्यञ्जनावग्रहाच्चरमसमयभाविनि । **'वीसुं'** पुढो पुढो **'असखेज्जसमयिया दोऽवि'** । किंविशिष्टावित्याह—**'तक्कावगमसभावा'** जहासंखं । कावित्याह—'ईहावायौ' । 'कथं युक्तौ' ? येन व्यञ्जनावग्रहचरमे समये व्यक्तशब्दग्रहाद्यथाश्रुतसूत्रव्याख्यां कारयसि । ननूक्तं "जइ होज्ज सद्दबुद्धी तोऽवाओ चेव सो होज्ज" त्ति तस्माद् गम्ये सूत्रार्थे सति व्यञ्जनावग्रहेहापायधारणाक्रम एवाश्रयणीय इति समस्तप्रकरणार्थः ।।२७८।।

अथ चोद्यशेषमाशिशङ्कयिषुराह—**'खिप्पेयरादी'**त्यादि । **'जमोग्गहो'** त्ति । 'यद्'—यस्मा'दवग्रहो'—मतिज्ञानविशेषः 'क्षिप्रेतरादिभेदः' प्रतिपादितः क्वचिदितिशेषः । "क्षिप्रमवगृह्णाती"त्यादिवचनात् । अतो नावश्यमवग्रहः समयमात्रं, तन्मात्रत्वेऽस्य विशेषणस्य नैष्फल्यापत्तेः, वह्वित्यादेश्च । तेनैतदुक्तं भवति—सर्वस्यैव श्रोतुरविशेषेण प्राप्तिविषयस्थस्य शङ्खभेर्यादिद्रव्याभिसरणे सति वहुग्रहणात् ज्ञायते शङ्खभेर्यादिविशेषेणावग्रहणमवग्रहो वहुविधावहुविध-विशेषणेऽपि गम्भीरादिविशेषग्रहणं, यस्मादेवमतः **'तो'**त्ति तस्माद् 'विशेष-वि[2]ज्ञानं' व्यक्तशब्दज्ञानं 'युज्यते' घटते । किंविशिष्टमत आह—**'सद्दो'**त्ति शब्दोऽयमिति । कुत इत्याह—विकल्पवशतः' विकल्पवशात् । तथाहि—क्वचित सामान्यग्रहणं शब्दमात्रत्वात्, अ[3]वहुग्रहणादित्यर्थः । क्वचिद् विशेषग्रहणं वहुविधग्रहणाद् । एवंभूताद् विकल्पवशात् । क्वेत्याह—**'सुत्तम्मि'** सूत्रे । अस्य पूर्वपक्षतां दर्शयन्नाह—**'जं केइ'**त्ति ।।२७९।।

[निश्चयव्यवहारावग्रहभेदौ]

यदेवं '[4]केचन वादिनो[4]' यथाश्रुतसूत्रव्याचिख्यासयाऽऽत्मानं वहु मन्यन्ते तदप्यपाकुर्वन्नष्टया दिशा प्राह—

**स किमोग्गहोत्ति भण्णइ गहणेहाऽवायलक्खणत्तेऽवि ।**
**अह उवयारो कीरइ तो सुण जह जुज्जए सोऽवि ।।२८०।।**

---

1 P has न for तन्न. 2 P drops वि. 3 P drops अ. 4...4 केचनो P.

सामण्णमेत्तगहणं नेच्छइओ समयमोग्गहो पढमो ।
तत्तोऽणंतरमीहियवत्थुविसेसस्स जोऽवाओ ॥२८१॥

सो पुणरीहाऽवायाविक्खाओऽवग्गहोत्ति उवयरिओ ।
एस्सविसेसावेक्खं सामण्णं गेण्हए जेणं ॥२८२॥

तत्तोऽणंतरमीहा तत्तोऽवाओ य तव्विसेसस्स ।
इय सामण्णविसेसावेक्खा जावंतिमो भेओ ॥२८३॥

सव्वत्थेहावाया निच्छयओ मोत्तुमाइसामण्णं ।
संववहारत्थं पुण सव्वत्थावग्गहोऽवाओ ॥२८४॥

तरतमजोगाभावेऽवाउ च्चिय धारणा तदंतम्मि ।
सव्वत्थ वासणा पुण भणिया कालन्तरेऽवि सई ॥२८५॥

सद्दोत्ति सुए भणितं विगप्पओ जइ विसेसविन्नाणं ।
गिण्हिज्ज तंपि जुज्जइ संववहारोग्गहे सव्वं ॥२८६॥

खिप्पेयराइभेओ पुव्वोइयदोसजालपरिहारो ।
जुज्जइ संताणेण य सामण्णविसेसववहारो ॥२८७॥

'स किं' मित्यादि । अयमत्र परमार्थः । अस्ति तदित्थं भूतं विज्ञानं किन्तु 'ग्रहणेहापायलक्षणत्वेऽपी'ति । ग्रहणं चेहा चापायश्चेति तल्लक्षणं यस्य तत्तथा, तस्य भावस्तत्त्वम् । तस्मिन् । 'अपि'शब्दोऽभणननिमित्तार्थः । अतो ग्रहणेहापाय-लक्षणत्वेऽपि सतीति स व्यक्तः शब्दः । 'कि'मिति क्षेपार्थः । ततश्चायमर्थः स्वर-काक्वा—'किमवग्रहो भण्यते' तैर्दुरात्मभिरिति ? मृदुकाक्वा वा नेयम् । ततः किमिति प्रश्नार्थः स्यात् । परोऽपि चाचार्यहक्काप्रश्नतो विह्वलत्वादाह—नैव, ततः प्रागुक्तार्थसिद्धिरेवेति किं बहुना ? श्रौतोऽप्यर्थः सूत्रस्यास्तीति ख्यापयन्नाचार्य एव परं शिक्षयन्नाह—'अहे'ति पश्चादर्थम् । 'अथ' मन्यसे—'उपचारः क्रियते' तस्यैव शब्दस्यावग्रहत्व इति । ततः शृणु तूष्णीं भूत्वा । 'यथा'—येन प्रकारेण 'युज्यते सोऽप्यु'पचार इति गाथार्थः ॥२८०॥

'सामन्ने'त्यादि गाथात्रयम् । 'सामान्यमात्रग्रहणं' च वस्तुनो 'नैश्चयिकोऽयमवग्रहः प्रथमो'—निरुपचरितः 'समय'निर्वृत्तत्वात् । 'ततोऽनन्तरमीहितस्य वस्तुविशेषस्य योऽपायः'—अवायो यथा शब्दोऽयमिति । स किमित्यत आह—'सो पुण'त्ति । सोऽपायो पुणो त्ति—पुणो द्वितीयं धर्ममङ्गीकृत्य । किमत आह—'अवग्रह' इति । एव'मुपचरितः' परिभाषितः । केन निमित्तेनेत्यत आह—'ईहावायावेक्खातो' । एतदेव भावयन्नाह—'एस्स'विसेसावेक्खातो सामन्नं' शब्दमात्रं 'गृह्णाति येन' कारणेन 'ततोऽनन्तरमीहा' जायते, शब्दत्वे सति किमयं शाङ्खः शार्ङ्गो वेति ? 'ततोऽपाय एव शब्दविशेषस्य' शाङ्ख एवायमिति । एवं

1 · स P.

प्रभूतं कालं मुहुर्मुहुर्भावनीयम्। आह—'**इय सामन्नविसेसावेक्खा**' कायव्वा। कियतीं भुवं यावदित्याह—'यावदन्त्यो भेदो' लब्धो भवति यथासम्भवमिति भावनेति गाथात्रयार्थः ॥२८१-२८३॥

अयमत्र भावार्थः—'**सव्वे**'त्यादि। '**सर्वत्र**' विषयपरिच्छेदने। किमत आह—'ईहापायौ' भवतः। किं व्यवहारेण? नेत्याह—'निश्चयतः' परमार्थेन। किं सर्वथैव? नेत्याह—'**निच्छयतो**'त्ति द्विरावर्त्यते। ततश्च नैश्चयिकमादिसामान्यग्रहणं मुक्त्वा यदाऽलम्बनावाद्यावीहापायौ तस्यावग्रहत्वादिति भावनीयम्। तदत्र विशिष्टव्यवहारप्रवृत्त्यङ्गमाह। 'संव्यवहारार्थं पुनः सर्वत्रो'पर्युपरिधावने यो'ऽपायो'—निश्चय एकपक्षनिक्षेपक्षमः सो'ऽवग्रहो' भवति, ईहाप्रवृत्तेस्तरतमयोगानुधावनात् ॥२८४॥

तदभावेतु किमित्यत आह—'**तरे**'त्यादि। 'तरतमयोगाभावे' यथासम्भवमिति सामर्थ्याद् बोद्धव्यम्। किमत आह—'अपाय एव', न तदनन्तरमीहेति वाक्यार्थः। अत एवाह—'धारणा' तदर्थाप्रच्युतिसंज्ञिता 'तदन्ते' अपायान्ते भवति। इतरद्धारणाद्वयं कस्यान्ते भवतीत्यत आह—'वासणा पुण भणिता सर्वत्रा'पान्तरालभाविनि अपायेऽविरोधितया। किमियमेव? नेत्याह—'कालान्तरस्मृतिश्चे'ति। तदनेन ग्रन्थेन प्रथमसमयभाव्यर्थावग्रहो नैश्चयिकोऽन्तर्मुहूर्त्तद्वयोत्तरकालभावी चौपचारिक इत्युक्तमुपचारविधिश्च। तदेवं विभक्तेऽमुमेवावग्रहमङ्गीकृत्य स्याद्यथाश्रुतसूत्रव्याख्या—"से जहानामये केइ पुरिसे अव्वत्तं सद्दं सुणेज्जा तेणं सद्देत्ति उग्गहिए ण उणं जाणइ के वेस सद्दे ततो ईह"मित्येवमादि ॥२८५॥

आह च भाष्यकारः—'**सद्दोत्ति वे**'त्यादि। सम्बन्धेनैवोक्तार्थेति न प्रतन्यते। नवरं 'विकल्पत' इति—विवक्षयेति ॥२८६॥

अतः प्रागुपन्यस्तचोद्यस्यान्यविषयतामाह—'**खिप्पे**'त्यादि। अस्य भावार्थः—'क्षिप्रेतरादिभेदं' यत् 'पूर्वोदितदोषजालं' समयोपयोगबाहुल्यापत्तिश्च तस्येदानीमेवं सति 'परिहारो युज्यते' नैश्चयिकार्थावग्रहवादिनस्तस्य व्यावहारिकार्थावग्रहविषयत्वादितरस्य तु सामान्यमात्रग्रहणात्। **पूज्यास्त्वाद्यसमय एव** सर्व क्षिप्रेतरादिजात्यं[1] प्रतिपद्यन्ते, तथाभूतापायाख्यकार्यदर्शनात्। किल विशिष्टात् कारणाद् विशिष्टं कार्यं जायते, नाविशिष्टात्, सकलत्रैलोक्येश्वरत्वप्रसङ्गात्। **जिनभद्रगणिक्षमाश्रमणपूज्यपादैस्तु** नोक्तं सुज्ञानत्वात्। उत्तरत्र तूक्तं, सुखसंव्यवहार्यत्वात्। तथैवं सति '**संताणेण य**'त्ति सन्तानाच्च—'सामान्यविशेष'लक्षणाल्लोके 'व्यवहारो' युज्यते। इदमुक्तं भवति—इदं तदिति वा योऽध्यवसितोऽर्थः स प्राक् सामान्यपेक्षया विशेषः, स एव बाह्याकाङ्क्षितविशेषापेक्षया सामान्यमेवं यावदन्त्यो भेदो नाकांक्षा चेत्युक्तमेतत्प्रागेवेति। इत्थं चैतदङ्गीकर्त्तव्यम्। अन्यथा वास्तवापायादेवाकांक्षानिवृत्तिः स्यात्। तथा च

1 ॰त्यं P.

सति नोत्तरधर्मजिज्ञासया तत्तद्विशेषप्रतिपत्तिर्भवेत् । तथापि च सति व्यवहाराभावः । कुतः ? उत्तरत्रावग्रहनिवृत्तावीहानिवृत्तिरीहानिवृत्तावपायनिवृत्तेः । ईहैवोत्तरत्र भविष्यतीति चेत् । न, तस्यावग्रहपूर्वकत्वाद्, अवग्रहस्य च सामान्यग्राहित्वादीहायाश्च तद्विशेषव्यापाररूपत्वात् । अतोऽयमेष्टव्य इति । अनेन द्वितीयतृतीयगाथयोः "उग्गहो एक्कं समयं"तीत्येवं तावद् व्याख्यातम् एतद्व्याख्यानाच्चावग्रहः परिसमाप्त इति गाथार्थः ॥२८७॥

[ईहादिविवरणम्]

साम्प्रतमीहां व्याचिख्यासुराह—

इय सामण्णग्गहणाणंतरमीहा सदत्थवीमंसा ।
किमिदं सद्दोऽसद्दो व को होज्ज व संखसंगाणं ॥२८८॥

महुराइगुणत्तणओ संखस्सेवत्ति जं न संगस्स ।
विन्नाणं सोऽवाओ अणुगमवइरेगभावाओ ॥२८९॥

तयणंतरं तयत्थाविच्चवणं जो य वासणाजोगो ।
कालंतरे य जं पुणरणुसरणं धारणा सा उ ॥२९०॥

सेसेसुवि रूवाइसु विसएसुं होंति सूवलक्खाइं ।
पायं पच्चासन्नत्तणेणमीहाइवत्थूणि ॥२९१॥

थाणुपुरिसाइ—कुट्ठुप्पलाइ—संभियकरिल्लमंसाइ ।
सप्पुप्पलनालाइ व समाणरूवाइविसयाइं ॥२९२॥

एवं चिय सुमिणाइसु मणसो सद्दाइएसु विसएसु ।
होंतिंदियवावाराभावेऽवि अवग्गहाईया ॥२९३॥

'इये'त्यादि । यथावत् स्वधियाऽनुसरणीयम् ॥२८८॥

अपायमाह— 'मधुरादी'त्याद्यपि ॥२८९॥
धारणामाह—'ततणंतरमि'त्याद्यपि ॥२९०॥

तदेवं शब्दसूत्रं विषयविभागेन व्यवस्थाप्य यदुक्तं सूत्रकारेणैव "एवं एतेणं अभिलावेणं अव्वत्तं रूवं रसं गन्धं फासं च" इत्यादि, तदङ्गीकृत्याह—'सेसेसुऽवी'त्यादि । स्पष्टार्थम् । 'प्रत्यासन्नत्वं' प्रायः समानधर्मित्वमिति ॥२९१॥

तथा च 'थाण्वि'त्यादि । स्वधिया नेयम् ॥२९२॥

यदुक्तं "से जहानामए केइ पुरिसे अव्वत्तं सुविणय"मित्यादि, तच्छोधयन्नाह— 'एवं चिये'त्यादि । भावितार्थं, नवरं जाग्रतः सुप्तस्य च ॥२९३॥

[अवग्रहादेः क्रमः]

मूलगाथैवकारार्थं साक्षादधुना प्राह—

उक्कमओऽइक्कमओ एगाभावेऽवि वा न वत्थुस्स ।
जं सब्भावाहिगमो तो सव्वे नियमियकमा य ॥२९४॥

ईहिज्जइ नागहियं नज्जइ नाणीहियं न यानायं ।
धारिज्जइ जं वत्थुं तेण कमोऽवग्गहाईओ ।।२९५।।

एतो च्चिय ते सव्वे भवंति भिन्ना य णेव समकालं ।
न वइक्कमो य तेसिं न अन्नहा नेयसब्भावो ।।२९६।।

अब्भत्थेऽवाओ च्चिय कत्थइ लक्खिज्जई इमो पुरिसो ।
अन्नत्थ धारणच्चिय पुरोवलद्धे इमं तंति ।।२९७।।

उप्पलदलसयवेह व्व दुव्विभावत्तणेण पडिहाइ ।
समयं व सुक्कसक्कुलिदसणे विसयाणमुवलद्धी ।।२९८।।

'उक्कमतो' इत्यादि । भावितत्वान्न विव्रियते ।।२९४।।
तथा चाह—'ईहिज्जती' त्यादि । क्षुण्णा[1]र्थम् ।।२९५।।

एतो[2] च्चिये'त्यादि । 'अत एव' एवं क्रमनियमात् 'ते सर्वे' स्वतन्त्रा एव 'भवन्ति', असङ्कीर्णत्वादपूर्वापूर्ववस्तुपर्यायग्रहणात् । अत एव 'न समकालं', क्रमवृत्तिक्षयोपशमजन्यत्वात् । 'न च तेषां व्यतिक्रमः', एवं क्षयोपशमाविर्भूति-स्वाभाव्याद् । अत एव 'न चान्यथा' शब्दादि'ज्ञेयसद्भावः', उक्तवदिति गाथार्थः ।।२९६।।

आह—अन्यथाप्यनुभूयते ज्ञेयसद्भाव इति । आह च—'अब्भत्थे'त्यादि । अहश्च रात्रौ च अनवरत'मभ्यस्ते'ऽतिपरिचिते क्वचिद् वस्तुनि प्रथमसमय 'एवापायो'ऽनुभूयते, मया त्वया वेति वाक्यशेषः । यथाऽयं पुरुषः । तथा'ऽन्यत्र' वस्तुनि'धारणैव' प्रथममुपलभ्यते । किंविशिष्टे ? 'पूर्वोपलब्धे' । कथमित्यत आह—'इदं तदिति' यन्मया प्रागुपलब्धमासीदिति गाथार्थः ।।२९७।।

उच्यते, नैतदेवम् । अस्यानुभवस्यान्यथासिद्धत्वाद् । आह च—'उप्पले' त्यादि । इह 'दुव्विभावत्तणेण पडिहाइ' जुगवमिव 'विसयाणमुवलद्धी' अवग्रहा-देरसंवेदनमिति यदुक्तं भवति । क्वेवेत्याह—उप्पलदलसयवेह व्व सुक्कसक्कुलि-दसणे वा' । न चैतदेवं, कालस्य सूक्ष्मत्वादाशु—संचारित्वाच्च । मनस एकत्वादणुत्वात् मनोऽधिष्ठितेन्द्रियविषयप्रवृत्तेर्विमनस्केन्द्रियमात्रव्यापारेऽप्युपल-म्भाभावात्, "युगपद्ज्ञानानुत्पत्तिर्मनसो लिङ्ग"मिति वचनादिति गाथार्थः ।।२९८।।

[अष्टाविंशतिभेदं श्रुतनिश्रितम्]

"समासेणं" त्यस्य प्रयोजनमाह—

सोइंदियाइभेएण छव्विहाऽवग्गहादओऽभिहिआ ।
ते होंति चउव्वीसं चउव्विहं वंजणोग्गहणं ।।२९९।।

---

1 न्ना P.          2 त्तो P.

अट्ठावीसइभेयं एयं सुयनिस्सियं समासेणं ।
केई तु वंजणोग्गहवज्जे छोढूणमेयम्मि ॥३००॥

अस्सुयनिस्सियमेवं अट्ठावीसइविहंतिभा (पहा) संति ।
जमवग्गहो दुभेओऽवग्गहसामण्णओ गहिओ ॥३०१॥

चउवइरित्ताभावा जम्हा न तमोग्गहाइओ भिन्नं ।
तेणोग्गहाइसामण्णओ तयं तग्गयं चेव ॥३०२॥

किह पडिकुक्कुडहीणो जुज्झे बिंबेणऽवग्गहो ईहा ।
किं सुसिलिट्ठमवाओ दप्पणसंकंतबिंबंति ॥३०३॥

जह उग्गहाइसामण्णओऽवि सोइंदियाइणा भेओ ।
तह उग्गहाइसामण्णओऽवि तमणिस्सिया भिन्नं ॥३०४॥

अट्ठावीसइभेयं सुयनिस्सियमेव केवलं तम्हा ।
जम्हा तम्मि समत्ते पुणरस्सुयनिस्सियं भणियं ॥३०५॥

'सोइंदियातो'त्यादि । 'सोइंदियाइभेतेण'छव्विहेण 'छव्विहा अवग्गहादयो'—अवग्गहेहापायधारणातो भणितातो, 'होंति चउव्वीसं' । "छ चउक्का चउव्वीसं" ति । तथा 'चउव्विहं च वंजणुग्गहणं ॥२९९॥

एवं 'अट्ठे'त्यादि । 'समासेणं'ति सन्व्यय[1]या प्रतिपत्त्येति गाथार्द्धार्थः । अत्र केषांचिन्मतमाह—'केई तु' आयरिया । 'एयंमि'त्ति । 'एयम्मि' सामान्येन मतिज्ञाने । किंविशिष्ट इत्याह—'वंजणोग्गहवज्जे' व्यञ्जनावग्रहचतुष्टयपतितत्वेन चतुर्विंशतिविधे २४। 'छोढूण' प्रक्षिप्य । किमत आह—'अस्सुतणिस्सितं' उप्पत्तियादि ४। एवं 'अट्ठावीसतिविहं पहासंति' किं पुनः कारणं व्यञ्जनावग्रहचतुष्टयममुतः पात्यत इत्यत आह—'जमवग्गहो दुभेदोऽवि अवग्गहसामण्णतो' एक्को चेव गणिज्जइ, सामान्यवादित्वादस्माकमिति गाथाद्वयार्थः ॥३००-३०१॥

इतश्चैतदेवम्—'चउ' इत्यादि । चत्वारोऽवग्रहादयः । तेभ्यो व्यतिरिक्तं चतुर्व्यतिरिक्तम् । तस्याभाव'श्चतुर्व्यतिरिक्ताभाव'स्तस्मात् । 'यस्मान्नत'दौत्पत्तिक्यादि 'अवग्रहादिभ्यो भिन्नम्'—अर्थान्तरं, येनैवं 'तेनावग्रहाद्य'स्तित्व'सामान्यात् तदन्तर्गतमेव' चतुर्विंशतिविधमतिज्ञानान्तर्गतमेवेति गाथार्थः ॥३०२॥

तत्रैतत्स्यात्—कथं पुनरत्राप्यग्रहा इत्यत आह—'किहे'त्यादि । 'कथं प्रतिकुक्कुटहीनो'ऽयं कुक्कुटो 'युध्येत' ? बिम्बेनेति चेत् । अवग्रहोऽयमत्र भवति, ईहा का ? इत्यत आह—किंविशिष्टं[2],से'सुसिलिट्ठं किं दप्पणसंकंतं उदगकलंदगसंकन्तं वे'ति । अतो'ऽपाय' आह—'दप्पणसंकंतबिंबं' सटा[3]घातविप्रलम्भसद्भावादुदके च तदभावात् । तस्मादेवमष्टाविंशतिभेदभिन्ना मतिः पूर्वपक्ष इति गाथार्थः ॥३०३॥

---

1 P has घ्यम for व्यय. 2 P has विंबं for विशिष्टं, 3 घ P.

अत्राचार्य आह—'**जहे**'त्यादि । 'यथा'—येन प्रकारेण । '**उग्गहातिसामन्नओऽवि**' उग्गहेहावायधारणत्ते तुल्लेऽवि "छण्हं चउक्काणं" ति सामर्थ्याद्गम्यते । पुनश्च '**सोइंदियातिणा**' अपान्तरालभेदेन '**भेदो**'—नानात्वम् । तथाहि—एके स्पर्शनेन्द्रियसम्बन्धिनो यावदन्येतु मनःसम्बन्धिन इति । तथा किमिति । अतो दार्ष्टान्तिकोपसंहारमाह—'**तह उग्गहातिसामन्नओऽवि**'त्ति । एतेप्यवग्रहादय इमे चावग्रहादय इत्यविशेषतो'ऽपि' 'तं' उप्पत्तियाइबुद्धिचउक्कं '**अणिस्सिता**' अपान्तरालभेदनिबन्धनतया 'भिन्नं' पृथग्भूतं वर्त्तते । श्रुतनिश्रितादिति प्रक्रमाद् गम्यते । अतः किमिति ? उच्यते—"जमवग्गहो दुभेदोऽवग्गहसामण्णतो एक्को", तथा—

"चउवइरित्ताभावा जम्हा ण तमोग्गहादितो भिण्णं ।
तेणोग्गहातिसामण्णतो तदन्तग्गयं चेव ॥"

ननु पौर्वापर्येणालोच्य भाव्यमाणो[1] (?) कं[2] ग्रहणकं केनचिद् गृह्यते येन व्यञ्जनावग्रहचतुष्कं पातयित्वौत्पत्तिक्यादिबुद्धिचतुष्टयप्रक्षेपेणाष्टाविंशतिविधित्वं मतेः पूर्य्यत इत्यत एवाह—'**अट्ठावी**'त्यादि । 'तस्मात् श्रुतनिश्रितमेवाष्टाविंशतिविधं', नान्येन तदेवमिति भावना । अपि च—'यस्मात् तस्मिन्' श्रुतनिश्रिते 'समाप्ते' पारङ्गते सति, 'पुनः' पश्चा'दश्रुतनिश्रितं भणितं' भगवता सूत्रकारेण, "सेत्तं सुतणिस्सियं, से किं तं अस्सुयनिस्सित"मित्यागमात् ।

अथवा "केई तु"[3] अमुतः प्रारभ्य सार्द्धगाथासूत्रं परमतम् । अत्राचार्य आह—"चउ"[4] इत्यादि । गाथार्थः प्राग्वद् व्याख्येयः । नवरं "तदन्तग्गयं चेव—अट्ठाविंशतिमिह[5] मतिण्णाणं तग्गयं चेव" किमेतत्प्रक्षेपात् तदेवं पूर्य्यते ? [6]तदन्तर्गतेन पूरणस्य न्याय्यत्वात् । कथं पुनरिदमेतदन्तर्गतमित्यत आह—"किहे" त्यादि प्राग्वत् । किं सर्वथैव तदेतदन्तर्गतमाहोश्वित् कथञ्चिदित्याह—'**जहे**' त्यादि '**अट्ठावीसदी**'त्यादि प्राग्वत् ॥३०४-३०५॥

## [तस्यैव बहुतरभेदत्वम्]

तदेवमस्याष्टाविंशतिविधत्वमावेद्यास्यैवान्यया विवक्षया बहुतरभेदत्वमाह—

**जं बहुबहुविहखिप्पानिस्सियनिच्छियधुवेयरविभिन्ना ।**
**पुणरुग्गहादओ तो तं छत्तीसं तिसयभेयं ॥३०६॥**

**नाणासद्दसमूहं बहुं पिहं मुणइ भिन्नजाईयं ।**
**बहुविहमणेगभेयं एक्केक्कं निद्धमहुराई ॥३०७॥**

---

1 ण्णो P. 2 किं P.

3 This refers to the second half of गाथा ३००.

4 This refers to गाथा ३०२.

5 P has विंह for मिह.  6 P adds अ.

खिप्पमचिरेण तं चिय सरूवओ जं अणिस्सियमलिंगं ।
निच्छियमसंसयं जं धुवमच्चंतं न उ कयाइ ॥३०८॥

एत्तोच्चिय पडिवक्खं साहिज्जा निस्सिए विसेसो वा ।
परधम्मेहि विमिस्सं निस्सियमविणिस्सियं इयरं ॥३०९॥

एवं वज्झब्भंतरनिमित्तवइचित्तओ मइबहुत्तं ।
किंचिम्मेत्तविसेसेण भिज्जमाणं पुणोऽणंतं ॥३१०॥

'ज'मित्यादि । 'यद्'—यस्मात् 'पुनरवग्रहादयो बह्वि'त्यादि—'सेतराः' सन्तो द्वादश १२ भव'न्त्यतस्त'न्मतिज्ञानं 'षट्त्रिंशत्त्रिशतभेदं' भवति ३३६, अष्टाविंशतेर्भेदानां एकैकस्य द्वादशभिर्गुणनादिति गाथार्थः ॥३०६॥

अथाद्यभेदव्याचिख्यासयाऽऽह—'णाणा' इत्यादि । इह श्रोता आचार्यान्तराभिप्रायेणार्थावग्रहसमये । अथ त्वेतदाचार्याभिप्रायस्ततोऽन्तमुहूर्त्तेन 'बहुं मुणइ'त्ति बहु मन्यते—बहु अवगृह्णाति । किं[1] ? 'नानाशब्दसमूहं' द्रडिपटह-मृदङ्गवेणुसम्मिश्रम् । किंविशिष्टमत आह—'भिन्नजातीय'मन्यान्यप्रकारम् । अत एवाह—'पिहं'ति पृथक्पृथग्व्यक्तिकम् । तथा 'बहुविधमनेकभेद'मवगृह्णाति, 'एकैकं' द्रव्यादिध्वनिं 'स्निग्धमधुरादि'गुणोपेतम् ॥३०७॥

'खिप्प'मित्यादि । क्षिप्रमवगृह्णाति । किमुक्तं भवतीति । अत आह—'अचिरेण' तूर्णमित्यर्थः । तथा 'तं चिय सरूवतो ज'मिति यत्तदेवावगृह्णाति 'स्वरूपतः' स्वरूपमात्रत एव त'दनिश्रितम्' । किमुक्तं भवतीति । आह—'अलिङ्ग'[2] न पताकयेव देवकुलम् । तथा य'दसंशय'मवगृह्णाति त'न्निश्चितम्' । तथा 'यदवश्यमवगृह्णात्येव, नतु कदाचित्' तद् 'ध्रुव'मुच्यते ॥३०८॥

इतरशब्दं व्याचिख्यासुराह—'एत्तो च्चिये'त्यादि । 'अत एव पदसमूहात् प्रतिपक्षं साधयेद्' यावद् ध्रुवम् । तथाहि—अबह्ववगृह्णाति शब्दमात्रमेकजातीय-मित्यर्थः । अबहुविधमेकपर्यायमेव । अक्षिप्रं चिरेण । निश्रितं लिङ्गाद् । अनिश्चितं सन्दिग्धम् । अध्रुवं कदाचिदेव । अथवा निश्रितानिश्रितयोरपरं विशेषमाह—'निश्रिते'—निश्रितस्य 'विशेषो' भेद इतरस्मात् । किंविशिष्ट इत्याह—'निश्रितं' 'परधर्मैर्निश्रितम'व[3]'ग्रहणमुच्यते । तद्यथा—गामेव सारङ्गधर्मैरवगृह्णतः । अनिश्रित-मवगृह्णाति, गामेव गोधर्मैरिति । एवं सर्वत्रायोजनीयमिति गाथार्थः ॥३०९॥

उपसंजिहीर्षुराह—'एव'मित्यादि । 'एवं' अनया दिशा 'मतिबहुत्वं' भावनीयम् । कुतः ? 'बाह्याभ्यन्तरनिमित्तभेदात्' । तत्र 'बाह्य'वैचित्र्यमा'लोक-विषयगतस्पष्टविमव्याव्यक्तात्पमहत्त्वसन्निकर्षभेदात् । 'अभ्यन्तरवैचित्र्यं' त्वावरणक्षयोपशमोपयोगोपकरणेन्द्रियनानात्वात् । एतेषामपि मन्दमन्दतरादि-

1 कं P. 2 P has विमिश्रम् for निश्रितम्.
3 P adds निमित्त.

भेदादेतदे'वेषद्भेदाद् भिद्यमानमनन्तं' स्यात् । अतः प्रागुक्तं निर्युक्तिगाथाद्वयं व्याख्यातमिति प्रकरणार्थः ॥३१०॥

[संशयादीनां ज्ञानत्वम्]

अत्रैवेदानीं विशेषोपलम्भार्थमिदमाह—

इह संसयादणंतब्भावाओऽवग्गहादयो नाणं ।
अणुमाणमिवाह न संसयाइसम्भावओ तेसुं ॥३११॥

ननु संदिद्धे संसयविवज्जया संसओऽह चेहाऽवि ।
वच्चासो वा निस्सियमवग्गहोऽणज्झवसियं तु ॥३१२॥

इह सज्झमोग्गहाईण संसयाइत्तणं तहवि नाम ।
अब्भुवगंतुं भण्णइ नाणं च्चिय संसयाईया ॥३१३॥

वत्थुस्स देसगमगत्तभावओ परमयप्पमाणं व ।
किह वत्थुदेसविण्णाणहेयवो मुणसु तं वोच्छं ॥३१४॥

इह वत्थुमत्थवयणाइपज्जयाणंतसत्तिसंपन्नं ।
तस्सेगदेसविच्छेयकारिणो संसयाईया ॥३१५॥

अह चेन्न सव्वधम्मावभासया तो न नाणमिट्ठं ते ।
नणु निण्णओऽवि तद्देसमेत्तगाहित्ति अन्नाणं ॥३१६॥

जइ एवं तेण मुहं अन्नाणी कोऽवि नत्थि संसारी ।
मिच्छद्दिट्ठीणं ते अन्नाणं नाणमियरेसिं ॥३१७॥

सदसदविसेसणाओ भवहेउजहिच्छिओवलम्भाओ ।
नाणफलाभावाओ मिच्छद्दिट्ठिस्स अण्णाणं ॥३१८॥

एगं जाणं सव्वं जाणइ सव्वं च जाणमेगंति ।
इय सव्वमयं सव्वं सम्मद्दिट्ठिस्स जं वत्थुं ॥३१९॥

जे संसयाइगम्मा धम्मा वत्थुस्स तेऽवि पज्जाया ।
तदहिगमत्तणओ ते नाणं च्चिय संसयाईया ॥३२०॥

पज्जायमासयंतो एक्कंपि तओ पओयणवसाओ ।
तत्तियपज्जायं च्चिय तं गिण्हइ भावओ वत्थुं ॥३२१॥

निण्णयकालेऽवि जओ न तहारूवं विदन्ति ते वत्थुं ।
मिच्छद्दिट्ठी तम्हा सव्वं च्चिय तेसिमण्णाणं ॥३२२॥

कट्ठयरं वऽन्नाणं विवज्जओ चेव मिच्छद्दिट्ठीणं ।
मिच्छाभिणिवेसाओ सव्वत्थ घडे व्व पडबुद्धी ॥३२३॥

अहवा जहिंदनाणोवओगओ तम्मयत्तणं होइ ।
तह संसयाइभावे नाणं नाणोवओगाओ ॥३२४॥

तुल्लमियं मिच्छस्सवि सो सम्मत्ताइभावसुन्नोत्ति ।
उवयोगम्मिऽवि तो तस्स निच्चमन्नाणपरिणामो ।।३२५।।

जं निन्नओवओगेऽवि तस्स विवरीअवत्थुपडिवत्ती ।
नो संसयाइकाले कत्तो नाणोवओगो से ।।३२६।।

अहवा जह सुयनाणावसरे सामण्णदेसणं भणियं ।
तह मइनाणावसरे सव्वमइनिरूवणं कुणति ।।३२७।।

एसा सम्माणुगया सव्वा नाणं विवज्जए इयरं ।
अविसेसिआ मइच्चिय जम्हा निद्दिट्ठमाईए ।।३२८।।

विवरीअवत्थुगहणे जं सो साहणविवज्जयं कुणइ ।
तो तस्सऽन्नाणफलं सम्मद्दिट्ठिस्स नाणफलं ।।३२९।।

जइ सोऽवि तस्स धम्मो किं विवरीयत्तणंति तं न भवे ।
धम्मोवि जओ सव्वो न साहणं किंतु जो जोग्गो ।।३३०।।

जोग्गाजोग्गविसेसं अमुणंतो सो विवज्जयं कुणइ ।
सम्मद्दिट्ठी उण कुणइ तस्स सट्ठाणविणिओगं ।।३३१।।

'इहे'त्यादि । 'इहावग्रहादयो ज्ञानम् । कुत इत्याह—'संसयादणंतभावातो'त्ति । आत्मधर्मत्वे सति संशयाद्यनन्तर्भूतत्वात् । हेत्वनैकान्तिकत्वनिरासार्थं च हेतुविशेषणं दृष्टान्तमाह—'अनुमानमिवे'ति । अत्र लब्धावसरोऽसकृत्पराजितोऽपि धार्ष्ट्यात् पर 'आह'—'न' नैनदेवं, 'तेष्व'वग्रहादिषु 'संशयादिसद्भावादि'ति गाथार्थः ।।३११।।

कथमित्यत आह—'णणु' इत्यादि । 'नन्वि'त्यक्षमायाम् । 'सन्दिग्धे' सन्दिग्धापायहेतावव‍गृह्यमाणे संशयो निर्भ्रान्तम् । एवं च सन्दिहानस्य विपर्ययोऽपि स्यात् । अत उक्तं 'संशयविपर्ययौ', हस्तप्राप्ताविति शेषः । 'अथ'वा किमित्युक्ते 'ईहापि संशयः', दोलायमानप्रत्ययरूपत्वादुभयसिद्धसंशयवत् । 'वे'त्यथवा यत्परधर्मे 'निश्चितमि'त्यवग्रहणं तं 'वच्चासो' विपर्यय इत्यर्थः । नहि नृत्यन् विपर्ययो भवति किन्त्वयमेवेत्यभिप्रायः । 'अवग्रहः पुनरनध्यवसितम'नध्यवसायो वर्त्तते, सर्वतो विमुखत्वात् । अतोऽकिञ्चित्करं मतिज्ञानं, दोषशतसहस्रजर्जरत्वात् तथाविधभाजनवदिति पूर्वपक्षः ।।३१२।।

सूरिराह—'इहे'त्यादि । 'इह'—अस्मिन् विचारे । 'साध्यं' साधनीय'मवग्रहादीना'मुक्तप्रकारं 'संशयादित्वं' सम्यग्दृष्टिसम्बन्धिनामित्याकूतम् । 'तदा'पि नाम' 'अब्भुवगंतु'मभ्युपगम्य तदमीषां 'भण्यत' उत्तरम् । ननु सत्यमज्ञानं संशयादयः ? पर आह—किमत्त प्रष्टव्यम् ? आचार्य आह—'नाणं चिय' नाणमेव । के ? 'संशयादयः' संशयविपर्ययानध्यवसायाः ।।३१३।।

1 धा P.

कुत इत्याह—'वत्थुस्से'त्यादि। 'वस्तुनो' गवादेः, स्वपरपर्यायापेक्षयाऽनन्तधर्मात्मकस्य। 'देशगमकत्वभावात्' देशगमकत्वात्। 'परमतप्रमाणमिव' निर्णयज्ञानवदिति। तत्रैतत् स्याद्—'असिद्धो हेतुः। तथा च प्रश्नद्वारेणाह—'कथं वस्तुदेशविज्ञानहेतवः' संशयादय इति गम्यते। आचार्य आह—'शृणु तद् वक्ष्य' इति गाथार्थः ।।३१४।।

'इहे'त्यादि। 'इह' त्रैलोक्ये। 'वस्तु' गवादि। 'अर्थपर्याया' उच्यन्ते शब्दविपरीतरूपवृत्ताः, न चानभिलाप्या एव प्रतिपादिताः, अभिलाप्यत्वात्[2] केषांचित्। 'आदि'शब्दः स्वपरपर्यायत्वावरोधार्थः। 'वचनपर्याया'स्तु शब्दादिगोचराः। 'आदि'शब्दः पूर्ववत्। अर्थवचनादिपर्यायाश्च ते अनन्ताश्चे'ति समासः। त एव 'शक्तय'स्तत'सम्पन्नं' तीर्थकरगणधरैरावेदितमिति सामर्थ्याद् गम्यते। यदि नामैवं ततः प्रकृतोपयोगः क इत्यत आह—'तस्यै'वंविधस्य वस्तुन 'एकदेशविच्छेदकारिण' एकदेशावलम्बिनोऽवग्रहादयोऽन्यथा तदुत्थानमेव न स्यान्निर्विषयत्वात् खकुसुमरूपाद्यवग्रहणवत्। अतः 'संशयादयो' ज्ञानमेवेति सिद्धम्।३१५।।

'अहे'त्यादि। अथ चे'न्न सर्वधर्मविभासका'—न कात्स्र्न्येन गवादिसर्वधर्मग्राहिणः 'तो' ततो 'न ज्ञानमिष्टं ते' संशयादयः। आचार्य आह—'ननु निर्णयोऽपि' भवतो मुदितमूर्द्धाभिषिक्तः 'तद्देशमात्रग्राही' ति गवादिपिण्डदेशमात्रग्राहीति 'अज्ञानं' प्रसजति। निर्णयोऽप्यज्ञानं एकदेशग्राहित्वात् संशयादिवदिति। अथैकदेशविषयत्वेऽपि निर्णयस्यैव प्रामाण्यं, न तेषामिति। ननु भूभ्यालिङ्गनमारम्यं भवता तत्प्रसाधनायेति गाथार्थः ।।३१६।।

परोऽत्र विलक्षीभूत आह—'जती'त्यादि। 'यद्येवं' भवतः संशयोऽपि ज्ञानं 'तेन तवे'दानीं 'मज्ञानी नास्ति कश्चित्संसारे', छद्मस्थस्य संशयारूढत्वात् तस्य च ज्ञानत्वात्। ततश्च यदुक्तं भवता "हया अण्णाणतो किये"त्येवमादि, तच्चासम्बद्धं स्यात्।[3] आचार्य आह—किमिदमविज्ञाताभिधानमारभ्यते भवता। नणु 'मिच्छद्दिट्ठीणं ते' संसयादीया 'अण्णाणं', ततश्च हन्यतामज्ञानिनः क्रियेति काऽत्रासम्बद्धतेति। 'इतरेषां' पुनः सम्यग्दृष्टीनां ज्ञानमेव, अनध्यवसायोऽपि ज्ञानं सामान्यमात्रग्रहणादिति गाथार्थः[3] ।।३१७।।

किं पुनः कारणं मिथ्यादृष्टीनां तदज्ञानमित्यत आह—'सदसते'त्यादि। भावितार्थैवेति ।।३१८।।

इतरेषां पुनस्ते किमितिज्ञानं भवन्तीत्युच्यते—"जे एगं जाणइ से सव्वं जाणइ, जे सव्वं जाणइ से एगं जाणइ" इत्यागमप्रामाण्यात्। आह च—

---

1 P adds इतः.    2 P adds अपि.

3...3 P gives this alternative reading—अत्राह सूरिः—मूढमिथ्यादृष्टीनां संशयादयोऽज्ञानं, सम्यग्दृष्टीनां पुनर्ज्ञानमिति। ततश्च यदुक्तं सर्व एव प्राणिनो ज्ञानिनस्तन्नेति गाथार्थः।

भाष्यकारः—'एग'मित्यादि। 'एकं' परमाणुं 'जानन्' तत्सत्तानिबन्धनपर्यायैर-तत्सत्तानिबन्धनपर्यायैश्च 'सर्वम्' अन्यूनं लोकालोकं 'जानाति', तत्परिज्ञान-नान्तरीयकत्वादेकस्य। 'सर्वं च जानन्नेकम्,' एक परिज्ञाननान्तरीयकत्वादस्य। 'एवं सम्यग्दृष्टेः सर्वं वस्तु सर्वात्मकं' स्वपरसत्ताभावाभावोपादानापो'द्यं हि वस्तुनो वस्तुत्वमित्यभ्युपगमात्। यस्मादेवं तस्माद् "णाणमितरेसिं"ति गाथार्थः ॥३१९॥

'जे'[2] इत्यादि। 'ये संशयादिगम्याः धर्म्माः' सामान्यं पश्यतो विशेषान-पश्यतः स्मरतश्च विशेषानूर्ध्वतासामान्यादयस्तेऽपि 'वस्तुनः पर्याया'स्तद्ग्रहणे[3] 'ते ज्ञानम्'। उपरिष्टाद् ज्ञानं न भविष्यतीति चेन्माभवतु, को दोषः? अतस्'त-दधिगमकत्वाद्'—वस्त्वंशैक गमकत्वात् 'संशयादयः' सम्यग्दृष्टेरिति ॥३२०॥

अयमत्र स्पष्टो विधिरित्याह—'पज्जाये'त्यादि। 'तस्रो' असौ घटोप-युक्तः सम्यग्दृष्टि'रेकमपि' अङ्गुलिगणितं 'पर्यायमाश्रयन्' असद्भावस्थापनया परमाणुं गृह्णन् दक्षिणदिग्बाह्यप्रतरमध्यवर्त्तिनम्। कुतः? 'प्रयोजनवशात्', केनचित् कारणेनेति भावना। किमत आह—'तं गेण्हइ' त्ति। तदसौ 'वस्तु' घटावयवि 'गृह्णाति' विषयीकरोति, 'तावत्पर्यायमेव' यावद्भिः पर्यायैर्वाह्या-भ्यन्तरप्रतरवर्त्तिभिः परमाणुभिस्तन्निर्वृत्तं, तस्य तद्ग्रहणमन्तरेणाश्रयणायोगात्, तत्सव्यपेक्षस्य तथाऽवस्थानात्। प्रयोगः—यो यत्र यत्सव्यपेक्षो व्यवस्थितस्तत्र तदाकर्षण इतरेषामप्याकर्षणं भवतीति बोद्धव्यम्। तद्यथा—कनकशृङ्खला-प्रबन्धेऽन्यतमकटिकाग्रहणमितरासामिति। तथा चैकपर्याय इति। एवं परमाणु-जगतोर्भावना। आह—दृष्टान्तेऽनुभूयते एतन्न दार्ष्टान्तिक इति। उच्यते, विशिष्टश्रुतधरानुभविकत्वादभिनन्दनीयमेतदन्यजन्मान्तरफलत्वाद्। अत एवाह—'भावतः' परमार्थत इति। एतदुक्तं भवति—सम्यग्दृष्टेरेवान्यतमनिश्चयेऽप्यन्य-निश्चयो भवतीत्याहुर्भगवन्त इति गाथार्थः ॥३२१॥

[ज्ञानाज्ञाननिरूपणम्]

इतरस्य विपर्ययमाह—'णिण्णये'त्यादि। 'निर्णयकाले' घटोऽयमित्य-पायकालेऽपि 'यतो' यस्मा'न्न तथारूपं विदन्ति' जानन्ति 'ते मिथ्यादृष्टयो वस्तु' यथाऽयं घटः स्वद्रव्यादिभिरस्तीतरद्रव्यादिभिस्तु नास्तीति। 'तस्मात् सर्वमेव' निर्णयादि 'तेषामज्ञानम'ज्ञानफलत्वाद् भाषाचतुष्टयानृतवदिति गाथार्थः ॥३२२॥

अथवा न तेऽज्ञानमात्रेण '[4]शुध्यन्त्यत[4]' इत्याह—'कट्ठे'त्यादि। 'कष्टतरं वा'—दुःसहतरं वा'ऽज्ञानं मिथ्यादृष्टीनाम्'। कथमित्याह—'**विवज्जओ चेव**

1 पो P. 2 P adds सं०
3 P adds अपि. 4...4 मुच्यन्त P.

सव्ववत्थुसु'। कुत इत्याह—'मिथ्याभिनिवेशात् घटे पटबुद्धिवत्'। तस्मादेतदेवमिति गाथार्थः ॥३२३॥

'अहवे'त्यादि। 'अथवा यथेन्द्रज्ञानोपयोगतो' वक्तुः 'तन्मयत्वम्' इन्द्रोपयोगमयत्वं 'भवति' तथा संशयादिभावे' संशयाद्यवग्रहणे सति 'नाणं' ते सम्यग्दृष्टेः। कुत इत्याह—'ज्ञानोपयोगात्', यथेन्द्रोपयोगाद् भावेन्द्रत्वमेवं संशयादिभावेऽपि ज्ञानोपयोगाभिप्रायाज्ज्ञानमेव सम्यग्दृष्टेरिति पिण्डार्थः। इति गाथार्थः ॥३२४॥

आह—'तुल्ल'मित्यादि। 'मिथ्यादृष्टेरपि तुल्यमद'स्तस्यापि ज्ञानोपयोगाभिप्रायाविशेषात्। उच्यते—'सो' इत्यादि स्पष्टम् ॥३२५॥

तथाहि 'ज'मित्यादि। स्पष्टार्थेत्यतः "कट्ठयरं वऽन्नाणं" ति स्थितम् ॥३२६॥

'अथवे'त्यादि। अथवाऽस्य प्रघट्टस्यापरः सम्बन्धः। 'यथा श्रुतज्ञानावसरे सामान्यदेशनं भणितम्', अज्ञानस्याप्यभिधानादादाविति भावनीयम्। 'तथा मतिज्ञानावसरे'ऽस्मिन् 'सर्वस्या मतेः' संशयविपर्ययानध्यवसायनिर्णयात्मिकायाः 'निरूवण कुणइ' भाष्यकारोऽभेदोपचारादिति गाथार्थः ॥३२७॥

कथमित्यत आह—'एसा' इत्यादि। स्पष्टार्था ॥३२८॥

'विव[1]रीते'त्यादि। 'यस्मान्' मिथ्यादृष्टि'विपरीतवस्तुग्रहणे'—अन्यथावस्तुप्रतिपत्तौ 'साधनविपर्ययं करोति', स्नानादेर्मोक्षं प्रतिपद्यते, 'ततस्तस्य' मिथ्यादृष्टेः सर्वं ज्ञान'मज्ञानफलं, सम्यग्दृष्टेस्तु ज्ञानफलं तज्ज्ञानं "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः" इति प्रतिपत्तेः, "संयोगसिद्धीये"त्यादिप्रतिपत्तेश्च, "उत्पद्येत हि सावस्थे"त्यादि प्रतित्तेश्चेति गाथार्थः ॥३२९॥

[2]"इय सव्वमयं सव्वं सम्मद्दिट्ठीस्स जं वत्थुं"ति वचनाद् यथा मोक्षो ज्ञानदर्शनचारित्रात्मक एवं मिथ्यात्वाज्ञानाविरत्यात्मकोऽप्यतः कस्यचिदेवमसौ भवति[3] कस्यचित्त्वेवम्। अतः—"देहस्स य भेदंमि, दोण्णि वि तुल्ला भविस्सामो" तस्मान्न यो लालयतीन्द्रियाणि तस्यामृतं स्रवति हस्तगतं प्रमादात्। आह च—'जयी'त्यादि। 'यदि सो' विवरीयभावो 'तस्स' मोक्खस्स 'धम्मो' सभावो, जहा घडस्स पडो, तो 'किं विवरीतत्तणं' मिच्छद्दिट्ठी[4]स्स मिच्छत्त[5]ण्णाणाविरइयणस्स, न किञ्चिदित्यर्थः। विपरीताविपरीतधर्म्मस्वभावाद्[6] वस्तुनः। आचार्य आह—'तन्न भवे' तदेतन्न भवति, यतः—'धर्मोऽपि यतः सर्वो न साधनं' कारणं भवितुमर्हति, 'किन्तु यो योग्यः'—अनुगुणो धर्मः स मोक्षस्य साधनम्। अत एवोक्तं "जे जत्तिया उ हेऊ भवस्से"त्येवमादि ॥३३०॥

1 प P. 2 P adds आह. 3 तु P.
4 द्वि P. 5 त्ता P. 6 वत्वा P.

अत: "जोग्गे''त्येवमादि'। अतोऽसौ मिथ्यादृष्टिर्मिथ्यात्वोपहतमानसत्वाद् 'योग्यायोग्यविशेषमजानन् विपर्ययं करोति', अतत्त्व एव तत्त्वबुद्धि करोति, अपुण्यैरधिकृतत्वात् शलभक इवेति। सम्यग्दृष्टिरप्येवमेव करिष्यति मनोरथ इति चेत्। तद् दूरेण, आह च—'सम्मद्दिट्ठी उ ण कुणइ तस्स सट्ठाणविणिओ[2]गं' तयो: योग्यायोग्ययो: किं कारणम् ? विशेषज्ञत्वाद्। उक्तं च—

"शिवमस्तु कुशास्त्राणाम्"

इत्येवमादि। तथा—

"वैशेषिकषष्टितन्त्रबौद्धानाम्।
येषां दुर्विहितत्वाद् भगवत्यनुरज्यते चेत: ॥१॥"

तथा—

"मिच्छुण्हाभिहयाणं छायं भवियाण को णु हु करेंतो।
संमत्तदयामूलो जइ जिणवरपायवो न होंतो ॥१॥"

इत्येवमादि। अथवा 'सम्यग्दृष्टि: पुनर्ज्ञानदर्शनचारित्रत्रयं मोक्षकारणत्वेन विज्ञाय 'करोति स्वस्थानविनियोगम्'। उक्तं च—

"काले सिक्खइ नाणं जिणवयणं[3] परमभत्तिराएणं।
दंसणपभावगाणि अ[4] सिक्खइ सत्थाइं कालम्मि ॥१॥
काले य भत्तपाणं गवेसए सयलदोसपरिसुद्धं।
आयरियादीणऽट्ठा पवयणमायासु उवउत्तो ॥२॥
एवं समायरन्तो काले कालं विसुद्धपरिणामो।
असवत्तजोगकारी सलाहणिज्जो य भुवणम्मि ॥३॥
सयलसुरासुरपणमियजिणगणहरभणिय-किरियविहिकुसलो।
आराहिऊण सम्मत्तनाणचरणाइं परमाइं ॥४॥
सत्तट्ठभवग्गहणऽब्भन्तरकालम्मि केवलं नाणं।
उप्पाडिऊण गच्छइ विहुतमलो सासयं मोक्खं ॥५॥
तत्थ य जरजम्मणमरणरोगतण्हाछुहाभयविमुक्को।
सातिअपज्जवसाणं कालमणंतं सुहं लहति ॥६॥

इत्यादि। अहवा 'सम्मद्दिट्ठी उण कुणई तस्य' योग्यायोग्यस्योपलम्भे सति 'सट्ठाणविणियोगं' भवमोक्षहेत्वोरिति गम्यते। ततश्च यदुक्तं—"जे जत्तिया उ हेऊ भवस्से"त्येवमादि, तदुभयविवक्षया। केवलपरमसम्यग्दृष्टिविवक्षायां त्वसत्यां रागद्वेषप्रवृत्तौ सर्वेषां हेतूनां निर्वाणाराधकत्वात्। उक्तं च—"इच्चे-

1......1 त्यादि P.
2 यो P.
3 P has भणियं for वयणं
4 य P.

इयाइं चत्तारि भासज्जायाइं भासमाणे आराहए वा विराहए वा ? गोयमा ! सम्मद्दिट्ठी उवउत्ते भासमाणे आराहए, नो विराहए'' इत्येवमादीति गाथार्थः ॥३३१॥

## [अवग्रहादीनां कालमानम्]

साम्प्रतमभिहितस्वरूपाणामवग्रहादीनां कालप्रमाणमभिधित्सुराह—

उग्गहो एक्कं समयं ईहावाया मुहुत्तमंतं(मद्धं)तु ।
कालमसंखं संखं च धारणा होइ नायव्वा ॥३३२॥नि० ४॥

अत्थोग्गहो जहन्नो समयं सेसोग्गहादओ वीसुं ।
अंतोमुहुत्तमेगं तु वासणा धारणं मोत्तुं ॥३३३॥

सोत्ताईणं पत्ताइविसयया पुव्वमत्थओ भणिया ।
इह कंठा सट्ठाणे भण्णइ विसयप्पमाणं च ॥३३४॥

'उग्गहो' इत्यादि । तत्राभिहितलक्षणो नैश्चयिकत्वेन जघन्योऽर्थावग्रह एकं समयं' भवतीति सम्बन्धः । परमनि[1]कृष्टश्च कालविशेषः समयोऽभिधीयते । स च प्रवचनप्रतिपादितोत्पलपत्रशतव्यतिभेदोदाहरणात् पट्टशाटिकापाटनदृष्टान्ताच्चावसेयः । व्यञ्जनावग्रहसांव्यवहारिकार्थावग्रहौ तु पृथगन्तर्मुहूर्त्तकालं भवत इति ज्ञातव्यौ । ईहा चापायश्च 'ईहापायौ', प्राकृतशैल्या बहुवचनम् । उक्तं च—

''बहुवयणेण दुवयणं छट्ठिविहत्तीएँ भन्नइ चउत्थी ।
जह हत्था तह पाया नमोऽत्थु देवाहिदेवाणं ॥१॥''

इत्येवमादि तावीहापायौ 'मुहूर्त्तार्द्धं' ज्ञातव्यौ भवतः । घटिकाद्वयप्रमाणः कालोऽभिधीयते मुहूर्त्तम् । तस्यार्द्धं मुहूर्त्तार्द्धम् । 'तु'विशेषणार्थः । तेनैतदुक्तं भवति—व्यवहारत इदं मुहूर्त्तार्द्धमुक्तं, परमार्थतस्तु अन्तर्मुहूर्त्तमवसेयम् । अन्ये तु पठन्ति, 'मुहुत्तमन्तं तु' । तत्रापि मुहूर्त्तान्तरिति भवति । अयमत्रार्थः—'अन्त'र्मध्यकरणे । 'तु'रेवकारार्थत्वादवधारणे । तेनैतदुक्तं भवति—ईहापायौ मुहूर्त्तान्तरन्तर्मुहूर्त्तमेवेत्यर्थः । कलनं कालस्तं 'कालम्' । न विद्यते संख्या इयन्तः पक्षमासर्त्त्वयनसंवत्सरादय इत्येवंभूता यस्यासा'वसंख्यः, पल्योपमादिलक्षण इत्यर्थः । तं काल'मसंख्यम्' । तथा विपर्ययेण 'संख्यम्' । 'च'शब्दादन्तर्मुहूर्त्तं च । 'धारणा' चतुर्थो मतिभेदो 'भवति ज्ञातव्या' । एतदुक्तं भवति—अविच्युतिस्मृती अन्तर्मुहूर्त्तं, वासनारूपा तु तदावरणक्षयोपशमाख्येतरयोः कारणभूताऽसंख्येयवर्षायुषामसंख्येयं संख्येयवर्षायुषां संख्येयमिति निर्युक्तिगाथार्थः ॥३३२॥ निर्युक्तिगाथा ४॥

---

1 नि: P.

एतद्व्याचिख्यासुर्भाष्यकार आह—'अत्थो' इत्यादि। व्याख्यातार्थेवेति ॥३३३॥

## [इन्द्रियाणां प्राप्यकारिताविचारः]

साम्प्रतमिन्द्रियाणां प्राप्यकारित्वादिनिरूपणार्थं "पुट्ठं सुणेइ सद्दं" इत्यस्याः[1] समवसरः। अत्रावसरे प्राह—नन्व[2]तिकान्तमेतत् "नयणमणोवज्जिदियभेदातो" इत्येवमादिना ग्रन्थेन, किमिति भूयोऽपि अग्रतो व्यवस्थितमिति ? अत्र भावार्थमाह भाष्यकारः—'सोता'दीण'मित्येवमादि। 'श्रोत्रादीनां प्राप्यादिविषयते'त्येतत्प्राग्वदनुसरणीयम्। 'प्राग'व्यञ्जनावग्रहतत्त्वादिनिरूपणप्रस्तावे-ऽर्थतो भणिता' भाष्यकारेण मया प्रपञ्चिता, तच्चातुर्विध्यप्रपञ्चणार्थम्। ततः किमित्यत आह—'इह' पञ्चमे गाथासूत्रे 'कण्ठात्' सौत्रेण न्यायेन 'स्वस्थानत्वाद् भण्यते' भद्रबाहुस्वामिना। किमित्येतावदेव ? नेत्याह—'विषयप्रमाणं च' श्रोत्रादीनामिहोच्यते इति गाथार्थः ॥३३४॥

तामाह—

पुट्ठं सुणेइ सद्दं रूवं पुण पासई अपुट्ठं तु।
गंधं रसं च फासं च बद्धपुट्ठं वियागरे ॥३३५॥नि० ५॥

पुट्ठं रेणुं व तणुम्मि बद्धमप्पीकयं पएसेहिं।
छिन्नकाइं चिय गिण्हइ सद्ददव्वाइं ज ताइं ॥३३६॥

बहुसुहुमभावुगाइं जं पडुययरं च सोत्तविण्णाणं।
गंधाई दव्वाइं विवरीयाइं जओ ताइं ॥३३७॥

फरिसाणंतरमत्तप्पएसमोसीकयाइं घेप्पंति।
पडुयरविण्णाणाइं जं च न घाणाइकरणाइं ॥३३८॥

'पुट्ठ'मित्यादि। 'पुट्ठं'—आलिगितं "रेणुं व तणुंमि" 'शृणोति गृह्णात्युपलभत इति पर्यायाः। कं ?—शब्द्यतेऽनेनेति 'शब्द'स्तम्। शब्दप्रायोग्यां द्रव्यसंहतिमित्यर्थः। तस्य बहुसूक्ष्मभावुकत्वात् श्रोत्रेन्द्रियस्य चान्येन्द्रियगणतः पटुतरत्वात्। तथा रूप्यत इति 'रूपं पुनः पश्यति'—गृह्णाति उपलभते। 'अपुट्ठ' अस्पृष्टमेवानालिङ्गितमेव। किं कारणम् ? चक्षुषोऽप्राप्यकारित्वात्। 'पुनः' शब्दस्य विशेषणार्थत्वादस्पृष्टमपि योग्यदेशस्थं नायोग्यदेशस्थमपि सौधर्मादीति। गन्ध्यत इति 'गन्ध'स्तम्। रस्यत इति 'रस'स्तम्। स्पृश्यत इति 'स्पर्श'स्तं च। 'च'शब्दौ पूरणार्थौ। 'बद्धपुट्ठ'ति। 'बद्ध'—आत्मीकृतमात्मप्रदेशैस्तोयवदाश्लिष्टमित्यर्थः। 'पुट्ठ' तु पूर्ववत्। प्राकृतशैल्या चेत्यमाह—'बद्धपुट्ठ'। अर्थतस्तु

1 स्यन्तर्निर्युक्तिगाथायाः. 2 ख P.
3 षा P. 4 P has ख्या for ख्यात्.

'पुट्ठबद्ध'मिति दृश्यमनुगुणत्वात् । अत्राह—यद् बद्धं गन्धद्रव्यादि तत् स्पृष्टं भवत्येवेति स्पृष्टग्रहणं न कर्त्तव्यम् । तन्न, सकलश्रोतृसाधारणत्वाच्छास्त्रारम्भस्य, प्रपञ्चितज्ञानुग्रहार्थमर्थापत्तिगम्यार्थाभिधानेऽप्यदोषात् । अथवा 'स्पृष्टं च तद् बद्धं चे'ति विशेषणसमासाङ्गीकरणाददोषः । तत्र 'स्पृष्टं' गन्धादि विशेष्यं वर्त्तते, 'बद्ध'मिति तु विशेषणम् । आह—एवमपि 'स्पृष्ट'ग्रहणमतिरिच्यते, बद्धस्य स्पृष्टत्वाव्यभिचारात् । उभयपदव्यभिचारे च विशेषणविशेष्यभावो दृष्टो, यथा नीलोत्पलमिति । न चेहोभयपदव्यभिचार एकपदव्यभिचारात् । उच्यते, एकपदव्यभिचारेऽपि विशेषणविशेष्यभावो दृष्ट एव, यथा'ऽब्द्रव्यं' 'पृथिवी द्रव्यमि'ति । तत्र अब्द्रव्यं नियमात्, द्रव्यं पुनरब् वाऽनब् वेति । तद्वदत्रापि । भावार्थस्त्वयं—स्पृष्टानन्तरमात्मप्रदेशैरागृहीतं गन्धादि बादरत्वादाभावुकत्वादल्पद्रव्यरूपत्वाद् घ्राणादीनां चापटुत्वाद् गृह्णाति विनिश्चिनोति घ्राणेन्द्रियादिगण इत्येवं 'व्यागृणीयात्' प्रतिपादयेदिति निर्युक्तिगाथासमुदायार्थः ।।३३५।। निर्युक्तिगाथा ५ ।।

अवयवार्थं तु भाष्यकार आह—'पुट्ठ'मित्यादि । 'बहु' इत्यादि । 'फरिसे'त्यादि । गाथात्रयं भावितार्थम् ।।३३६-३३८।।

## [इन्द्रियाणां विषयपरिमाणम्]

"रूवं[1] पुण पासती अपुट्ठं तु" इत्येतद्विशेषतो व्याचिख्यासुराह—

अप्पत्तकारि नयणं मणो य नयणस्स विसयपरिमाणं ।
आयंगुलेण लक्खं अइरित्तं जोयणाणं तु ।।३३९।।

नणु भणियमुस्सयंगुलपमाणओ जीवदेहमाणाई ।
देहपमाणं च्चिय तं न उ इंदियविसयपरिमाणं ।।३४०।।

जं तेण पंचधणुसयनराइविसयववहारवोच्छेओ ।
पावइ सहस्सगुणियं जेण पमाणंगुलं तत्तो ।।३४१।।

इंदियमाणेऽवि तयं भयणिज्जं जं तिगाउआईणं ।
जिब्भिंदियाइमाणं संववहारे विरुज्झेज्जा ।।३४२।।

तणुमाणं च्चिय तेणं हविज्ज भणियं सुएऽवि तं चेव ।
एएण देहमाणाई नारयाईण मिज्जंति ।।३४३।।

लक्खेहिं एक्कवीसाएँ साइरेगेहिं पुक्खरद्धम्मि ।
उदये पेच्छंति नरा सूरं उक्कोसए दिवसे ।।३४४।।

नयणिंदियस्स तम्हा विसयपमाणं जहा सुएऽभिहियं ।
आउस्सेहपमाणंगुलाण एक्केणऽवि ण जुत्तं ।।३४५।।

सुत्ताभिप्पाओऽयं पयासणिज्जे तयं न उ पयासे ।
वक्खाणओ विसेसो नहि संदेहादलक्खणया ।।३४६।।

---

1 यं P.

बारसहितो सोत्तं सेसाइं नवहिं जोयणेहिंतो ।
गिण्हंति पत्तमत्थं एत्तो परओ न गिण्हंति ॥३४७॥

दव्वाण मंदपरिणामयाएँ परओ न इंदियवलंपि ।
अवरमसंखेज्जंगुलभागाओ नयणवज्जाणं ॥३४८॥

संखेज्जइभागाओ नयणस्स मणस्स न विसयपमाणं ।
पोग्गलमित्तनिबंधाभावाओ केवलस्सेव ॥३४९॥

'अप्पत्ते'त्यादि । 'नयनमनसी अप्राप्यकरि'त्वाद् रूपमस्पृष्टमेव गृह्णीतः । यदुक्तं "विषयप्रमाणं च" तदिदानीं प्रतायते । 'णयणस्से'त्यादि । अयमत्र प्रक्रमः—अथ त्रिविधमङ्गुलमुक्तम्, आत्माङ्गुलमुच्छ्रयाङ्गुलं प्रमाणाङ्गुलं चेति । तत्राद्यं

"जे णं जता मणूसा तेसिं जं होइ माणरूवं ति ।
तं भणियमिहायं गुलमणियतमाणं पुण इमं तु ॥१॥"

द्वितीयं तु—

"परमाणू तसरेणू रहरेणू अग्गयं च वालस्स ।
लिक्खा जूया य जवो अट्ठगुणविवड्ढिया कमसो ॥२॥"

तृतीयं तु—

"उस्सेहंगुलमेगं हवइ पमाणंगुलं सहस्सगुणं ।
तं चेव दुगुणितं खलु वीरस्सातंगुलं भणियं ॥३॥

आयंगुलेण वत्थुं उस्सेहपमाणतो मिणे देहं ।
णगपुढविविमाणाइं मिणसु पमाणंगुलेणं तु ॥४॥"

एवं स्थिते 'नयनस्य' चक्षुरिन्द्रियस्य 'विषयपरिमाणं' प्रसर्पणपरिमाणं कियति देशे व्यवस्थितं रूपमालम्बत इति गर्भार्थं इदानीं चिन्त्यत इति वाक्यशेषः । कतमेनाङ्गुलेनेति चेत् । अत आह—'आतंगुलेणं' ति । तस्यैव विष्णुकुमारादे[1]र्वैक्रियशक्तिमतो यदङ्गुलं ते'नात्माङ्गुलेन अतिरिक्तो योजनलक्ष' इत्यर्थः । इह च यदुक्त'मात्माङ्गुलेन' तत्रैवं नियमो वेदितव्यः—आत्माङ्गुलेनैवेति, स्थितपक्षत्वादिति गाथार्थः ॥३३९॥

अत्र "उस्सेहपमाणतो मिणेदेहं" ति स्मृत्वा देहं चेन्द्रियविषयपरिमाणप्रमाणयोरुपलक्षणार्थमवबुद्धयमानः [2]पर आह[2]—'णणु' इत्यादि । 'ननु भणित' मुक्तमन्यत्र, 'उच्छ्रयाङ्गुलप्रमाणत' उच्छ्रयाङ्गुलेन 'देहप[3]माणं'ति नारकादिशरीरप्रमाणं साध्यते । आदि'शब्दादिन्द्रियविषयप्रमाणमिन्द्रियप्रमाणं चानुकृष्यते, एकजातीयत्वात्, तत्रस्थस्योपलक्षणत्वात् । अतः किमुच्यत आत्माङ्गु-

---

1 P has स्त्य for रादेः  2...2 परः प्राह P.
3 P drops प.

लेनास्य लोचनस्यैतावान् विषय इति, ननूच्यतामुच्छ्रयाङ्गुलेनेति। गुरुराह—'देहप्रमाणमेव' देहप्रमाणमात्रकमेव 'तत्ते'न मीयत इति तत्रोक्तम्। अनभिमत-प्रतिषेधमाह—'न त्विन्द्रियविषयपरिमाणं'—नत्विन्द्रियविषयप्रमाणमपि, तस्यात्माङ्गुलमेयत्वेनावस्तुत्वात्। अतः किमयं देह एतदुपलक्षणत्वेनाववुध्यत इति गाथार्थः ॥३४०॥

तत्रैतत्स्यात्—किमिति न देहवदिन्द्रियविषयपरिमाणमप्युच्छ्रयाङ्गुलेन मीयत इत्यत आह—'ज'मित्यादि। 'यद'—यस्मा'त्तेन'[1] उच्छ्रयाङ्गुलेन देहवदिन्द्रियविषयपरिमाणमपि मीयत इति ब्रूषे ततः पञ्चधनुःशतायाम-**भरतस्वामिसम्बन्ध्यात्माङ्गुलविस्तारनिष्पन्नयोजनद्वादशगुणस्कन्धावारस्य** पुर्या वा द्वादशयोजनसहस्रप्रमाणो विस्तारः प्राप्नोति। कुतः? **भरतात्माङ्गुलस्य** प्रमाणाङ्गुलत्वात्, तस्य चोच्छ्रयाङ्गुलात् सहस्रगुणत्वाद्, उच्छ्रयाङ्गुलेन चेन्द्रियविषयो मीयत इति मनोरथाभ्युपगमात्, ततश्चातोद्यशालोदरगतमहा-भेरीप्रताडनेऽपि केषाञ्चित्तच्छब्दाश्रवणं स्यात्, "वारसहितो सोत्तं" ति सिद्धान्ताभ्युपगमात्। अत आह—**'जं तेण पंचधणुसतनराइ[2]विसयववहार-वोच्छेदो पावइ'**। कुत इत्याह—'जेण तत्तो'—उस्सेहंगुलाओ **'सहस्सगुणियं प्रमाणंगुलं'** होति त्ति भावितमिति। तस्माद् "देहप्रमाणं चिय तमि"त्येवमादि स्थितमिति गाथार्थः ॥३४१॥

अपि च—"उस्सेहपमाणतो मिणे देहं"ति वोध्यम्। 'इंदिये'त्यादि। इन्द्रियाणि—कायजिह्वाघ्राणनयनश्रोत्रसंज्ञितानि, तेषां मानमिन्द्रियमानं, तस्मिन्न-'पीन्द्रियमाने' साध्ये कर्त्तव्ये वा 'तयं' उच्छ्रयाङ्गुलं 'भाज्यं'—विकल्पनीयम्। कदाचिद् व्यापार्यते कदाचिन्नेति भावना। कायेन्द्रिये व्यापार्यते, न शेषेष्वित्य-भिप्रायः। कुत इत्यत आह—'यद्'—यस्मात् 'त्रिगव्यूतादीनां' त्र्यादिगव्यूताद्यु-च्छ्रितानां 'जिह्वेन्द्रियादिमानं पृथक्त्वादिलक्षणं यदुक्तमार्षे तत्'संव्यवहारे' कल्प-तरुफलादनलक्षणे 'विरुध्यते' न घटते, यद्युच्छ्रयाङ्गुलेन तदपि प्रमीयेत, तन्मु-खस्यात्माङ्गुलानुरूपत्वेनातिविशालत्वात्, जिह्वायाश्चोच्छ्रयाङ्गुलमेयत्वेन वस्तुतो न किञ्चित्त्वात्[3] तन्मुखवदसावपि तदङ्गुलमेया अस्मदादीनामपि चेति गाथार्थः ॥३४२॥

अतः पारिशेष्यात्—'तणु' इत्यादि। 'तेने'त्युच्छ्रयाङ्गुलेन। 'श्रुतं'—अनुयोगद्वाराणि। शेषं स्पष्टम्। अतः केयं कल्पना? उपलक्षणमेतदिति गाथार्थः ॥३४३॥

तदेवं नयनस्यात्माङ्गुलेनैतावति विषये १००००० + ४[4] प्रसाधिते सति पुनरपि सिद्धान्तपौर्वापर्यज्ञानाऽभिमानी पर आत्मानं विडम्वयन्नाह—**'लक्खेहिं'**

---

1 P adds उच्छ्रयाङ्गुलेन। एतदुक्तं भवति.  2 ण P.
3 P has किञ्चिद्, आह—तस्मात् for किञ्चित्वात्.  4 P drops ४.

इत्यादि। तत्र 'पुक्खरद्धंमि'त्ति पुष्करद्वीपस्यार्द्धे मानुषोत्तरपर्वतावर्ग्भागासन्नवर्त्तिनो 'नरा' 'उदये' गभस्त्युद्गमवेलायां 'सूर'मादित्यं 'पश्यन्ति' प्रलोकयन्ति, 'उत्कृष्टे दिवसे' कर्क्कटकसंक्रान्तौ, दक्षिणायन इत्यर्थः। कियद्दूरे व्यवस्थिता इत्याह—योजन'लक्षैरेक विंशत्या सातिरेकै'र्व्यवस्थिताः; अनुभवसिद्धत्वात् भरतक्षेत्र इव,

"सीयालीस सहस्सा दो य सया जोयणाण तेवट्ठा।
इगवीस सट्ठिभागा कक्कडमाइम्मि पेच्छ नरा॥१॥"

इति वचनात्। उक्तं चैतत्—

"इगवीसं खलु लक्खा चउतीसं चेव तह सहस्साइं।
तह पञ्च सया भणिया सत्तत्तीसाएँ अइरित्ता॥१॥

इति नयणविसयमाणं पुक्खरदीवद्धवासिमणुआणं।
पुव्वेण य अवरेण य पिहं पिहं होइ नायव्वं॥२॥

सीयालीससहस्सा दो य सया जोयणाणमिच्चाई।
जह जंवुदीवयाणं अवद्धियं चेव विण्णेयं॥३॥

जह जह समये समये पुरओ संचरइ भक्खरो चरिमो (३६)।
तह तह इओवि नियमा जायइ रयणीइ भावत्थो॥४॥

एवं च सइ नराणं उदयत्थमणाणि होंतऽणियया णि।
सइ देसभेए कस्सइ किंची ववइस्सई नियमा॥५॥

सइ चेव य निद्दिट्ठो भद्दमुहुत्तो कमेण सव्वेसिं।
केसिंचीदाणिं[1] चिय विसयपमाणे रवी जेसिं॥६॥

केसिंची सावित्तो मायाए आरओ रवी जेसिं।
संचरइ मुहुत्तेणं जावइयं तं निसामेह॥७॥

लक्खदुगं छत्तीससह[2]स्सा छ सपाय[2] साहीया।
उक्कोसदिणंमि रवी चरयंऽतमुहुत्त एवइयं॥८॥

उक्कोसे चिय दिवसे जंवूदीवंमि जो रवी चरइ।
सो पञ्चसहस्सा खलु अट्ठावन्नं चिय सट्ठिभागा साहिया नवरं॥९॥

सव्वं पुणऽस्स भणितं तावक्खेत्तं जिणेहिं सव्वेहिं।
पुव्वावरेहिं तं चिय, सीयालीसाए दुगुणं तु॥१०॥

पणयालीससहस्सा उत्तरओ तावखेत्तपरिमाणं।
जा मेरुफलिहकंडं, दाहिणओ से पवक्खामि॥११॥

तेत्तीससहस्स तिन्नि य, सया य तेत्तीसया अणूणाओ।
जोयणतिभागो एक्को, लवणं पति तावखेत्तं से॥१२॥

1 र्यं P. 2...2 स्साऽद्धस्सया य P.

इयरस्स उ सव्वं चिय पुक्खरअद्धस्स चरमभाणुस्स ।
तावक्खेत्तं भणियं तं चिय दुगुणं जओ भणियं ।।१३।।
वायालीसं लक्खा अउणत्तरि चेव तह सहस्साइं ।
चउहत्तरी य सेसा, दसभागा सत्त य हवंति ।।१४।।
तावक्खेत्ता चउरो भवंति भाणूण दोन्नि दो ससिणं ।
सेसं सवित्थरं जाण सूरपण्णत्तिओ सव्वं ।।१५।।"

अत उक्तं—'लक्खेहो'त्येवमादि । 'नयणिण्दये'त्येवमादि । 'तस्मान्नयनेन्द्रियस्य विषयप्रमाणं'—अवकाशप्रमाणं 'यथा श्रुते'—अनुयोगद्वारे'ष्वभिहितं' तथा तत् त्रयाणा'मेकेनापि न युक्तं', द्वयोरतिमहत्त्वादेकस्य तु प्रमाणाङ्गुलस्य द्विगुण-साधिकत्वादिति गाथाद्वया'र्थः ।।३४४-३४५।।

गुरुराह—'सुत्ते'त्यादि । 'अयं सूत्राभिप्राय' इयं सूत्रविवक्षा—यदुत 'प्रकाशनीये' विषये पर्वतादौ 'तच्'चक्षुरिन्द्रियमनुप्रवर्त्तते, "आयंगुलेन समतिरित्तं जोयणलक्खं"ति । 'ण उ पयासे'त्ति न पुनः प्रकाशकेऽर्थे सवितृलक्षणे । अतः किमुच्यते—"आउस्सेहप्पमाणंगुलाणमेगेणऽवि न जुत्तं"ति । कथमयं सूत्राभि-प्रायोऽन्तर्गूढो[2] ज्ञायत इत्यत आह—'व्याख्यानतः' पौर्वापर्यमीलनात् 'विशेषो' विवक्षा[3]परिज्ञानं भवति, नहि 'संदेहात्' साक्षादयमर्थो न श्रूयत इति लक्षणा-'दलक्षणता' असमञ्जसता सूत्रस्य स्यात् । उक्तं च—[4]"जं जह सुत्ते भणितमि"-त्येवमादि[4] ।।३४६।।

अथ शेषाणां विषयप्रमाणमाह—'बारसहिंतो' इत्यादि । 'श्रोत्रं' मेघमालार-सितादिध्वनि'माद्वादशभ्यो योजनेभ्यो गृह्णाति' शेषं स्पष्टम् ।।३४७।।

कुत एतदित्याह—'दव्वाणे'त्यादि । गाथार्द्धं सुगमम् । 'अवरं'ति एत-दुत्कृष्टमुक्तम् । अथ जघन्यमाह—'अङ्गुलासंख्येयभागादा'गतं घ्राणादि गन्धादि गृह्णाति । किमविशेषेण । नेत्याह—'नयनवर्ज्जानाम्' ।।३४८।।

तस्य का वार्त्तेत्यत आह—'संखे'त्यादि । अतिसन्निकृष्टस्यानुपलम्भात् । 'मनस'स्त्विदं 'ना'स्ति, मूर्त्तामूर्त्तप्रवृत्तेः, 'केवलवत्' । व्यतिरेकेण मनःपर्यायावधी इति । नन्वेवं पूर्वापरविरोधः, "मणसोऽवि विसयनियमो णक्खमति जओ स सव्वत्थ"त्ति वचनात् । तन्न, निर्व्याघातमनसः पक्षीकृतत्वात् । आह—मतिश्रुतयोः कथमुभयनिबन्धे सति ? उच्यते, मतिश्रुतवृत्तिरेव मनो, न च तयोरपि देश-नियमोऽस्तीति गाथार्थः ।।३४९।।

---

1 P drops द्वय. 2 P has गतो for गूढो. 3 P adds याः.
4......4 P has the following verse :—
"जं जह सुत्ते भणियं तहेव जइ तं वियालणा नत्थि ।
किं कालियाणुओगो दिट्ठो दिट्ठिप्पहाणेहिं ।।१।।"

[भाषाविचारः]

"पुट्ठं सुणेति सद्द" मित्युक्तमत आह—किं शब्दप्रयोगोत्सृष्टान्येव केवलानि ध्वनिदलानि शृणोत्युतान्यान्येव तद्वासितान्याहोश्वित्तन्मिश्राणीति। उच्यते—न तावत्केवलानि, तेषां वासकत्वाल्लोकस्य च तद्द्रव्याकुलत्वात्। मिश्राणि तु स्युः, परं तद्वासितान्यन्यानि चेत्याह—

भासासमसेढीओ सद्दं जं सुणइ मीसयं सुणइ।
वीसेढी पुण सद्दं सुणेइ नियमा पराघाए ।।३५०।।नि० ६।।

सेढी पएसपंती वदतो सव्वस्स छद्दिसिं ताओ।
जासु विमुक्का धावइ भासा समयम्मि पढमम्मि ।।३५१।।

भासासमसेढिठिओ तब्भासामीसियं सुणइ सद्दं।
तद्दव्वभावियाइं अण्णाइं सुणइ विदिसत्थो ।।३५२।।

अणुसेढीगमणाओ पडिघायाभावओऽनिमित्ताओ।
समयंतराणवत्थाणओ य मुक्काइं न सुणेइ ।।३५३।।

'भासा' इत्यादि। तत्र भाष्यत इति 'भाषा'। वक्त्रा शब्दतयोत्सृज्यमाना द्रव्यसंहतिरित्यर्थः। तस्याः 'समश्रेणयः'—समाकाशपङ्क्तय इति 'भाषासमश्रेणयः'। 'सम'ग्रहणं विश्रेणिव्यवच्छेदार्थम्। ता 'इतो'—गत इति 'भाषासमश्रेणीतः' भाषासमश्रेणीस्थित इत्यर्थः। कोऽसौ? श्रोता इति गम्यते। 'शब्द'मुक्तसंन्यासार्थं[1], 'यं' पुरुषशब्दादिकं 'शृणोत्यु'पलभते। यत्तदोर्नित्याभिसम्बन्धात्तम्। किंविशिष्टं 'शृणोती'त्यत आह—'मीसयं'[2]ति मिश्रकम् उत्सृष्टद्रव्यभावितापान्तरालस्थशब्दपुद्गलसंवलितमित्यर्थः। 'वीसेढी पुण'त्ति विश्रेणिः[3] पुनः। 'इत' इति वर्त्तते। तेनैतदुक्तं भवति—विश्रेणीव्यवस्थितः पुनः श्रोता। 'सद्द'मिति पुनः शब्दग्रहणमकारि पराघातवासितद्रव्याणामपि तथाविधशब्दत्व[4]ख्यापनार्थम्। किमत आह—'शृणोति नियमात्' नियमेन 'पराघाते' सति, पराघातितान्येव शृणोति, नेतराणि, तेषामनुश्रेणीगमनात् प्रतिघाताभावाच्च। अथवा 'भासासमसेढीयं' भासासमश्रेण्या'मितं' शब्दमिति। शेषं प्राग्वदिति। 'वीसेढी पुण' त्ति। अत्र तु विश्रेणि[5]स्थ एव विश्रेणिरुच्यते, पदेऽपि पदावयवप्रयोगप्रदर्शनाद् भीमसेनः 'सेनः' सत्यभामा 'भामे'ति यथा। इत्येवं गन्धादिद्रव्याण्यपि 'मिश्राण्या'दत्ते अनुश्रेणिगमनत्वे अनियमः। बादरत्वाद्वातायनरेणुवन्नियमोऽप्येके इति गाथार्थः ।।३५०।।

'सेढी' इत्यादि। इह श्रेणि'राकाशपङ्क्ति'रभिधीयते। एकवचनं च जात्यपेक्षम्। यत आह—'सर्वस्य' वक्तु'र्वदतः' सतः 'षट्सु दिक्षु' पूर्वापरोत्तरदक्षिणोर्ध्वाधःप्रवृत्तिषु 'ता' भवन्ति, लोकमध्यवर्तित्वे सतीति गम्यते। 'जास्वि'त्यादि स्पष्टम् ।।३५१।।

1 P has शब्दार्थ for संन्यासार्थ. 2 P has मीसं for मीसयं.
3 णीं P. 4 P drops स्व. 5 णी P.

"इत" ग्रहणं व्याचिख्यासुराह—'भासे'त्यादि। 'भाषासमश्रेणिस्थो' भाषासमश्रेणीत इत्युक्तं भवति। कोऽसौ? श्रोता। 'तब्भासामिसियं'ति तस्य वक्तुर्भेर्यादेर्वा भाषा, तया मिश्रितं 'शृणोति'। पश्चादर्धं व्याचिख्यासुराह—'तद्दव्वे'त्यादि। भावितार्थम्॥३५२॥

ननु तानि किमित्यत आह—'अणु' इत्यादि[1]। तेषा'मनुश्रेणिगमनात्'। अनुश्रेणीगमनेऽपि कस्यचित् स्खलनतो[2] विश्रोतोगमनं भवतीत्यत आह—'प्रतिघाताभावाद्' असम्भवात्। स किमित्यत आह—'निमित्ताभावात्' सूक्ष्मत्वादपि च 'समयान्तरानवस्थानाच्च'। किमत आह—'मुक्काइं' वक्त्रा। 'न शृणोति' विदिसत्थोत्ति गाथार्थः॥३५३॥

भाषाधिकारस्य प्रस्तुतत्वादाह—केन पुनर्योगेनामीषां वाग्द्रव्याणामादानमुत्सर्गं च करोति? कथं चेत्यत आह निर्युक्तिकारः—

गिण्हइ य काइएणं निसिरइ तह वाइएण जोएणं।
एगंतरं च गिण्हइ निसिरइ एगंतरं चेव॥३५४॥नि० ७॥

गिण्हिज्ज काइएणं किह निसिरइ वाइएण जोएणं।
को वाऽयं वाजोगो किं वाया कायसंरंभो॥३५५॥

वाया न जीवजोगो पोग्गलपरिणामओ रसाइ व्व।
न य ताए निसिरिज्जइ स च्चिय निसिरिज्जए जम्हा॥३५६॥

अह सो तणुसंरंभो निसिरइ तो काइएण वत्तव्वं।
तणुजोगविसेसच्चिय मणवइजोगत्ति जमदोसो॥३५७॥

किं पुण तणुसंरंभेण जेण मुंचइ स वाइओ जोगो।
मण्णइ य स माणसिओ तणुजोगो चेव य विभत्तो॥३५८॥

तणुजोगो च्चिय मणवइजोगा काएण दव्वगहणाओ।
आणापाणव्व न चे तओऽवि जोगंतरं होज्जा॥३५९॥

तुल्ले तणुजोगत्ते कीस व जोगंतरं तओ न कओ।
मणवइजोगा व कया भण्णइ ववहारसिद्धत्थं॥३६०॥

कायकिरियाइरित्तं नाणापाणप्फलं जह वईए।
दीसइ मणसो य फुडं तणुजोगब्भंतरो तो सो॥३६१॥

अहवा तणुजोगाहिअवइदव्वसमूहजीववावारो।
सो वइजोगो भण्णइ वाया निसिरिज्जए तेणं॥३६२॥

तह तणुवावाराहिअमणदव्वसमूहजीववावारो।
सो मणजोगो भण्णइ मण्णइ नेयं जओ तेणं॥३६३॥

---

1 ह P. 2 P adds अपि.

जह गामाओ गामो गामंतरमेवमेग एगाओ ।
एगंतरंति भण्णइ समयाओऽणंतरो समओ ॥३६४॥

केई एगंतरियं मण्णंतेगंतरंति तेसिं च ।
विच्छिन्नावलिरूवो होइ धणी सुयविरोहो य ॥३६५॥

आह सुए च्चिय निसिरइ संतरियं न उ निरंतरं भणितं ।
एगेण जओ गिण्हइ समयेणेगेण सो मुयइ ॥३६६॥

अणुसमयमणंतरियं गहणं भणियं जओ विमुक्खोऽवि ।
जुत्तो निरंतरो च्चिय, भणइ कहं संतरो भणिओ ॥३६७॥

गहणावेक्खाएँ तओ निरन्तरं जम्मि जाइं गहियाइं ।
नवि तम्मि चेव निसिरइ जह पढमे निसिरणं नत्थि ॥३६८॥

निसिरिज्जइ नागहियं गहणंतरियंति संतरं तेणं ।
न निरंतरं न समयं न जुगवमिह होंति पज्जाया ॥३६९॥

गहणं मोक्खो भासा समयं गहनिसिरणं च दो समया ।
होंति जहण्णंतरओ तं तस्स व बीयसमयम्मि ॥३७०॥

गहणं मोक्खो भासा गहणविसग्गा य होंति उक्कोसं ।
अंतोमुहुत्तमेत्तं पयत्तभेएण भेयो सिं ॥३७१॥

गहणविसग्गपयत्ता परोप्परविरोहिणो कहं समए ।
समए दो उवओगा न होज्ज करियाण को दोसो ॥३७२॥

'गेण्हती'त्यादि । तत्र कायेन निर्वृत्तः कायिकस्तेन 'कायिकेन' । 'योगो' व्यापारः कर्म क्रियेत्यनर्थान्तरम् । सर्व एव हि वक्ता कायक्रियया शब्दद्रव्याण्यादत्ते । 'चो'ऽवधारणे । स च भिन्नक्रमः । 'कायिकेनैव' । 'निसृजति'—व्युत्सृजति मुञ्चति । 'तथे'त्यानन्तर्यार्थः । उक्ति'र्वाक्' । वाचा निर्वृत्तो 'वाचिकः' । तेन 'वाचिकेन योगेन' । कथं गृह्णाति निःसृजति वा ? किमनुसमयमुत अननुसमयमित्यत आह—'एकान्तरमेव गृह्णाति, निसृजत्येकान्तरं चैव' । एतदुक्तं भवति—प्रतिसमयं गृह्णाति मुञ्चति चेति । कथं ? यथा ग्रामादन्यो ग्रामो ग्रामान्तरं, पुरुषाद्वा पुरुषः पुरुषान्तरम् । अनन्तरोऽपि सन्, एवमेकैकस्मात्समयादेकैक एवैकान्तरोऽनन्तरसमयो निर्दिष्टः । स्थापना—

| | | | | |
|---|---|---|---|---|
| ० | नि | नि | नि | नि |
| ग्र | ग्र | ग्र | ग्र | ० |

एप[1] गाथा समुदायार्थः ॥३५४॥ निर्युक्तिगाथा ५॥

अत्र पूर्वार्द्धमधिकृत्य चोदक आह—'गिण्हेज्जे'त्यादि । इह भापको भापाद्रव्याणि 'गृह्णीयात्' कामं 'कायिकेन' योगेन, करणरूपेण, तस्यात्मव्यापारत्वात् । किन्तु न काममित्यत आह—'कथं निसृजति' ? 'वाचिकेन योगेन'

1 P has इति for एप.

नैवेत्यभिप्रायः। तस्य निसृज्यमानत्वेन कर्मत्वात्। किं वाऽनेन ऋजुनोक्तेन ? अन्यत् पृच्छामः—'को वाऽयं वाग्योगो' नाम येन निसृजतीत्युक्तम्। 'किं वाय'त्ति किं वागेव निसर्गव्यापारापन्ना सती वाग्योगः उत 'कायसंरम्भ'स्तन्निसर्गहेतुर्वाग्योग इति द्वयी गतिः ? किञ्चातः—यद्याद्यः पक्षः, तन्न, तस्या योगत्वानुपपत्तेः ।।३५५।।

आह च—'वाया' इत्यादि। इह 'वाय'केवला [1]छिन्ना 'न जीवव्यापारः'। हेतुदृष्टान्तौ सुगमौ व्यतिरेकेण जीवत्कायव्यापारः। अपि च—'न य ताए'त्ति। 'न च तया वाचा निसृज्यते', काययोगेनैव, किं कारणं ? 'तस्या एव निसृज्यमानत्वात्'। नहि कर्मैव करणं स्यादित्यभिप्राय इति गाथार्थः ।।३५६।।

द्वितीयं विकल्पमधिकृत्याह—'अहे'त्यादि। 'अथासौ' वाग्योगस्'तनुसमारम्भः'—कायव्यापारः। 'ततः कायिकेनैव निसृजतीत्येवं वक्तव्यं' **भद्रबाहुस्वामिना**। भाष्यकृदुत्तरमाह—सर्वमेतदसाधु अभिप्रायापरिज्ञानात्। तथाहि—'त[2]नुयोगविसेषावेव' तनुयोगावान्तरालभेदावेव 'मनोवाग्योगाविति' सिद्धान्तः, 'यत्' यस्मात् एवमतोऽय 'मदोष' इति गाथार्थः ।।३५७।।

यद्येवमुच्छि[3]न्ना तर्हि "मणेणं वायाए काएणं"ति करणत्रयचारणेत्यत आह—'किं पुणे'त्यादि। 'किं पुण'त्ति, ततश्चेत्यर्थः। ततश्चात्मनः शरीरव्यापारे सति येन रूपेण वाग्द्रव्याणामुपादानं करोति स कायिकः। अत उक्तं "गेण्हइ य काइयेणं"ति। तथा 'तणु' इत्यादि द्वितीयः। अत उक्तं—"णिसिरति तह वाइएण जोएणं"ति। तथा '**मण्णइ य तणुसंरंभेण जेण स उ माणसिओ**' भन्नइ। अतस्तनुयोग एव सामान्यः सन् विसर्जित[4]स्त्रेधोपाधिभेदादिति गाथार्थः ।।३५८।।

प्रमाणयन्नाह—'तणु' इत्यादि। पादत्रयं सुगमम्। व्यतिरेकेणाभावः। साम्प्रतमाचार्य एव परोत्प्रेक्षितां वाधामाह—'न चे'त्ति। न चेत् कायव्यापाररूपत्वेऽपि तावसावित्यत आह—'तओऽवि'। असावपि प्राणापानुः 'योगान्तरं' चतुर्थं 'स्याद्' भवतः। अतः किमुच्यते भवता। उभयसन्ध्यं "पडिक्कमामि तिहिं जोगेही"त्येवमादीति गाथार्थः ।।३५९।।

तदेवं सर्वेपामिति काययोगत्वे उक्ते पर एवाह—'तुल्ल' इत्यादि। प्राणापानोस्'तुल्ये'—समाने मनोवाग्योगाभ्याम्। 'तनुयोगत्वे किमिति चासौ' प्राणापानु'र्योगान्तरं' 'चतुर्थं न कृतम्' ? '**मणवइजोगा य कया**' जोगान्तरं तुल्ले तणुजोगत्ते उस्सासनिस्सासेण सममेको वा योगोऽस्तु चत्वारो वेत्यभिप्रायः। गुरुरुत्तरमाह—'**भन्नति ववहारसिद्धत्थं**' एतावेवास्मात् पृथक् कृताविति गाथार्थः ।।३६०।।

तथाहि—'काये'त्यादि। 'कायक्रियाया अतिरिक्तम्'—अधिकं कायक्रियातिरिक्तम्। तत् कायक्रियातिरिक्तं 'न प्राणापानोः फलं दृश्यत' इति सम्बन्धः।

---

1 P adds अ। 2 च्छ P. 3 न P.

4 P has विभक्तो विभाजितः for विसर्जितः.

यथा कस्या इत्यत आह—'यथावाचो'—गिरः। तथाहि—वाचि परप्रत्यायनं फलमालोक्यते, नत्विदं प्राणापानावन्यत्र हृदयादिघट्टनात्, तथा 'मनसश्च स्फुटं कायक्रियातिरिक्तं फलं दृश्यते। यस्मादेवं तस्मात् 'तनुयोगाभ्यन्र एवासौ' प्राणापानुः, तुल्ये तनुयोगत्वेऽपीति प्रक्रमाल्लभ्यत इति सुष्ठूच्यते—"पडिक्कमामि तिहिं जोगेहिं" ति गाथार्थः ॥३६१॥

'अहवे'त्यादि। 'अथवा'ऽयमेवार्थोऽन्यथा निर्दिश्यते—'काययोगाहृतानि' यानि 'वाग्द्रव्याणि, तेषां यः समूहः' तत्साचिव्याद्यो 'जीवव्यापारः' परप्रत्यायनफलो ध्वनितया 'स वाग्योगो भण्यते'। तेन किं क्रियत इत्याह—'तेन वाग् निसृज्यते' परप्रत्यायनार्थमिति गाथार्थः ॥३६२॥

'तहे'त्याद्यनया दिशा स्पष्टं ॥३६३॥

अथ पश्चार्द्धव्याचिख्यासयाऽऽह—'जहे'त्यादि। भावितवत्। तदेवं व्याख्यायमाने यदुक्तं सूत्रे "अणुसमयमविरहितं णिरन्तरं गेण्हइ" तदप्याराधितं स्यात्मसृणशब्दश्रवणं चेति गाथार्थः ॥३६४॥

अन्यथा तु विपर्यय इति। आह च—'केयी'त्यादि। 'केचन'[1] व्याख्यातारः "एगंतरं" ति यदुक्तं निर्युक्तिकृता 'तन्मन्यन्ते'—व्याख्यानयन्ति। कथमित्यत आह—'एगंतरंति एकैकेनान्तरितं—व्यवहितमेकान्तरं तथा दृष्टत्वादेकान्तरोपवासवत्। स्थापना—ग्रमो ग्रमो ग्रमो। ततः को दोष इत्याह—'तेषां चैवं मन्तृणां 'विच्छिन्नावलिरूवो होइ धणी'। कुत एतत्? ग्रहणान्तरितत्वान्निसर्गस्य, निसर्गान्तरितत्वाच्च ग्रहणस्य, ग्रहणसमयेऽश्रवणात्। किमेतावानेव तेषां दोष इति। नेत्याह—'सुत्तविरोधो' श्रीमन्महावीरवर्द्धमानस्वामिमतानुसारिभगवदाचार्यश्यामस्वामिप्रणीत प्रज्ञापनाऽध्ययनप्रसिद्धालङ्घनं च। "अणुसमयमविरहितं" निरंतरं गृह्णातीति तद्वचनात्। तथा हीदं सूत्रं प्रतिसमयग्रहणप्रतिपादकत्वात् प्रतिसमयनिसर्गप्रतिपादकमपि वोद्धव्यं मसृणशब्दानुभवात्। अथ ब्रूयुर्भवतोऽप्येवं व्याख्यातुस्तदुक्ताज्ञाखण्डनमेव सूत्रान्तरविरोधादिति। "संतरं णिसिरति णोणिरन्तरं, एगेणं समएणं गेण्हइ एगेणं समएणं मुञ्चती" ति सूत्रश्रवणात्। तथा हीदं सूत्रं सान्तरनिसर्गप्रतिपादकत्वात् सान्तरग्रहणप्रतिपादकमपि विज्ञातव्यम्। न च स्खलितशब्दश्रवणानुभवः, स्तोकत्वेन सूक्ष्मत्वादपान्तरालकालस्येति गाथार्थः ॥३६५॥

अथैतत्सूत्रं गाथयोपनिवध्नन् पर आह—'आह सुये च्चिये'त्यादि। गतार्था। नवरं 'सो' त्ति वक्ता ॥३६६॥

अथ सूत्रद्वयमपि विषयविभागे व्य[2]वतिष्ठापयिपुराह—'अणुसमय'मित्यादि। समयमनु पश्चा'दनुसमयम्'। किमुक्तं भवतीत्यत आह—'अनन्तरितं' नान्तरितमेकान्तरोपवासवदित्यनन्तरितमव्यवहितमिति यावत्। 'ग्रहणं' वाग्द्र-

1 नो P. 2 P has अध्य for व्य.

व्योपादानं 'भणितमु'क्तं प्रथमसूत्रे भगवता **आर्यश्यामेन** 'यतः' यस्मात् । ततः किमित्यत आह—'विमोक्षोऽपि' निसर्गोऽपि तेषां 'युक्तो' घटमानकः । 'निरंतर एवा'नुसमयमविरहितमेवेति यावदिति । कोऽर्थः ? कुत एतत् ? प्रथमसमये ग्रहणात् द्वितीयादिषु निसर्गग्रहणादन्त्य एव निसर्गात्, इतश्चैतदेवं, द्विसामयिकस्यैव जघन्यस्य ग्रहणनिसर्गस्योक्तत्वात्, स्थास्नोर्मुमूर्षोर्वेत्यभिप्रायः । एवमुक्ते सति द्वितीयसूत्रश्रवणभ्रमन्मतिश्चोदको 'भणति'—चोएइ । 'कथं' ? कया विवक्षया, 'सान्तरः' सव्यवधानः 'भणितः' । तेनैव मुखेन प्रतिपादितो द्वितीयसूत्रे तेन, निसर्ग इति गम्यते । इति गाथार्थः ॥३६७॥

गुरुराह—'**गहणे**'त्यादि । '**तओ**' इत्यादि । नन्वसौ निसर्गः सान्तरो भणितः, तेन द्वियीयसूत्रे ग्रहणापेक्षया कावा आद्यमाद्यं ग्रहणमङ्गीकृत्य, नतु समयापेक्षया, तथा निरंतरत्वादेव, ग्रहणवत् । कथमेतदेवमित्यत आह—'**निरंतरं**' पतिसमयं '**जंमि**' पढमाइसमये '**जाइं**' दलियाइं '**गहियाणि**' आदत्ताणि ताइं '**ण तु तंमि चेव**' गहणसमये '**निसिरइ**' मुंचइ । कः प्रत्यय इत्यत आह—'**जह पढमे**' समये 'निसिरणं नत्थि' एवं दुयाइसमए'सुवि तत्समयोपात्तानामिति भावनीयम् । एतदुक्तं भवति—प्रथमसमयोपात्तानां न तत्रैव निसर्गः । अपि तु द्वितीये । एवं द्वितीयसमयोपात्तानां न तत्रैव । अपि तु तृतीये । इत्येवमादि सान्तरनिसर्गसिद्धिः । तस्माद् ग्रहणापेक्षयाऽसौ द्वितीयसूत्रे तथोक्त इति गाथार्थः ॥३६८॥

तत्रैतत्स्याद्—यथा ग्रहणापेक्षया सान्तरो निसर्ग एवं निसर्गापेक्षयाऽपि सान्तरं ग्रहणं, नानिसृष्टं पुनर्गृह्यत इत्यतो—"विच्छिन्नावलिरूवो वत्थुद्वितीए घणी होउ[2]", तन्न, निसर्गस्य ग्रहणपरतन्त्रत्वाद् द्वितीयसमयवत् । कुत एतदित्यत आह—'**निसी**'त्यादि 'नागृहीतं' धौर्यसमये द्वितीयसमय 'निसृज्यते' इत्येकान्तः, अनिसृष्टं तु गुह्यत आदि समय इत्येकान्तः । येनैवं तेन किमित्यत आह—'**संतरं तेणं**' ति । तेन कारणेन सान्तरं निसर्ज्जनमुक्तं भगवता द्वितीयसूत्राद्यावयवेनेति प्रक्रमः । कुत इत्यत आह - '**गहणंतरियं**'ति ग्रहणान्तरितमिति कृत्वेति भावार्थकथनम् । सर्वत्राधःपङ्क्तौ स्वतन्त्रग्रहणव्यवहितमिति कृत्वेत्वभिप्रायः । ततश्च "गहणावेक्खाए तत्तो"त्ति व्यवस्थितं नो निरंतरं ति । द्वितीयं सूत्रावयवं शुशोधयिषुराह—'**नो निरंतरं**'ति । किमुक्तं भवतीत्याह '**न निरन्तरं**ति न समकं न युगपदिति पर्याया एते भवन्ति' । क एषां भावितानामर्थ इतिचेत् । उच्यते, न ग्रहणैककालं निसृजति, किं तर्हि ? द्वितीये द्वितीये समय इति । अथवा 'नो निरंतरं'ति । अस्यायमर्थः—न पढम समये चेव निसिरइ, किंतु संतरंति उक्तं प्राक् । एवमन्वयव्यतिरेकतः सूत्रार्ध गतम् । तथा एगेणं समएणं गिण्हइ एगेणं मुञ्चतीत्यस्य कोऽर्थ इति चेत् । उच्चते, आद्यचरमसमययोरेकान्तग्रहणनिसर्ग-

---

1 थे P. 2 इ P. 3 धु P. 4 च P.

सद्भावात् "एगेणं समएणं गेण्हइ एगेणं समयेणं मुंचती" त्येवमादि यन्त्रकमध्ये भावनीयमित्यत एवं गृह्यतां "अणुसमयमविरहियं निरंतरं गेण्हइ संतरं निसिरइ नो निरंन्तर"मित्येवमादीति गाथार्थः ॥३६९॥

साम्प्रतं ग्रहणादेर्द्विविधं कालप्रमाणमभिधित्सुः प्राह—'**गहण**' मित्यादि। गृह्यत इति 'ग्रहणम्'। तदेकं 'समयं' भवति एवं 'मोक्षो'ऽपि। 'भाषा'पि जघन्यतः। तत्रैतत्स्यात्—मोक्षस्य निसर्गस्वभावत्वात् निसर्गस्य च भाषात्वान्मोक्षग्रहणे भाषाग्रहणमतिरिच्यत इति। उच्यते, न व्यतिरिच्यते, भाष्यमाणा भाषा, न ग्रहणमात्रं न मोक्षमात्रं नाप्युभय[1]मिति नियमार्थत्वात्। प्रत्येक'मभिधायोभयस्याह—'**गहणं णिसिरणं व**'त्ति। 'ग्रहणनिसर्गौ च द्वौ समयौ भवतो जघन्यं'—सर्वस्तोकतया। कस्य? 'मुमूर्षोर्द्वितीयसमये तिष्ठासोर्वेति' गाथार्थः ॥३७०॥

उत्कृष्टं ग्रहणनिसर्जनमाह—'**गहण**'मित्यादि। 'ग्रहणं मोक्षो भाषाग्रहणविसर्गश्चेति' पृथक् पृथक् 'प्रकर्षेणान्तर्मुहूर्त्तं भवन्ति'। तथा च[2] द्वौ प्रत्येकपक्षौ अपर उभयपक्षः अपरो भाषापरिणामपक्ष इति। सर्वत्र च पुरुषान्तरे एतेषां—ग्रहणादीनां कालभेदो भवति, अल्पमहाप्राण'प्रयत्नभेदादि'ति गाथार्थः ॥३७१॥

यदुक्तमाद्यन्तसमययोरेकान्तेन ग्रहणनिसर्गाविव, मध्यसमयेषु तूभयं, तत्राह—'**गहण**'मित्यादि। स्पष्टार्था। एकसमये क्रियाद्वयमस्ति, अविरुद्धत्वात्, कर्मसंघातशाटक्रियावत्, युगपदङ्गुल्याकाशसंयोगविभागक्रियावद्वा, ध्यानविधौ वा वा मनआदिक्रियावदिति गाथार्थः ॥३७२॥

गृह्णाति कायिकेनेत्युक्तम् स चौदारिकादिभेदात् पञ्चधेति मा मंस्थाः पञ्चविधेनापि। अपि त्वौदारिकवैक्रियाहारकेणेति। आह च—

**तिविहम्मि सरीरम्मी जीवपएसा हवंति जीवस्स।**
**जेहि उ गेण्हइ गहणं तो भासइ भासओ भासं ॥३७३॥ नि० ८॥**

**ओरालिवेउव्वियआहारओ गेण्हई मुयइ भासं।**
**सच्चं सच्चामोसं मोसं च असच्चमोसं च ॥३७४॥ नि० ९॥**

**सच्चा हिया सयामिह संतो मुणओ गुणा पयत्था वा।**
**तव्विवरीआ मोसा मीसा जा तदुभयसहावा ॥३७५॥**

**अणहिगया जा तीसुवि सद्दो च्चिय केवलो असच्चमुसा।**
**एया सभेयलक्खण सोदाहरणा जहा सुत्ते ॥३७६॥**

'**तिविहंमी**'त्यादि। त्रयो विधा यस्य तत्तथा तस्मिन्। शीर्यत इति 'शरीरं' तस्मिन्। जीवतीति 'जीव'स्तस्य 'प्रदेशा भवन्ती'ति। कस्येत्यत आह—'जीवस्या'त्मनः। ननु च षष्ठीद्वयश्रवणात् पुनरुक्तदोषः? तन्न, जीवस्य प्रदेशा

1...1 °मार्थं प्रत्येकस्य मान° P. 2 P drops च.

भवन्तीत्युच्यमाने इयं षष्ठी भेदे वर्तिष्यत इति व्यामोहनिवृत्त्यर्थं, जीवस्यात्मभूता भवन्तीति। पुनरप्याह—"भेदाभेदवर्त्तिनी च षष्ठी" ति **पाणिनीयाः।** ततश्चानेन निष्प्रदेशात्मवादासाधुत्वमाह। सति तस्मिन् करचरणोरुग्रीवाद्यवयवसंसर्गाभावः प्राप्नोति। तथाहि—पादतलसंयुक्तात्मप्रदेशस्य तालुसम्बन्ध्यात्मप्रदेशभेदोऽभेदो वेति वाच्यम्। भेदश्चेत् कथमप्रदेशः? अभेदश्चेदेकत्वतो न भेदोपलम्भः स्यात्। 'येर्गृह्णाति'—आदत्ते। 'तु'शब्दस्य विशेषणार्थत्वान्न सर्वदैव। 'ग्रहण'मिति। गृह्यत इति 'ग्रहणं' शब्दद्रव्यनिवहमित्यर्थः। 'तो' ततो गृहीत्वा 'भाषते' वक्ति। भाषक[1] इति 'भाशकः' क्रियाविष्ट इत्यर्थः। अनेन निष्क्रियात्मवादव्युदासमाह। सति तस्मिन् भाषणाभावप्रसंगः। तस्य तत्त्वादप्रच्यवमानत्वात् प्रच्युतौ च स्वात्महानेः। कि[2]मित्याह—भाष्यत इति भाषा तां 'भाषाम्'। आह—'तो भासइ भासतो' इत्यनेनैव गतार्थत्वान्नैतदुच्चारणं कर्त्तव्यमिति। तन्न भाष्यमाणैव भाषा, न प्राक् न पश्चात् इत्यस्यार्थस्य ज्ञापयितुमभिप्रेतत्वादिति गाथार्थः ॥३७२॥ निर्युक्तिगाथा ८॥

अथ किं तदित्याह 'ओरालिए'त्यादि। स्पष्टा ॥३७४॥ निर्युक्तिगाथा ९॥

सत्यादिकाया लक्षणमाह—'सच्चा' इत्यादि। सद्भ्यो हिता—आराधनी प्रत्यायनफला वेति सत्या। सन्तः क उच्यन्त इत्यत आह—'सन्तो मुनयो'—यतयः। तेषां हिता सत्या इहपरलोकाराधनीत्यर्थः। गुण वा—मूलोत्तरगुणाः। पदार्था वा—जीवादयः। 'तद्विपरीता तु मृषा'। 'मिश्रा तूभयस्वभावे'ति गाथार्थः ॥३७५॥

'अणहो'त्यादि। 'तिसृष्व'प्यपतिताऽनुभयस्वभावा। आसां भावार्थमङ्गीकृत्यातिदेशमाह—'एता'श्चतस्रोऽपि भाषाः 'सभेदलक्षणसोदाहरणा यथा सूत्रे' दशवैकालिके उक्तास्तथैव ज्ञातव्याः। तत्र भेदाः "जणवय संमद[3] ठवणे"-त्येवमादि वक्तव्यम्, यावद् "वोयड अव्वोयडा चेवे" ति गाथार्थः ॥३७६॥

भाषाधिकारस्यैवानुवर्त्तमानत्वादाह—द्वादशभ्यो योजनेभ्यः परतो न श्रूयते, द्रव्याणां मन्दपरिणामत्वादित्युक्तम्। अथ किं विषयपरतोऽपि द्रव्याणां गतिरस्ति। यथा च विषयाभ्यन्तरतो नैरन्तर्येण तद्वासनासामर्थ्यमस्ति तद्वत् किं परतोऽपीति। उच्यते, अस्ति केषांचिदालोकान्तात्। आह—यद्येवं—

**कईहिं समएहिं लोगो भासाए निरन्तरं तु होइ फुडो।**
**लोगस्स य कइभाए कइभाओ होइ भासाए ॥३७७॥ नि० १०॥**

**चउहिं समयेहिं लोगो भासाए निरंतरं तु होई फुडो।**
**लोगस्स य चरिमंते चरिमंतो होइ भासाए ॥३७८॥ नि० ११॥**

**कोई मंदपयत्तो निसिरइ सयलाइं सद्दव्वाइं।**
**अन्नो तिव्वपयत्तो सो मुंचइ भिंदिउं ताइं ॥३७९॥**

---

1 त P. 2 का P. 3 P has मुदि for मद.

गंतुमसंखेज्जाओ अवगाहणवग्गणा अभिन्नाइं ।
भिज्जंती धंसंति य संखिज्जे जोअणे गंतुं ॥३८०॥

भिन्नाइं सुहुमयाए अणंतगुणवड्ढिआइं लोगंतं ।
पावंति पूरयंति य भासाएँ निरंतरं लोगं ॥३८१॥

'कतिही'त्यादि । 'कतिभिः' कियत्संख्यैः । 'समयैः' परमनिकृष्टकालविशेषैः । 'लोक'श्चतुर्दशरज्ज्वात्मकः क्षेत्रलोको 'भाषया निरन्तरमेव भवति स्पृष्टो' व्याप्तः । तथा 'लोकस्य च'—अस्यैव 'कतिभागे कतिभागो भवति भाषाया' इति ॥३७७॥ निर्युक्तिगाथा १०॥

अत्रोच्यते—'चउही'त्यादि । पूर्वार्द्धं प्राग्वत् । नवरं 'तु'शब्दो न सर्वयैव, अपि तु कयाऽपि, यद्वक्ष्यति भाष्यकारः—"कोयी"त्येवमादि प्रपञ्चेनात्रेति, तथा 'लोकस्य च' क्षेत्रगणितमपेक्ष्य चरमान्ते' प्रान्तान्ते असंख्येयभागे 'चरमान्तः' प्रांतान्तोऽसंख्येयभागो 'भवति भाषाया' समस्तलोकव्यापिन्या इति गाथोद्यार्थः ॥३७८॥ निर्युक्तिगाथा ११॥

'कोयी'त्यादि । कश्चिदुरःक्षतोपेतत्वेन 'मन्दप्रयत्नो निःसृजति सकलानि'—अदलितानि 'शब्दद्रव्याणि' शब्दद्रव्यस्कन्धदलानि । 'अन्य'स्तु भाषकः 'तीव्रप्रयत्नो' निरुजकरणत्वात् 'सु' तु 'तानि मुञ्चति' प्रेरयति 'भित्त्वा' परमाणुतया कृत्वा ॥३७९॥

अत्र सूत्रम्—"जाइं भंते ! अभिण्णाइं णिसिरती" त्यादि सर्वमुच्चारणीयम् । "ताई"तु तानि किमत आह—'गंतु'मित्यादि । तानि 'अभिन्नानि' निसृष्टानि 'गत्वाऽसंख्येयाः खल्ववगाहनावर्गणा भिद्यन्ते' अनन्तशो भिदां प्रतिपद्यन्ते । 'ध्वंसं चापद्यन्ते', शब्दपरिणाममपि जहतीत्यर्थः । किं लोकान्तं यात्वा ? नेत्याह—'संख्येयानि योजनानि गत्वे'ति गाथार्थः ॥३८०॥

भिन्नेषु का वार्त्तेत्यत आह—'भिन्नइ'मित्यादि । 'भिन्नान्य'तिपटुताल्वोष्ठपुटयन्त्रकेण निर्दलितानि । 'सूक्ष्मतया'ऽतिप्रचुरतया'ऽनन्तगुणवर्द्धितानि' वासकत्वा'ल्लोकान्तं प्राप्नुव'न्त्याद्यसमय एव, पद्मु दिक्ष्विति वाक्यशेषः । किमेतावच्छक्तीन्येव ? नेत्याह—'पूरयन्ति च' व्याप्नुवन्ति च 'भाषया' पराघातवासनावासितसकललोकापन्नवाग्द्रव्यपटलैः । 'निरन्तरमि'ति क्रियाविशेषणम् । इत इतः पूरणात् । कं ? 'लोकं' क्षेत्रलोकमिति । एतच्च सामन्येनोक्तं समयानियमनादिति गाथार्थः ॥३८१॥

साम्प्रतं यदुक्तम्—"चउहि समएही" इत्यादि; तत्रानादेशं पूर्वपक्षीकुर्वन्नाह—

जइणसमुग्घायगइएँ केई भासंति चउहि समएहिं ।
पूरइ सयलो लोगो अण्णे उण तीहि समएहिं ॥३८२॥

पढमसमए च्चिय जओ मुक्काइं जंति छद्दिसि ताइं ।
बितियसमयम्मि ते च्चिय छद्दंडा होंति छम्मंथा ॥३८३॥

मंथंतरेहिं तइए समये पुन्नेहिं पूरिओ लोगो ।
चउहिं समएहिं पूरइ लोगंते भासमाणस्स ।।३८४।।

दिसिविद्वियस्स पढमोऽतिगमे ते चेव सेसया तिन्नि ।
विदिसिट्ठियस्स समया पंचातिगमम्मि जं दोण्णि ।।३८५।।

चउसमयमज्झगहणे तिपंचगहणं तुलाइमज्झस्स ।
जह गहणे पज्जंतग्गहणं चित्ता य सुत्तगई ।।३८६।।
कत्थइ देसग्गहणं कत्थइ घेप्पंति निरवसेसाइं ।
उवकमकमजुत्ताइं कारणवसओ निउत्ताइं ।।३८७।।

चउसमयविग्गहे सति महल्लबंधंमि तिसमओ जह वा ।
मोत्तुं तिपंचसमये तह चउसमओ इह निवद्धो ।।३८८।।
होइ असंखेज्जइमे भागे लोगस्स पढमविइएसु ।
भासा असंखभागो भयणा सेसेसु समयेसु ।।३८९।।
आपूरियम्मि लोगे दोण्हवि लोगस्स तह य भासाए ।
चरिमन्ते चरिमन्तो चरिमे समयम्मि सव्वत्थ ।।३९०।।
न समुग्घायगईए मीसयसवणं मयं च दंडम्मि ।
जइ तोऽवि तीहिं पूरइ समयहिं जओ पराघाओ ।।३९१।।
जइणे न पराघाओ स जीवजोगो य तेण चउसमओ ।
हेऊ होज्जाहि तहिं इच्छा कम्मं सहावो वा ।।३९२।।
खंधोऽवि वीससाए न पराघाओ य तेण चउसमओ ।
अह होज्ज पराघाओ हविज्ज तो सोऽवि तिसमइओ ।।३९३।।
एगदिसमाइसमए दंडं काऊण चउहिं पूरेइ ।
अन्ने भणंति तंपि य नागमजुत्तिक्खमं होइ ।।३९४।।

'जइणे'त्यादि । 'जैनसमुद्घातगत्या केचन'[1] भाषन्ते चतुर्भिः समयैः सकललोकः पूर्यते' । "प्रथमे समये दंड"मित्येवमाद्यनयेत्यभिप्रायः । तत्रैतत् स्याद्—भाषन्तां को निवारयत इति ? उच्यते सिद्धान्तः । तथाहि—एषामेवंवादिनामूर्ध्वाधोदिग्द्वये दण्डमात्रगमनाच्चतसृषु दिक्षु मिश्रशब्दश्रवणमादिसमये न प्राप्नोति उक्तं चैतदविशेषेण निर्युक्तिकृता—"भासासमसेढीओ सद्दं जं सुणइ मीसयं सुणइ" । अथ सामान्योक्तित एव व्याख्यानतोऽर्थप्रतिपत्तिर्दण्ड एव मिश्रशब्दश्रवणं, न शेषदिक्ष्विति । नन्वेवमपि त्रिभिरापूर्यत इति स्यात्, प्रथमदण्डसमयानन्तरं द्वितीयसमय एव पराघातसामर्थ्याच्चतसृषु दिक्षु मन्थानसिद्धितस्तृतीयसमये[2]ऽपान्तरालपूरणात् । नन्वक्षिणी निमील्यालोच्यतामेतदिति । तत्रैतत्स्यात्—जैनसमुद्घातगत्योक्तमतो नायं दोषः । दोषश्चेदत्रापि त्रिभिरापूरणं प्रसजति किल प्रथमसमये

1 नो P. 2 P adds एव.

दण्डमात्रगमनात् । तन्न, सिद्धान्तापरिज्ञानात् । तथाहि—जैनसमुद्घाते स्वरूपेणापूरणादपराघातसामर्थ्यान्न द्वितीयसमये मन्थानसिद्धिर्येन भवत इवात्र समयत्रयापूरणं भवेत् । "दण्डं प्रथमे समये कपाटमथ चोत्तरे तथा समये । मन्थानमथ तृतीये सकर्मकजीवव्यापारत्वादि"ति वचनात् । भाषायां तु द्वितीयसमय एव मन्थानोऽनुश्रेणीगमनाच्चतुर्दिशं पराघात द्रव्यान्तरवासकत्वाच्च । अचित्तमहास्कन्धः कस्माज्जैनसमुद्घातवच्चतुर्भिरापूरयतीति चेत् । उच्यते, अचिन्त्यत्वाद्विश्रसापरिणामस्य पराघाताभावात् क्रमेण परिणामित्वादिति गाथाऽर्द्धार्थः । साम्प्रतं स्थितपक्षवादिमतमाह—'पुरतो'त्यादि गाथापश्चार्द्ध । 'पूर्यते' व्याप्यते 'सकलः' सम्पूर्णो 'लोकः' चतुर्दशरज्जुबाहल्यः । 'अन्ये पुन'रभिदधति 'त्रिभिः समयै'रिति गाथार्द्धार्थः ।।३८२।।

किं वाङ्मात्रेण ? नेत्याह 'पढमे'त्यादि । इहलोकमध्यस्थित'वक्तुर्यतः 'प्रथम समय एव मुक्तानि तान्योलोकान्तात् 'पट्सु दिक्षु यान्ति' जीवसूक्ष्मपुद्गलानुश्रेणीगमनात् । ततः किमित्यत आह—'द्वितीयसमय त एव षड् दण्डाः षट् मन्थानो भवन्ति', चतुर्दिशमेकैकशोऽनुश्रेण्या छत्वरीभवन्ती'ति वाक्य शेषः । इह चान्योऽन्यच्छत्वरानुगमोऽपि न विरुध्यते सूक्ष्मत्वादिति गाथार्थः ।।३८३।।

ततोऽपि किमित्यत आह—'मंथ'मित्यादि पूर्वार्धार्थः । साम्प्रतं सूत्रकाराभिप्रायेणाह—'चतुर्भिः समयै'र्लोकः 'पूर्यते लोकान्ते भापमाणस्य' । कथं ? नाड्या बहिश्चतसृणां दिशामन्यतरस्यां दिशि ब्रुवतः प्रथमसमयेऽन्तर्नाडीमनुप्रविशन्ति त्रयोऽन्ये प्राग्वद् दण्डादिक्रमेण । अयमत्राभिप्रायः—"सयंभुरमण पच्छिमपेरंतठिओ भासओ पढमसमए दंडं निसिरइ । सो य आयामओ रज्जूबाहल्लेण चत्तारि अंगुलाणि तिरश्चीनमलोकस्खलित इति कृत्वेति भावनीयम् । ततो वितियसमये ताओ दंडाओ सव्वओ पराघायसामत्थेण उड्ढाहो चोद्दसरज्जूसितं सव्वओ रज्जुवित्थरं चउरंगुलबाहल्लं छप्परं पसरइ णाडिमज्झे, पूर्वापरतिरश्चीनमित्यर्थः । इओऽवि तिरियं पराघातओ चेव दाहिणुत्तरतिरिच्छयं, मज्झभागं पडुच्च रज्जुमेत्तविच्छिणं वट्टं छप्परं पसरइ, वज्रमध्यत्वाल्लोकस्य । ततो तइए नाडिमज्झतिरिच्छट्ठियछप्परातो सव्वओ तदणुसेढीए दाहिणुत्तरपुव्वावरेण सयलं नाडिं भरेमाणं छप्परं पसरइ । एतदुक्तं भवति लोकस्य ब्रह्मलोकमध्ये चउद्दिसि दुरज्जूओ मंथो । अहोवि चउद्दिसि तिरज्जुओ मंथो । शेषे तु प्रदेशहान्या स इति । चतुर्थसमये त्वेतदपान्तरालपूरणात् सकललोकव्याप्तिरिति ।।३८४।।

आह च—'दिसी'त्यादि । गतार्थं पूर्वार्द्धम् । अन्याचार्याभिप्रायमेवाह—'विदिसिट्ठियस्से'त्यादि । विदिग्व्यवस्थितस्य जल्पतः 'समयाः पञ्च' भवन्ति, लोकापूरणमङ्गीकृत्य । किं कारणमित्याह—'अइगमंमि' नाडीप्रवेशे 'यद्'—यस्माद् 'द्वौ' समयौ गच्छतोऽनुश्रेणिगमनादिति गाथार्थः ।।३८५।।

1 P adds स्य.    2 न्त इ P.

यद्येवं किमनेकविकल्पसम्भवे सति सूत्रकारेण चतुः समयग्रहणमेवा[1]कारि ? उच्यते—'**चउ**' इत्यादि । चतुर्णां समयानां समाहार'श्चतुःसमयम्' । चतुःसमयं च तन्मध्यं च त्रिपञ्चसमयापेक्षयेति 'चतुःसमयमध्यं', तस्य 'ग्रहणं' तस्मिन् सति । किमत आह—त्रिपञ्चग्रहणं कृतमेव द्रष्टव्यमिति वाक्यशेषः । दृष्टान्तमाह—'**जहा तुलामज्झस्स गहणे आइपज्जंतगहणं**' । अपि च 'चित्रा गति'र्भगवतः 'सूत्रस्य' लक्ष्यते ॥३८६॥

तथाहि—'**कत्थई**'त्यादि । 'क्वचि'त्प्रदेशे 'देशग्रहणं' यथाऽत्रैव । 'क्वचित् गृह्यन्ते निरवशेषाणि' पक्ष'न्तराणि । 'उत्क्रमक्रमयुक्तानि कारणवशात्' मध्य-ग्रहणादिलक्षणात् । 'नियुक्तानि' वद्धानि सूत्राणि भवन्तीति तन्त्रनीतिरिति गाथार्थः ॥३८७॥

अत्रैव प्रदेशान्तरसंवादिनं दृष्टान्तमाह—'**चउ**' इत्यादि । 'यथा वा' **भगवत्यां** '**महल्लबंधम्मि**' महल्लबंधोद्देशके सर्वत्र 'चतुःसामयिके सति त्रिसमयः त्रिसा-मयिको विग्रहः' प्रतिपादितः, 'तहेहावि मोत्तुं तिपञ्चसमये चउसमयो' लोका-पूरणप्रकारो 'निवद्ध' इति को दोष इति गाथार्थः ॥३८८॥

अथ यदुक्तं "लोकस्य च कतिभागे कतिभागो भवति भाषाया" इत्येतद् व्याचिख्यासुराह—'**होई**'त्यादि । 'लोकस्य' चतुर्दशरज्जुवाहुल्यस्य 'भवति' सम्पद्यते 'असंख्येयतमे भागे' स्तोकविभागे 'क्षेत्रगणितेन'—क्षेत्रगणितमङ्गीकृत्ये[2]ति । अत आह—'भाषाया' अपि व्यापिन्या 'असंख्येयतम' एव 'भागः' । कदेत्यत आह—प्रथमद्वितीयसमययोः । भजना तु शेषसमयेषु । इयमत्र भावना—त्रिसामयिकव्याप्तौ प्रथयसमये । चतुःसमयव्याप्तौ तु[3] प्रथमद्वितीययोस्तृतीये तु सकलनाडी[4]भरणात् संख्येयभागे संख्येयभागः । पञ्चसामयिकव्याप्तौ तु प्रथमद्वितीयतृतीयेषु । '**होती**'त्यादि गाथाऽऽद्यपादत्रयानुवृत्तिरित्याद्यनिर्युक्तिगाथापश्चार्द्धार्थः ॥३८९॥

अथ द्वितीयनिर्युक्तिगाथापश्चाद[5]र्द्धार्थमाह—'**आपूरियंमी**'त्यादि । सुगमा । नवरं 'सर्वत्रे'ति सर्वपक्षान्तरेष्विति गाथार्द्धा[6]र्थः ॥३९०॥

तदिदानीमनादेशदूषणं साक्षादाह—'**ने**'त्यादि । न केवलि'समुद्घातभङ्ग्या' चतुःसमयापूरणं सैद्धान्तिकाः क्षन्तुमर्हन्ति । किमिति ? यतस्तत्र न प्रथमसमये छद्दिसिं 'मीसयसवणं' लब्भइ । उक्तं च **सूत्रकृता** व्याख्यानतोऽर्थप्रतिपत्तिः । '**मत्तं च दंडम्मिजइ**'त्ति । ननु 'तथापि त्रिभिरापूर्यत' इति स्यात् । किं कारणमित्याह—'यतो' द्वितीयसमय एव चतसृष्वपि दिक्षु 'पराघात'सामर्थ्यान्मिन्थानसिद्धिस्तदनन्तरं च व्याप्तेरिति गाथार्थः ॥३९१॥

---

1 P has म for मेवा.

2 त्य क इ P.

3 च P.

4 ङि P.

5 P drops द.

6 P drops र्द्धा.

ननु च यथा जिनसमुद्घातः पराघातेऽसत्यपि चतुःसामयिक एवमयमपीत्येतदाशङ्क्याह—'**जइणे**'त्यादि । 'जैनेपराघातो ना'स्ति, स्वरूपेणापूरणात् । येन कारणेनैवं 'तेन चउसमयो' सो होउ, 'स जीवजोगो य' त्ति । यतश्चासौ स[1] जीवयोगः'—सकर्मजीवव्यापारस्तेन चतुःसमयः क्रमवृत्तित्वात् । 'वे'त्यथवा । 'तत्र' जै[2]नसमुद्घाते चतुर्भिः समयैर्भवति । 'भवेद्हेतुः' कारण'मच्छा' । एवमेव तस्येच्छा स्याद्येनाद्यसमय ऊर्ध्वाधो दण्डमात्रमेव निः[3]सृजति । 'कर्म वा स्वभावो वे'ति । शब्दद्रव्याणां त्वनुश्रेणिगमनपराघातस्वभावमात्रादन्यो न हेतुरस्तीति गाथार्थः ।।३९२।।

अचित्तमहास्कन्धे कस्मात् प्रथमसमयानन्तरं कपाट'मित्यत आह—'**खंधोऽवी**'त्यादि ।प्राय उक्तार्थैवेति ।।३९३।।

अनादेशान्तरमेव पूर्वपक्षीकुर्वन्नाह—'**एगे**' इत्यादि । '**अन्ने भणंति आदिसमये**' प्रथमसमये '**एक्कदिक्कं दंडं** कृत्वा चतुर्भिः पूरयति' । एतदुक्तं भवति—उर्ध्वदिशा अतिरभसेन दडं करोति, द्वितीयसमये तु तत्र मन्थानमधोदिशा[4] च दण्डमतितरलत्वात् । तृतीये तदन्तरालपूरणमितरत्र च मन्थानम् । चतुर्थे तु तदन्तरालपूरणमिति । आह—साध्व्येवेयं कल्पनेति । तन्न, यतः '**तंपि य**' त्ति तदे[5]वं परिकल्पनं 'नागमक्षमं' क्वचिदश्रुतत्वेनानार्षत्वात् । नापि च 'युक्तिक्षमं' सर्वतोऽनुश्रेणिगमनभाजामेकतोदिक्कं गच्छतां युक्त्यभावात् । वक्तृमुखप्रेरणानुकूल्यं चेत् । तन्न, तेषामाकाशपटलस्थानां प्रेर्यमाणत्वात्, तत्र च षड्दिशमनुश्रेणिसद्भावात् । अपि चैवं वक्तुर्विश्रे[6]ण्यनुकूल्यत्वा[7]वस्थाने विश्रेणीगमनप्रसङ्गोऽपि स्यात् । तथा चतुःसमयानियमश्च पटहदिशब्दानां, वक्तृप्रयत्नाभावादिति गाथार्थः ।।३९४।।

[आभिनिबोधिकस्य पर्यायाः]

तदेवमाभिनिबोधिकं तत्त्वतो भेदतश्च चर्चितम् । इदानीं तु पर्यायतो नानादेशजविनेयजनानुग्रहार्थं चर्चयन्नाह सूत्रकारः—

**ईहा अपोह वीमंसा, मग्गणा य गवेसणा ।**
**सण्णा सई मई पण्णा, सव्वं आभिणिबोहियं ।।३९५।। नि० १२।।**

**होइ अपोहोऽवासो सई धिई सव्वमेव मइ पण्णा ।**
**ईहा सेसा सव्वं इदमाभिणिबोहियं जाण ।।३९६।।**

**मइ-पन्ना-भिणिबोहिय-बुद्धीओ होंति वयणपज्जाया ।**
**जा उग्गहाइसण्णा ते सव्वे अत्थपज्जाया ।।३९७।।**

1 P drops स. 2 जि P 3 नि P. 4 P adds मात्र. 5 रि P. 6 ण्ये P. 7 P has ता for त्वत्वा.

सव्वं वाऽभिणिबोहियमिहोग्गहाइवयणेण संगहियं ।
केवलमत्थविसेसं पइ भिन्ना उग्गहाईया ॥३९८॥

उग्गहणमोग्गहोत्ति य अविसिट्ठमवग्गहो तयं सव्वं ।
ईहा जं मइचेट्ठा मइवावारो तयं सव्वं ॥३९९॥

अवगमणमवाउत्ति य अत्थावगमो तयं हवइ सव्वं ।
धरणं च धारणत्ति य तं सव्वं धरणमत्थस्स ॥४००॥

'ईहे'त्यादि । ईहन'मीहा'—सदर्थधर्मालोचनम् । अपोहन'मपोहो' निर्णयः । 'विमर्शो'[1]ऽपायात् पूर्वमीहायाश्चोत्तरत्र शङ्खधर्मा घटन्त इति विमर्शः[2] । 'मार्गणा' त्वन्वयधर्मप्रार्थना । 'गवेषणा' हेमधर्मप्रार्थना । संज्ञानं 'संज्ञा' व्यञ्जनावग्रहो[3]त्तरकालभावी प्रत्ययः । 'स्मृति'स्तु स्मरणं प्रागुपलब्धप्रत्यभिज्ञानम् । मननं 'मतिः', कथञ्चिदर्थपरिच्छित्तावप्यपूर्वसूक्ष्मतरधर्मालोचनरूपा बुद्धिः । प्रज्ञानं 'प्रज्ञा'—विशिष्टतरक्षयोपशमाहितप्रभूतवस्तुगतयथावस्थितधर्मालोचनरूपा मतिरेवेत्यर्थः । एते विशेषाः । सामान्यमाह—'सर्वमे'तदा'भिनिबोधिकमि'ति गाथार्थः ॥३९५॥ निर्युक्तिगाथा १२॥

अत्र[4] यद्यदभिधीयते तदाह—'होई' इत्यादि । सुगमार्था । नवरं 'मतिप्रज्ञे सर्वमेव' मतिज्ञानम् । 'शेष'भेदास्त्'वीहा' । 'सर्व चैत'न्मतिज्ञानान्न भिद्यते, वचनार्थपर्यायित्वादिति ॥३९६॥

तथाहि—'**मती**'त्यादि । मत्यादिवचनचतुष्टयं 'वचनपर्यायाः' सम्पूर्णवस्तुवाचकत्वात् । 'यास्त्ववग्रहादिसंज्ञास्ते सर्वेऽर्थपर्यायाः' । अथवा सर्व एवाभिलापा वचनपर्याया इतरे त्वितरे सर्ववस्तूनामेवं मतावपीति गाथार्थः ॥३९७॥

'**सव्वं वे**'त्यादि । 'अथवेह'—अस्मिन् प्रस्तावे'**ऽवग्गहादिवयणेणं**'ति पृथक् पृथगवग्रहादीनामन्यतमेनापीति । '**सव्वं आभिणिबोहियं संगहियं**'ति समस्तं मतिज्ञानमाक्रोडितमित्यर्थः । कया चेत् । उच्यते—गुणसंज्ञयाऽन्वर्थसंज्ञया वचनव्युत्पत्त्येतियावत् । सा चेयम्—अवग्रहणमवग्रहः । तथाहि—सामान्यार्थावग्रहवचनेनेहापायधारणाः संगृहीताः, मतिचेष्टापायाविच्युतिरूपत्वात्, पङ्कजवचनेनेव नीलोत्पलोत्पलमृणालनालनालिककल्हारकमलादयः, सर्वत्रान्वर्थाविशेषात् ॥३९८॥

तथा चाह—'**उग्गहण**'मित्यादि । अयमत्र भावार्थः—'अवग्रहणमवग्रह इति' कृत्वा यथाऽसौ सामान्यस्य, तथेहादयोऽपि यस्य यावतश्चार्थस्य ततः '**अविसिट्ठं**'[5] सामान्येन '**तयं**' ईहादि '**सव्वमवग्गहो**'त्ति स्थितम् । एव'**मीहा**' द्वितीयो मतिभेदो 'यत्'—यस्मान्'मतिचेष्टा'रूपो वर्त्तते, 'अतो मतिव्यापारस्तद'वग्रहादि 'सर्व' वर्त्तते । सर्व तदीहा वर्त्तत इत्यभिप्राय इति गाथार्थः ॥३९९॥

---

1 र्शो P. 2 र्शः P. 3 हाद् P.
4 तो P. 5 P adds सर्व.

तथा—'अवगमण'मित्यादि। 'अवगमनमपायो येन' वर्त्ततेऽतो'ऽर्थावगमस्तत्सर्व'मवग्रहेहाधारणादि वर्त्तते। तथा 'धरणं धारणेति' कृत्वा। 'चौ'पूरणार्थो। अतस्तदवग्रहादि 'सर्व'धारणा। कुतः? तेषु यतो 'धरणमत्थस्स' अत्थित्ति वक्कसेसो। अतोऽभ्यधायि—"सव्वं वाऽऽभिणिवोहियमिधो[1]ग्गहादिवत[2]णेण संगहिय"मन्वर्थ संज्ञाऽविशेषात्। "केवलं"—नवरं "अत्थविसेसं पति"—अर्थविशेषापेक्षया रूढिमङ्गीकृत्य एकद्रव्योपदेशिनीं संज्ञामङ्गीकृत्येति यावत्। 'भिन्ना' नि[3]कृष्टमूर्त्तयो'ऽवग्रहादयो' भवन्ति, पङ्कजवदिति प्रथमगाथायाः पौर्वापर्यार्थः ॥४००॥

[द्रव्यादितो मतिविचारः]

यदुक्तं सूत्रकारेण—"तं समासओ चउव्विहं पण्णत्त"मित्येवमादि, अथैवमाह—

**तं पुण चउव्विहं नेयभेयओ तेण जं तदुवउत्तो।**
**आदेसेणं सव्वं दव्वाइ चउव्विहं मुणइ ॥४०१॥**

**आएसोत्ति पगारो ओहादेसेण सव्वदव्वाइं।**
**धम्मत्थिआइयाइं जाणइ न उ सव्वभेएणं ॥४०२॥**

**खेत्तं लोगालोगं कालं सव्वद्धमहव तिविहंति।**
**पंचोदइयाईए भावे जं नेयमेवइयं ॥४०२॥**

**आएसोत्ति व सुतं सुओवलद्धेसु तस्स मइनाणं।**
**पसरइ तब्भावणया विणावि सुत्ताणुसारेणं ॥४०४॥**

'तं पुणे'त्यादि। 'तत् पुन'राभिनिवोधिकज्ञानं 'चतुर्विधं' चतूरूपम्। किं स्वरूपतो? नेत्याह—'ज्ञेयभेदत' उपाधिभेदात्। किमित्यत आह—'तेन यद्'—यस्माद् 'उपयुक्तो'ऽर्पितान्तःकरणो मतिज्ञानी। 'सर्व' निरवशेषं द्रव्यादि। किंविशिष्टमित्याह—'चउव्विहं' चतुर्भेदम्। 'मुणति' जानीते। कथमित्याह—'आदेसेणं'ति गाथार्थः ॥४०१॥

कोऽयमादेशो नामेत्यत आह—'आदेस' इत्यादि। 'आदेश इति प्रकार' उच्यते। स चौघादेशो विशेषादेशश्च। तत्र 'ओहादेसेण' सामान्यादेशेन 'सर्वद्रव्याणि धर्मास्तिकायादीनि जानाति' अवबुध्यते। यथैवमेवंविशिष्टो धर्मास्तिकाय इत्येवमादि। द्वितीयप्रतिषेधमाह—'न पुनः सर्वभेदेन'। "न उ सव्वपज्जवेहिं"ति वचनात्। केवलिगम्यत्वादिति गाथार्थः ॥४०२॥

एवम्—'खेत्त'मित्यादि। स्वधिया भावनीयम्। किमित्येतावदेवेत्यत आह—'जं नेयं एवइयं'ति गाथार्थः ॥४०३॥

---

1 द्दो P. 2 च P. 3 निः P.

**'आदेसो त्ति व'** इत्यादि । अथवा 'आदेश इति **'सूत्रं'** तेन सूत्रादेशेनाभिणिवोहियनाणी सव्वदव्वाइं जाणइ, ण उ सव्वभेदेणं । आह—यदि सूत्रादेशेन कथमाभिनिवोधिकज्ञानेनेति । उच्यते, ननूक्तं प्राक् । किमुक्तमित्यत आह—**सुत्तोवलद्धेसु तस्स मतिणाणं'** क्रियाकलापादिषु 'प्रसरति, तद्भावनया विनापि सूत्रानुसारेणे'ति गाथार्थः ॥४०४॥

[सत्पदाद्यनुयोगद्वारैर्मतेर्निरूपणम्]

तदेवमिदं तत्त्वादिभिर्निरूप्येदानीं नवभिरनुयोगद्वारैरन्यथा निरूपयितुमाह—

**संतपयपरूवणया दव्वपमाणं च खित्त फुसणा य ।**
**कालो य अंतरं भाग भाव अप्पाबहुं चेव ॥४०५॥ नि० १३॥**
**संतंति विज्जमाणं एयस्स पयस्स जा परूवणया ।**
**गइयाइएसु वत्थुसु संतपयपरूवणा सा उ ॥४०६॥**
**जीवस्सव व जं संतं जम्हा तं तेहिं तेसु वा पयति ।**
**तो संतस्स पयाइं ताइं तेसुं परूवणया ॥४०७॥**
**गइ-इंदिए य काए जोए वेए कसाय-लेसासु ।**
**सम्मत्तनाणदंसणसंजयउवओगआहारे ॥४०८॥ नि० १४॥**
**भासगपरित्तपज्जत्तसुहुमसण्णी य भवियचरमे य ।**
**पुव्वपडिवन्नए वा पडिवज्जंते य मग्गयणया ॥४०९॥**
**एगिंदियजाईओ सम्मामिच्छो य जो य सव्वन्नू ।**
**अपरित्ता य अभव्वा अचरिमा य एए सया सुण्णा ॥४१०॥**
**वियला अविसुद्धलेसा मणपज्जवणाणिणो अणाहारा ।**
**असण्णी अणगारोवओगिणो पुव्वपडिवन्ना ॥४११॥**
**सेसा पुव्वपवण्णा नियमा पडिवज्जमाणया भइया ।**
**भयणा पुव्वपवण्णा अकसायावेयया होंति ॥४१२॥**

'संतपदे'त्यादि । तत्र प्रथमद्वारं 'संतपदपरूवणय'त्ति । सच्च तत्पदं च सत्पदं, तस्य प्ररूपणा सत्पदप्ररूपणा । तद्भावः 'सत्पदप्ररूपणता' । साऽस्य कर्त्तव्या । केषु ? गतिमाइ[1]एसु प्रतिद्वारेष्विति गम्यते[2] । यद्वा सद्विषयं पदमिति । शेषं प्राग्वत् । खरविषाणपदप्ररूपणाऽप्यस्तीति च 'सद्'ग्रहणम् । अथवा सन्ति च तानि पदानि च गत्यादीनि 'सत्पदानि' । तेष्वस्य प्ररूपणतेति 'सत्पदप्ररूपणता' । प्रथमं द्वारम् । तथा मतिज्ञानि'द्रव्यप्रमाणं' चाख्येयम् । कियन्त्यस्मिन् त्रैलोक्ये तानि, कियन्तो वैकसमये मतिज्ञानप्रतिपत्तार इति । 'चः' समुच्चयार्थः । **'खेत्त'**-

1 ई P. 2 P has वक्ष्यति for गम्यते.

मिति कियति क्षेत्र इदं सम्भवति ? तत्र वक्ष्यति—"सत्तोवरिं अहे पञ्च"। किमित्यधः पञ्चेति चेत्। सम्यग्दृष्टेः सप्तमीतो गमनागमनप्रतिषेधात्। **'फुसणा य'** कियत् क्षेत्रं मतिज्ञानिनः स्पृशन्ति ? क्षेत्रस्पर्शनयोः कः प्रतिविशेष इति चेत्। उच्यते, एकसप्तप्रदेशः। चः प्राग्वत्। 'कालश्च' स्थित्यादिः। तथा 'अन्तरं' प्रतिपत्त्यादौ। तथा 'भागो' मतिज्ञानिनः शेषज्ञानिनां कतिभागे वर्तन्त इति। तथा 'भावः' कस्मिन् भाव एते वर्त्तन्ते इति। तथा'ऽल्पबहुत्वं चा'ख्येयं मतिज्ञानिनाम्। भागद्वारादेवायमर्थो लब्ध इति चेत्। तन्न, इह स्वस्थान एव पूर्वप्रतिपन्नप्रतिपद्यमानापेक्षयाऽल्प बहुत्वचिन्ताधिकारादिति [1]गाथार्थः ॥४०५॥ निर्युक्तिगाथा १३॥

साम्प्रतमाद्यद्वारव्याचिख्यासयेदमाह—**'संतती'**त्यादि। गतार्था ॥४०६॥

**'जीवस्स वे'**त्यादि। अथवा 'जीवस्य' निर्दिष्टस्वरूपस्य 'यत्सदा'भिनिबोधिकं नामेत्यभिप्रायः : 'तद' यस्मा'त्तै'र्गत्यादिभिः करणभूतै'स्तेषु' वाऽधिकरणभूतेषु **'पदति'** त्ति पद्यते गम्यतेऽनुगमम्यत इति यावत्। ततः किमित्यत आह— **'तो'** त्ति तस्मात् **'संतस्य'** सतः 'पदानि तानि' सत्पदानि, 'तेपु प्ररूपणता' सत्पद प्ररूपणतेति ॥४०७॥

आह च—**'गती'**त्यादि। **'भासगे'**त्यादि। तत्राभिनिबोधिकं किमस्ति नास्तीति। उच्यते, अस्ति। यद्यस्ति क्वास्ति ? **'गति'**त्ति गतौ। सा चतुर्विधा नारकतिर्यग्नरामरभेदात्। एतस्याभिनिबोधिकस्य पूर्वप्रतिपन्ना विद्यन्ते, तैरस्या अशून्यत्वाभिधानात्। "आभिनिबोहिय नाणी णं भंते ! नेरइए" एवमादिवचनात्। प्रतिपद्यमानकास्त्वङ्गीकृत्यानियमो विवक्षितकाले व्यभिचारादपि। कोऽनयोविशेषः इति चेत्। उच्यते, अत्र व्यवहारनिश्चयौ। तत्र व्यवहारस्य प्रतिपद्यमानकोऽन्तर्मुहूर्त्तम्। इतरस्य त्वेकं समयं, शेषसमयेषु तु[2] पूर्वप्रतिपन्न एवेति। **'इंदिए य'**त्ति इन्द्रियाण्यधिकृत्येदं मृग्यते। तान्येकादीनि पञ्चान्तानि। तत्रास्य पञ्चेन्द्रिया नियमतः पूर्वप्रतिपन्नाः सन्त्येव। इतरे तु भाज्याः। नारका इवेति भावना। चतुस्त्रिद्वीन्द्रियास्तु पूर्वप्रतिपन्नाः सम्भवन्ति, न तु प्रतिपद्यमानकाः, श्रवणाभावात्। एकेन्द्रियास्तूभयप्रतिषिद्धाः एतेषां गत्यन्तर्भावेऽपि भेदेनोपन्यास इन्द्रियविशेषोपाधिभेदात्। एवं सर्वत्र भावनीयम्। **'काये'** ति पृथिवीकायो यावत् त्रसकायः। त्रसकाये पञ्चेन्द्रियेष्विव। शेषकायेष्वेकेन्द्रियोष्विवेति। 'योगा'—मनोवाक्कायलक्षणाः। तत्र समुदितेषु पञ्चेन्द्रियेष्विव। केवलकायोगे त्वेकेन्द्रिया इवाऽन्यत्र कर्मणात्। 'वेदाः'—स्त्रीपुंनपुंसकाख्याः, समुदितेषु पञ्चेन्द्रिया इव। 'कषायाः' क्रोधादयः। पुनरेकैकश्चतुर्धा—अनन्तानुबन्ध्यप्रत्याख्याननामधेयप्रत्याख्यानावरणसञ्ज्वलनभेदात्। आद्येष्वेकेन्द्रिया इव, संक्लिष्टपरिणामत्वात्। द्वादशसु पञ्चेन्द्रिया इव। **'लेस्सा य'** त्ति षड् लेश्याः कृष्णाद्याः। तत्रोपरितनीषु पञ्चेन्द्रिया इव, आद्यासु विकलेन्द्रिया इव। **'सम्मत्त'**त्ति सम्यग्दृष्टिः। किं पूर्व प्रतिपन्नः प्रतिपद्य-

1 P adds द्वार. 2 P drops तु.

मानको वेति । अत्र व्यवहारनिश्चयौ । तत्र व्यहहारस्य सम्यग्दृष्टिः पूर्वप्रतिपन्नो, न प्रतिपद्यमानकः, सम्यक्त्वमतिश्रुतानां युगपल्लाभात्[1], आभिनिवोधिकप्रतिपत्त्यनवस्थानाच्च । इतरस्य पूर्वप्रतिपन्नः प्रतिपद्यमानकश्च सम्यग्दृष्टिः, आभिनिवोधिकलाभस्य सम्यग्दर्शनसहचरितत्वात् सम्यक्त्व[2]प्रतिपत्तिसमये च सम्यक् प्रत्तिपत्तेः, क्रियाकालनिष्ठाकालयोर भेदात् । भेदे च क्रियाभावाविशेषात् पूर्ववद्वस्तुतो[3]ऽनुत्पत्तिप्रसङ्गात् । न चेत्थ प्रतिपत्त्यनवस्थेति । अनन्तरं पूर्वप्रतिपन्नकत्वसद्भावात् । '**नाणे**' त्ति नाणं पंचविहं मतिश्रुतावधिमनःपर्यायकेवलभेदात् । अत्राप्याह व्यवहारो मतिश्रुतावधिमनःपर्यायज्ञानिनः पूर्वप्रतिपन्ना एव, नतु प्रतिपद्यमानकाः, मत्यादिलाभस्य सम्यग्दर्शनसहायत्वात् । केवली तूभयप्रतिषिद्धस्तस्य क्षायोपशमिकभावानाधारत्वात् । मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानवन्तस्तु विवक्षितकाले प्रतिपद्यमानका भवन्ति तत्प्रतिपत्तेः । नत्वितरे, तेषामज्ञानित्वात् । निश्चयनयमतेन तु मतिश्रुतावधिज्ञानिनः पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमाना अपि सर्वतो[4]भिमुख्ये सति ज्ञानाभ्युपगमात् सम्यग्दर्शनसहचरितत्वात् मत्यादिलाभस्य क्रियाकालनिष्ठाकालयोरभेदात् । मनःपर्यायज्ञानिनस्तु पूर्वप्रतिपन्ना एव, न प्रतिपद्यमानकास्तस्य भावयतेरेवोत्पत्तेः । केवलिनां तूभयाभाव इति । मत्याद्यज्ञानवन्तस्तु न पूर्वप्रतिपन्ना नापि प्रतिपद्यमानकाः, प्रतिपत्तिक्रियाकाले मत्याद्यज्ञानाभावात् क्रियाकालनिष्ठाकालयोश्चाभेदात्, अज्ञानभावे च प्रतिपत्तिक्रियाऽभावादिति । '**दसंणं**' त्ति । तच्चतुर्द्धा चक्षुरचक्षुरवधिकेवलभेदात् । तत्र ये चक्षुर्दर्शनिनोऽचक्षुर्दर्शनिनश्च ते दर्शनलब्धिमङ्गीकृत्य पूर्वप्रतिपन्नाः सन्त्येव । इतरे तु भाज्या इत्यविरुद्धमेतत् । चक्षुर्दर्शनाचक्षुर्दर्शनोपयोगं त्वङ्गीकृत्य पूर्वप्रतिपन्ना एव सन्ति, नेतरे, विरुद्धत्वात् । विरुद्धत्वं चास्यानाकारोपयोगत्वाद्, अनाकारोपयोगे च लब्द्ध्युत्पत्ति प्रतिषेधात् । उक्तं च—"सव्वाओ लद्धीओ सागारोवयोगोवउत्तस्स उप्पज्जंति" । वक्ष्यते चोपयोगद्वार एतदिति । अवधिदर्शनिनस्तु प्राक्प्रतिपन्ना एव, केवलिनस्तूभयविकलाः । '**संजय**'त्ति संयतः प्राक्प्रतिपन्न एव । '**उवओग**'त्ति स च साकारोऽनाकारश्च । साकारोपयोगिनः पूर्वप्रतिपन्ना नियमतः सन्त्येव । इतरे तु भाज्याः । अनाकारोपयोगिनस्तु प्राक्प्रतिपन्ना एव । '**आहार**'त्ति । आहारकाः पूर्वप्रतिपन्ना नियमतः सन्ति । इतरे भाज्याः । अनाहारकास्त्वपान्तरालगतौ पूर्वप्रतिपन्नाः सम्भवन्ति, न त्वितरे । '**भासग**'त्ति । भाषालब्धिमंतो 'भाषका'स्ते भाषमाणा अभाषमाणा वा पूर्वप्रतिपन्ना नियमतः सन्ति । इतरे भाज्याः । तल्लब्धिशून्याश्चोभयविकलाः । **परित्त**' इति परीत्ताः—प्रत्येकशरीरिणस्ते प्राक्प्रतिपन्ना नियमतः सन्ति । इतरे तु भाज्याः । साधारणास्तूभयविकलाः । '**पज्जत्त**'त्ति । ये षड्भिः पर्याप्तिभिः पर्याप्तास्ते नियमतः पूर्वप्रतिपन्नाः । इतरे

---

1 P has लाभभावात् for लाभात्.

2 P has क् for क्त्व.

3 नो P. 4 ग्रा P.

तु भाज्याः । अपर्याप्तकास्तु षट्पर्याप्त्यपेक्षया पूर्वप्रतिपन्नाः सम्भवन्ति, न त्वितरे । 'सुहुम'त्ति । सूक्ष्मा उभयविकलाः । बादराः पूर्वप्रतिपन्नाः सन्ति नियमात् । इतरे तु भाज्याः । 'सण्णि'त्ति । तत्रेह दीर्घकालिकोपदेशेन संज्ञिनोऽभिगृह्यन्ते । ते च बादरवत् । असंज्ञिनस्तु प्राक्प्रतिपन्नाः सम्भवन्ति सास्वादनाः, न त्वितरे । 'भव[1]'त्ति भव सिद्धिकाः सामान्याः । एते संज्ञिन इव । अभवसिद्धिका उभयशून्या । 'चरमे'त्ति । चरमो भवो भविष्यति येषां ते अभेदोपचाराच्चरमाः । ते पूर्वप्रतिपन्ना नियमतः । इतरे भाज्याः । अचरमा उभयविकलाः । उत्तरार्द्धं व्याख्यातमेवेति कृता सत्पदप्ररूपणेति । द्वारम् ।

अधुनाऽऽभिनिबोधिकजीव"द्रव्यप्रमाणं" निरूप्यते—तत्र विवक्षितकाले प्रतिपत्तिमङ्गीकृत्य—सिय सन्ति सिय ण, जइ संति जहन्नेणं एक्को वा दो वा तिन्नि वा, उक्कोसेणं खेतपलिओवमासंखेज्जतिभागो । एवं पुव्वपडिवण्णयाइं जहन्नेणं उक्कोसेणं सो चेव समहितो दारं । "खेत्तं"ति नानाजीवानङ्गीकृत्य सर्व एव मतिज्ञानिनो लोकासंख्येयभागवृत्तयः, एकजीवतु[2]लिकागत्योर्ध्वमनुत्तरसुरेषु गच्छन्नागच्छन् वा सप्तचतुर्दशभागवृत्तिः, अधस्तु षष्ठपृथिव्यामुत्पद्यमान उद्वर्त्तमानो वा पञ्चसु सप्तभागेष्विति, सम्यग्दृष्टेरधः सप्तम्युपपातोद्वर्त्तनाऽयोगात्, परित्यक्तेनोत्पत्त्युद्वर्त्तनात् । "फुसणा य" यत्रावगाढस्तत् क्षेत्रं, स्पर्शना तु बहिरपि परमाणोरिव । "कालोय"त्ति तत्रोपयोगमङ्गीकृत्य एकस्यानेकेषां चान्तर्मुहूर्त्तं कालो भवति जघन्यत उत्कृष्टतश्चेति । लब्धि त्वङ्गीकृत्यैकस्य जीवस्य[3] जघन्येनान्तर्मुहूर्त्तं "उक्कोसेणं छावट्ठिसागरा विसेसाहिया दोवारे विजयादिसु गतस्सऽधवा तिण्णऽच्चुए" इत्येवमादि । तत उर्ध्वमप्रच्युतेनैवापवर्गः । नानात्वे[4]त्वङ्गीकृत्य सर्वकालमेवास्ति, आभिनिबोधिकाधाराऽशून्यत्वाल्लोकस्य । "अन्तरं"ति एकजीवापेक्षयाऽन्तरं जघन्यतोऽन्तर्मुहूर्त्तं, लब्ध्वेदं संत्यज्य भूयोऽपि प्रापणात्, क्षयोपशमवैचित्र्यात्, उत्कृष्टतस्तूपार्धपुद्गलपरावर्त्तः, कस्यचिदाशातनादिबहुलत्वात् । उक्तं च—"तित्थयरपवयणसुय"मित्यादि । नानापेक्षया त्वन्तरालाभाव इति । "भाग" इति मतिज्ञानिनः शेषज्ञानिनामज्ञानिनां चानन्तभागे वर्त्तन्त इति । "भाव" त्ति[5], मतिज्ञानिनः क्षायोपशमिके भावे । "अप्पाबहुं चेव"त्ति । इह ह्याभिनिबोधिकज्ञानप्रतिपद्यमानपूर्वप्रतिपन्नकापेक्षयाऽल्पबहुत्वविभागोऽयमित्यतः सद्भावे सति सर्वस्तोकाः प्रतिपद्यमानकाः । इतरे तु जघन्यपदिनस्तेभ्योऽसंख्येयगुणाः । उत्कृष्टपदिनस्तु विशेषाधिका इत्यवयवार्थः ॥४०८-४०९ ॥ निर्युक्तिगाथा १४-१५ ।

साम्प्रतं येषु स्थानेषु न सन्ति तान्युपोद्धरन्नाह—'एगिंदिये'त्यादि । एकेन्द्रियद्वारे 'एकेन्द्रियजातयः' कायद्वारे पृथिव्यादयः, तथा **'सम्मामिच्छो य जो य सव्वण्णु'** त्ति गतौ सिद्ध इन्द्रियद्वारेऽतीन्द्रियः कायादिद्वारेष्वकायोऽयोगो-

1 व्व P. 2 त्वि P. 3 P drops जीवस्य,
4 जीवान् P. 5 P adds इ.

ऽलेश्यः केवलज्ञानी केवलदर्शनी नोसंयतो नोपरीत्तो नोपर्याप्तको नोसूक्ष्मो नोसंज्ञी नोभव्यो, य'श्चापरीत्तोऽभव्योऽचरमश्चे'ति। 'एते' एकेन्द्रियादयः 'सदा' सर्वदा 'शून्या' अनेनेति गाथार्थः ॥४१०॥

'वियला' इत्यादि। गतार्था। नवरमनाकारोपयोगिनो न प्रतिपद्यमानकाः, अस्य लब्धित्वात् ॥४११॥

'सेसा' इत्यादि। 'शेषा' उक्तव्यतिरेकिणो नारकादयो गत्यादिष्विति सामर्थ्याद् गम्यते। 'पूर्वप्रतिपन्ना नियमतः' सन्त्येव। 'प्रतिपद्यमानकास्तु भाज्याः'। 'भयणे'त्यादि पच्छद्धं। अस्यायमर्थः—'अकषाया अवेदका' ओघिकाः 'पूर्वप्रतिपन्नाः' खल्वस्य भवन्ति। कथम्? 'भजनया'। एतदुक्तं भवति—उपशान्तक्षीणवीतरागौ प्राक्प्रतिपन्नौ न केवलतीति भजनेति गाथार्थः ॥४१२॥

[सम्यग्ज्ञाने व्यवहारनिश्चयनयौ]

यदुक्तं—"सम्मत्तनाणदंसणो"त्येवमादि, अत्र नयविचारः। तौ च द्वौ, व्यवहारनिश्चयौ। तत्र—

सम्मत्तनाणरहियस्स नाणमुप्पज्जइत्ति ववहारो।
नेच्छइयनओ भासइ उप्पज्जइ तेहिं सहिअस्स ॥४१३॥

ववहारमयं जायं न जायए भावओ कयघडो व्व।
अह चे कयंपि कज्जइ कज्जउ निच्चं न य समत्ती ॥४१४॥

किरियावेफल्लं चिय पुव्वमभूयं च दीसए होंतं।
दीसइ दीहो य जओ किरियाकालो घडाईणं ॥४१५॥

नारंभे च्चिय दीसइ न सिवादद्धाए दीसइ तदंते।
इय न सवणाइकाले नाणं जुत्तं तदंतम्मि ॥४१६॥

नेच्छइओ नाजायं जायअभावत्तओ खपुप्फं व।
अह च अजायं जायइ जायउ तो खरविसाणंपि ॥४१७॥

निच्चकिरियाइदोसा नणु तुल्ला असइ कट्ठतरगा वा।
पुव्वमभूयं च न ते दीसइ किं खरविसाणंपि ॥४१८॥

पइसमउप्पण्णाणं परोप्परविलक्खणाण सुबहूणं।
दीहो किरियाकालो जइ दीसइ किं त्थ कुंभस्स ॥४१९॥

अण्णारंभे अण्णं कह दीसइ जह घडो पडारंभे।
सिवकादओ न घडओ किह दीसइ सो तदद्धाए ॥४२०॥

---

1 P adds इमे.

अत्थि च्चिय आरद्धो जइ दीसइ तम्मि चेव को दोसो ।
अकयं व संपइ गए किह कीरइ किह व एसम्मि ॥२२१॥

पइसमयकज्जकोडीनिरविक्खो घडगयाहिलासोऽसि ।
पइसमयकज्जकालं थूलमइ ! घडम्मि लाएसि ॥४४२॥

को चरिमसमयनियमो पढमे च्चिय तो न कीरए कज्जं ।
नाकारणंति कज्जं तं चेवं तम्मि से समए ॥४२३॥

उप्पाएऽवि न नाणं जइ तो सो कस्स होइ उप्पाओ ।
तम्मि य जइ अण्णाणं तो नाणं कम्मि कालम्मि ॥४२४॥

को व सवणाइकालो उप्पाओ जम्मि होज्ज से नाणं ।
नाणं च तदुप्पाओ य दोऽवि चरिमम्मि समयम्मि ॥४२५॥

'सम्मत्ते'त्यादि । सम्यक्त्वं च ज्ञानं च सम्यक्त्वज्ञाने ताभ्यां 'रहितः' शून्य इति 'सम्यक्त्वज्ञानरहितो', मिथ्यादृष्टिरित्यर्थः । तस्य 'ज्ञानमुत्पद्यते' ज्ञानं प्रसूयते 'इति'—एवं 'व्यवहारो' नयः प्रतिपद्यते, असत्यकार्यवादितया मिथ्यादृष्टिप्रतिपत्त्यभ्युपगमात् क्रियाकालनिष्ठाकालयोर्भेदात् । इतरं प्रति का वार्त्तेत्याह—'नैश्चयिकनयो भाषते'—'उत्पद्यते' प्रसूयते ज्ञानम् । किंविशिष्टस्येत्यत आह—'ताभ्यां' सम्यक्त्वज्ञानाभ्यां 'सहितस्य' युक्तस्य, सम्यग्दृष्टेरित्यर्थः । सत्कार्यवादितया सम्यग्दृष्टिप्रतिपत्त्यभ्युपगमात् क्रियाकालनिष्ठाकालयोरभेदादिति समुदायार्थः ॥४१३॥

अवयवार्थमाह—'ववहारे'त्यादि । व्यवहारनयमतमिदं यदुत 'जातं' ति । 'जातं'—भूतं कृतमुत्पन्नं 'न जायते', नोत्पद्यत इत्यर्थः । एषा प्रतिज्ञा । हेतुमाह—'भावओ'त्ति विद्यमानत्वात् । दृष्टान्तमाह—'कृतघटवत्' ।१॥ व्यतिरेकेण त्वकृतघट उदाहरणम् । विपक्षे बाधामाह—'अध चे'त्ति । 'अथ चेत्कृतमपि क्रियते'—जातमपि जन्यते, ततः 'कज्जउ निच्चं' जन्यतां सदाकालम् । प्रयोगः—विवक्षितसमये तत्क्रियतां जातत्वात् पाश्चात्यसमयवत् । ततश्च नित्यक्रियाप्रसङ्गः ।२॥ अत एवाह—'ण च सम्मत्ती' । नैव चैवं कार्यपरिसमाप्तिः, तस्य निष्पन्नाभ्युपगमात्, निष्पन्नस्य च भूयोऽपि क्रियमाणत्वात्, 'कयं पि कीरइ' इत्यभ्युपगमात् ।३॥ अतः सेयमाभिनिबोधिकप्रतिपत्त्यनवस्थेति गाथार्थः ॥४१४॥

अपि च—एवं चतुर्थश्चायं दोषः—'किरिये'त्यादि । यदि हि कृतमपि क्रियते ततो घट उत्पाद्ये 'क्रियाया'श्चक्रभ्रमणरूपाया 'वैक'ल्यं' स्यात्, पूर्वपूर्वव्यापारस्याकिञ्चित्करत्वात् ।४॥ अपि च—एवमध्यक्षविरोधदोषश्च पञ्चमः । कुत इत्याह—यस्मात् 'पूर्वं' मृत्पिण्डावस्थाया'मभूत'मविद्यमानं 'दृश्यते' उपलभ्यते 'भवदु'त्पद्यमानं, पश्चाद् घटादीति वाक्यशेषः ।५॥ इतश्च सञ्जायत

1 फ P.

इति पक्षः क्षतिकृदित्याह—'दीसती'त्यादि । 'दृश्यते' उपलभ्यते । 'दीर्घो' द्राघीयान् । 'चो' दूषणोद्भावनार्थः । 'यतः'—यस्मात् 'क्रियाकालो'—निर्वर्त्तनाकालो 'घटादीनां' घटपटादीनां त्वयाऽपीति विशेष इति गाथार्थः ।।४१५।।

तथा हि—'णारंभे च्चिये'त्यादि । 'नारम्भ एव'—मृत्खननादिपूर्वसेवालक्षणे 'दृश्यते'—उपलभ्यते—विशिष्टावस्थायां द्रक्ष्यते इत्यत आह—'न सिवादद्धाए' न शिवकस्थासकोशकुशूलावस्थायामित्यर्थः । यद्येवं न द्रष्टव्योऽसाविति । तन्न, यतो 'दृश्यते तदन्ते'—कुशूलावस्थान्त इत्यभिप्रायः । प्रकृतं भावयन्नाह—'इय' एवं घटादिवस्तुवत् 'न श्रवणादिकाले' न प्रत्यहं साधु समीपश्रवणकाले 'ज्ञानं युक्तं' सम्यक्त्वादि घटते, येन प्रतिपद्यमानकप्रतिपत्तिः साधीयसी स्यादुक्तदोषप्रसंगात् । किं तर्हि ? 'तदन्ते' श्रवणादिनिष्ठाकाले, ज्ञानं युक्तमिति वर्त्तते, प्रागभावात् पश्चाच्च भावात् क्रियाकालनिष्ठाकालयोर्भेदादिति व्यवहारः ।।४१६।।

एवमुक्ते—'नेच्छइओ' इत्यादि । निश्चये भवो'नैश्चयिकः' । स आह—यथा "जातं न जायते भावतो कयघडो व्व" इति ब्रूषे, एवमहमपि वच्मि—'अजातम'पि न जायते', अकृतस्याकरणात् । तथाहि—'णाजातं जायइ'त्ति प्रतिज्ञा । अभावत्वात् खपुष्पवदिति । अयमपि वाचामाह—'अथ चेदजातमपि जायते जायतां ततः खरविषाणमपी'ति । अतः किमुच्यते जातं न जायत इति गाथार्थः ।।४१७।।

अपि च असत्कार्यवादिन् ! 'णिच्चे'त्यादि । 'ननु' इत्यक्षान्ती । 'असइ' त्ति अविद्यमानस्योत्पत्तौ 'तुल्याः' समानाः । क इत्यतआह—नित्यक्रियादिदोषाः, कुलालस्यासद्घटकरणे सुचिरेणापि कारकाणां स्वाभिधानताघटनायोगात् । किं तुल्यतैव ? नेत्याह—'कष्टतरा वा' दुष्परिहार्यतरा वा, अत्यन्ताभावरूपत्वात् खरविषाणवत्, विद्यमाने तु पर्यायविशेषार्पणात्—पर्यायविशेषविवक्षणात् स्यादपि क्रियाव्यपदेशः—आकाशं कुरु पादं पृष्ठं वा कुर्विति, नायं खरविषाणे[1] न्यायः समस्तीति । यदि च प्रागभवत् सत्पश्चात् स्यात् ततः किं ते खरविषाणमपि पुव्वमभूतं सन्तमपि पश्चान्न भवद् दृश्यते येनोच्यते—'पुव्वमभूतं च दीसए' हुंतं ति गाथार्थः ।।४१८।।

न च दीर्घक्रियाकालदर्शनमविद्यमानोत्पत्तिसाधनं, तस्यान्यविषयत्वात् । तथा च—'पत्ती'त्यादि । समयं समयं प्रति उत्पन्नाः 'प्रतिसमयोत्पन्नास्तेषां' । केषामिति चेत् । मृत्खननसंहरणपिटकरासभपृष्ठारोपणावतारणाम्भःसेचनापरिमर्दनभ्रमच्चक्रमस्तकारोपणमृत्पिण्डशिवकस्थासकोशकुशूलादिकार्याणामिति गम्यते । किंविशिष्टानामित्याह—'परस्परविलक्षणानां सुबहूनामि'त्युक्तवत् परिगणनाऽपेक्षयाऽपान्तरालभेदापेक्षया च । 'दीर्घः क्रियाकालो'ऽन्तर्मुहूर्त्तादिप्रमाणो 'यदि दृश्यते' कुलाले व्याप्रियमाणे सति तन्ननु 'किं त्थ कुंभस्स'त्ति । किमत्र

1 णो P.

घटस्यायातं येनोच्यते "दीसति दीहो ये"'त्येवमादि, तस्य विवक्षितक्रियाकालान्त्यक्षणमात्रोत्पत्तित्वादिति गाथार्थः ॥४१९॥

अतः **'अण्णारंभे'** इत्यादि। अथवा यदुक्तं—"नारंभ" इति, अत्राह—'अन्यारम्भेऽन्यद्' घटलक्षणं वस्तु 'कथम् दृश्यते'? नैव। किं कारणम्? तस्य ततोऽन्यत्वात्, 'पटारम्भे घटवत्'। तथा च 'शिवकादयः'। 'आदि'शब्दान्मृत्संहरणस्थासकादयः परिगृह्यन्ते। 'न घटो'ऽभिधीयतेऽतः 'कथं दृश्यतां स' घटः **'तदद्धायां'** शिवकाद्युत्पत्तिक्षणेष्विति गाथार्थः ॥४२०॥

एवं च कृत्वा **'अंते च्चिए'**त्यादि। अथवा यदुक्तं "दीसति तदंते"त्ति तदङ्गीकृत्याह—**"अंति[1]च्चिये"**'त्यादि। पूर्वार्द्धमवबुद्धार्थम्। यद्यदन्त आरभ्यते तत्तदन्त एवोपलभ्यते, यथा मृत्पिण्डाद्यन्ते कुशूलः। मृत्पिण्डाद्यन्ते चायमारभ्यत इति तदन्त एवोपलब्धिर्न्याय्येति। एवं च क्रियमाण एव कृतः क्रियमाणसमयस्य निरंशत्वात्। अन्यथा **'अकतं वे'**त्यादि। 'अकतं संपति'त्ति यदि सम्प्रति समये न कृतं ततः **'गते'** वृत्ते क्रियाकाले 'कथं क्रियतां, कथं वा एष्ये', तयोर्विनष्टानुत्पन्नत्वेनासत्त्वात्। तथाहि—वस्तु क्रियाविरामे वा क्रियेत तत्क्रियानुत्पत्तौ वा। क्रियानुत्पत्तौ चेन्न क्रियते कथं क्रियाविरामेऽपि क्रियेत? क्रियानुत्पत्तितद्विरामकालयोरर्थतोऽभिन्नत्वात्। अथवा क्रियाविरामे चेत् क्रियते स प्रागप्यासीदिति कस्मात्तदैव न कृतमिति गाथार्थः ॥४२१॥

तत्रैतत्स्यात्—सम्प्रतिसमयः क्रियमाणकालोऽनन्तरस्तु कृतकालः। न च क्रियमाणमस्ति अवस्तुत्वात्। अतः खल्वकृतं क्रियत इति। अत्रेदमसि प्रष्टव्यः। भवतोहि कार्यं क्रियया वा क्रियेताक्रियया वा? क्रियया चेत् कथमसावन्यत्रान्यत्र च कृतम्? नहि खदिरविषयस्य छेदनस्य पलाशे च्छिद्रुपजायत इति भावः। अपि च—एवं क्रियोपरमे कृतमिति कृत्वा क्रियाकालः कार्यस्य प्रत्युत विघ्नहेतुः स्यात्। ततश्च कारणमेवाकारणमिति विरोधः। अक्रियया चेत् सर्वकृतकप्रसङ्गः। क्रियाविधानानर्थक्यात्। ततश्च तूष्णीमासीनस्य मोक्ष इति किं स्वाध्यायादिक्रियाभिरिति। अपि च यदुक्तं—"णारंभे च्चिय दीसति"त्ति, तत्र ननु यदारभ्यते तद् दृश्यत एव। यद्येवं किं न मयाऽपि दृश्यते? उच्यते, यतः—**'पती'**त्यादि। 'प्रतिसमय'भवनशीलाः 'कार्यकोट्यः'। 'कोटी'ग्रहणमसंख्येयोपलक्षणार्थम्। 'तासु निरपेक्ष' इति समासः। [3]घटे गतोऽभिलाषो यस्य स 'घटगताभिलाषो' घटार्थीभूत इत्यभिप्रायः। 'असि' त्वम्। अतः 'प्रतिसमयभाविकार्यकाल'मसम्बद्धं 'स्थूरमति'त्वात् 'घटे लगयसि', नाद्याप्युत्पद्यते इत्यभिप्रायात्। यदुत्पद्यते तस्यानवबोधात्। अतो जातं जायत इति प्रक्रम इति गाथार्थः ॥४२२॥

अत्र व्यवहार आह—**'को'** इत्यादि। यदि सज्जायते ततः 'कश्चरमसमयनियमो' येन 'प्रथमसमय एव न दृश्यते', विवक्षित 'कार्यमि'ति। निश्चय आह—

---

1 चे P. 2 न्ते P. 3 P adds सन्.

'नाकारणं कार्य' प्रसूयते सदा सदसत्त्वप्रसङ्गात् । ततः किमित्यत आह—'तच्चास्यान्त्य एव समये' भवति, नाद्यादिष्वस्तीति गाथार्थः ।।४२३।।

अपि च—क्रियाकालनिष्ठाकालभेदवादिन् । "**उप्पादेऽवी**'त्यादि । 'उत्पादेऽपि न ज्ञानं'—मतिज्ञानं 'यदि ततोऽसौ कस्योत्पादो भवतु' ? किं खरविषाणस्य ? ज्ञानोत्पादसमये वा 'यद्यज्ञानं', क्रियाकाल एव यदि वस्तु न निष्ठितमित्यर्थः । '**तो**' ततः 'कस्मिन् समये ज्ञानम'स्तु ? अनुत्पादसमय इति चेत् । स प्रागप्यभूदित्युक्तम् । अतः कृतं क्रियत इति गाथार्थः ।।४२४।।

यच्चाभ्यधायि "इय ण सवणादी"त्येवमादि, तदधिकृत्याह—'**को वे**' त्यादि । 'को वा श्रवणादिकाल उत्पादो' विशिष्टो 'यस्मिन् भवेत् से' तस्य श्रोतु'र्ज्ञानं मतिज्ञानं येनायमुपालम्भः स्यात् "इय" इत्येवमादि । यत्तूक्तं—"जुत्तं तदन्तंमि"त्ति तत्साध्वेव, यतो 'ज्ञानं च' निष्ठा च, 'तदुत्पादश्च' क्रिया च, एते 'द्वे अपि चरमसमये' भवतो "भूतिर्येषा क्रिया सैवे"ति वचनात् । एतदुक्तं भवति—क्रियाकालनिष्ठाकालयोरभेदादुत्पादकाल एव ज्ञानं, न श्रवणादिकाले, नापि तद्विराम इति केनोच्यते—"जातं न जायते भावतो कयघडो व्व" । व्यवहारेण चेत्, सोऽयं प्रतिपदं दूषित इति गाथार्थः[1] ।।४२५।।

अथानुक्तं भाषकद्वारमाह—

**भासासलद्धिओ लभइ भासमाणो अभासमाणो वा ।**
**पुव्वपडिवन्नओ वा उभयंपि अलद्धिए नत्थि ।।४२६।।**

'**भासा**' इत्यादि । 'भाषालब्धिमान् लभते', भवत्यपि प्रतिपद्यमानक इत्यर्थः । कस्यामवस्थायामित्याह—'भाषयन् अभाषयन् वा' । तथा 'पूर्वप्रतिपन्नको वा' भवेत् नियमेन । 'अलब्धिके तूभयमपि नास्ति', तस्य पृथिव्यादित्वादिति गाथार्थः ।।४२६।।

[सत्पदादिषु द्रव्यप्रमाणादयः]

कृता भाष्यकृताऽपि सत्पदप्ररूपणतेति द्रव्यप्रमाणमिदानीम्—

**किमिहाभिणिबोहियनाणिजीवदव्वप्पमाणमिगसमये ।**
**पडिवज्जेज्जंतु नवा पडिवज्ज जहन्नओ एगो ।।४२७।।**
**खेत्तपलिओवमासंखभाग उक्कोसओ पवज्जेज्जा ।**
**पुव्वपवन्ना दोसुवि पलियासंखेज्जईभागो ।।४२८।।**
**खेत्तं हवेज्ज चोदसभागा सत्तोवरिं अहे पंच ।**
**इलिआगईऍ विग्गहगयस्स गमणेऽहवाऽऽगमणे ।।४२९।।**
**आगमणंपि निसिद्धं चरिमाओ एइ जं तिरिक्खेसु ।**
**सुरनारगा य सम्मद्दिट्ठी जं यंति मणुएसु ।।४३०।।**

1 P drops गाथार्थः.

अवगाहणाइरित्तंपि फुसइ बाहिं जहाऽणुणोऽभिहियं ।
एगपएसं खेत्तं सत्तपएसा य से फुसणा ।।३३१।।

अहवा जत्थोगाढो तं खेत्तं विग्गहे मया फुसणा ।
खेत्तं च देहमेत्तं संचरओ होइ से फुसणा ।।४३२।।

होंति असंखेज्जगुणा नाणाजीवाण खेत्तफुसणाओ ।
एगस्स अणेगाण व उवओगंतोमुहुत्ताओ ।।४३३ ।।

लद्धोवि जहन्नेणं एगस्सेवं परा इमा होइ ।
अह सागरोवमाइं छावट्ठिं सातिरेगाइं ।।४३४।।

दो वारे विजयाईसु गयस्स तिन्नऽच्चुए अहव ताइं ।
अइरेगं नरभवियं नाणाजीवाण सव्वद्धं ।।४३५।।

एगस्स जहन्नेणं अन्तरमन्तोमुहुत्तमुक्कोसं ।
पोग्गलपरिअट्टद्धं देसूणं दोसबहुलस्स ।।४३६।।

जमसुन्नं तेहिं तओ नाणाजीवाणमन्तरं नत्थि ।
मइनाणी सेसाणं जीवाणमणंतभागम्मि ।।४३७।।

भावे खओवसमिए मइनाणं नत्थि सेसभावेसु ।
थोवा मइनाणविऊ सेसा जीवा अणंतगुणा ।।४३८।।

नेहऽत्थओ विसेसो भागऽप्पबहूण तेण तस्सेव ।
पडिवज्जमाणडिवन्नगाणमप्पाबहुं वुत्तं ।।४३९।।

थोवा पवज्जमाणा असंखगुणिया पवन्नय जहण्णा ।
उक्कोसए पवन्ना होंति विसेसाहिया तत्तो ।।४४०।।

अहवा मइनाणीणं सेलयनाणीहिं नाणरहिएहिं ।
कज्जं सहोभएहि य अहवा गच्चाइभेएणं ।।४४१।।

'किमिहे'त्यादि । 'किमिहाभिनिवोधिकज्ञानपरिणामापन्नानामात्मद्रव्याणां परिमाणमे[1]कस्मिन् समये' ? उच्यते—'प्रतिपद्येरन्न वा, प्रतिपत्तौ तु जघन्येनैक' इति गाथार्थः ।।४२७।।

उत्कृष्टत आह—'खेत्ते'त्यादि । पुव्वद्धं कण्ठ्यम् । पूर्वप्रतिपन्नकानाह—'पूर्वप्रतिपन्नकास्तु द्वयोरपि'—जघन्योत्कृष्टपदयोः 'पल्योपमासंख्येयभाग' इति गाथार्थः ।।४२८।। दारं।।

'खेत्त'मित्यादि । मतिज्ञानं कियति क्षेत्रे भवेत् ? 'उर्ध्वम[2]लिकागत्या' गच्छतः सर्वार्थसिद्धिं, ततो वा प्रत्यागच्छतो मतिज्ञानिन'श्चतुर्दशभागाः सप्त, अधः पञ्च' पष्ठ्यां 'गच्छतोऽथवा प्रत्यागच्छत' इति गाथार्थः ।।४२९।।

1 P adds कै   2 मि P.

न चाधोऽपि सप्त सम्भवन्ति, यतः—'**आगमणंपी**'त्यादि । 'अपि'शब्दाद् गमनमपि । शेषं स्पष्टम् । नवरं '**मणुएसु**' न तिरिएसु इत्यभिप्रायः ॥४३०॥ दारं ॥

'**अवगाहणे**'त्यादि । '**अथवे**'त्यादि । गाथाद्वयं स्पष्टम् ॥४३१-४३२॥

नानाजीवानङ्गीकृत्याह—'**होंती**'त्यादि । पुव्वद्धं ॥दारं॥ '**एगस्से**' त्यादि । 'एकस्य' मतिज्ञानिनो'ऽनेकेषां चोपयोगो'ऽविच्युत्या'ऽन्तर्मुहूर्त्तां'न्तर्मुहूर्त्त एवेति गाथार्थः ॥४३३॥

लब्धिमङ्गीकृत्याह—'**लद्धी**'त्यादि । 'लब्धिरपि जघन्येन एकस्ये'ति—एकजीवापेक्षया 'एव'मेवेत्यन्तर्मुहुर्त्तमेव । "परा'त्वेकस्य जीवस्य लब्धि'रियम्' । '**अहे**'त्यादि सोपार्द्धा गाथा स्पष्टा ॥ ४३४-४३५॥ दारं ॥

'**एगस्से**'त्यादि । सकृन्मतिज्ञानमवाप्य त्यक्त्वा च पुन'रन्तर्मुहूर्त्तादा'-सादयेत् । 'उत्कृष्टतस्त्वन्तरमुपार्द्धपुद्गलपरावर्त्तो मनाग्न्यूनः' । तच्चाशातनादि-प्रचुरतयाऽपुण्य भाजः कस्यचिदिति गाथार्थः ॥४३६॥

एवमेकस्य नानात्वं त्व[2]ङ्गीकृत्याह—'**ज**' मित्यादि । पूर्वार्द्धं स्पष्टम् ॥दारं॥ '**मती**'त्याद्यपि पश्चार्द्धम् ॥४३७॥दारं॥

'**भावे**' इत्यादि । पूर्वार्द्धं कंठं ॥दारं॥ '**थोवा**' इत्यादि । इह 'स्तोका मतिज्ञानिनः' सकलजीवानामनन्तभागपठितत्वात् । आह च –'सेसा जीवा' तेभ्योऽनन्तगुणा इति गाथार्थः ॥४३८॥

एतच्चकेषांचिन्मतमेव, यत आह—'**नेह**' इत्यादि । 'नेहार्थतो भेदो' लक्ष्यते 'भागाल्पवहुत्व'द्वारयोः । अतः स्थितपक्षमाह—'तेनास्यैव'—मतिज्ञानस्य अल्पवहुत्वं 'युक्त'मपौनरुक्त्यात् । केषामित्याह—'प्रतिपद्यमानकप्रतिपन्ना'पेक्ष-येत्यर्थः । इति गाथार्थः ॥४३९॥

तथाहि '**थोवा**' इत्यादि । मतेः सम्प्रतिसमये 'प्रतिपद्यमानाः स्तोकाः' । "जहन्नेणं एक्को वा दोण्णि वा तिण्णि वा उक्कोसेणं असंखेज्जाइं" ति सामर्थ्य-गम्यम् । पुनरेभ्यो 'जघन्य'पदवर्त्तिनो ये 'पूर्वप्रतिपन्नास्तेऽसंख्येयगुणिता' वहुत्वात् । पुन'रेभ्यो'ऽपि च '**उक्कोसपदवत्तिणो**' पुव्वपडिवन्नया '**विसेसाहिय**'त्ति गाथार्थः ॥४४०॥

'**अहवे**'त्यादि । '**अथवे**'ति स्थितपक्षान्तरप्रदर्शनार्थः, '**मतिनाणीणं सेसयना[3]णीहिं सह कज्जं**' अप्पावहुयं, किं ज्ञानसहितैः ? नेत्याह—'**नाणरहिएहिं**' । तत्रापि स एवार्थ इति भावना । अथवा '**नाणरहिएहिं सह मतिनाणीणं कज्जं**' अप्पावहुयं अथ '**उभयेहि य**' त्ति समुच्चयविकल्पः । '**अथवे**'ति—अथवा

1 P adds अ. 2 जीवाँस्त्व for त्वं त्व. 3 P has णा for यना.

गत्यादिभेदेन यथासम्भवम् । तत्र स्तोका मतिमन्तो नरा इत्येवमादि स्वधिया भावनीयमिति गाथार्थः ।।४४१।।

[श्रुतज्ञानविवरणम्]

एवं—

**लक्खविहाणविसयाणुओगदारेहिं वण्णिया बुद्धी ।**
**तयणंतरमुद्दिट्ठं सुयनाणमओ पवित्थरं ।।४४२।।**

'लक्खणे'त्यादि । 'लक्षण'मभिनिबुध्यत इत्येवमादि । 'विधान'-मवग्रहादि । 'विषयो'—द्रव्यादि । 'अनुयोगद्वाराणि' सत्पदादी[1]नीति । शेषं स्पष्टमिति ।। समाप्तं मतिज्ञानम् ।। 'एतदनन्तरमुद्दिष्टं श्रुतम् । तत्प्ररूपयिष्य' इति गाथार्थः ।।४४२।।

तच्चानेकप्रकृतिस्वभावम् । ताश्चैताः—

**पत्तेयमक्खराइं अक्खरसंजोग जत्तिया लोए ।**
**एवइया सुयनाणे पयडीओ होंति नायव्वा ।।४४३।। नि० १६।।**

**संजुत्तासंजुत्ताण ताणमेकक्खराइसंजोगा ।**
**होंति अणंता तत्थवि एक्केक्कोऽणंतपज्जाओ ।।४४४।।**

**संखिज्जक्खरजोगा होंति अणंता कहं जमभिधेयं ।**
**पंचत्थिकायगोयरमन्नोऽन्नविलक्खणमणंतं ।।४४५।।**

**अणुओ पएसवुड्ढीएं भिन्नरूवाइं धुवमणंताइं ।**
**जं कमसो दव्वाइं (इह) हवंति भिन्नाभिहाणाइं ।।४४६।।**

**तेणाभिहाणमाणं अभिधेयाणंतपज्जवसमाणं ।**
**जं च सुयम्मिवि भणियं अणंतगमपज्जयं सुत्तं ।।४४७।।**

'पत्तेय'मित्यादि । एकमेकं प्रति 'प्रत्येकम्' । 'अक्षराणि'—अकारादीन्य-नेकभेदभाञ्जि । एतदुक्तं भवति—एकोऽकारोऽष्टादशविधस्तद्यथा ह्रस्वो दीर्घः प्लुतः । एकैक उदात्तानुदात्तस्वरितभेदः । पुनरेकैकः सानुनासिकनिरनुनासिक-भेदाद् द्वेधेति त्रयः षट्का अष्टादश ।

| अ | | | आ | | | आ० ३ | | |
|---|---|---|---|---|---|---|---|---|
| उ० | अ० | स्व० | उ० | अ० | स्व० | उ० | अ० | स्व |
| २ | २ | २ | २ | २ | २ | २ | २ | २ |

एवमिकारादयोऽपि सम्भवतः । तथाऽक्षराणां संयोगा 'अक्षरसंयोगाः ।' 'संयोगाद्व्यादिसम्बन्धाः । 'यावन्तो' यावत्प्रमाणा 'लोके' वाङ्मयवार्त्तया-मित्यर्थः । 'एतावन्त्यः' का इत्याह—'एतावत्यः' एतावत्प्रमाणाः । 'प्रकृतयः'

1 P drops दी.

अंशाः । 'श्रुतज्ञाने' श्रुतज्ञानविषया 'भवन्ति ज्ञातव्याः' । एतत्स्वरूपबुभुत्सुभिरिति गाथौघार्थः ॥४४३॥ निर्युक्तिगाथा १६॥

भाष्यकृदाह—'**संजुत्त**'त्यादि । '**ताणं**'ति अकारादीनामक्षराणाम् । किंविशिष्टानामित्याह—'संयुक्ताना'मन्यसम्पृक्ताना'मसंयुक्तानामन्यासम्बद्धानां च । किमत आह—'भवन्ति' सम्पद्यन्ते । 'अनन्ताः' अपर्यन्ताः । क इत्याह—'एकाक्षरादिसंयोगाः' । एकाक्षरसंयोगप्रादिर्येषां तेऽमी 'एकाक्षरादिसंयोगाः' । तत्र संयुक्तैकाक्षरसंयोगे **घट** । असंयुक्तैकाक्षरसंयोगस्तु **घटः** । द्विकसंयोगस्तु **घट्क घटकः** इत्येवमादि । एतेषां चानन्त्यमभिधेयस्यानन्तत्वादिति गर्भः । किं निष्पर्यायाः ? नेत्याह तत्रा'प्येकैको' द्विकादिसंयोगो'ऽनन्तपर्यायः'—अनन्तधर्मस्वभावः । घटकारसंयोगस्यान्येनान्येन स्वभावेन परमाणु तन्नयू[1]न त्रैलोक्याभ्यां व्यतिरिच्यमानत्वात् । इत्थं चैतद् । अन्यथा तयोरैक्यापत्तिः स्यात् । एकैकेन स्वभावेन व्यावर्त्तमानत्वादेकात्मन इव । एवं **घटका**दिसंयोगा अपि वाच्या इति गाथार्थः ॥४४४॥

सामान्यश्रुतिमङ्गीकृत्याह—'**संखेज्ज**' इत्यादि । ननु च 'संख्येया अक्षरसंयोगा भवन्ति' संख्येयत्वादक्षराणामतो'ऽनन्ताः' । 'कथम्' ? उच्यते, 'यद्'—यस्मा'दभिधेयम'क्षरसंयोगवाच्यं 'पञ्चास्तिकायगोचरं', पञ्चास्तिकायप्रमाणमित्युक्तं भवति । किंविशिष्टं तदित्याह—'अन्योऽन्यविलक्षणम्' । किं संख्येयादिगुणोपेतम् ? नेत्याह—'अनन्तम्' । एतदुक्तं भवति—संख्येयत्वे सत्यप्यक्षराणामभिधेयवशादानन्त्यं लभ्यते, तेषां तथा तथा संयोगे तत्तद्भणनेन संयोगा[2]विच्छेदात् । वाच्यभेदाद् वचनभेदो, वचनं संयोगाः, **नर्मदावारिपूर** इति यथेति गाथार्थः ॥४४५॥

एतदेव भावयन्नाह—'**अण्वि**'यादि । 'अणुतः' परमाणोरारभ्य 'प्रदेशवृद्ध्या' द्व्यादिलक्षणया । 'भिन्नरूपाणि' भिन्नव्यक्तिकानि । 'ध्रुवं' निश्चितम् । 'अनन्तानि' अपर्यन्तानि । 'यद्' यस्मात् । 'क्रमशः' परिपाट्या । 'द्रव्याणि भवन्ति' । किंविशिष्टानीत्याह—'भिन्नाभिधानानि' परस्थान[3]स्थानापेक्षयेति शेषः । परस्थानमङ्गीकृत्य परमाणुद्व्यणुकादिव्यपदेशभाञ्जि भवन्ति । स्वस्थानं त्वङ्गीकृत्याणुः परमाणुः राकाणुरेकांशोऽभेदो निर्भेद इति यावत् । न चैतान्येकार्थिकान्येव, समभिरूढाभिप्रायेणापि वस्त्वभ्युपगमात् ॥४४६॥

येनैवं तेन किमित्यत आह—'**तेने**'त्यादि । 'तेना'कारादिसंयोगोपसंख्यान'मभिधेय'गता'नन्त'परमाण्वादि'पर्यायतुल्यं', 'यच्च सूत्रेऽप्युक्तमनन्तगमपर्यायं सूत्रं' । "अणंता गमा अणंता पज्जवा" इति वचनात् । तस्मात् सुष्ठूच्यते—"संजुत्तासंजुत्ताण"मित्येवमादि ॥४४७॥

---

1 दृ P. 2 न P. 3 P adds स्व.

यत एवमेताः सामान्यप्रकृतयोऽनन्ता अतः—

कत्तो मे वण्णेउं सत्ती सुयनाणसव्वपयडीओ ।
चोद्दसविहनिक्खेवं सुयनाणे आवि वोच्छामि ।।४४८।। नि० १७।।

पयडित्ति जो तदंसो हेऊ वा तस्स तस्सभावो वा ।
ते याणंता सव्वे तओ न तीरंति वोत्तुं जे ।।४४९।।

जावंतो वयणपहा सुयाणुसारेण केइ लब्भंति ।
ते सव्वे सुयनाणं ते याणंता मइविसेसा ।।४५०।।

उक्कोससुयन्नाणी वि जाणमाणोऽवि तेऽभिलप्पेऽपि ।
न तरइ सव्वे वोत्तुं न पहुप्पइ जेण कालो से ।।४५१।।

नाणम्मि सुए चोद्दसविहं चसद्देण तह य अन्नाणे ।
अविसद्देणुभयम्मिवि किंचि जहासंभवं वोच्छं ।।४५२।।

अक्खर सण्णी सम्मं साइयं खलु सपज्जवसियं च ।
गमियं अंगपविट्ठं सत्तवि एए सपडिवक्खा ।।४५३।। नि० १८।।

'कत्तो मे' इत्यादि । 'कुतो मम वर्णयितुं शक्तिः श्रुतज्ञानस्य सर्वाः प्रकृतीः', तासां बहुत्वात् । उक्तं च—

"जे अक्खराणुसारेण मतिविसेसा तयं सुयं सव्वं ।
तेऽवि य मतीविसेसे सुयणाणब्भंतरे जाण ।।१।।
उक्कोसयपुव्वधरोवि भणति णहु ते तु सोऽभिलप्पेऽवि ।
कमवत्तिणी य वाता कालो य पहुप्पए ण य से ।।२।।"

यतश्चैवमत'श्चतुर्दशविधनिक्षेपं श्रुतज्ञाने' श्रुतज्ञानविषयम् । 'च'शब्दात् श्रुताज्ञानविषयं च । 'अपि'शब्दादुभयविषयं च । तत्र श्रुतज्ञाने—सम्यक्श्रुते, श्रुताज्ञाने—असंज्ञिमिथ्याश्रुते, उभयश्रुते—दर्शनपरिग्रहाविशेषादक्षरानक्षरश्रुते 'इति । 'वक्ष्ये' अभिधास्य इति गाथार्थः ।।४४८।।

'पयडि[2]' गाहाव्याख्या । 'प्रकृति'रिति सूत्रालापकः । किमुक्तं भवति ? 'यस्तदंशः' सूत्रांशः सा 'प्रकृति'रुच्यते । अथवा 'तस्य' श्रुतस्य यो 'हेतु'र्वाह्य आलोकादिरान्तरो वा क्षयोपशमादिः । सोऽयं 'तत्स्वभावो वा' श्रुतस्वभावो वा ध्वनितालक्षणः । सैपा, 'ते च' तदंशा 'अनन्ताः' । 'अतः सर्वे न शक्यन्ते वक्तुं', परिमितत्वादायुप इत्येवमादीति गाथार्थः ।।४४९।।

तथा च—'जावन्तो' इत्यादि । 'यावन्तो वचनपथाः श्रुतानुसारेण केचनो लभ्यन्ते ते सर्वं श्रुत'मित्येतदविदितं प्राङ् मतिश्रुतभेद इति । 'ते च' श्रुत'मतिपर्यायाः' ।।४५०।।

1 चे P.　　2 डी P.

इत्यतः—'उक्कोस' इत्यादि । क्षुण्णार्था ॥४५१॥

एवमवस्थिते व्याख्यानस्य प्रस्तुतत्वात् किञ्चिन्निक्षेपमाह—'नाणंमी'-त्यादि । व्याख्यातार्थे[1] ॥४५२॥

'अक्खरे'त्यादि । द्वाराणि चतुर्दशेति ॥४५३॥ निर्युक्तिगाथा १८॥

[अक्षरश्रुतविचारः]

आद्यद्वारं व्याचिख्यासुराह—

न क्खरइ अणुवओगेऽवि अक्खरं सो य चेयणाभावो ।
अविसुद्धनयाण मयं सुद्धनयाणक्खरं चेव ॥४५४॥
उवओगेऽवि य नाणं सुद्धा इच्छंति जं न तव्विरहे ।
उप्पायभंगुरा वा जं तेसिं सव्वपज्जाया ॥४५५॥
अभिलप्पावि य अत्था सव्वे दव्वट्ठियाए जं निच्चा ।
पज्जायेणानिच्चा तेणक्खर अक्खरा चेव ॥४५६॥
एवं सव्वं चिय नाणमक्खरं जमविसेसियं सुत्ते ।
अविसुद्धनयमएणं को सुयनाणे पइविसेसो ॥४५७॥
जइवि हु सव्वं चिय नाणमक्खरं तहवि रूढिओ वण्णो ।
भण्णइ अक्खरमिहरा न खरइ सव्वं सभावाओ ॥४५८॥
वण्णिज्जइ जेणऽत्थो चित्तं वण्णेण वाऽहवा दव्वं ।
वण्णिज्जइ दाइज्जइ भण्णइ तेणऽक्खरं वण्णो ॥४५९॥
अक्खरसरणेण सरा वंजणमवि वंजणेण अत्थस्स ।
अत्थे य खरइ न य जेण खिज्जई अक्खरं तेण ॥४६०॥
सुद्धावि सरंति सयं सारंति य वंजणाइं जं तेणं ।
होंति सरा न कयाइवि तेहिं विणा वंजणं सरइ ॥४६१॥
वंजिज्जइ जेणऽत्थो घडो व्व दीवेण वंजणं तो तं ।
अत्थं पायेण सरा वंजंति न केवला जेणं ॥४६२॥

'ण क्खरती'त्यादि । "क्षर सञ्चलने" । क्षरतीति क्षरम् । तस्य नञा प्रतिषेधेऽक्षरमनुपयोगेऽपि न क्षरती'ति भावार्थः । तस्य सततमवस्थितत्वात् । स च क इत्यत आह—'स चा'क्षरपरिणामः 'चेतनाभावः'—चेतनासत्ता । केषां नयानां मतेनेत्याह—'अविशुद्धनयमतेन' नैगमसंग्रहव्यवहाराभिप्रायेण द्रव्यार्थिक-मूलप्रकृतित्वात् । 'शुद्धनयानां' तु—ऋजुसूत्रादीनां 'क्षरमेवे'ति गाथार्थः ॥४५४॥

कुत एतदित्याह—'उवयोग' इत्यादि । 'यद्'—यस्मात् 'शुद्धनया उपयोग एव सति ज्ञानमिच्छन्ति, नोपयोगविरहे' । घटादेरपि तत्प्रसङ्गात् । 'वा' इत्यथवा 'यत्तेषां सर्व एव भावा उत्पादभङ्गुरा' वर्त्तन्त इति गाथार्थः ॥४५५॥

1 र्थो P.

एवं तावदभिलापहेतोर्विज्ञानस्याक्षरताऽनक्षरता चोक्ता । इदानीमभिलाप्यार्थानामप्येनामाह—'अभो'त्यादि । सम्बन्धोक्तार्था । नवर'मपि'शब्दादितरे चेति ॥४५६॥

इदानीमक्षरश्रुताधिकारादिह वर्णोऽप्यक्षरमभिधीयतेऽर्थविज्ञानवदिति ज्ञापनार्थं चोद्यं कारयति—'एव'मित्येवमादि । 'एवं अविसुद्धनयमएणं' इत्यत्र सम्बन्धः । अत्र चान्वर्थसंज्ञाप्रधाननयमतेनेति द्रष्टव्यम् । किं ?—'सर्वमेव ज्ञानं' मत्या'द्यक्षरं' वर्त्तते । इतश्च । 'ज'मिति । 'यद्' यस्मा'दविशेषितं सूत्रे' उक्तं "सव्वजीवाणंपि य णं अक्खरस्स अणंतभागो णिच्चुग्घाडियओ"त्ति । भावार्थं प्रकटयन्नाह—अतः 'को 'सुयणोण' भावसुयलक्खणेऽर्थे च[1] 'विशेषो' येनोच्यते "ण क्खरइ अणुवयोगेपि अक्खरं सो य चेयणाभावो"त्ति । गाथार्थः ॥४५७॥

उच्यते—'जीत'त्यादि । 'यद्यप्य'विशुद्धनयमतेन 'सर्वमेव ज्ञानमक्षरम'र्थश्च, 'तथापि रूढितः'—एकद्रव्योपदेशिन्या संज्ञया 'वर्ण एवाक्षरं भण्यते', श्रुतरूपत्वात् पङ्कजवत् । 'इतरथा'त्वर्थमधिकृत्य 'सर्वं स्वतत्त्वान्न क्षरती'त्यक्षरमिति किमनेनेति गाथार्थः ॥४५८॥

अथास्य श्रुतरूपस्य वर्णस्य निर्भेदमाह—'वण्णी'त्यादि । 'वर्ण्यते'–प्रकाश्यते 'येन' करणभूते'नार्थः'—अभिधेयः । केन किमिवेत्याह—'वर्णेनेव चित्रं'—ऋषभस्वामिचरितादि राजपट्टकादिना स वर्णः । 'अहवे'त्यथवा 'द्रव्यं' गोद्रव्यादि यथा शुक्लादिना गुणेन 'वर्ण्यते दर्श्यते' एवं येन गुणकल्पेन अर्थोगोद्रव्यादिकल्पो दृश्यते स वर्णः । अथवा 'दव्वं वण्णिज्जइ' जेण तेण सो वन्नो भण्णति, स चाक्षरमिति गाथार्थः ॥४५९॥

स चोक्तशब्दार्थो वर्णो द्वेधा—स्वरतो व्यञ्जनतश्चेति । अतः स्वरतस्तावदाह—'अक्खरे'त्यादि । इ'हाक्षर'शब्देन व्यञ्जनान्याहुः । "स्वृ शब्दोपतापयोः" तत'श्चाक्षरस्वरणात् स्वराः' । व्यञ्जनसंशब्दनादित्यर्थः । एतदुक्तं भवति—व्यञ्जनमौखर्यप्रयोजककर्तृत्वप्रतिपत्तेर्वर्णः स्वरोऽभिधीयते । वक्ष्यति चानन्तरगाथया । तथा व्यनक्तीति व्यञ्जनम् । तद् 'व्यञ्जनमप्य'भिधीयते, 'व्यञ्जनेन' प्रकटीकरणेन । कस्येत्याह—'अर्थस्य' वाह्यस्य भोक्षादेः । एतदुक्तं भवति—अर्थव्यञ्जनाद्वर्णो व्यञ्जनमप्यभिधीयते । वक्ष्यते च द्वितीयगाथया । अथ सामान्याक्षरस्य निरुक्तमाह—अर्थान् क्षरती'त्यक्षरम् । स्वयं 'च न क्षरतीत्यक्षरमो'घ इति गाथार्थः ॥४६०॥

'सुद्धावी'त्याद्युक्तसम्बन्धा । 'ज'मिति येन कारणेन 'स्वय'मात्मना साक्षात्कारेण 'शुद्धा अपि'—केवलाऽव्यञ्जनाऽपीति यावत् । 'स्वरन्ति'—शब्दयन्ति, वाह्यं वस्त्विति वाक्यशेषः । तद्यथा—'आ ई ऊ' इत्येवमादि, 'क कि कु' । तथा

1 वा P.

'येनेव'[1] कारणेन 'व्यञ्जनानि' स्वरन्ति सन्ति स्वरत्वं स्वरत्वमिति 'भाणयन्ति तेन स्वरा भवन्ति'। तथा च 'न कदाचनापि तैर्विना व्यञ्जनं स्वरति' शब्दयति, निरर्थकत्वात्। अथवा चैतन्याख्याक्षरस्वरणात् स्वराः। तथाहि—भणनादन्तर्विज्ञानाभिव्यक्तिरिति गाथार्थः ॥४६१॥

'वंजिज्जती'त्यादि। 'व्यज्यते येनार्थो' मोक्षादिः 'प्रदीपेनेव घट' इति। 'तेन तद् व्यञ्जन'मुच्यते। अपि च 'अर्थं' विशिष्टं 'प्रायशो' बाहुल्यतः 'स्वराः केवला न व्यञ्जयन्ति येन'। तथाहि—नापनीतव्यञ्जनमुपनीतस्वरं च वाक्यं विवक्षितार्थप्रख्याप[2]नायालं दृश्यते। तद्यथा—सम्यग्दर्शनज्ञानचारित्राणी'ति। अ अ अ अ अ आ अ आ इ आ इ। 'प्रायो'ग्रहणं स्वराणां केवलानां स्वात्ममात्राभिधानानुमतिप्रदर्शनार्थम्। ततश्चाक्षरं वर्णः स्वरो व्यञ्जनमिति पर्याया इति गाथार्थः ॥४६२॥

साम्प्रतं भेदतो व्याख्यामाह—

तं सण्णावंजणलद्धिसण्णियं तिविहमक्खरं तत्थ।
सुबहुलिविभेयनिययं सण्णऽक्खरमक्खरागारो ॥४६३॥

वंजिज्जइ जेणऽत्थो घडो व्व दीवेण वंजणं तो तं।
भण्णइ भासिज्जंतं सव्वमकाराइ तक्कालं ॥४६४॥

जो अक्खरोवलंभो सा लद्धी तं च होइ विण्णाणं।
इंदियमणोनिमित्तं जो यावरणक्खओवसमो ॥४६५॥

दव्वसुयं सण्णावंजणक्खरं भावसुत्तमियरं तु।
मइसुयविसेसणम्मिवि मोत्तूणं दव्वसुत्तं ति ॥४६६॥

दव्वसुयं सण्णक्खरमक्खरलंभोत्ति भावसुयमुत्तं।
सोओवलद्धिवयणेण वंजणं भावसुतं च ॥४६७॥

'तं सन्ने'त्यादि। 'तदक्षरं त्रिविधं संज्ञाव्यञ्जनलब्धि'भेदात्। 'तत्र संज्ञाक्षरं सुबहुभेदलिपिनियत'त्वाच्चित्रम्। स 'चाक्षराकारो' यथा अर्द्धचन्द्राकृतिष्टकार इत्येवमादीति गाथार्थः ॥४६३॥ दारं ॥

व्यञ्जनाक्षरं त्वकारादि हकारान्तं भाष्यमाणं सदुच्यत इत्याह—'वंजी'त्यादि गाथा गतार्था ॥४६४॥ दारं ॥

'जो' इत्यादि। 'योऽक्षरलाभस्तल्लब्ध्यक्षरम्'। 'तच्चेन्द्रियमनोनिमित्तं विज्ञानं' श्रुतग्रन्थानुसारि प्रवृत्तिशीलमुपयोग इत्यर्थः। तथा 'यश्च तदावरणक्षयोपशमो' लब्धिरित्यर्थः। तल्लब्ध्यक्षरमेवमेतत्त्रितयमिति गाथार्थः ॥४६५॥[3]

---

1 P has येन च for येनैव. 2 P has त्याय for ख्याप. 3 P adds दारं.

'दव्व' मित्यादि। इह 'संज्ञाव्यञ्जनाक्षरे द्रव्यश्रुतं, इतरत्तु' लब्ध्यक्षरं[1] 'भावश्रुतम्'। एवं च स्थिते पौर्वापर्यं घटयन्नाह—'मतिश्रुतभेदेऽपि' यदुक्तं 'मुक्त्वा द्रव्यश्रुत'मिति तत्र 'दव्वे'त्यादि। 'संज्ञाक्षरं द्रव्यश्रुतं' कारणत्वात्। अतः 'अक्खरलंभो य त्ति यदुक्तं तद्भावश्रुतं' विज्ञानमयत्वात्। 'श्रोत्रेन्द्रियोपलब्धि-वचनेनो'भयसमासभाजा। 'वंजण'त्ति व्यञ्जनाक्षरं 'भावश्रुतं चो'क्तमिति गाथार्थः ॥४६६-४६७॥

[2]तच्च कथं लभ्यत इति ? उच्यते—

पच्चक्खमिंदियमणेहिं लब्भइ लिंगेण चऽक्खरं कोइ।
लिंगमणुमाणमण्णे सारिक्खाई पभासंति ॥४६८॥

सारिक्ख-विवक्खो-भय-मुवमाऽऽगममेव सव्वमणुमाणं।
किंचिम्मत्तविसेसेण वा न तं पंचहा ठाइ ॥४६९॥

माय अहिअस्सतरा गविआ दट्ठूण मायविति नउला।
मायपिऊणं सरणं गवयस्स य सुत्तओ सग्गो (ताले) ॥४६९क॥[3]

इंदियमणोनिमित्तं पि नाणुमाणाहिं भिज्जए किन्तु।
नाविक्खइ लिंगंतरमिइ पच्चक्खोवयारो त्थ ॥४७०॥

जइ ते अनिययमाणं अणुमाणं तिविहमणुवलद्धीए।
अच्चंत १ सरिस २ विच्चुय ३ खपुप्फ १ कणमास २
पम्हुट्ठे ३ (ताले) ॥३७०क॥[4]

नापुणरुत्ता न समत्तलिङ्गसंगाहिया न य गुणा य।
नियमियपरिमाणाए किं च विसेसोवलद्धीए ॥४७१॥

नाहिगयाऽणुवलद्धी न वा विवक्खोत्ति वा तओ सव्वा।
सक्खाइग्गहणेण वा न उ जुत्तो तिविहनियमो से ॥४७२॥

जेणतिदूरसमीवाणुवलद्धी लक्खणस्स हीणत्ता।
सुहुमाभिभवणवट्ठाणसमाणहारावणुवलद्धी ॥४७२क॥[5] (ताले)

'पच्चक्ख'मित्यादि। तच्च लब्ध्यक्षरं कश्चि'त्प्रमाता 'प्रत्यक्षं लभते'। एतदुक्तं भवति—तच्च कस्यचि'दिन्द्रियमनोभ्यां' प्रत्यक्षरूपतया चोत्पद्यते। 'लिंगेण च' त्ति अनुमानज्ञानतया चेत्यर्थः। लिंगं किमित्यत आह—'लिंगमणु-माणं'ति लिङ्गं ह्यनुमानमुच्यते धूमेऽग्निज्ञानोपचारात्, प्रत्यक्षहेतौ घटे प्रत्यक्षोप-

1 P has लब्ध्यं for रं. 2 P adds ४.
3 The *gatha* is an interpolation, and hence not numbered separately.
4 The *gatha* is an interpolation, and hence not numbered separately.
5 The *gatha* is an interpolation, and hence not numbered separately.

चारवत् । एष: सामान्य[1]स्थितपक्षः । परमतमाशिशङ्कयिषुराह—'अन्ये' सरयऽ 'सादृश्यादि प्रभाषन्त' इत्यनुमानम् ।।४६८।।

तद्यथा—'सारिक्खे'त्यादि । 'सारिक्खं' ति सादृश्यानुमानमप्रत्यक्षेऽपि भ्रातुर्ज्ञानं स्मृतिरूपत्वात् । 'विपक्षा'नुमानमहेर्नकुलज्ञानमेवमादि । 'उभय' इत्यश्वतरात् खराश्वयोरित्येवमादि । 'उपमानं' गोर्गवय इत्येवमादि । 'आगमात्' स्वर्गादाविति उच्यते । 'एवं सर्वमेतदनुमानं' नोपन्यस्तानुमानाद् व्यतिरिच्यते, सम्बन्धादन्यतः प्रतिपत्तेः । न चेत् सम्बन्धादन्यतः प्रतिपत्तिर्द्वितीयस्तर्हि दोष इति । किञ्चिद्भेदेनास्यास्माद् भिन्नत्वाददोष इति चेत् । आह—'किञ्चिद्भेदेन च' भिद्यमानं 'न तत् पञ्चधा स्थास्यत[2] इति गाथार्थः ।।४६९।।

अपि च—'इंदिए'त्यादि । 'इन्द्रियमनोनिमित्तमि'ति[3] लब्ध्यक्षरं 'नानुमानाद् भिद्यते', आस्तां सादृश्यादीति । यद्येवं प्रत्यक्षव्यपदेशः कथमिति ? उपचारात् । आह च—'किंत्वि'न्द्रियमनसोरन्य'ल्लिङ्गान्तरं नापेक्षत इति प्रत्यक्षोपचारः' केवलं, तत् साक्षादुत्पत्तेरिति गाथार्थः ।।४७०।।

अपि च—इयमनुमानस्य किञ्चिद्विशेषोपलब्धिः—'नापुण' इत्यादि । 'नापुनरुक्ता', सादृश्योपमानयोर्मिथोऽभेदात् सर्वत्र सादृश्याविशेषाच्च । तथा 'न समस्तलिङ्ग' विशेपोप'संग्राहिणी, न चेयं गुणाय' । अतः 'किमनया नियमित'-पञ्चविध 'प्रमाणये'त्थं 'विशेषोपलब्ध्या' परिकल्पितया ? कस्यचिदर्थस्यासिद्धेरेकमेवास्तु तदिति गाथार्थः ।।४७१।।

या चेयं क्वचित् त्रिविधानुपलब्धिः परिकल्प्यते, तद्यथा—अत्यन्तानुपलब्धिः खरविषाणादेरिव, तथा सामान्यानुपलब्धिर्महामाषराशिप्रक्षिप्तमाषकणादेरिव, तथा विस्मृत्यनुपलब्धिरि[4]यमसावित्यनुपस्थानमस्मरणतः । इयं 'नाहिगते' त्यादि । इय'मनुपलब्धि'र्लब्ध्यक्षराधिकारे 'नाधिकृता' न प्रस्तुता । किं तर्हि ? उक्तद्वयमेवाधिकृतम् । अथ मनुपे 'विपक्ष इति' कृत्वा मता, उपलब्धेरन्या अनुपलब्धिरिति व्युत्पत्तेः । दूषणमाह—'ततः सर्वा'नुपलब्धिर्वाच्या भवता, अतिसंनिकृष्टाति[5] विप्रकृष्टभेदभिन्नत्वात्तस्याः । य'द्वा आदिग्रहणेन वाच्या' । 'न पुनर्युक्त एवं त्रिविधनियमः'— त्रिपरिगणन'मस्या'ऽनुपलब्धेः । तस्मादेतदप्यचारु ।।४७२।।

इत्यक्षरस्य तत्त्वभेदपर्यायैर्व्याख्या समाप्ता ।

अक्खरलंभो सण्णीण होज्ज पुरिसाइवण्णविण्णाणं ।
कत्तो अस्सण्णीणं भणियं च सुयम्मि तेसिंपि ।।४७३।।

जह चेयण्णमकित्तिममस्सण्णीणं तहोहनाणंपि ।
थोवति नोवलब्भइ जीवत्तमिविंदियाईणं ।।४७४।।

---

1 न्यः P. 2 ति P.
3 P has मपि for मिति. 4 र P. 5 P drops ति.

जह वा सण्णीणमणक्खराण असइ नरवण्णविण्णाणे ।
लद्धक्खरंति भण्णइ किंचित्ति तहा असण्णीणं ।।४७५।।

साम्प्रतमक्षरश्रुताधिकादेव यदुक्तम्—"अक्खरलद्धीयस्स लद्धिअक्खरं समुप्पज्जइ"त्ति तदधिकृत्य चोदकद्वारेणोपतिष्ठते—'अक्खर' इत्यादि । ननु 'चाक्षरलाभः संज्ञिनां' पर्याप्तकानां 'भवेत्' कामं, यः किंविशिष्ट इत्याह—यः 'पुरुषादीनां वर्णविज्ञानो'पयोग इत्यर्थः । आदिशब्दात् स्त्र्यादिग्रहणम् । केषां तु न भवतीत्याह—'कुतोऽसंज्ञिनामे'केन्द्रियादीनाम् ? तेषाममनस्कत्वात्, परोपदेशजत्वाच्चारस्य । ततः किमित्या'ह—'भणितं च श्रुते तेषामप्य'संज्ञिनां लब्ध्यक्षराविर्भवनमिति गम्यते । "फासिंदियक्खरं रसणिंदियक्खरं घाणिंदियक्खरं सोतिंदियक्खरं चे" ति वचनात् । कथं तदिति गाथार्थः ।।४७३।।

अत्र दृष्टान्तद्वारेणोत्तरमाह—'जहे'त्यादि । 'यथै'केन्द्रिया'द्यसंज्ञिनां चैतन्यं' चिच्छक्तिः । 'अकृत्रिमं' सांसिद्धिकमविशिष्टं श्रद्धीयते, 'तह'त्ति तथा'ऽसंज्ञिनामूहाज्ञानमप्य'विशिष्टतरं लब्ध्यक्षररूपं कस्मात् सदपि न श्रद्धीयत इति ? यद्येवं कस्मा'न्नोपलभ्यत' इत्यत आह—'थोवं'ति अणीय इति कृत्वा । विशिष्टेन रूपेणेति शेषः । किंवदित्याह—'जीवत्वमिव' । केषामित्याह—'इंदियाती'णं' एकेन्द्रियादीनाम्, आदिपदलोपादिति गाथार्थः ।।४७४।।

दृष्टान्तान्तरमाह—'जह वे'त्यादि । 'यथा वा संज्ञिनामेव'[3] [अनक्षराणां] अक्षरानाभिज्ञानां गोपालादीनामसति नरवर्णविषये विज्ञाने लब्ध्यक्षरमिति भण्यते' । कुतः ? तद्वर्णश्रवणतस्तद्दर्शनतो वा गौरप्याकारिता सती स्वनाम जानीते सवलाऽहं वहुला चेयमित्यभिप्रायः । दार्ष्टान्तिकमाह—'किंचित्ति' । किंचिद्यच्च यावच्च 'तया' तेन प्रकारेण 'असंज्ञिना'मेकेन्द्रियादीनां पृथिव्यवादीनां लब्ध्यक्षरमस्तीति बोद्धव्यम् । संज्ञाव्यञ्जनाक्षरयोस्त्विहाप्रस्तावः परोपदेशजत्वादिति । लब्ध्य'क्षरस्य त्वस्ती'न्द्रियक्षयोपदशमरूपत्वादस्य च सकलसंसारिप्राणिसाधारणत्वादल्पवहुत्वे विचारात् । तदेवं सर्वोपलब्धिरस्तीति गाथार्थः ।।४७५।।

तदेतदपि परिशोध्येदानीमेकैकमक्षरमनुग्रहार्थं यथावत्कथयन्नाह—

एक्केक्कमक्खरं पुण सपरपज्जायभेयओ भिन्नं ।
तं सव्वदव्वपज्जायरासिमाणं मुणेयव्वं ।।४७६।।

जे लभइ केवलो से सवन्नसहिओ व पज्जवेऽयारो ।
ते तस्स सपज्जाया सेसा परपज्जया सव्वे ।।४७७।।

---

1 P has त्यत आ for त्या.

2 दो P. 3 P has मेवानक्षराभिज्ञानां.

4...4 वरं त्वस्ति अस्ये P.

जइ ते परपज्जाया न तस्स अह तस्स न परपज्जाया ।
जं तम्मि असंबद्धा तो परपज्जायववए सो ॥४७८॥

चायसपज्जायविसेसणाइणा तस्स जमुवउज्जंति ।
सधणमिवासंबंद्धं भवन्ति तो पज्जवा तस्स ॥४७९॥

सधणमसंबद्धंपि हु चेयण्णंपिव नरे जहा तस्स ।
उवउज्जइत्ति सधणं भण्णइ तह तस्स पज्जाया ॥४८०॥

जह दंसणनाणचरित्तगोयरा सव्वदव्वपज्जाया ।
सद्धेयनेयकिरियाफलोवओगित्ति भिन्नावि ॥४८१॥

जइणो सपज्जया इव सकज्जनिप्फायगत्ति सधणं व ।
आयाणच्चायफला तहसव्वेसिंपि वण्णाणं ॥४८२॥

एगं जाणं सव्वं जाणइ सव्वं च जाणमेगंति ।
इय सव्वमजाणंतो नागारं सव्वहा मुणइ ॥४८३॥

जेसु अनाएसु तओ न नज्जए नज्जए य नाएसु ।
किह तस्स ते न धम्मा घडस्स रूवाइधम्मव्व ॥४८४॥

नहि नवरमक्खरं सव्वदव्वपज्जायमाणमण्णंपि ।
जं वत्थुमत्थि लोए तं सव्वं सव्वपज्जायं ॥४८५॥

इहऽक्खराहिगारो पण्णवणिज्जा य जेण तव्विसओ ।
ते चिंतिज्जंतेवं कइभागो सव्वभावाण ॥४८६॥

पण्णवणिज्जा भावा वण्णाण सपज्जया तओ थोवा ।
सेसा परपज्जाया तोऽणन्तगुणा निरभिलप्पा ॥४८७॥

नणु सव्वागासपएसपज्जाया वण्णमाणमाइट्ठं ।
इह सव्वदव्वपज्जायमाणगहणं किमत्थंति ॥४८८॥

थोवंति न निद्दिट्ठा इहरा धम्मत्थियाइपज्जाया ।
के सपरपज्जयाणं हवंतु किं होतु वाऽभावो ॥४८९॥

किमणंतगुणा भणिया जमगुरुलहुपज्जया पएसम्मि ।
एक्केक्कंमि अणंता पण्णत्ता वीयरायेहिं ॥४९०॥

तत्थाविसेसियं नाणमक्खरं इह सुयक्खरं पगयं ।
तं किह केवलपज्जायमाणतुल्लं हविज्जाहि ॥४९१॥

सयपज्जवेहिं तं केवलेण तुल्लं न होज्ज न परेहिं ।
सपरपज्जाएहि उ तुल्लं तं केवलेणेव ॥४९२॥

अविसेसकेवलं पुण सयपज्जाएहिं चेव तत्तुल्लं ।
जं नेयं पइ तं सव्वभावव्वावारविणिउत्तं ॥४९३॥

'एक्केक्के'त्यादि। इह पुनस्त'देकैकमक्षर'मकारादि यत् संज्ञाभिलाप्य-विज्ञानात्मकमिति भावना। 'स्वपर्यायभेदभिन्नं परपर्यायभेदभिन्नं च' सत् किंप्रमाणं ज्ञातव्यमित्यत आह—'सर्वाणि' यानि 'द्रव्याणि'—धर्मास्तिकायादीनि तत्पर्यायतुल्यत्वेन सर्वात्मकमिति गाथार्थः ॥४७६॥

के पुनस्त इत्यत आह—'जे लभती'त्यादि। 'यान्' सानुनासिकादीन् सम्बद्धान् 'लभते' प्राप्नोति। 'केवलो'ऽसंयुक्तः। 'अकारः अकाराख्यो वर्णः। तथा 'शेषवर्णसहितो वा'—अन्यवर्णसंयोगद्वारेण। 'ते' सम्बद्धा'स्तस्या'कारस्य 'स्वपर्याया' उच्यन्ते, अस्तित्व सम्बन्धात्। ते चानन्ताः। कथम्? अभिलाप्य-वाह्यनिमित्तभेदात्। तस्य च परमाणुद्व्यणुकादिभेदेनानन्तत्वात्। ध्वनेश्च तथा तथाऽभिधायकत्वपरिणामे सति तदर्थप्रतिपादकत्वात्। संकेतस्य च शब्दार्थनादि-मत्सम्बन्धतो युज्यमानत्वादिति। 'सेसा' इति शेषास्त्वो[1]कारादिसम्बन्धिनो घटादिसम्बन्धिनो वा 'सर्वे परपर्यायाः'। नास्तित्वसम्बन्धादेते चैतेभ्योऽसकृ[2]-दनन्तगुणा इति भावनीयम्। एवमाकारादयोऽपि भावनीया इति गाथार्थः ॥४७७॥

एवमुक्ते सत्याह—'जती'त्यादि। 'यदि ते' घटइकारादिधर्म्माः 'परपर्याया'स्ततः परभूतत्वा'न्न तस्य' ते, तत्स्वामि पर्यायवत्। 'अह तस्स' त्ति। अथ ते तस्य 'न' तर्हि 'परपर्याया' आत्मभूतत्वात्, स्वपर्यायकलापवत्। ततश्च विरोधः। तन्न, अभिप्रायापरिज्ञानात्। तथाहि—'यद्' यस्मा'त्तस्मिन्' अकारे 'ऽसम्बद्धा' व्यावृत्तेन रूपेण वृत्तास्ते घटादिस्वपर्याया'स्ततः कारणात् 'परपर्याय-व्यपदेश'स्तेषामिति। निमित्तभेदेन तदतद्व्यपदेशः। अन्यथैकत्वं स्यात्। तथाहि—द्विविधाः पर्यायिणः पर्यायाश्चिन्त्यन्ते—सम्बद्धाश्चासम्बद्धाश्च। तत्र तावदकारे घटादिपर्यायास्तदस्तित्वपर्यायेणासम्बद्धा नास्तित्वपर्यायेण तु सम्बद्धाः। एवं घटादावप्यकारपर्यायाः। इह चाकारे घटस्वपर्यायाणामस्तित्व-पर्यायेणासम्बन्धाङ्गीकरणात् परपर्यायव्यपदेशः। अन्यथा ह्यकारपर्याया एव घटादिपर्याया इति। तत्रैतत्स्यात्—यत एवाकारे तेऽस्तित्वेनासम्बद्धा नास्तित्वेन तु सम्बद्धा अत एव ते तस्य इति न भवन्तीत्यभिदध्महे 'जइ ते परपेज्जाया ण तस्स'त्ति। त[3]त्रोच्यते—यत एव तस्य ते न सन्तीति विशेष्य ब्रूमो, न तु सर्वथैव न सन्ति, तथात्वे[4] खरविषाणप्रख्यत्वप्रसङ्गात्। अत एव ते तस्य परपर्याया अन्यथा स्वपर्याया एव स्युः। नचैतदेवमकारघटयोरेकत्वप्रसङ्गात्। अथवा यथैव हि ते तस्य न सन्तीति विशेष्य ब्रूमो—न सर्वथैव न सन्ति, स्वपक्षक्षति-प्रसङ्गात्। तथैव ह्यस्तित्वसम्बन्धमात्रं घटगतमङ्गीकृत्य तेऽस्य परपर्यायास्तस्येति कृत्वा। नास्तित्वमात्रं त्वेतद्गतमङ्गीकृत्य स्वपर्याया एव तेऽस्येति कृत्वा। अथवा यत एव तेऽस्येत्येवं षष्ठ्या ब्रूमोऽतएव तेऽकारस्य पर्यायाः विशेषणविशेष्य-भावसम्बन्धात्, घटरूपादिवत्। एवमुक्ते पर आह—वयमपि विशेष्य ब्रूमो यथेह

---

1 दिव P. 2 स्वा P. 3 अ P. 4 P has तत् for तथात्वे.

घटस्य रूपादयः षष्ठ्या प्रतीयन्ते तथा नैवमस्य घटपर्यायाः, किंतर्हि तेऽस्य न सन्तीत्येतावन्मात्रकं ब्रूमः। तथा च भवताऽपि नास्तित्वपर्यायोऽङ्गीकृत एव, अभावरूपाधीनत्वादपि वस्तुसत्तायाः। ततश्च नास्तित्वेन घटपर्यायसम्बन्धिना सहाकारस्य कः सम्बन्धः ? तस्याभावत्वात् खरविषाणवदिति दृष्टान्तदार्ष्टान्तिकयोर्वैधुर्यम्। अत्रेदमेकमुत्तरं—यद्यकारस्य तदभाव[1]सम्बन्धो न, यद्यकारस्य परभावाभावः पर्यायो न, हन्त ! तर्हि प्रतिषेधाभावे विधिप्राप्तितो भावसम्बन्धप्राप्त्याऽकारघटयोरेकत्वप्रसङ्गः प्राप्तः अथवा द्वितीयमुत्तरं—न वैधुर्यम् प्रतिषेधस्य सद्विषयत्वात्। तथाहि—तेऽस्य न सन्तीति किमुक्तं भवति ? त एते[2] स्वपर्यायत्वेन न सन्ति, तथा तेऽस्य सन्तीति। किमुक्तं भवति ? तस्य घट[3]पर्यायत्वेन सन्ति, एवं घटस्यापि स्वपर्यायतया सन्ति परपर्यायतया न सन्तीति। किं चेह कस्य सर्वात्मना भवेत् ? नहि घटस्य रूपादयः स्वतत्त्वेनैव भवन्ति, पारिमाण्डल्यस्य गुणित्वात्, तेषां च गुणत्वात्, गुणगुणिनोश्च पृथग्व्यपदेशात्। अपि च —नास्तित्वपर्यायोऽपि न सर्वथैवाभावः, पर्यायान्तरेण व्यपदेशात् प्रागभाववत्। तथाहि मृत्पिण्डे[4] शिवकस्थासकोशकुशूलादिमृत्पर्यायो [5]भाव एव स न[5] घटाकारभावमात्रविशेषणात् प्रागुत्पत्त्यभावो भण्यते। घटाकारोपरमविशेषणाद्वा कपालादिपर्यायः प्रध्वंसाभावः। एतदुक्तं भवति—पर्यायान्तरापन्नास्ते न सन्ति, न तु सर्वथैवाभावः, तस्यानभिलाप्यत्वात्। खरविषाणादयः खल्वभावत्वे सति कस्मादभिलप्यन्ते इति चेत्। उच्यते, तेऽपि च कृतसंकेतैर्विवक्षुभिरभिलाप्यार्थाभावप्रत्यायनार्थमु[6]पदिश्यन्ते, न तु तेषां सर्वथैवाभावः खरविषाणमिति शब्दमात्रसाक्षात्करणाद्। अत एतावन्तमर्थं हृदि व्यवस्थाप्याह—'**जं तम्मो**'त्यादि गाथार्थः ॥४७८॥

प्रमाणमाह—'**चाये**'त्यादि पुव्वर्द्धं। अस्याक्षर घटना—'**तस्स**' अकारस्स '**जं**' जम्हा ते '**उवउज्जंति**' स्वरूपं पोषयन्ति। कथं ? '**चायेण**' तृतीयायाः प्रत्येकाभिसम्बन्धात्। तथा '**सपज्जायविसेसणेण य**'। 'आदि'शब्दः स्वभेदप्रख्यापकः। प्रमाणद्वयं चैवम्। परपर्याया अप्यकारस्य पर्यायाः, त्यागेन पुष्टिजननादात्मनो नेत्रादिरोगवत्। तदत्यागोपयोगे च स्व इति व्यपदेशायोगात्। तथा तेऽस्य परपर्याया अपि सन्तः सामान्यतः पर्यायाः, स्वपर्यायविशेषणोपयोगात्, घटस्य रूपादय इव परस्परविशेषकाः। यथा हि घटस्य रूपाणूनां रसाद्यणुकलापः खल्वभावरूपतया विशेषकः, पर्यायाश्च तत्र ओघतः, एवमकारस्य स्वपर्यायाणां सकलत्रैलोक्यपर्यायराशय इति। एवमाकारानाकाराक्षरानक्षरश्रुतादिष्वपि वाच्यमिति गाथा[7] प्रागर्द्धार्थः। यद्येवमसम्बद्धाः किमस्यामी भण्यन्त इति। उच्यते, असम्बद्धा अप्यस्यैते पर्याया इति प्रतिज्ञा। उपयुज्यमानत्वादिति हेतुः। साक्षाद्दृष्टान्तमाह—'सधणमिवासंबद्धं'ति। प्रकटार्थम्। अतो—'भवन्ती'त्यादि। निगमनमिति गाथार्थः ॥४७९॥

---

1 वाद P. 2 P adds एतत् 3 P drops घट
4 एड P. 5...5 भाव एव सन् P. 6 म P.
7 P adds याः.

अमुमेव भावयन्नाह—'सधण'मित्यादि । गतार्था । नवरं 'चैतन्यं' व्यतिरेकेण वक्तव्यं, "तह तस्स ते पज्जाया भण्णन्ति, उवउज्जंति त्ति काउं" इति ॥४८०॥

दृष्टान्तान्तरमेवाह—'जहे'त्यादि । 'जइणो' इत्यादि । 'यथे'ति प्रकारार्थः । "जइणो'त्ति[1] । यतेः—साधोर्व्यपदिश्यन्त इति वाक्यशेषः । क इत्याह—'सर्वद्रव्य-पर्यायाः' सकलपदार्थस्वभावाः । कीदृक्षा इत्यत आह—'भिन्नावि'त्ति अनात्मभूता अपि । किमित्यत आह—'दंसणनाणचरित्तगोयर'त्तिकाउं दर्शनादेर्गोचरीभवन्तो—विषयभावं लभन्त इति[2] गाथार्थः ॥४८०॥

कस्मादिमेऽमीषां गोचरीभवन्तीत्यत आह—'सद्धेय'त्ति । यस्मात् केचित्तत्र 'श्रद्धेयफलोपयोगिनो' वर्त्तन्ते, यथा सन्ति पञ्चास्तिकाया विगतदोषेण भगवतोक्तत्वात् । तथा केचि'ज्ज्ञेयफलोपयोगिनो' यथैकैकोऽसंख्येयप्रदेशात्मकः सम्भवतः । तथा केचित् 'क्रियाफलोपयोगिनो' यथा वट्ट' [3]चउरंसमित्येवमादि । कुत इत्या'ह—'स्वकार्य'निष्पादक'म्वा के प्र[4]साधकत्वात् । किं वदित्याह—'सपज्जया इव'त्ति ज्ञानादिपर्याया इव । अयमत्र सारः—श्रद्धेयादिपरपर्यायानन्तरेण श्रद्धानाद्यभावः, विषयाभावाद्विषयिनोऽप्यभावः, परपर्यायानन्तरेण स्वपर्यायाभाव इत्युक्तं भवति । 'स्वधनमिवे'ति च भिनो दृष्टान्तः । दार्ष्टान्तिकमाह—'आदाणे'त्यादि । सुगममिति गाथार्थः ॥४८१-४८२॥

न चेयं स्वमनीषिका, आर्षोक्तत्वात् । अत आह—'एक्क'मित्यादि । 'एकं' वस्तु 'जानन्' स्वपरपर्यायानुवेधेन 'सर्वं' वस्तु 'जानाति', सर्वपरिज्ञानभाव-भावित्वादेकज्ञानस्य । 'सर्वं च जानन्नेक'मेकपरिज्ञाननान्तरीयकत्वात् सर्वज्ञान-स्येति । 'एवं सर्वमजानन् नाकारं[5] मुणइ' जानातीति गाथार्थः ॥४८३॥

तथा चाह—'जेसु' इत्यादि । 'येषु' परपर्याये'ष्वज्ञातेष्व'कारो 'न ज्ञायते', अतादृशत्वात्, तथा 'ज्ञायते च येषु ज्ञातेषु' तादृशत्वात् । 'कथं ते'—परपर्याया'न तस्य'—अकारस्य धर्माः ? किन्तु धर्मा एव, स्वस्थीभूयाक्षिणी निमील्य चिन्तयैतत् किमेवमुत नेति[6] । प्रयोगश्च—अकारस्य सकलं त्रैलोक्यं पर्यायः, तज्ज्ञाने तज्ज्ञानात्तदज्ञाने चाज्ञानात्, सर्वरूपाद्यात्मघटवत् । तथा[7] चाह—'घडस्स रूवादिधम्म व्व'त्ति गाथार्थः ॥४८४॥

अक्षरमेव ह्येवंविधमित्याशङ्कायामिदमाह—'ण ही'त्यादि । 'न केवलमक्ष-रमेव सकल'धर्माधर्माकाशजीवपुद्गलास्तिकाय'पर्याय'राशि'प्रमाणं', किन्तु 'यत् सत् तदेवं'—"जो एगं जाणती"त्यस्य[8] सामान्यप्रवृत्तेरिति गाथार्थः ॥४८५॥

यद्येवं किमक्षरमेवाङ्गीकृत्यायं प्रयास इत्याह—'इहे'त्यादि । 'इह' प्रक्रमेऽक्षराधिकारो' यतस्तथा 'प्रज्ञापनीया एव' अभिलाप्या एव पर्याया 'येन

1...1 जइतो इति P. 2 P adds भावा. 3 P adds सम.
4 स्यत श्रा P. 5...5 निष्पादकत्वात् मोक्षप्र P.
6 P adds सर्वथा. 7 P adds इति. 8 P adds सज्ञस्य.

तद्विपयो'ऽक्षरस्य सामान्यवर्णस्य विपयो वाच्यः । अतः 'ते' प्रज्ञापनीयाः पर्याया-'श्चिन्त्यन्ते' मृग्यन्ते । एवमकाराक्षरस्य सर्वपर्यायपरिमाणज्ञापनेन पृच्छति—'यद्येवं कतिभागः सर्वभावानां' सर्वपर्यायाणाम्, अभिलाप्या इति शेषः ।।४८६।।

उच्यते—'पण्ण' इत्यादि । 'वर्णाना'मक्षराणां 'प्रज्ञापनीया भावा' अभिलाप्या धर्माः । 'स्वपर्यायाः' खल्वात्मपर्याया यतस्ततः 'स्तोकाः' स्वल्पाः । यतश्च 'शेषाः परपर्यायास्ततोऽनन्तगुणाः' । एतेभ्यो वर्णाना'मनभिलाप्याः' पर्याया इति । एतदुक्तं भवति—सर्वस्य सतो वस्तुनः स्वपर्यायाः स्तोकाः, परपर्यायास्त्वनन्ताः, अन्यत्राकाशात्, तस्य हि सर्वतोऽनन्तत्वाद्विपर्यय इति गाथार्थः ।।४८७।।

एवं चर्चिते सत्याह परः—'णणु' इत्यादि । 'नन्वि' त्यसूयायाम् । 'वण्णमाणमाइट्ठं' ति । 'वर्णप्रमाणं' वर्णपर्यायप्रमाणमावेदितं, 'सूत्र' इति सामर्थ्याद् गम्यते । किं तदित्यत आह—'सर्वाकाशप्रदेशपर्यायाः' सकललोकालोकगताकाशप्रदेशपर्यायराशिप्रमाणमित्यर्थः । उक्तं च—"सव्वागासपदेसग्गं सव्वागासपदेसेहीं"त्येवमादि । अत एवंस्थिते 'इह' श्रुताधिकारे । 'सव्वदव्वपज्जायमाणगहणं किमर्थं', वर्णस्येति गम्यते, येनोच्यते "नहि नवरमक्षरं सव्वदव्वे"त्येवमादि । एतदुक्तं भवति—न सूत्रे एवं पठयते "सव्वदव्वपदेसग्ग"-मिति गाथार्थः ।।४८८।।

अत्रोत्तरमाह—'थोव'मित्यादि । इह सूत्रे चतुरस्तिकायपर्यायाः 'स्तोका इति न निर्दिष्टाः' न पठिताः साक्षात्, अर्थतस्तु निर्दिश्टा एव "जे एगं जाणंती"त्येवमादि'सूत्र प्रामाण्यात् । इत्थं चैतदङ्गीकर्त्तव्यं यदुत ते गृहीता इत्याह, इह चान्यथा तदसङ्ग्रहे 'धर्मास्ति[2]काय'चतुष्टय'पर्यायाणां[2]' वर्णसम्बन्धिनां 'के भवन्तु' व्यतिरिक्ताः सन्त इति वाक्यशेपः । तथाहि—किं स्वपर्यायाः सन्तु वचनगोचरा इव, आहोस्वित्परपर्यायाः सन्त्वाकाशस्वपर्याया इव । [3]पूर्वत्र श्रुतास्तिकायचतुष्टययोरेकत्वप्रसङ्गः, इतरत्र तु स्पष्टं परपर्याय [4]त्वेनोक्तेराचार्य[4] एवाशिशङ्कयिषुराह—'किं होंतु वाऽभावो' त्ति किमभा[5]वतामापद्यन्ते[5] ? पर आह—कामं, तन्न, तेषां सत्पर्यायत्वात् । तस्मात्परपर्यायकोट्यामेवैतेषामवरोध इति गाथार्थः ।।४८९।।

अन्येन प्रकारेणाह—'किमणंत' इत्यादि । ननु च 'किमि'त्याकाशप्रदेशा 'अनन्तगुणिता भणिताः' "सव्वागासपदेसग्गं सव्वागासपदेसेहिं अणंतगुणियं" ति । उच्यते 'ज'मित्यादि प्रकटार्थम् ।।४९०।।

---

1 P adds अत्र एवं.

2...2 धर्मास्तिकायादिस्वपर्यायाः स्वपरपर्यायाणां P.

3 P adds वर्णपूर्वपर्यायाः.

4...4 त्वं एवमुक्ते आचार्य P.

5...5 वतामापद्यन्तां P.

पुनरप्यपरया भङ्ग्या प्राह—'तत्थे'त्यादि । 'तत्रे'त्यधिकरणसप्तमी । ततश्च 'तत्रे' ति "सव्वागासपदेसग्गं सव्वागासपदेसेहिं अणंतगुणियं पज्जवक्खरं णिप्फज्जई"त्यस्मिन् सूत्रे 'नाणमक्खरं'ति ज्ञानमक्षरं प्रतिपादितम् । किंविशिष्ट-मित्याह—'अविशेषितं' सामान्येन अविशेषाभिधानाच्चेदं केवलाक्षरमिति गम्यते । ततः किमित्यत आह—'इह' द्वारे 'सुतक्खरं प्रकृत'मधिकृतम् । ततोऽपि किमित्यत आह—'तं' सुतक्खरं 'कथं' केन प्रकारेण 'केवलाक्षरपर्यायतुल्यं भवेत्' ? उच्यते, नन्वत्रापि "सव्वागास"मित्यादि सूत्रेऽपर्यवसितश्रुताधिकाराद्येव गम्यत इति स्थितपक्षः । अथ ब्रूषे "सव्वजीवाणंपि य णं अक्खरस्स अणंतभागो णिच्चुग्घाडि-यओ" इत्यत्र सूत्रान्तरे सर्वजीवग्रहणात् न [1]श्रुताक्षरं, चतुर्दशपूर्वविदां सम्पूर्ण-त्वात् । तस्मात्केवलाक्षरमेतदिति । यद्येवं केवलस्यापि न सर्वजीवानामनन्त-भागस्तिष्ठति सर्वज्ञसद्भावात् । अतो न तत्केवलाक्षरमपीति कस्यासावनन्त-भागोऽस्तु ? अथ मनुषे अविशेषेण सर्वजीवग्रहणे सत्यपि प्रकरणादपिशब्दाद्वा केवलिनो विहायान्येषामनन्तभागो गम्यते । उच्यते, अत एव किन्न श्रुतात्मकमक्षर-मङ्गीकृत्य समस्तद्वादशाङ्गविदोऽपि विहायान्येषामस्मद्विधानामनन्तभाग इति गम्यते ? तस्मात्स्वपरपर्यायभेदादुभयमप्यविरुद्धमिति वक्ष्याम इति गाथार्थः ॥४९१॥

तदेवमर्थतः परिहृत्य कण्ठतः परिहरन्नाह—'सय' इत्यादि । 'तद्' वर्णाक्षरं 'स्वपर्यायैः' स्वपर्यायानङ्गीकृत्य 'केवलेन तुल्यं न भवेत्', काममेतत्, एतत्पर्यायाणां सर्वपर्यायराश्यनन्तभागत्वात् । केवलस्य च सर्वद्रव्यपर्यायप्रमाणत्वात् । तथा 'न परैर्न परपर्यायराशिनेत्यर्थः । 'तत् केवलेन तुल्यं भवेत्', तस्य सर्वपर्याया-नन्तभागोनत्वात् । उभयमङ्गीकृत्याह—उभयथा 'तु तत्तुल्यं केवलज्ञानेनैव' विशिष्टेनेति शेषः । विशिष्टं ह्युच्यते 'स्वपरपर्याय'भेदोपकल्पितमिति गाथार्थः ॥४९२॥

एवं स्थिते सत्याह—'अवी'त्यादि । 'अविशेषकेवलं पुन'रविशेषेण सर्वोपलब्धिकेवलं पुनः—अविवक्षितस्वपरपर्यायविकल्पं केवलं पुनः—'स्वपर्यायैरेव तत्तुल्यं' "सव्वागासपदेसग्ग"लक्षणाक्षरप्रमाणं वर्त्तते । अयमत्र भावार्थः—इह यद्येन ज्ञानेन ज्ञायते तत्तस्य पर्यायो भण्यते विषयविषयिणोरभेदोपचाराज्जीव-देहवत् । भेदविवक्षायां तु परपर्याया एव । तेनामुना प्रकारेणाद्यस्य ज्ञानचतुष्टयस्य स्वपर्यायाः सन्ति स्तोकाश्च, परपर्यायाः सन्ति भूयांसश्च । केवलं त्वविकल्पकं सर्वज्ञत्वात् । स्वपर्याया एवाविशिष्टस्येत्यर्थः । तथा चाह—'यद्'—यस्मात्पञ्चास्ति-कायानङ्गीकृत्य 'तद्' अविशेषकेवलं 'सव्वभाव'त्ति सर्वात्मना 'व्यापारविनियुक्तं' व्यापारे व्यापृतमनुसमयमिति शेषः । न चैवं श्रुताक्षरमिति गाथार्थः ॥४९३॥

अन्यथा हि—

वत्थुसहावं पइ तंपि सपरपज्जायभेयओ भिन्नं ।
तं जेण जीवभावो भिन्ना य तओ घडाईया ॥४९४॥

1 P adds उद्..

अविसेसियंपि सुत्ते अक्खरपज्जायमाणमाइट्ठं ।
सुयकेवलक्खराणं एवं दोण्हंपि न विरुद्धं ।।४९५।।

तस्स उ अणंतभागो निच्चुग्घाडो य सव्वजीवाणं ।
भणियो सुयम्मि केवलिवज्जाणं तिविहभेओऽवि ।।४९६।।

सो पुण सव्वजहन्नो चेयण्णं नावरिज्जइ कयाई ।
उक्कोसावरणम्मिवि जलयच्छन्नक्कभासो व्व ।।४९७।।

थीणद्धिसहियनाणावरणोदयओ म पत्थिवाईणं ।
वेइंदियाइयाणं परिवड्ढइ कमविसोहीए ।।४९८।।

उक्कोसो उक्कोसयसुयणाणविओ तओऽवसेसाणं ।
होइ विमज्झो मज्झे छट्ठाणगयाण पाएणं ।।४९९।।

'वत्थु' इत्यादि । अथवाऽधुना विशेषकेवलमङ्गीकृत्य विषयविभागमाह—'वस्तुस्वभावं प्रति'—आलम्ब्य पिण्डमाश्रित्य 'तदपि' केवलं 'स्वपरपर्यायभेदाभ्यां भिन्नं' वर्तते जीवस्वभावत्वात् वर्णवत् । ते चास्य परपर्यायास्तुल्या इति जिनभटाचार्यपूज्याः । तथा चाह—'तद्येन' केवलं 'जीवस्वभाव'स्ततश्च तत्परिच्छेदाः स्वपर्यायास्तथा 'भिन्नाश्च ततो घटधर्माधर्माकाशादय'स्ते च परपर्यायाः । अन्यथा सङ्करस्तदेकत्वं वा स्यादिति गाथार्थः ।।४९४।।

यदुक्तं वक्ष्याम इति तदभिधीयते—'अविसेसियं वी''त्यादि । एवं य'दविशेषितं सूत्रे' ''सव्वागास''मित्यादौ 'येदक्षरपरिमाणमादिष्टं' तद्विशिष्टकेवलश्रुताक्षरयो'रविरुद्ध'मिति गाथार्थः ।।४९५।।

'तस्स उ' इत्यादि । 'तस्ये'ति सामान्यस्य । 'तिविहभेदोऽवि'त्ति जघन्यमध्यमोत्कृष्ट इति गाथार्थः ।।४९६।।

'स' इत्यादि । 'स पुन'रक्षरलाभः 'सर्वस्तोकः' 'चैतन्यं' जीवत्वनिबन्धनं 'नाव्रियते कदाचित्' कस्यचिति गाथार्थः ।।४९७।।

स कस्य भवतीत्याह—'थीणे'त्यादि । 'स्त्यानर्द्धि'वेदनीयोदय'सहिताज्ज्ञान'दर्शना'वरणोदयादु'त्कृष्टात् 'पृथिव्यादीनां स' भवति । ततोऽसौ 'वेइंदिये'त्यादि स्पष्टम् ।।४९८।।

साम्प्रतमुत्कृष्टमाह—'उक्कोस' इत्यादि । 'उक्कोसो' अक्खरलाभो 'समस्तचतुर्दशपूर्वविदः' । विमध्यममाह—'ततो'ऽवसेसाणं मज्झे विमज्झो होइ' । किंविशिष्टानामित्याह—'छट्ठाणगयाण' षट्स्थानपतितानाम् । तच्चेदम्—'अणंतभागहीणे वा असंक्खेज्जभागहीणे वा संखेज्जभागहीणे वा संक्खेज्जगुणहीणे वा अणंतगुणहीणे वा 'प्रायेण' बाहुल्यमङ्गीकृत्य । विवक्षयान्येषामपि तदुत्कृष्टसद्भावादित्युक्तमक्षरश्रुतम् ।।४९९।।

---

1 P adds इ. 2 ओ P.

[अनक्षरश्रुतम्]

अनक्षरश्रुताभिधित्सया प्राह—

ऊससियं नीससियं निच्छूढं खासिअं च छीयं च ।
निस्सिंघियमणुसारं अणक्खरं छेलियाईं य ॥५००॥ नि० १६ ॥

ऊससियाईं दव्वसुयमेत्तमहवा सुओवउत्तस्स ।
सव्वो च्चिय वावारो सुयमिह तो किं न चेट्ठावि ॥५०१॥

रूढीय तं सुयं सुव्वइत्ति चेट्ठा न सुव्वइ कयाइ ।
अहिगमया वण्णा इव जमणुस्साराद्ओ तेणं ॥५०२॥

'ऊससित'मि'त्यादि । प्रतीतार्थैव ॥५००॥ निर्युक्तिगाथा १९॥

भाष्यकृदाह—ऊससिते'त्यादि[2] । 'उच्छ्वसितादि द्रव्यश्रुतमात्रं' कारणत्वाद् । 'अथ वै[3] तत् श्रुतमेव, यतः श्रुतोपयुक्तस्य सर्व एव व्यापारः श्रुतमितीह' पठितः । पर आह—यद्येवं 'तो किं न करादिचेट्ठावि' श्रुतं, श्रुतोपयोगाविशेषात् ॥५०१॥

उच्यते—'रूढी'त्यादि । 'रूढ्या तद्' उच्छ्वसितादि 'श्रुत'मुच्यते, चेष्टा पुनर्न कदाचित् श्रूयते', दृश्यत्वेनाश्रव्यत्वात् । अनुस्वारादयस्तर्हि कस्मात् श्रुतमित्यत आह—'वर्णा इवार्थाधिगमकत्वादनुस्वारादयोऽपि' श्रुतम् । उक्तमनक्षरश्रुतमिति गाथार्थः ॥५०२॥

[संज्ञ्यसंज्ञिश्रुतम्]

संज्ञिश्रुताभिधित्सया व्युत्पत्तिं तावदाह—

सण्णिस्स सुयं जं तं सण्णिसुयं सो य जस्स सा सण्णा ।
होइ तिहा कालियहेउदिट्ठिवाओवएसेणं ॥५०३॥

जइ सण्णासंबंधेण सण्णिणो तेण सण्णिणो सव्वे ।
एगिंदियाइयाणवि जं सण्णा दसविहा भणिया ॥५०४॥

थोवा न सोहणाऽविय जं सा तो नाहिकीरए इहइं ।
करिसावणेण धणवं न रूववं मुत्तिमेत्तेणं ॥५०५॥

जह बहुदव्वो धणवं पसत्थरूवो य रूववं होइ ।
महईए सोहणाए य तह सण्णी नाणसण्णाए ॥५०६॥

इह दीहकालिगी कालिगि त्ति सण्णा जया सुदीहंपि ।
संभरइ भूयमिस्सं चिंतेइ य कह णु कायव्वं ॥५०७॥

कालियसण्णि त्ति तओ जस्स तई सो य जो मणोजोग्गे ।
खंधेऽणंते घेत्तुं मन्नइ तल्लद्धिसंपण्णो ॥५०८॥

1...1 ऊसे P. 2 P drops ऊससितेत्यादि. 3 वै P.

रूवे जहोवलद्धी चक्खुमओ दंसिए पयासेणं ।
तह छव्विहोवओगो मणदव्वपयासिए अत्थे ॥५०९॥

अविसुद्धचक्खुणो जह नाइपयासम्मि रूवविण्णाणं ।
अस्सण्णिणो तहऽत्थे थोवमणोदव्वलद्धिमओ ॥५१०॥

जह मुच्छियाइयाणं अव्वत्तं सव्वविसयविण्णाणं ।
एगिंदियाण एवं सुद्धयरं बेंदियाईणं ॥५११॥

तुल्ले छेयगभावे जं सामत्थं तु चक्करयणस्स ।
तं तु जहक्कमहीणं न होइ सरपत्तमाईणं ॥५१२॥

इय मणोविसईणं जा पडुया होइ उग्गहाईसु ।
तुल्ले चेयणभावे अस्सण्णीणं न सा होइ ॥५१३॥

जे पुण संचिंतेउं इट्ठाणिट्ठेसु विसयवत्थूसुं ।
वट्टंति नियट्टंति य सदेहपरिपालणाहेउं ॥५१४॥

पाएण संपए च्चिय कालम्मि न याइदीहकालण्णा ।
ते हेउवायसण्णी निच्चेट्ठा होंति अस्सण्णी ॥५१५॥

सम्मद्दिट्ठी सण्णी संते नाणे खओवसमियम्मि ।
अस्सण्णी मिच्छत्तम्मि दिट्ठिवाओवएसेण ॥५१६॥

खयनाणी किं सण्णी न होइ होइ व खओवसमनाणी ।
सण्णा सरणमणागयचिंता य न सा जिणे जम्हा ॥५१७॥

मिच्छो हियाहियविभागनाणसण्णासमण्णिओ कोई ।
दीसई सो किमसण्णी सण्णा जमसोहणा तस्स ॥५१८॥

जह दुव्वयणमवयणं कुच्छियसीलं असीलमसईए ।
भण्णइ तह नाणंपिहु मिच्छद्दिट्ठिस्स अण्णाणं ॥५१९॥

सदसदविसेसणाओ भवहेउजदिच्छिओवलंभाओ ।
नाणफलाभावाओ मिच्छद्दिट्ठिस्स अण्णाणं ॥५२०॥

ओहो न हेउएँ हेउओ न कालम्मि भण्णई सण्णी ।
जह कुच्छियत्तणाओ तह कालो दिट्ठिवायम्मि ॥५२१॥

पंचण्हमूहसण्णा हेऊसण्णा विइंदियाईणं ।
सुरनारयगब्भुब्भवजीवाणं कालिगोसण्णा ॥५२२॥

छउमत्थाणं सण्णा सम्मद्दिट्ठीए होइ सुयनाणं ।
मइवावारविमुक्का सण्णाईआ उ केवलिणो ॥५२३॥

मोत्तूण हेउकालियसम्मत्तकमं जहुत्तरविसुद्धं ।
किं कालिओवएसो कीरइ आइएँ सुत्तम्मि ॥५२४॥

**सण्णित्ति असण्णित्ति य सव्वसुए कालिओवएसेणं ।**
**पायं संववहारो कीरई तेणाइए स कओ ।।५२५।।**

'**सण्णिस्से**'त्यादि । 'संज्ञिनः श्रुतमिति संज्ञिश्रुतं, स च' संज्ञी 'यस्यासौ संज्ञा भवति' । सा च 'त्रिविधा'—दीर्घशब्दलोपा'द्दीर्घकालिकोपदेशेन हेतुवादोपदेशेन दृष्टिवादोपदेशेन' चेति समुदायगाथार्थः ।।५०३।।

अस्यां व्युत्पत्तावतिप्रसंगचोद्यमाह—'**जती**'त्यादि । 'यदि संज्ञासम्बन्धेन संज्ञिनो' भवन्तीति ब्रूपे, 'तेन सर्वप्राणिनः संज्ञिन' एव प्राप्ताः । 'एकेन्द्रियाणामपि' **प्रज्ञापनायां** 'दशविधसंज्ञाभिधानात्' । "आहारादि ४, क्रोधादि ४, ओहसन्ना लोगसण्णा" । अतः किमुच्यते तेनै**वार्यश्यामेन**—"अस[1]ण्णी णं भंते ! अस[2]ण्णीति[3] कालतो केवचिरं होइं !" त्ति गाथार्थः ।।५०४।।

उच्यते—'**थोवा**' इत्यादि । 'इहे'त्यस्यां व्युत्पत्तौ । शेषं स्पष्टम् । नहि कार्षापणमात्रधनवांस्तद्वानुच्यते, '[4]मूर्ति मात्रत्वाद्[4]पवानित्यप्रसिद्धेः ।।५०५।।

किन्तु—'**जहे**'त्यादि । 'यथेह वहुद्रव्यो धनवानि'त्युच्यते, 'प्रशस्तमूर्त्तिसम्बन्धाच्च रूपवानि'ति । एवमिह 'महती शोभना च संज्ञा'ऽधिक्रियते । संज्ञानं 'संज्ञा'—मनोविज्ञानमित्यर्थः । 'तत्सम्बन्धात् संज्ञिन' इति गाथार्थः ।।५०६।।

सा च किंविशिष्टेहाधिक्रियत इत्यत आह—'**इह**' गाहा । 'इहा'दिपदलोपा'द्दीर्घकालिक्यापि कालिको'त्युच्यते । कालिकी चासौ संज्ञा च पुंवद्भावात् 'कालिकसंज्ञे'ति, 'यया सुदीर्घमपि' काल'मनुस्मरति भूत[5]मेष्यं तथा[5]नुचिन्तयति कथं नु तत् कर्त्तव्यमि'ति गाथार्थः ।।५०७।।

वहुव्रीहिणा मीलयन्नाह—'**कालिये**'त्यादि । स्पष्टार्था । नवरं '**तल्लद्धिसंपण्णो**'त्ति मनोविज्ञानावरणक्षयोपशमादिसमेत इति ।।५०८।।

अस्य च—'**रूवे जहे**'त्यादि । स्पष्टार्थैव ।।५०९।।

विपर्ययमविकृत्याह—'**अविसुद्धे**'त्यादि । 'यथा' काचकामलाद्युपहतलोचनस्य 'नातिप्रकाशे रूप[6]विज्ञानं[6] न' स्पष्टं भवति, एव'मसंज्ञिनः' पञ्चेन्द्रियसम्मू[7]र्च्छनजस्यार्थविज्ञानं स्यात्, निकृष्टतरक्षयोपशमतया'ऽत्यल्पमनोद्रव्यग्रहणशक्तित्वादि'ति गाथार्थः ।।५१०।।

एकेन्द्रियादिसम्मू[8]र्च्छनजानामाह—'जहे'त्यादि । 'यथे'ह मत्तसुप्त-'मूर्च्छितादीनां' पुंसा'मव्यक्तं' सकलशब्दादि'विषयविज्ञान'मनुभूयते एव'मेकेन्द्रियाणां' प्रकृष्टावरणो दयादेव[9] । 'द्वीन्द्रियादीनां' यदि नाम विशुद्धतर-

---

1 म्न P. 2 न्न P. 3 P has पिपि for वणोति.
4...4 मूर्तिमान् वा रू P. 5...5 मेष्यन्तं ना P. 6...6 विज्ञानम P.
7 न्मू P. 8 न्मू P. 9 P has दयाद् एवदेव for दयादेव.

मिन्द्रियवृद्धिभाजामि'दमत्र पौर्वापर्यम्—एकेन्द्रियविकलेन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियाणां क्रमवृद्धमिति । तत्रैतत्स्यात्—चैतन्यतुल्यतायां कोऽयमुपलब्धिविशेष इति । अत्रोच्यते—सामर्थ्यभेदात् । स च क्षयोपशमानन्त्यात् ॥५११॥

तथाहि—'तुल्ल' इत्यादि स्पष्टार्था ॥५१२॥

'इय' इत्यादि । दार्ष्टान्तिकः प्रतीतार्थ एव । नवरं 'मनोविषयिणः'—षट्पर्याप्तिभाजिनः ॥५१३॥

तदेवं कालिकोपदेशेन संज्ञिनं प्रपञ्च्य हेतुवादोपदेशेनाह—'जे पुण'-त्यादि । 'पायेणे'त्यादि । 'इट्ठाणिट्ठाणि विसयवत्थूणि'—छायातवादीनि । 'निच्चेट्ठा होंति असण्णी' एतदपेक्षया स्थावरा इति गाथाद्वयार्थः ॥५१४-५१५॥

'सम्म' गाहा । 'दृष्टि'र्दर्शनम् । वदनं 'वादः' । 'दर्शनवादमङ्गीकृत्य सम्यग्दृष्टिः[1] । क इत्यत आह—'संज्ञी' । क्व सतीत्याह—'सति ज्ञाने' मतिश्रुतलक्षणे 'क्षायोपशमिके' । एतद्विपर्ययमाह—'अस्सण्णी'त्यादि । स्पष्टम् ॥५१६॥

एवमुक्ते प्रदेशान्तरोक्तं स्मृत्वा आह—'खय' इत्यादि । पुव्वद्धं कण्ठ्यं । उत्तरमाह—'संज्ञा' हि नाम 'स्मरणमनागतादिचिन्ते'त्युच्यते । 'सा जिने' भगवति केवलिनि 'ना'स्तीति कथं तद्योगादसौ तद्वान् भवेदिति गाथार्थः ॥५१७॥

पुनरप्याह—'मिच्छो' इत्यादि । ननु च 'मिथ्यादृष्टि'रपि कश्चिद् 'हिताहित[2]विषयविज्ञानोपेतत्वात् कश्चित्संज्ञीति दृश्यते, स किमसंज्ञी' येनोच्यते "सम्मद्दिट्ठी सण्णी" यावत्पादत्रयम् । उच्यते, 'संज्ञा यत्तस्याशोभने'ति गाथार्थः ॥५१८॥

अशोभनं चावस्त्वित्यत आह—'जहे'त्यादि । सुबोधार्था ॥५१९॥

अपि च—'सदसदे'त्यादि । प्राग्वत् ॥५२०॥

कथं चान्यस्थानभागन्यंव्यपदेशार्हः स्यात् ? कथमित्याह—'ओहे'त्यादि । 'ओह' इत्योघसंज्ञावानेकेन्द्रियो 'न हेतुते' त्ति न हेतुवादोपदेशेन । तथा 'हेउज'त्ति हेतुरूपोपदेशसंज्ञ्यपि 'न कालं मि'त्ति न दीर्घकालिकोपदेशेन 'भण्यते संज्ञी[3]'—उच्यते संज्ञी 'यथा' येन प्रकारेणासंभवलक्षणेन । किंकारणमित्याह—'कुत्सितत्वा'दयोग्यत्वात् । तथा किमित्यत आह—'तथा' तेन प्रकारेण 'कालो'त्ति दीर्घकालिकोपदेशेन संज्ञी 'दिट्ठिवातम्मि'त्ति न दृष्टिवादोपदेशेन संज्ञीत्युच्यते । अतोऽसावज्ञानीति प्रक्रम इति गाथार्थः ॥५२१॥

केषां का संज्ञेति विशेषेणाह—'पञ्चण्हे'त्यादि । 'पञ्चानां'—पृथिव्यादीना-'मोघसंज्ञा'—अव्यक्त[4]'चतुरिन्द्रियत्वात् । 'हेतुसंज्ञा तु द्वीन्द्रियादीना'मासंमू[5]र्च्छनज-

---

1 P has भावत्वात् for भाजां.  2 P adds विभाग.

3 ज्ञा P.  4 P adds संज्ञाऽव्यक्त.  5 P has सम्मू for संमू.

पञ्चेन्द्रियेभ्योऽमनस्कत्वात् । 'सुरादीनां तु कालिकी' समनस्कत्वादिति गाथार्थः ॥५२२॥

इह च 'छउ' इत्यादि । 'सम्यग्दृष्टीनां छद्मस्थानां' या 'संज्ञा' दृष्टिवादो-पदेशेनेत्यभिप्रायः । सा तेषां 'श्रुतज्ञानं भवति' मतिव्यापारालिङ्गितत्वात् । 'केवलिनस्तु मतिव्यापारविरहात् संज्ञाऽतीता' इति गाथार्थः ॥५२३॥

एवमुक्ते सत्याह—'मोत्तूणे'त्यादि । 'मुक्त्वा हेतुकालिकदृष्टिवादक्रमं तरविशुद्धं किं' कस्मात् 'कालिकोपदेशः सूत्रे आदौ क्रियते'? ये नोक्तं ऽनपुरुपो "होत्ति तिह्रा कालित्तियहेतु'दिट्ठिवादोवदेसेणं" ति गाथार्थः ॥५२४॥

उच्यते—प्रयोजनवशात् । तथाहि—'सण्णी'त्यादि । 'सर्वत्र श्रुते संज्ञासंज्ञि-वोल्लायां 'प्रायः कालिकोपदेशेन संव्यवहारः क्रियते', येन कारणेन 'तेन' विशुद्धि-क्रमं वाधित्वाऽपि 'स' कालिकोपदेशेन संज्ञी 'कृतो' धुरीति गाथार्थः ॥५२५॥

[सम्यग्मिथ्याश्रुतविचारः]

तदेवं सप्रतिपक्षमाद्यद्वारद्वयमभिधाय तृतीयमभिदधदाह—

अंगाणंगपविट्ठं सम्मसुयं लोइयं तु मिच्छसुयं ।
आसज्ज उ सामित्तं लोइयलोउत्तरे भयणा ॥५२६॥
सम्मत्तपरिग्गहियं सम्मसुयं, तं च पंचहा सम्मं ।
उवसमियं सासाणं खयसमजं वेययं खइयं ॥५२७॥
उवसामगसेढीगयस्स होइ उवसामियं तु सम्मत्तं ।
जो वा अकयतिपुंजो अखवियमिच्छो लहइ सम्मं ॥५२८॥
खीणम्मि उइण्णम्मि य अणुदिज्जंते य सेसमिच्छत्ते ।
अंतोमुहुत्तमेत्तं उवसमसम्मं लहइ जीवो ॥५२९॥
उवसमसम्मत्ताओ चयओ मिच्छं अपावमाणस्स ।
सासायणसम्मत्तं तयंतरालम्मि छावलियं ॥५३०॥
मिच्छत्तं जमुइण्णं तं खीणं अणुइयं च उवसंतं ।
मिसीभावपरिणयं वेइज्जंतं खओवसमं ॥५३१॥
वेययसम्मत्तं पुण सव्वोइयचरमपोग्गलावत्थं ।
खीणे दंसणमोहे तिविहम्मिवि खाइयं होइ ॥५३२॥
चोद्दस दस य अभिन्ने नियमा सम्मत्त सेसए भयणा ।
मइओहिविवज्जासेऽवि होइ मिच्छं न उण सेसे ॥५३३॥
तत्तावगमसहावे सइ सम्मसुयाण को पइविसेसो ।
जह नाणदंसणाणं भेओ तुल्लेऽवबोहम्मि ॥५३४॥
नाणमवायधिईओ दंसणमिट्ठं जहोग्गहेहाओ ।
तह तत्तरुई सम्मं रोइज्जइ जेण तं नाणं ॥५३५॥

---

1...1 तदनुवृत्त्या होंति तिहा कालियहेतु P.

'अंगे'त्यादि । 'अङ्गानङ्गप्रविष्टं'—आचारावश्यकादि'सम्यक्श्रुतं' प्रकृत्येति वाक्यशेषः । प्रतिपक्षद्वारमाह—'लौकिकं पुन'र्भारतादि 'मिथ्याश्रुतं', प्रकृत्यैवेति शेषः । स्वाम्यपेक्षयाऽऽह—'आश्रित्य तु स्वामित्व'माधारभूतं[1] लौकिके लोकोत्तरे च भजना । लौकिकं मिथ्याश्रुतं भवेदितरद्वा । एवं लोकोत्तरमपि । मिथ्यादृष्टिपरिग्रहान्मिथ्याश्रुतमित्येवमादि, परस्थानविनियोगात् ।।५२६।।

आह च—'सम्मत्त'मित्यादि । इह भारताद्यपि 'सम्यक्त्वपरिगृहीतं सम्यक् श्रुतं' भवति । इतरदपि मिथ्याश्रुतं मिथ्यात्वपरिग्रहादित्यनुक्तमपि सामर्थ्याद् गम्यते । 'तच्च सम्यक्त्वं पञ्चधा' भणितं भगवद्भिः । तद्यथा—'उवसम'मित्यादि । उपशमनमुपशमस्ततस्तेन वा निर्वृत्त'मौपशमिकम्' ।१। तथा 'सासाणं'ति सासायणसंमत्तं । तत्र तत्त्वश्रद्धानरसास्वादनात् सा[2]स्वादनम् । मिथ्यादर्शनाभिमुख्यादाशातयतीति वे'त्याशातनम्' । सह तेन साशातनः । तस्य सम्यक्त्वं साशातनसम्यक्त्वम् । ईषत्तत्त्वरसास्वादनं वाऽऽस्वादनम् । सह तेन सास्वादनम् । आशातयतीति वेत्याशातनः । तेन सह यत्तत् साशातनम् । 'सु' प्रशंसायाम् । शोभनास्वादनः स्वास्वादनः स्वाया[3]शातनः स्वाशातनस्तस्येति ।२। तथा क्षयश्चोपशमश्च क्षयोपशमौ ताभ्यां निर्वृत्तं 'क्षायोपशमिकम्' ।३। तथा वेद्यत इति 'वेदकम्' ।४। क्षयेण निर्वृत्तं 'क्षायिकम्' ।५। ।।५२७।।

अयं तावत् पिण्डार्थः । अथावयवार्थं प्रतन्वन्नाह—'उवसामगे'त्यादि । उपशमयती'त्युपशमक'स्तस्य 'श्रेणिः'—अष्टाविंशतिविधमोहनीयराशिशकलानामनुक्रमशमनं तां 'गत'स्तस्य 'भवति' सम्पद्यते 'औपशमिकमेव सम्यक्त्वं' दर्शनसप्तकोपशमात् । किमस्यैव ? नेत्याह—'यो वा' प्रतिपत्ता 'अकृतत्रिपुञ्जो'ऽनङ्गीकृतमिथ्यात्वेतरोभयत्रयविभागः सन् 'लभते' प्राप्नोति 'सम्मं'ति सम्यक्त्वम् । तत्रैवं क्षायिकमपि लभत इत्यत आह—'अक्षपितमिथ्यात्वो'ऽक्षपितमिथ्यादर्शनो यः । कथं पुनरसौ पुञ्जत्रयं करोतीति चेत् । उच्यते—इह कश्चित्प्रवाहतोऽनादिमिथ्यादृष्टिस्तथाविधधर्माचार्यसामग्रीसमवधाने सत्यपूर्वकरणेनाभिमुखीभवन् ततो मिथ्यात्वपुञ्जकान् मिश्रपुञ्जकं करोति, मदनकोद्रवपुञ्जकादिवार्धविशुद्धतत्पुञ्जकम् । ततोऽपि च सम्यक्त्वपुञ्जकमर्द्धविशुद्धकोद्रवपुञ्जकादिव सर्वोपधाविशुद्धतत्पुञ्जकम् । ततस्तृतीयं सम्यक्त्वपुञ्जकं विशिष्टविपाकतो वेदयन् जन्तुः सम्यग्दर्शनी भण्यते । अयमत्र भावार्थः—

"तद्यथेह प्रदीपस्य, स्वच्छाभ्रपटलैर्गृहम् ।
न करोत्यावृतिं काञ्चिदेवमेतद् रुचे[4]रपि ।।१।।
एकपुञ्जी द्विपुञ्जी च त्रिपुञ्जी वाऽननुक्रमात् ।
दर्शन्युभयवांश्चैव, मिथ्यादृष्टिश्च कीर्त्तितः ।।२।।

---

1 P has लक्षणं for भूतं.
2 आ P.
3 य P.
4 P has रवे for रुचे.

वेदयन् पुद्गलान् शुद्धान्, क्षयं नयति दर्शनी ।
तत्क्षये वेदकत्वेन, मिथ्यात्वस्यैव वेदकः ॥३॥
यस्त्रिपुञ्जी स सम्यक्त्वमेव भुङ्क्ते विपाकतः ।
द्विपुञ्ज्यपि च मिश्राख्यं, एकपुञ्ज्यपि चेतरत् ॥४॥"

॥५२८॥

प्रदेशानुभवस्तु वद्धानुभवः[1] कालानुभवः[2] साधारणः । अमुमेवार्थं स्पष्टयन्नाह—'खीणम्मी'त्यादि । इह 'उदीर्णे' उदयप्राप्ते मिथ्यात्वे 'क्षीणे' सति—आत्मप्रदेशविपाकवेदनया निरुपाख्यतामानीत एव सति । किं ? 'उपशमसम्यक्त्वं लभते जीव' इति क्रिया । किमेतावन्मात्रकेणैव गुणेन ? नेत्याह —'अणुदिज्जंते य सेसमिच्छत्ते'त्ति । तत्र उपयुक्ताद्यदन्यत्तच्छेपमिति न्यायः । ततश्च 'शेषमिथ्यात्वे च मन्दपरिणामतया 'अनुदीय[3]माने' अनुदयभाजि सति विष्कम्भितोदय इति यावत् । कियन्तं कालं यावदित्याह—'अन्तर्मुहूर्त्तमात्र'मन्तर्मुहूर्त्तमेवान्तर्मुहूर्त्तमात्रम् । तत ऊर्ध्वं भ्रश्यत्येव, यतश्चायमकृतत्रिपुञ्जी लभतेऽत इदं न पुद्गलानुभवरूपम् । अध्यवसायमात्रमित्यर्थः । अत्र चोषरदेशदावानलदृष्टान्तो भावनीय इति गाथार्थः ॥५२९॥

सास्वादनमाह —'उवसमे'त्यादि । अस्मादेव 'च्यवतो मिथ्यात्वं चाद्याप्यप्राप्नुवतोऽपान्तराले' प्रोद्गतानन्तानुवन्धिनः 'पडावलिकं' कालं 'सास्वादनम्' । तदनेनैतत् कथयति—न तत्सत्तामात्रानुवन्धिनी मिथ्यात्वप्राप्तिरिति । एतदुक्तं भवति—अस्मादेव भ्रश्यन्तो द्वीन्द्रियादिषूत्पद्यन्ते, नान्यस्माद्, अन्यतो झटिति मिथ्यात्वप्राप्त्या पडावलिकाकालाभावादिति गाथार्थः ॥५३०॥

क्षायोपशमिकमाह—'मिच्छत्त'मित्यादि । 'मिथ्यात्वं' नाम मिथ्यात्वमोहनीयं कर्म । तत् 'यदुदीर्णं' यदुद्भूतशक्तिकं[4], उदयावलिकायां व्यवस्थितमित्यर्थः 'तत्क्षीणं' तत्प्रलयमुपगतम् । 'अनुदितं च' अनुदीर्णं चोपशान्तम् । 'उपशान्तं' नाम विष्कम्भितोदयमपनीतमिथ्यास्वभावं, विष्कम्भितोदयं शेषमिथ्यात्वमपनीतमिथ्यात्वस्वभावं मदनकोद्रवोदाहरणत्रिपुञ्जन्यायशोधितं सम्यक्त्वमेव । आह—इह विष्कम्भितोदयस्य मिथ्यात्वस्यानुदीर्णता युक्ता, न पुनः सम्यक्त्वस्य, विपाकेन वेदनात् । उच्यते, सत्यमेवमेतत् । किन्त्वपनीतमिथ्यास्वभावात् स्वरूपेणानुदयात्तस्याप्यनुदीर्णोपचार इति । यद्वाऽनुदीर्णत्वं मिथ्यात्वस्यैव योज्यते, नतु सम्क्त्वस्य । कथं मिथ्यात्वं ? यदुदीर्णं तत्क्षीणं, शेषकं त्वनुदीर्णमुपशान्तं चेति । 'च'शब्दस्य व्यवहितः प्रयोगः । ततश्चानुदीर्णं मिथ्यात्वमुपशान्तं च सम्यक्त्वं गृह्यते । भावार्थः प्राग्वत् । तदेवं 'मिश्रीभावपरिणतं' क्षयोपशमस्वभावमापन्नं 'वेद्यमान'मनुभूयमानं मिथ्यात्वं प्रदेशानुभवेन सम्यक्त्वं विपाकेन क्षयोपशमाख्यां निर्वृत्तमितिकृत्वा 'क्षयोपशमिकं' सम्यक्त्वमुच्यते । आह—इदं सम्यक्त्वमौदयिको भावो मोहनीयोदयभेदत्वादतोऽस्य न युक्तं क्षायोपशमिकत्वमिति । न, अभिप्रायापरिज्ञानात् ।

1 Printed edition has अन्तर्मुहूर्तं for वद्धानुभवः. 2 व P.
3 यँ P. 4 P drops कं.

सम्यक्त्वं हि सांसिद्धिकमात्मपरिणामरूपं ज्ञानवत्, नतु क्रोधादिवत्कर्माणुसम्पर्कजम्। तथाहि—तावति मिथ्यात्वघनपटले क्षीणे तथानुभवतोऽपि स्वच्छाभ्रकल्पान् सम्यक्त्वाणूंस्तथाविधसवितृप्रकाशवत् सहज एवासौ तत्परिणाम इति। क्षयोपशमनिष्पन्नश्चायं, तमन्तरेणाभावात्। न ह्युदीर्णक्षयानुदीर्णोशमव्यतिरेकेणास्य भावः। क्रोधादिभावः पुनरुपधानसामर्थ्यापादितस्फटिकमणिकृष्णतावदसहज इति। आह—यदि परिणामः सम्यक्त्वं ततो मिश्रीभावपरिणतं वेद्यमानं क्षायोपशमिकमित्येतद्विरुध्यते, मोहनीयभेदयोरेव मिश्रीभावपरिणतयोर्वेद्यमानत्वात्। न विरुध्यते, तथाविधपरिणामहेतुत्वेन तयोरेव सम्यक्त्वोपचारात्। अपरस्त्वाह—औपशमिकादस्य किं कृतो विशेष इति। उच्यते, वेदनाऽवेदनाकृतः। तथाहि—अस्मिन् प्राक् शमितमनुसमयमुदेति, प्रदेशानुभवलक्षणं स्थितिकालमङ्गीकृत्य। तथा वेद्यते, क्षीयते च स्थगितमपि कोद्रवदृष्टान्तात्। नत्वयमौपशमिके प्रकारोऽस्त्युदयविष्कम्भणमात्रत्वाद्, विष्टब्धाहारवदिति गाथार्थः ॥५३१॥

चतुर्थमाह—'**वेदये**'त्यादि। तत्र वेदयतीति 'वेदको'ऽनुभविता। तस्यानर्थान्तिरत्वाद्वेदकम्। समञ्चतीति सम्यक् तद्भावः 'सम्यकत्वं' वेदसम्यक्त्वम्। अथवा "कृत्यल्युटो बहुल"मिति वचनाद्वेद्यत इति वेदक इति भवत्याहारकवत्। कुतः 'कृत्कृत्यल्युडि'तिप्रश्लेषात्तद्वेदकसम्यक्त्वम्। 'पुनः' शब्दस्य विशेषणार्थत्वात् क्षायिकश्रेणीमभिप्रपन्नस्य भवतीति शेषः। किंविशिष्टमिति ? अत्रोच्यते—"अणमिच्छमीसेसु खविएसु" सम्यक्त्वदर्शनमोहनीयमनुसमयमुदीर्योदीर्यानुभवतः क्षपयतश्च निष्ठितोदीरणीयस्य च '**सव्वोदितचरमपोग्गलावत्थे**' ति चरमाशेषोदीरितपुद्गलानुभूतिमात्रवत इति गाथार्द्धार्थः। आह—क्षायोपशमिकवेदकयोर्न विशेषोऽनुभवस्याविशेषात्। उच्यते, अस्त्युदितानुदितविषयत्वादर्धभोक्तुरिवान्यस्माच्चरभावशेषकवलोपभोक्तुरिति। तथाहि—पूर्वत्र सम्यक्त्वं योग्यतया वर्धि[1]कवत् व्यवस्थापितम्। अत्रतुचरमग्रासमात्रम्। अथवोदितानुदितविषयमिति। तथा मिश्रतायास्तत्र विवक्षितत्वात्। अत्र तूदयमात्रत्वादिति भेदः। तथाऽपीदं क्षायोपशमिकविशेष एव, औपशमिकादित्रयात्मकसम्यक्त्वाभिधानात्। अन्यथौदयिकमपि स्यात्। तस्मादपेतमिथ्यास्वभावत्वादत्रोपशम[2]प्रतिसमयानुभूतेश्च क्षय इति कृत्वेदं क्षायोपशमिकविशेष एवेति। एवं '**खीणे**'त्यादि पञ्चमं स्पष्टार्थमिति गाथार्थः ॥५३२॥

इदानीं श्रुतेऽस्य नियममाह—'**चोद्दसे**'त्यादि। इह 'चतुर्दश'पूर्वाणि 'दश चाभिन्नान्य'धीयानो 'नियमात्' नियमेन 'सम्मत्त[3]त्ति सम्यग्दृष्टिरेव। चतुर्दशभ्यः पूर्वेभ्यः प्रारभ्यादशभ्यः सम्पूर्णेभ्यो नियमात्सम्यक्त्वपरिग्रहइत्यभिप्रायः। 'शेषके' श्रुते—एतदारत आसामायिकाद् 'भजना', सम्यक्त्वपरिग्रहो वा स्यादितरो वेत्यर्थः। प्रासङ्गिकमाह—'मत्यवध्योर्विपर्यासेऽपि' क्वचिद् 'भवति मिथ्यात्वपरिग्रहो, न पुनः शेषे' विज्ञानद्वये—मनःपर्यायकेवललक्षण इति गाथार्थः ॥५३३॥

---

1 P adds त. 2 मः P. 3 P has सम्मं तु for सम्मत्त.

आचार्य एव वक्तव्यताशेषमित्य[1]धिकृत्य चोदयन्नाह—'तत्ते'त्यादि। 'तत्त्वावगमस्वभावे' तुल्ये 'सति सम्यक्त्वश्रुतयोः कः प्रतिविशेषो' येन सम्यक्त्वविशेषणं श्रुतमुच्यते "सम्यक्त्वपरिग्रहाच्छ्रुत"मिति। उच्यते, दृष्टान्तसिद्धमेतत्। तथाहि—'यथा ज्ञानदर्शनयोर्भेदो' दृष्टस्तुल्येऽवबोधसामान्ये' ॥५३४॥

कथं तदाह—'नाणे'त्यादि। 'अपायधृती ज्ञानं' वचनपर्यायित्वेन विशेषाववोधात्। त'थावग्रहेहे तु दर्शनमिष्ट'मर्थपर्यायित्वेन सामान्यावबोधात्। तथा किमित्यत आह—'तथा तत्त्वरुचिः' भगवदर्हत्प्रणीतपदार्थाभिगमः 'सम्यग'भिधीयते। सैव 'येन रोच्यते' आपाद्यते 'तत्तु ज्ञानं' 'श्रुतमित्यर्थः। अत्र च रुचिज्ञानयोरेककाल[2]क्षयोपशमाविर्भावेऽपि प्रवन्वत उपकार्योपकारकभावस्त्रिकाष्ठिकायाइवाविरुद्धः। न चेत्थमितरेतराश्रयो दोष एवं गुणत्वेन दृष्टत्वादिति गाथार्थः ॥५३५॥

[साद्यनाद्यादिश्रुतविचारः]

साम्प्रतं चतुर्थपञ्चमद्वारे सप्रतिपक्षे युगपदभिदधदाह—

अच्छित्तिनयस्सेयं अणाइपज्जंतमत्थिकाय व्व।
इयरस्स साइसंतं गइपज्जाएहिं जीवो व्व ॥५३६॥

दव्वाइणा व साइयमणाइयं संतमंतरहियं वा।
दव्वम्मि एगपुरिसं पडुच्च साईं सनिहणं च ॥५३७॥

चोद्दसपुव्वी मणुओ देवत्ते तं न संभरइ सव्वं।
देसम्मि होइ भयणा सट्ठाणभवेऽवि भयणा उ ॥५३८॥

मिच्छभवंतरकेवलगेलन्नपमायमाइणा नासो।
आह किमत्थं नासइ किं जीवाओ तयं भिण्णं ॥५३९॥

जइ भिन्नं तब्भावेऽवि तो तओ तस्सभावरहिओत्ति।
अण्णाणिच्चिय निच्चं अंधव्व समं पईवेण ॥५४०॥

तं ता नियमा जीवो जीवो न तदेव केवलं जम्हा।
तं च तदण्णाणं वा केवलनाणं व सो होज्जा ॥५४१॥

तं जइ जीवो नासे तण्णासो होउ सव्वसो नत्थि।
जं सो उप्पायव्वयधुवधम्माऽणंतपज्जाओ ॥५४२॥

सव्वं चिय पइसमयं उप्पज्जइ नासए य निच्चं च।
एवं चेव य सुहदुक्खबंधमोक्खाइसब्भावो ॥५४३॥

अहवा सुत्तं निव्वाणभाविणोऽणाइयं सपज्जंतं।
जीवत्तं पिव नियमं सेसाणमणाइपज्जंतं ॥५४४॥

---

1 P drops इति 2 लं P

खेत्तंभरहेरवया काले उ समाउ दोण्णि तत्थेव ।
भावे पुण पण्णवगं पण्णवणिज्जे व आसज्ज ।।५४५।।
उवओगसरपयत्ता थाणविसेसा य होंति पण्णवए ।
गइठाणभेयसंघावण्णसद्दाइभावेसु ।।५४६।।
दव्वे नाणापुरिसे खेत्ति विदेहाई कालि जो तेसु ।
खयउवसमभावम्मि य सुयनाणं वट्टए सययं ।।५४७।।

'**अच्छित्ती**'त्यादि इह च श्रुतज्ञानं नयाभ्यां परीक्ष्यते । तौच द्रव्यपर्यायास्तिकौ । तत्र ताव'दव्यवच्छित्तिनयस्येदं' श्रुत'मनाद्यपर्यवसितमक्षयादिधर्मत्वात् 'पञ्चास्तिकाया इव' । 'इतरस्य' तु व्यवच्छित्तिनयस्य 'सादिसान्तं' सादिसपर्यवसानमित्यर्थः । प्रतिसमयोत्पत्तिमत्त्वात् 'गतिपर्यायिजीवव'दिति गाथार्थः ।।५३६।।

अथवेदं द्वारचतुष्टयं द्रव्यादिद्वारेणाह—'**दव्वादी**[1]'त्यादि । अथवा द्रव्यक्षेत्रकालभावैः 'साद्यनादि' चिन्त्यते । 'सान्तं' सपर्यवसित'मंतरहितं वा' अपर्यवसितं वा सादिसपर्यवसितं (१) साद्यपर्यवसित (२) मनादिसपर्यवसित- (३) मनाद्यपर्यवसितं (४) च । | ।। | ।S | S। | SS | इदमुद्देश्य[2]मात्रम् । साम्प्रतं द्रव्यमधिकृत्याह—'द्रव्य इति द्वारपरामर्शः । 'एकं पुरुषद्रव्यमधिकृत्य सादि सनिधनं च' सपर्यवसितं चेति गाथार्थः ।।५३७।।

कथमित्यत आह—'**चोद्दसे**'त्यादि । '**चोद्दसपुव्वी मणुओ देवत्ते**' उववण्णो '**तं**' सुयं '**न संभरइ**' किं सर्वथा ? नेत्याह—'सर्वं' कृत्स्नमखण्डमशेषमिति यावत् । तथा चाह—'**देसम्मि**' देशे—सूत्रार्द्धे सूत्रमात्रादौ 'भवति' संपद्यते 'भजना' विकल्पना, स्मरत्यपीति कृत्वा । किमस्य स्वर्गमेवाङ्गीकृत्य भजनेति ? नेत्याह— 'स्वस्थानभवेऽपि भजनैवे'ति गाथार्थः ।।५३८।।

कथमित्यत आह—'**मिच्छभवे**'त्यादि । इहैव जन्मनि मिथ्यात्वावाप्तौ सादिसपर्यवसितं स्यात् । तथा 'भवान्तरे' च । न च स्वस्थानभवचिन्तावाध[3]नचोदनमाधेयं, सामान्येनास्याभिधानात् । तथा 'केवलो'त्पत्तौ 'ग्लानत्वे प्रमादादिना' च भ्रंशो'नाशो'ऽस्य स्यात् । 'आह—किमर्थं' तदनुवृत्तिभाजः पुरुषस्य 'नश्यति ? किं जीवात्तदन्यत्' ।।५३९।।

'**जतो**'त्यादि । 'यदि भिन्नं' यद्यर्थान्तरं '**तो तओ**'त्ति तो सो जीवो '**तब्भावे वि**' सुयभावेपि '**तस्सभावरहिओ**' सुयपगासभावरहिओत्तिकाउं '**अण्णाणिच्चिय णिच्चं**' । दृष्टान्तमाह—प्रदीपहस्तान्धवत्' । अनन्यत्वे ज्ञत्वं युक्तं, प्रकाशकत्वे सति वाह्यानुग्रहाच्चक्षुष्मतः प्रदीपप्रकाशोपलब्धिवत् ।।५४०।।

---

1 दि P. 2 श P. 3 घे P.

गुरुरुत्तरमाह—'**तं ते**'त्यादि। 'तत्तावत्' श्रुतं 'नियमाज्जीव एव' अजीवो न भवति। 'जीवस्तु न तदेव केवलं' जीवो न श्रुतमात्रं केवलम्। कस्मादित्याह—'यस्मादसौ भवेत्' 'तद्वा' श्रुतं वोत्तरापेक्ष.। तथा 'तदज्ञानं वा' श्रुताज्ञानं वा। वाशब्दादवधिर्वा। तथा 'केवलज्ञानं वा', वाशब्दान्मनः पर्याय-ज्ञानं वेति गाथार्थः ॥५४१॥

तस्मात्तत्तावज्जीव एवेत्युक्ते सत्याह—'**तं जतो**'त्यादि। '**तं**' सुतं '**जति जीवो**' तो '**तन्नासे**' सुतण्णासे '**णासो होतु**' जीवस्स, अनर्थान्तरभूतत्वात्। उच्यते, '**होउ**'त्ति द्विरावर्त्त्यते। भवतु कथञ्चित्तत्पर्यायविशिष्टस्य नाशः, किन्तु '**सव्वसो णत्थि**' सर्वेण—सर्वात्मना नास्ति, तन्नाशेऽस्य नाश इति प्रकृतं, 'यदसावुत्पादव्ययध्रुवधर्मा' वर्त्तते। तथाहि—यस्मिन्नेव समये विनश्यति, तस्मिन्नेव समय उत्पद्यते। नापि च नश्यति, त्रिस्वभावत्वादङ्गुलिद्रव्यवत्। तथ'नन्तपर्याय'श्च, यदसौ तेन क्वाचिज्ज्ञानी क्वचिदजानी च, ज्ञानाज्ञानयोश्चा-नन्तपर्यायिता तत्पट्स्थानकस्योक्तत्वात् ॥५४२॥

किमात्मैवैवं ? नेत्याह—'**सव्वं चिये**'त्यादि। [1]'सर्व'पर्यायत 'उत्पद्यते' व्येति 'नित्यंच'[1] द्रव्यतः। कश्चेत्थं गुण इत्याह—'एवमेव च सुखादिसद्भावः'। तथाहि—नैकान्तनित्ये सुखादिसद्भावः, तस्य सहकारिकारणजन्यत्वात्, तत्कृतो-पकारापेक्षानपेक्षत्वे चानित्यत्वतद्वैयर्थ्यादिदोषकोटीकोटिप्रसङ्गात्। एवं स्वधिया दुःखादावप्यायोजनीयमिति। नाप्येकान्तानित्ये, अधि[2]कारित्वाज्जन्मा[3]न्तर-मृतवत्, स्थितास्थितविकल्पद्वयाद्वेति। अस्मत्पक्षे तु सकलजनप्रकटोऽयमिति प्रथमो भङ्ग इति गाथार्थः ॥५४३॥

द्वितीयभङ्गस्य शून्यत्वात् तृतीयमाह—'**अहवे**'त्यादि। '**अहवा सुत्त**'[4]—मिच्छासुतं '**णेव्वाणभाविणो**' जीवस्स "**अणादीयं**' भव्यत्ववत्। 'सपर्यवसानं' तु सम्यक्त्वप्राप्तेः। चतुर्थमाह—'जीवत्वमिव नियतं शेषाणा'मनिर्वाणभावि-नामभव्याना'मनाद्यपर्यवसानं' चेति द्रव्यतश्चतुर्भङ्गीति गाथार्थः ॥५४४॥

'**खेत्त**' इत्यादि। 'क्षेत्रे' विचार्यमाणे 'भरतैरावता'न'ङ्गीकृत्येदं सादि-सपर्यवसितम्। '**काले तु तत्थेव**' भरहेरवतेसु 'दो समाओ पडुच्च ओसप्पिणी-उस्सप्पिणीउ सादिसपज्जवसियं। 'भावे पुन'र्विचार्ये '**पन्नवगं**' ति प्रज्ञापकोप-योगमाश्रित्य 'प्रज्ञापनीयान् वा' भावा'नाश्रित्य' सादिसपर्यवसितम् ॥५४५॥

कथमित्याह—'**उवयोगे**'त्यादि। 'उपयोग' इत्युपयोगात्मकत्वात् श्रुतस्य, तस्य च क्षणिकत्वात् सादिसपर्यवसितम्। 'स्वरो'—ध्वनिः। 'प्रयत्न'स्ताल्वादि-व्यापारः। स्थानविशेषा'स्त्वष्टौ उरआदयः। 'भवन्त्य'न्ते 'प्रज्ञापके'ऽनित्यत्व-

---

1...1 सर्वमेव प्रतिसमयं पर्यायेन उत्पद्यते नश्यति चेति नित्यं च P.

2 वि P. 3 P adds न. 4 न्त P.

पर्यायाः । अभिधेयगतानाह—'गति'[1]रणोरनित्यतामङ्गीकृत्य सादिसपर्यवसितम्[2] । 'ठाणे' तस्यैव स्थितिः । 'भेदो'ऽन्येन । 'संघातो'ऽन्येनैव । 'वर्णः—कृष्णादिः । शब्दो' —मधुरमन्दादिः । 'आदि'शब्दाद्रसादिग्रहः । 'भावेसु'त्ति गत्यादि पर्यायेष्वित्यर्थः । प्रत्येकाभिसम्बन्धाल्लिङ्गादि (परिग्रहः) ॥५४६॥

साम्प्रतं द्रव्यादिद्वारेणैवानाद्यपर्यवसितमाह—'दव्वे'त्यादि । 'द्रव्ये'ऽधिकृते 'नानापुरुषा'नङ्गीकृत्याऽनाद्यपर्यवसितं तदवियोगात् । 'क्षेत्रे 'विदेहा'नङ्गीकृत्य । 'कालो यस्तत्र' स एव अनुत्सर्प्पिण्यवसर्प्पिणीसंज्ञकः । भावतः 'क्षायोपशमिकं भाव'मङ्गीकृत्य । अभिधेयं 'सतत' —अनाद्यपर्यवसितमिति गाथार्थः ॥५४७॥

साम्प्रतं षष्ठं द्वारं सप्रतिपक्षमाह—

**भंगगणियाइं गमियं जं सरिसगमं च कारणवसेणं ।**
**गाहाइ अगमियं खलु कालियसुयं दिट्ठिवाए य ॥५४८॥**

'भङ्गे'त्यादि । 'भङ्गकगणितादि'संकुलं 'गमिकम्' । गमकबहुलं गमिकमित्यर्थः । तथा 'यच्च कारणवशेन सदृशगमं' तद् गमिकम् । एतच्च प्रायो दृष्टिवादः[3] । तथा 'गाथा'श्लोका'दि'प्रतिबद्धमगमिकम् । 'खलु' इत्यलङ्कारार्थः । एतच्च प्रायः 'कालिकश्रुतं', यत आह—'दृष्टिवादे च', किञ्चिद्गाथाद्यसमानग्रन्थमिति गाथार्थः ॥५४८॥

साम्प्रतं सप्तमं सप्रतिपक्षं द्वारमाह—

**गणहरथेरकयं वा आएसा मुक्कवागरणओ वा ।**
**धुवचलविसेसओ वा अंगाणंगेसु नाणत्तं ॥५४९॥**
**जइवि य भूतावाए सव्वस्स व ओगयस्स ओयारो ।**
**निज्जूहणा तहावि हु दुम्मेहे पप्प इत्थी य ॥५५०॥**
**तुच्छा गारवबहुला चलिंदिया दुब्बला धिईए य ।**
**इय अइसेसज्झयणा भूयावाओ य नो त्थीणं ॥५५१॥**
**उवउत्तो सुयनाणी सव्वदव्वाइं जाणइ जहत्थं ।**
**पासइ य केइ सो पुण तमचक्खुद्दंसणेणंति ॥५५२॥**
**तेसिमचक्खुद्दंसणसामण्णाओ कहं न मइनाणी ।**
**पासइ पासइ व कहं सुयनाणी किंकओ भेओ ॥५५३॥**
**मइभेयमचक्खुद्दंसणं च वज्जित्तु पासणा भणिया ।**
**पण्णवणाए उ फुडा तेण सुए पासणा जुत्ता ॥५५४॥**
**जह नवहा मइनाणं संतपयपरूवणाइणा गमियं ।**
**तह नेयं सुयनाणं जं तेण समाणसामित्तं ॥५५५॥**

---

1 तेः P    2 P adds श्रुतं.    3 दे P.

'गणहरे'त्यादि । 'गणधराः'—भगवन्तो **गौतमस्वाम्यादयः** । 'तत्कृत'-मङ्गप्रविष्टमभिधीयते—**आचाराद्यादृष्टिवादात्** । 'स्थविरा'स्तु **भद्रबाहुस्वाम्या-दयश्चतुर्दशपूर्वविदः** । तद्‌दृब्धं त्वनङ्गप्रविष्ट**मावश्यकादि** । इदमनयोर्नानात्वम् । 'अथवा' यदा'देशाद्'—आदेशेन त्रिपृच्छोत्थं तदङ्गप्रविष्टं, स्थविरकृतमङ्गवाह्यम् । 'उत्कृ[1]ष्टव्याकरण'व्यापारमात्रोपसंहृ[2]तं वा । अथवा 'ध्रुवचलविशेषात्' । तथाहि—सर्वतीर्थेषु नियतमङ्गप्रविष्टम्, अनियतमितरदिति ॥५४९॥

एवं विभक्ते सत्याह—ननु **दृष्टिवाद** एवैकादशाङ्गावाह्यार्थपरिसमाप्तेः पूर्वं कृतानि **पूर्वाणि** चेत्यन्वर्थतस्तेष्वेव समस्तवाङ्मयावतारान्नैकादशाङ्गादि-निर्व्यूहणे[3] कश्चिदनुग्रहः सत्त्वेषु गणभृदादीनामुपलभ्यते । उच्यते—'**जइ वि ए**'त्यादि । गतार्था ॥५५०॥

किं पुनः कारणं स्त्रीभ्यो न **दृष्टिवादो** दीयत इत्यत आह—'**तुच्छा**' इत्यादि । इह स्वभावेनैव स्त्री 'तुच्छा' भवति, न्यूनभाजनत्वात् । "अहो अहं या **दृष्टिवादमपि** पठामी"त्यहङ्कारतः पुरुषपरिभवन[4]शीलतया पटीयस्त्वात् तथा च[4] दुर्गतिपतनात् । अनुग्रहार्थं च भगवत्प्रवृत्तेः । अत एवाह—'गारववहुला' स्तोकेनैव माद्यतीतिकृत्वा । '**चलेन्द्रिया**' च स्त्रीतरस्विनी स्यात् । चलेन्द्रियश्चा-स्यायोग्यो भगवद्भिर्व्यवस्थापितः । 'धृत्या च दुर्वला' भवति, क्लीवत्वात् । '**इय**' एवं कृत्वा'ऽतिशयाध्ययनानि' उत्थानसमुत्थानश्रुतादीनि **दृष्टिवादश्च** 'न स्त्रीभ्यो' दीयत इति । यतश्चानुग्रहार्थं ताभ्योऽपि किञ्चिद् देयमत एकादशाङ्गा-दिपृथक्करणं सफलमिति गाथार्थः ॥५५१॥

यदुक्तं **सूत्रकारेण**—"तं समासतो चउव्विह पण्णत्तं, तंजहा—दव्वओ खेत्तओ कालओ भावओ । दव्वओ णं सुतणाणी उवउत्ते सव्वदव्वाइं जाणइ, न पासती"ति । एवं क्षेत्रादावपीति । एतदधुना प्राह—'**उव**' इत्यादि । इह 'उपयुक्तः' सर्वतः संक्रोडितावधानः 'श्रुतज्ञानी' साधुः 'सर्वं द्रव्यादि' ज्ञेयं, द्रव्यतः पञ्चाप्यस्तिकायान् क्षेत्रं लोकालोकं, कालं सर्वाद्धं, भावानौदयिकान् गुरुलघ्वादीन् वा 'जानाति' अववुध्यते । 'यथार्थं' यथावत्, एवं चैवं चेदं वर्तत इति । न तु पश्यत्यसम्भवात्, मनःपर्यायज्ञानिवत् । इह च शब्दार्थज्ञानोद्-भूतिवेलायां यतो विशेष एव परिभि[5]द्यतेऽतो जानात्येव, न पश्यति, श्रुतमनःपर्या-ययोः [6]पश्यत्तोऽनभिधानात्[6] । पाठान्तरं वा '**पासति**'त्ति । तदेव पूर्वपक्षीकुर्वन्नाह—'केचनो[7]' अभिदधति यथा जानात्येवं 'पश्यत्यपी'ति । केनाभिप्रायेण त एवमाहु-रित्यत आह—'**सो पुण सुयनाणी तं पासति अचक्खुदंसणेणं**'ति । अयमभिप्रायः—इह मतिज्ञानी श्रुतज्ञानी भवत्येव । [8]'मतिज्ञानिश्चाचक्षुर्दर्शनं[8]' चोक्तमेव, दर्शन-

---

1 त्त्व P.   2 ह P.
3 P has देश for हसे.   4...4 शीलतयाऽपचीयमानत्वात् मानितया तथा च P.
5 च्छि P.   6 पश्यत्ताया अनभिधानात् P.
7 न P.   8...8 मतिज्ञानिनश्चक्षुर्दर्शनं अचक्षुर्दर्शनं P.

ज्ञानरूपत्वात् । ततश्च मतिज्ञानी चक्षुर्दर्शनेन पश्यति "दंसणमिट्ठं तहोग्गहेहाउ"त्ति वचनात् । श्रुतज्ञानी त्वचक्षुर्दर्शनेन पश्यति ॥५५२॥

कस्तेषां दोष इत्याह—'तेसि'मित्यादि । 'तेषा'मेवं पठतां मतिज्ञानिश्रुतज्ञानिनोः परस्पराभिन्नत्वेन 'अचक्खुद्दंसणसामन्नाओ'त्ति अचक्षुर्दर्शनस्य सामान्यात्—शेषेन्द्रियोपलब्धेः साधारणत्वात्, 'कथं' केन प्रकारेण कया युक्त्या 'न मतिज्ञानी पश्यति'? अचक्षुर्दर्शनेनापीति वाक्यशेषः । तथा 'पश्यति वा कथंश्रुतज्ञानी' ? अचक्षुर्दर्शनेनेति वाक्यशेषः । निर्भर्त्सयन्नाह—ननु 'किं कृतो भेदः', किं कृतोऽयं विशेषो येनायमनेन पश्यत्ययं त्वनेन नेति । तदेतदुक्तं भवति—जइ सुतनाणी अचक्खुदंसणेण पस्सति कहं मतिनाणोवि तेण न पासति ? जइ य न मतिणाणी तेण पासति ततो किं सुतणाणी तेण पासतित्ति वुच्चइ । तस्मात् जाणइ न पासइत्ति स्थितम् । स्थापना—

| | |
|---|---|
| चक्खु दं | अच० दं |
| उ मति | न श्रु |

॥५५३॥

'मइ' गाहा कण्ठ्या ॥५५४॥

तदेवमिदं प्ररूप्य प्रकारान्तरेणापि प्ररूपयन्नाह—'जहे'त्यादि । प्राग्वत् ॥५५५॥

## [श्रुतग्रहणोपायः]

उत्तरगाथासम्बन्धमाह—

सव्वाइसयनिहाणं तं पाएणं जओ पराहीणं ।
तेण विणेयहियत्थं गहणोवाओ इमो तस्स ॥५५६॥

आगमसत्थग्गहणं जं बुद्धिगुणेहिं अट्ठहिं दिट्ठं ।
बेंति सुयनाणलंभं तं पुव्वविसारया धीरा ॥५५७॥नि० २०॥

सासिज्जइ जेण तयं सत्थं तं चाविसेसियं नाणं ।
आगम एव य सत्थं आगमसत्थं तु सुयनाणं ॥५५८॥

तस्सायाणं गहणं दिट्ठं जं मइगुणेहिं सत्थम्मि ।
बेंति तयं सूयलाभं गुणा य सुस्सूसणाईया ॥५५९॥

सुस्सूसइ पडिपुच्छइ सुणेइ गिण्हइ य ईहए वावि ।
तत्तो अपोहए वा धारेइ करेइ वा सम्मं ॥५६०॥ नि० २१ ॥

सुस्सूसई उ सोउं सुयमिच्छइ सविणओ गुरुमुहाओ ।
पडिपुच्छइ तं गहियं पुणोऽवि नीसंकियं कुणइ ॥५६१॥

सुणइ तदत्थमहीउं गहणेहाऽवायधारणा तस्स ।
सम्मं कुणइ सुयाणं अन्नंपि तओ सुयं लहइ ॥५६२॥

सुस्सूसइ वा जं जं गुरवो जंपंति पुव्वभणिओ य।
कुणइ पडिपुच्छिऊणं सुणेइ सुत्तं तदत्थं वा ॥५६३॥

मूयं हुंकारं वा बाढक्कार पडिपुच्छ वीमंसा।
तत्तो पसंगपारायणं च परिणिट्ठ सत्तमए ॥५६४॥ नि० २२॥

सुत्तत्थो खलु पढमो बीओ निज्जुत्तिमीसओ भणिओ।
तइयो य निरवसेसो एस विही होइ अणुओगे ॥५६५॥नि० २३॥

भणियं परोक्खमहुणा पच्चक्खं तं च तिविहमोहाइं।
पुव्वोइयसंबंधं तत्थावहिमाइओ वोच्छं ॥५६६॥

'सव्वे'त्यादि। स्पष्टार्था ॥५५६॥

'आगम' गाहा। आगमन'मागमः'। आङोऽभिविधिमर्यादार्थत्वादभिविधिना मर्यादया वा गमः—परिच्छेद इ'त्यागमः'। स च केवलमत्यवधिलक्षणोऽपि भवति। अत आह—शास्यतेऽनेनेति 'शास्त्रं'-श्रुतम्। आगमग्रहणं तु षष्टितन्त्रादिव्यवच्छेदार्थं, तेषामनागमत्वात्, सम्यक्परिच्छेदात्मकत्वायोगात् शास्त्रतया च रूढत्वात्। ततश्च, आगमश्चासौ शास्त्रं च 'आगमशास्त्रं'। तस्य 'ग्रहण'मिति समासः। गृहीति'र्ग्रहणं', 'यद् बुद्धिगुणै'र्वक्ष्यमाणलक्षणैः करणभूतै'रष्टाभिर्दृष्टं ब्रुवते'। श्रुतज्ञानस्य लाभः' श्रुतज्ञानलाभस्तं 'तदेव' ग्रहणं ब्रुवते। के? 'पूर्वेषु विशारदाः' विपश्चितो 'धीरा' व्रतानुपालनस्थिरा इत्यर्थः। इति गाथार्थः ॥५५७॥ निर्युक्तिगाथा ॥२०॥

'सासिज्जती'त्यादि। गाथाद्वयं प्रायो भावितार्थम् ॥५५८-५५९॥

ते चामी बुद्धिगुणाः—'सुस्सूसती'त्यादि। विनयप्रणतः सन् गुरुमुखाच्छ्रोतुमिच्छतीति 'शुश्रूषति' (१)। पुनः पृच्छति श्रुतं किं निःशंकार्थमिति प्रतिपृच्छति (२)। पुनः कथितं स'च्छृणोति' (३)। 'गृह्णाति'[1]आदत्ते (४)। आदाय 'चेहते'—किमेवमुत एवमिति (५)। 'अपि'शब्दात्पर्यालोचयन् किञ्चित्स्वबुद्ध्याऽप्युत्प्रेक्षते। 'ततः'—तदनन्तर'मपोहते', एवमेवैतद्यथाऽऽहुर्गुरवः (६)। पुनस्तमर्थमागृहीतं 'धारयति' (७)। 'करोति सम्यक्' तदुक्तमनुष्ठानमिति (८)। तदुक्तानुष्ठानमपि च श्रुतप्राप्तिहेतुर्भवत्येव, तदावरणक्षयोपशमादिनिमित्तत्वात् तस्येति। अथवा यद्यदाज्ञापयन्ति गुरवस्तत्सम्यगनुग्रहं मन्यमानः श्रोतुमिच्छति 'शुश्रूषति'। पूर्वसन्दिष्टश्च सर्वकार्याणि कुर्वन् पुनः पृच्छति 'प्रतिपृच्छति'। पुनरादिष्टः सम्यक् 'शृणोति'। शेषं प्राग्वदिति गाथार्थः ॥५६०॥ निर्युक्तिगाथा ॥२१॥

'सुस्सूसती'त्यादि। 'सुणती'त्यादि। गतार्थम्। नवरं 'सुयाणं' ति श्रुतानाम् ॥५६१-५६२॥

---

1 P drops गृह्णाति.

द्वितीयं व्याख्यापक्षमधिकृत्याह—'सुस्सूसती' त्यादि गतार्था ॥५६३॥

बुद्धिगुणानभिधाय साम्प्रतं श्रवणविधिमभिधित्सुराह—'मूअ'मित्यादि । 'मूक'मिति प्रथमं मूकं शृणुयात्, प्राथमिकत्वेनाविज्ञातपरमार्थत्वात् । द्वितीयश्रवणे 'हुंकारं च' दद्यात्, क्षेत्रीभूतत्वात् । तृतीये 'वाढक्कारं' कुर्यात्, उपरितनस्यापि स्मरणेन तुष्टत्वात् । चतुर्थे व्युत्पन्नतरत्वेन सर्वथा वा निष्ठितत्वात् 'प्रतिपृच्छां' पूर्वापरविरोधलक्षणं कुर्यात् । पञ्चमे 'मीमांसां' कुर्यात्, प्रमाणैरिति गम्यते । 'ततः' षष्ठे तदुत्तरोत्तरगुण'प्रसङ्गपारगमनं चा'स्य स्यात् । 'सप्तमके तु परिनिष्ठा' गुरुवदनुभाषणादिति गाथार्थः ॥५६४॥ निर्युक्तिगाथा २२॥

साम्प्रतं व्याख्याकरणविधिमाह—'सुत्त'त्थो' इत्यादि[1] । सूत्रस्यार्थः 'सूत्रार्थः' । सूत्रार्थ एव केवलो व्याख्यायते यत्रानुयोगे स 'सूत्रार्थः' । 'खल्वि' त्यवधारणे । एवं सूत्रार्थमात्रप्रतिपादनपरः सूत्रार्थः । एवंभूत एवाद्योऽनुयोगः कर्त्तव्य इति । 'द्वितीयस्तु निर्युक्तिमिश्रकः' कर्त्तव्य इति 'भणितो'ऽर्हदादिभिः । 'तृतीयस्तु निरवशेषो' यथाशक्त्या नैगमादिनयजालप्रपञ्चतः कार्यो व्युत्पन्नत्वात् शिष्याणाम् । 'एष' च त्रिधा प्राक्तनसप्तकाविरोधेनेति ॥५६५॥ निर्युक्तिगाथा २३॥

समाप्तं श्रुतज्ञानम् । अथ प्रत्यक्षाद्य[2]प्रत्यक्षमभिधित्सुराह—'भणिय' मित्यादि । 'उक्तं परोक्षम्', 'अथ प्रत्यक्षम् । तच्च त्रिधा अवध्यादि' । 'तत्र' प्रागुक्तप्रस्ताव'मादितोऽवधिं वक्ष्य' इति गाथार्थः ॥५६६॥

## [अवधिज्ञानविवरणम्]

तत्र—

संखाईयाओ खलु ओहीनाणस्स सव्वपयडीओ ।
काई भवपच्चइया खओवसमियाओ काओऽवि ॥५६७॥ नि० २४॥

कत्तो मे वण्णेउं सत्ती ओहिस्स सव्वपयडीओ ।
चउद्दसविहनिक्खेवं इड्ढीपत्ते य वोच्छामि ॥५६८॥ नि० २५॥

तस्स जमुक्कोसयखेत्तकालसमयप्पएसपरिमाणं ।
तण्णेयपरिच्छिन्नं तं चिय से पयडिपरिमाणं ॥५६९॥

संखाईयमणंतं च तेण मणंतपयडिपरिमाणं ।
पेच्छइ पोग्गल कायं जमणंतपएसपज्जायं ॥५७०॥

भवपच्चइया नारयसुराण पक्खीण वा नभोगमणं ।
गुणपरिणामनिमित्ता सेसाण खओवसमियाओ ॥५७१॥

ओही खओवसमिए भावे भणिओ भवो तहोदइए ।
तो किह भवपच्चइओ वोत्तुं जुत्तोऽवही दोण्हं ॥५७२॥

---

1...1 त्थेत्यादि P.    2 द्यं P.

सोऽविहु खओवसमओ किंतु स एवक्खओवसमलाभो ।
तम्मि सइ होअवस्सं भण्णइ भवपच्चओ तो सो ॥५७३॥

उदय-क्खय-क्खओवसमो-वसमा जं च कम्मुणो भणिया ।
दव्वं खित्तं कालं भवं च भावं च संपप्प ॥५७४॥

इय सव्वपयडिमाणं कह कमवसवण्णवत्तिणी वाया ।
वोच्छिति सव्वं सव्वाउणावि संखिज्जकालेणं ॥५७५॥

"[1]संखे'त्यादि[1] । संख्यानं 'संख्या' । तामतीताः 'संख्यातीताः' । असंख्येया इत्यर्थः । कथम् ? यस्माल्लोकासंख्येयभागादारभ्य प्रदेशपरिवृद्ध्या असंख्येयलोकप्रदेशपरिमाणं क्षेत्रं पश्यति । कालत आवलिकाऽसंख्येयभागादारभ्य समयवृद्ध्या असंख्येयोत्सर्पिण्यवसर्पिणीसमयपरिमाणं कालमालोकयति । अतोऽस्यधायि—ज्ञेयोपाधिवशात् संख्यातीताः, ताश्चैवमनन्ता अपि स्युरित्यत आह—'खल्वि'ति । 'खलु'शब्दस्य विशेषणार्थत्वात् क्षेत्रकालविवक्षयैवासंख्येयाः, द्रव्यभावविवक्षया त्वनन्ताः । तथाहि—तैजसवाग्द्रव्यापान्तरालवर्त्यनन्तप्रदेशिकात् स्कन्धादारभ्य विचित्रवृद्ध्या सर्वपुद्गलास्तिकायविषयं वक्ष्यति । तथा प्रतिवस्तुगतासंख्येयविषयमानं च गच्छति[2], भावतोऽनन्ता अपि, ज्ञेयभेदात् । कस्य ? 'अवधिज्ञानस्य'—प्राग्निरूपितशब्दार्थस्य । काः ? सर्वाश्च ताः प्रकृतयश्चेति 'सर्वप्रकृतयः' । 'प्रकृतयो' भेदाः स्वभावा अंशा इति पर्यायाः । आसां मध्ये 'काश्चन' प्रकृतयो 'भवप्रत्ययाः क्षायोपशमिकाः[3] काश्चने'ति गाथार्थः ॥५६७॥ निर्युक्तिगाथा २४॥

अथासां यथावत्प्रतिपादनसामर्थ्यमात्मनोऽपश्यन् इदमाह—'**कत्तो मे**' इत्यादि । 'कुतो मम वर्णयितुं शक्तिरवधेः सर्वाः प्रकृतीः' ? तथापि प्रारब्धत्वात् तथाप्यस्य 'चतुर्दशविधं निक्षेपम'वध्यादिकं 'वक्ष्ये प्राप्तर्द्धीश्च' ॥५६८॥ निर्युक्तिगाथा ॥२५॥

प्रथमनिर्युक्तिगाथार्थमाह—'**तस्से**'त्यादि । 'तस्या'वधेः तेयाभापादव्वाणमंतरालाओ जमुक्कोसयखेत्तप्पएसपरिमाणं कालसमयपरिमाणं च । शेषं प्रागवदनुसर्त्तव्यम् ॥५६९॥

खल्वर्थमाह '**संख्याती**'त्यादि । उक्तार्था ॥५७०॥

पश्चार्धं व्याचिख्यासुराह—'**भवे**'त्यादि । गतार्था ॥५७१॥

एतत्पूर्वार्द्धमङ्गीकृत्य चोद्यम्—'**ओही**'त्यादि । स्पष्टार्था ॥५७२॥

उच्यते—'सोऽवी'त्यादि । 'असावपि' नारकादेः[4] 'क्षयोपशमादे'व प्रसूयते । यद्येवं "दोण्हं भवपच्चइओ देवाण य णेरइयाण य"त्तीदं 'कथम्' ? एतदाशंक्याह—'किन्तु स एव क्षयोपशमलाभ'स्तेषां 'तस्मिन्' भवे 'सति

---

1...1 'संख्या' इत्यादि P.　　2 P has वक्ष्यति for गच्छति.
3 कयः P.　　4 दि P.

भवत्यवश्यं, भण्यते भवप्रत्ययस्ततोऽसौ' नारकदेवावविर्व्यवहितकारणेऽव्यवहितकारणोपचारात् ॥५७३॥

तथा 'उदये'त्यादि । प्रसिद्धार्था । अतो यद्यवध्यावरणक्षयोपशमो भवमासाद्य स्यात् को दोषः ? ॥५७४॥

द्वितीयमूलगाथाभाष्यम्—'इय'इत्यादि । सुबोध्या ॥५७५॥

सोऽयं चतुर्दशविधो निक्षेप इत्याह—

[1]ओही [2]खेत्तपरिमाणे [3]संठाणे [4]आणुगमिए ।
[5]अवट्ठिए [6]चले [7]तिव्व-मंद[8]पडिवाउप्पयाइय ॥५७६॥ नि० २६॥
[9]नाण[10]दंसण[11]विब्भंगे [12]देसे [13]खित्ते [14]गई इय ।
इड्ढीपत्ताणुओगे य, एमेया पडिवत्तिओ ॥५७७॥ नि० २७॥
गइपज्जंता चोद्दस रिद्धी चसमुच्चियत्ति पंचदसो ।
ओहिपयंपि व मोत्तुं सेयरमणुगामियं काउं ॥५७८॥
केई चोद्दसभेयं भणंति ओहित्ति न पयडी जम्हा ।
पयडीण य निक्खेवो जं भणिओ चोद्दसविहोत्ति ॥५७९॥

'ओही'त्यादि । 'नाणे'त्यादि । द्वारगाथाद्वयम् । तत्रा'वधिरि'त्यवधेर्नामादिभेदस्य स्वरूपमभिधातव्यम् । तथाऽवधिशब्दो द्विरावर्त्यत इति व्याख्या-'तम् । तत्र[1] 'क्षेत्र परिमाणविषयो'ऽवधिर्वक्तव्यः, 'संस्थानविषयश्च' । अथवा अर्थाद्विभक्तिपरिणाम' इति द्वितीयैवेयम् । ततश्चावधेर्जघन्यमध्यमोत्कृष्टभेदभिन्नं 'क्षेत्रप्र[2]माणं' वक्तव्यम् तथा संस्थानम् । अनुगमनशीलो'ऽनुगामुकः' सप्रतिपक्षो वाच्यः । एकारान्तः प्रथमान्त इतिकृत्वा । यथा 'कतरे आगच्छति'त्ति । तथा'ऽवस्थितो'ऽवधिर्वाच्यः । द्रव्यादिषु कियन्तं कालमप्रतिपतितः सन् लब्धित उपयोगतश्चास्त इति । 'चलो' वक्तव्यः । चलः—अनवस्थितः । स च वर्द्धमानः क्षीयमाणो वेति द्वेधा । 'तीव्रमन्द' इति तीव्रो मन्दो मध्यमश्चावधिर्वक्तव्यः । तत्र 'तीव्रो'—विशुद्धः । 'मन्दश्च' अविशुद्धः । इतरस्तूभयप्रकृतिः । 'प्रतिपातोत्पादा' विति एककाले द्रव्याद्यपेक्षयाऽवधेर्वक्तव्यौ । तथा ज्ञानदर्शनविभङ्गा' वाच्याः—किमत्र ज्ञानं, किं वा दर्शनं, को वा विभङ्ग इति । परस्परतश्चामीषामप्यल्पबहुत्वं चिन्त्यमिति । 'देसे'ति कस्य देशविषयः सर्वविषयो वेति । 'खेत्त' इति क्षेत्रविषयोऽवधिर्वक्तव्यः । सम्बद्धासम्बद्धसंख्येयासंख्येयापान्तराल[3]क्षेत्रद्वारेणेत्यर्थः । 'गती इय'त्ति अत्रेतिशब्द आर्षे ततश्च गत्यादिद्वारमालाऽवधौ वक्तव्येति । तथा 'प्राप्तर्द्ध्यनुयोगश्च' कर्त्तव्यः । एवमनेन प्रकारे'णैताः'—अनन्तरोक्ताः । 'प्रतिपत्तयः' परिच्छित्तय इत्यर्थः । ततश्चावधिप्रकृतय एव प्रतिपत्तिहेतुत्वात् प्रतिपत्तय इत्युच्यन्ते इतिद्वारगाथाद्वयपिण्डार्थः ॥५७६-५७७॥ निर्युक्तिगाथा २६-२७॥

---

1...1 तं तत्र P. 2 P has परि for प्र. 3 P has र for राल.

कथं पुनरस्यायं निक्षेपश्चतुर्दशवेत्याह **भाष्यकारः**—'**गती**'त्यादि । अवध्याद्या 'गतिपर्यन्ताश्चतुर्दश' निक्षेपाः, 'ऋद्धिश्च समुच्चितत्वात् पञ्चदशी' । 'अथवाऽवधिरिति पदं विहायानुगामुकं च सप्रतिपक्षमर्थतः कृत्वा' ।।५७८।।

किमित्यत आह—'**केयी**'त्यादि । 'केचनै'वं 'चतुर्दशविधं' निक्षेपं पूरयन्ति । 'यस्मान्नावधिः प्रकृतिः' प्रकृतिमत्त्वात् । 'प्रकृतीनामेव च निक्षेपो यस्माच्चतुर्दशविध उक्तो' मूलगाथायाम् ऋद्धिस्तु चसमुच्चितैवेति । अविरुद्धं चैतदपीति गाथार्थः ।।५७९।।

तत्र यदुक्तं—"गतिपज्जन्ता चोद्दसि"त्ति तत्राद्यद्वारव्याचिख्यासयाऽऽह **निर्युक्तिकारः**—

**नामं ठवणदविए खेत्ते काले भवे य भावे य ।**
**एसो खलु ओहिस्सा निक्खेवो होइ सत्तविहो ।।५८०।। नि० २८।।**

**अवहित्ति जस्स नामं जह मज्जायाऽवहित्ति लोयम्मि ।**
**ठवणाऽवहिनिक्खेवो होइ जहऽक्खाइविन्नासो ।।५८१।।**

**अहवा नामं तस्सेव जमभिहाणं सपज्जओ तस्स ।**
**ठवणाऽऽगारविसेसो तद्दव्वक्खेत्तसामीणं ।।५८२।।**

**दव्वोही उप्पज्जइ जत्थ तओ जं च पासए तेणं ।**
**जं वोवगारि दव्वं देहाई तब्भवे होइ ।।५८३।।**

**खेत्ते जत्थुप्पज्जइ कहिज्जए पेच्छए व दव्वाइं ।**
**एवं चेव य काले न उ पेच्छइ खित्तकाले सो ।।५८४।।**

**जम्मि भवे उप्पज्जइ वट्टइ पेच्छइ व जं भवोही सो ।**
**एमेव य भावोही वट्टइ य तओ खओवसमे ।।५८५।।**

'**नाम**'मित्यादि ।।५८०।। निर्युक्तिगाथा ।।२८।।

अत्राप्याद्यद्वारव्याचिख्यासयाऽऽह भाष्यकारः—'**अवधी**'त्यादि । 'यस्य' जीवादेर्वस्तुनो'ऽवधिरिति नाम' क्रियते, 'यथा मर्यादायाः' सद्वस्तु 'लोकेऽवधिरिति' नामावधिः । 'स्थापनावधिः भव'त्यवधेर्निक्षेपो 'यथाऽक्षादेर्विन्यास' इति गाथार्थः ।।५८१।।

'**अह**'**वे**'त्यादि । यद्वा 'तस्यै'व नामावधेः 'यदभिधानं'—वचनपर्यायरूपं स नामावधि'स्तस्य स्वपर्यायत्वात्' । 'स्थापना'ऽवधिस्त्'वाकारविशेषः । केषामित्यत आह—'तद्द्रव्यक्षेत्रस्वामिनाम्' । द्रव्यतः पनकादिः, क्षेत्रतो **जम्बूद्वीपादिः**, स्वामिनः कूर्म्मसुतादीति गाथार्थः ।।५८२।।

द्रव्यावधिमाह—'**दव्वो ही**'त्यादि । द्रव्यावधिरुच्यते—'यत्रासौ' द्रव्ये 'उत्पद्यते, यद्वा तेन पश्यति यद्वा'ऽस्योत्पित्सो'र्देहाद्युपष्टम्भकं' स द्रव्यावधि'रिति गाथार्थः ।।५८३।।

1 व P.

क्षेत्रावधिमाह—'खेत्त' इत्यादि। 'क्षेत्रे यत्रोत्पद्यते भरतादौ कथ्यते पश्यति वा द्रव्याणि' स क्षेत्रावधिः। 'एवं यत्र काले' दुष्षमसुषमादौ उत्पद्यते कथ्यते पश्यति वा सोऽयम्। किमयमिमौ पश्यति ? नेत्याह—'नतु पश्यति क्षेत्रकाला'वसौ, अमूर्तत्वात्। वर्त्तनादिरूपं कालं पश्येत्, पुद्गलाश्रितत्वात् तस्येति गाथार्थः ॥५८४॥

'ज मि'त्यादि। 'यत्र' नारकादावौदयिके 'भव उत्पद्यते' उत्पन्नो वाऽर्थान्तिरतया 'वर्त्तते पश्यति वा यं भवं स भवावधिः'। 'ए[1]मेव य भावोहि' त्ति। एवं भावावधिरपि यत्र भाव उत्पद्यते पश्यति वा यं भा[2]वं, 'वर्ततेवा[3]ऽसौ' स्वरूपतः 'क्षयोपशम इति ॥५८५॥

ओहित्ति दारं गयं ॥

द्वितीयद्वारसम्बन्धमाह—

ओहिस्स खेत्तमाणं जहण्णमुक्कोस्स मज्भिमं तत्थ।
पाएण तदाईए जं तेण जहन्नयं वोच्छं ॥५८६॥

जावइया तिसमयाहारगस्स सुहुमस्स पणगजीवस्स।
ओगाहणा जहण्णा ओहीखेत्तं जहण्णं तु ॥५८७॥ नि० २९॥

जो जोयणसाहस्सो मच्छो नियए सरीरदेसम्मि।
उववज्जंतो पढमे समए संखिवइ आयामं ॥५८८॥

पयरमसंखिज्जंगुलभागतणुं मच्छदेहविच्छिण्णं।
बीए तइए सूइं संखिविउं होइ तो पणाओ ॥५८९॥

उववायाओ तइए समए जं देहमाणमेयस्स।
जण्णेयदव्वभायणमोहिक्खित्तं जहन्नं तं ॥५९०॥

किं मच्छोऽतिमहल्लो किं तिसमयओ व कीस वा सुहुमो।
गहिओ कीस व पणओ किंव जहण्णावगाहणओ ॥५९१॥

मच्छो महल्लकाओ संवित्तो जो य तीहि समएहिं।
सो किर पयत्तविसेसेण सण्हमोगाहणं कुणइ ॥५९२॥

सण्हयरा सण्हयरो सुहुमो पणओ जहण्णदेहो य।
सुबहुविसेसविसिट्ठो सण्हयरो सव्वदेहेसु ॥५९३॥

पढमबिइएऽतिसण्हो जमइत्थूलो चउत्थयाईसु।
तइयसमयम्मि जोग्गो गहिओ तो तिसमयाहारो ॥५९४॥

केई दो भससमया तइओ पणगत्तणोववायम्मि।
अह तिसमओ आहारओ य सुहुमो य पणओय ॥५९५॥

---

1 P adds व, 2 भ P. 3 चा P.

उववाए चेव तओ जओ जहण्णो न सेससमयेसु ।
तो किर तद्देहसमाण-मोहिक्खित्तं जहण्णं तु ।।५९६।।

ओधिस्से'त्यादि स्पष्टार्था ।।५८६।।

'**जावइया**' इत्यादि । 'यावतो' यावत्प्रमाणा त्रीन् समयानाहारयतीति 'त्रिसमयाहारक'स्तस्य, सूक्ष्मनामकर्मोदयात्'सूक्ष्म'स्तस्य । पनकश्चासौ जीवश्च 'पनकजीवः' वनस्पतिविशेष इत्यर्थः । तस्य । अवगाहन्ति यस्यां प्राणिनः सा'ऽवगाहना' तनुरित्यर्थः । 'जघन्या' सर्वस्तोका । अवधेः क्षेत्रं 'अवधिक्षेत्रं' । 'जघन्यं' सर्वस्तोकम् । 'तु'शब्द एवकारार्थः । स चावधारणे । तस्य चैवं प्रयोगः—अवधिक्षेत्रं जघन्यमेतावदेवेति ।।५८७।। निर्युक्तिगाथा २९।।

अत्र साम्प्रदायिकमर्थं भाष्यकार उद्भावयन्नाह—'**जो**' इत्यादि । '**जो जोयणसाहस्सो मच्छो णियए सरीरदेसम्मि 'उववज्जंतो**' उववज्जितुकामो कर्मवशात् । स प्रथमसमये किं करोतीत्याह—'**पढमे समये संखिवति**' उवसंहरति । '**आयामं**' आत्मप्रदेशानां शरीरान्तर्दीर्घभावम् ।।५८८।।

तं संहृत्य किमसौ करोतीत्याह—'**पयरं**' ति । प्रतरं—मूलककन्दकचक्कलिसंस्थानमिति भावना । किंविशिष्टमित्याह—'**असंखेज्जंगुलभागतणुं**' ति सर्वतोऽङ्गुलासंख्येयभागश्लक्षणमूर्ध्व[1]तिरश्चीनं च । किंविशिष्टमित्यत आह—'मत्स्यदेहविस्तीर्णं तद्, अन्तःशरीरसम्बद्धत्वात् । एषः प्रथमसमयव्यापारः । ततो '**बितिते**' त्ति द्वितीये समये तं पयरं उभयदिसिओ संहरिउं सुइं करेइ अंगुलासंख्येयभागवित्थडं मच्छसरीरकुडिपमाणायामम् । एष तु द्वितीयसमयव्यापारः । तृतीयसमयव्यापारमभिदधत्पश्चार्द्धमाह—'**तइए**' समये तं '**सूचिं संखिविदुं**', परभवायुपेति प्रच्छन्ना[2]भिप्रायः । अविग्रहगत्या 'ततः' स्वाकायदेशे 'पनक उत्पद्यते' ।।५८९।।

'**उववायाओ**'[3] इत्यादि । अस्मा'दुपपातसमयात् तृतीये समये यद् देहमानमेतस्य' पनकस्य तत्किमित्यत आह—'**ओहिक्खेत्तं जहन्नं तु**[4]' त्ति तज्जघन्यमवधिक्षेत्रम् । किंस्वरूपम् ? 'तज्ज्ञेयद्रव्यभाजनं पनकशरीरज्ञेयद्रव्याधारमिति गाथात्रया[5]र्थः ।।५८८-५९०।।

अत्र कश्चिदाह—'**किं**'मित्यादि । 'किमिति मत्स्योऽतिमहान् गृह्यते' ? '**किं तिसमइओ व**' त्ति । किं चास्य तृतीयसमये निजदेहदेश उत्पादः ? 'किमिति वा सूक्ष्मः' ? 'किमिति वा पणको जघन्यावगाहनको वे'ति ।।५९१।।

उत्तरमाह—'**मच्छो**' इत्यादि । 'स एव हि महामत्स्यस्त्रिभिः समयै'रात्मानं 'संक्षिपन् प्रयत्नविशेषात् सूक्ष्मावगाहनो भवति', नान्य इत्यतो 'महद्'ग्रहणमिति गाथार्थः ।।५९२।।

---

1 र्ध्वं P. 2 न्नो P. 3 P has उववायो for उववायाओ. 4 तं P.
5 P drops त्रय.

"कीस वा सुहुम" ? इत्यादेस्तावदुत्तरमाह—'सण्हतरो' इत्यादि । श्लक्ष्णादपि श्लक्ष्णतरत्वेनश्लक्ष्णः पनक एव भवति जघन्यदेहश्च' । एवं 'सुबहुविशेषणविशिष्टः श्लक्ष्णतरः' श्लक्ष्णतमश्च 'सव्वदेहेसु' सर्वदेहेभ्यः स एव भवतीति गाथार्थः ।।५९३।।

"किं तिसमतिओ वे"त्यस्येदानीमुत्तरमाह—'पढमे'त्यादि । 'यस्मात्प्रथमद्वितीयसमययोरतिश्लक्ष्णः, चतुर्थादिषु चातिस्थूरः । तृतीयसमये तु योग्योऽतस्त्रिसमयाहारग्रहण'मिति गाथार्थः ।।५९४।।

'केयी'त्यादि । एवं स्थिते 'केचन'[1] सूक्ष्मधियो व्याचक्षते—'द्वौ झषसमया'वायामविष्कम्भसंहारकरणलक्षणौ गृह्येते, 'तृतीयः पनकत्वोपपाते' सूचीं संहरत इति सामर्थ्याद् गम्यते । 'अथैवं सति 'त्रिसामयिकत्वं' लभ्यते यदुक्तं निर्युक्तिकारेण । 'आहारकश्चा'विग्रहेणोत्पादात् । 'सुहुमो य'त्ति प्रत्युतातिसूक्ष्मतरः 'पनकश्च' परभावोत्पत्तेः ।।५९५।।

तथा च—'उववाये[2]' इत्यादि । 'उपपात एवं उपपातसमय ए'वासौ यतो जघन्यो' जघन्यावगाहनो, न 'शेपसमयेषु' द्वितीयादिषु, ईषन्महत्त्वात् । 'ततः किल तद्देहसमानमेवावधिक्षेत्रं जघन्यमिति' । एतच्च न सत्यमेव सूक्ष्मधीवचनं, त्रिसमयाहारकत्वस्य पनकजीवविशेषणत्वाभ्युपगमात्, मत्स्यायामविष्कम्भसंहरणसमयद्वयस्य च पनकसमयायोगात्, त्रिसमयाहारकत्वाख्यविशेषणानुपपत्तिप्रसङ्गादिति गाथार्थः ।।५९६।।

अथोत्कृष्टमाह—

सव्वबहुअगणिजीवा निरंतरं जत्तियं भरिज्जंसु ।
खेत्तं सव्वदिसागं परमोही खेत्तनिद्दिट्ठो ।।५९७।। नि० ३०।।

अव्वाघाए सव्वासु कम्मभूमीसु जं तदारंभा ।
सव्वबहवो मणुस्सा होंतऽजियजिणिंदकालम्मि ।।५९८।।

उवकोसपया[3] सुहुमा जया तया सव्वबहुगमगणीणं ।
परिमाणं संभवओ तं घद्धा पूरणं कुणइ ।।५९९।।

एक्केक्कागासपएसजीवरयणाए सावगाहे य ।
चउरंसघणं पयरं सेढी छट्ठो सुयाएसो ।।६००।।

घणपयरसेढिगणियं नणु तुल्लं चिय, किगप्पणा कीस ।
छद्धा कीरइ, भण्णइ पुरिसपरिक्खेवओ भेओ ।।६०१।।

निययावगाहणागणिजीवसरीरावली समंतेणं ।
भामिज्जइ ओहिनाणिदेहपज्जंतओ सा य ।।६०२।।

1 नः P.  2 ते P.
3 Printed edition has उक्कोसया य for उक्कोसपया.

अइगंतूण अलोगं लोगागासप्पमाणमेत्ताइं ।
ठाइ असंखेज्जाइं इदमोहिक्खेत्तमुक्कोसं ॥६०३॥

सामत्थमेत्तमेयं जइ दट्ठव्वं हवेज्ज पेच्छेज्जा ।
न य तं तत्थऽत्थि जओ सो रूविनिबंधणो भणिओ ॥६०४॥

वड्ढंतो उण बाहिं लोयत्थं चेव पासई दव्वं ।
सुहुमयरं सुहुमयरं परमोही जाव परमाणुं ॥६०४क॥[1]

भणियं जहण्णमुक्कोसयं च खेत्तं विमज्झिमं सेसं ।
एयस्स कालमाणं वोच्छं जं जम्मि खेत्तम्मि ॥६०५॥

'सव्वे'त्यादि । सर्वेभ्यो—विवक्षितकालावस्थायिभ्योऽनलजीवेभ्यः । एवं[2] वहवः सर्ववहवः । न भूतभविष्यद्भ्यो, नापि च शेषजीवेभ्योऽसम्भवात् । अग्नयश्च ते जीवाश्चा'ग्निजीवाः', सर्ववहवश्च तेऽग्निजीवाश्च 'सर्ववह्वग्निजीवाः' । निर्गतमन्तरं यस्मात् क्षेत्रात्तद् 'निरन्तरं' सन्ततमविच्छिन्नेन नैरन्तर्येणेत्यर्थः । 'यावद्' यावत्प्रमाणं क्षेत्रं 'विभृयुर्वभ्रु'र्वा व्याप्नु'वन्त इत्यर्थः । भूतकालनिर्देशश्चाजितस्वामिकाल एव प्रायः सर्ववहवोऽनलजीवा भवन्त्यस्यामवसर्प्पिण्यामित्यस्यार्थस्य ख्यापनार्थः । सर्वदिशो गच्छतीति 'सर्वदिग्गं'—सर्वा दिशो व्याप्नोति, सर्वतोदिक्कमित्यर्थः । परमश्चासाववधिश्च परमावधिः । क्षेत्रमनन्तरव्यावर्णितं प्रभूतानलजीवप्रमितमङ्गीकृत्य निर्दिष्टः 'क्षेत्रनिर्दिष्टः' प्रतिपादितो गणधरादिभिरिति । ततश्च परमावधेः पर्यायेणैतावत् क्षेत्रमिदमित्युक्तं भवति । अथवा सर्ववह्वग्निजीवा निरन्तरं यावद् भृतवन्त क्षेत्रं सर्वदिग्गं एतावति क्षेत्रे यान्यवस्थितानि द्रव्याणि तत्परिच्छेदसामर्थ्ययुक्तः परमावधिः क्षेत्रमङ्गीकृत्य निर्दिष्टः । भावार्थः प्राग्वत् । अयमक्षरार्थः ॥५९७॥ निर्युक्तिगाथा ३०॥

साम्प्रतं साम्प्रदायिकमर्थं भाष्यकार आह—'अव्वाघाए' इत्यादि । 'अव्याघाते'—गर्भव्युत्क्रान्तिकपुरुषोत्कृष्टसम्पज्जनके[4] काले 'सर्वासु कर्मभूमिषु'—सर्वासु धर्म्मचरणप्रवृत्तिषु क्षितिषु पञ्चसु भरतैरवतेषु विदेहेषु चेत्यर्थः । 'यत्' यस्मात् 'तदारम्भाः' अग्निसमारम्भाः 'सर्ववहवो' विवक्षितावस्त्योपरिमेभ्यो वहवो 'मनुष्याः' पुरुषा 'भवन्ति' सम्पद्यन्ते । कश्चासौ काल इत्याह—'अजितजिनेन्द्रकाले', अस्यामेवावसर्प्पिण्यां द्वितीयतीर्थकरकाल इत्युक्तं भवति । यदि नामैवमेतत् ततः प्रकृतोपयोगः क इति ? उच्यते—तेषु च नानाविधाग्निसाध्यकार्याधरणनिपुणेषु सर्ववहवोऽग्निजीवा भवन्त्यमी, वादराश्चैते ॥५९८॥

इतो य 'उक्कोस' इत्यादि । 'सुहुमा य' अनलजीवा 'उक्कोसपया' उक्कोसपदवत्तिणो 'जता' भवन्ति 'तदा सव्ववहुगमगणीण परिमाणं' भवति ।

---

1 The *gatha* is an interpolation, and hence not numbered separately.

2 व P.    3 ग्व P.    4 P has य॒तके for ज्जनके.

वादरेषु सूक्ष्मप्रक्षेपात् । ततः किमित्यत आह—'संभवतो' यथासम्भवं 'तत्' सर्ववह्निजीवपरिमाणं 'षोढा पूरणं करोति' ।।५९९।।

तत्र पञ्चानादेशा एकस्त्वादेशः । कथमित्यत आह—'**एक्केक्के**'त्यादि । चउरंसघणो कीरइ, पुणो सो ओहिण्णाणिणो देवेण वा दाणवेण वा सव्वतो भामिज्जंतो जं फुसइ तावतियमुक्कोसयमोहिखेत्तं । कथमित्यत[1] आह—'**एक्केक्कागासपदेसजीवरयणाए**' । अत्र दोषद्वयं—क्षेत्राल्पत्वमुत्सिद्धान्तदोषश्च । एकप्रदेशे जीवानामनवस्थानादसङ्ख्येयप्रदेशावगाहिस्वभावत्वात् । द्वितीयमतमाह—**सावगाहे** । अत्राप्येको दोष इत्यनादेशः । तथा '**पतरं**'ति ततियचउत्था भणंति । पदरो कीरइ । कथं ? **एक्केक्कागासपदेसजीवरयणाए सावगाहे य**'त्ति ते एव दोषाः । पंचमच्छट्ठा भणंति—'**सेढि**'त्ति । सेढी कीरइ । कथमित्याह—'**एक्केक्के**'त्येतदेवावर्तते । षष्ठमतमनुजानन्नाह—'षष्ठे' श्रेणिपक्षे 'श्रुतादेशः' सूत्राभिप्रायो गुणद्वययोगादिति गाथार्थः ।।६००।।

आह—'**घण**' इत्यादि । 'ननु घनादिगणितस्य तुल्यत्वान्मा भूत् षड्विधा कल्पना' । एतदुक्तं भवति—प्रतिप्रदेशघनः प्रतिप्रदेशः[2] प्रतरादिभिः सार्धं न परमार्थतो भिद्यते । एवं स्वावगाहघनोऽपि स्वावगाहप्रतरादिभिः[3] । कुतः ? क्षेत्रप्रदेशसाम्यात् । संवृत-विवृतनेत्रपट्टस्पृष्टाकाशप्रदेशकलापवतो[4] घन एव कल्पनाद्वयेनास्तु, प्रतरः सूची वेत्यभिप्रायः । सूरिराह—'**भण्णति**'त्ति उच्यत उत्तरम् । 'पुरुषपरिक्षेपतो भेदः' सर्वत्रास्तीत्यध्याहारः । स च यथोत्तरमसंख्येयगुणः । तहाहि—तद् वहिः स्वावगाहनाघनो भ्राम्यमाणो यावत् स्पृशति तावत् स्वावगाहनाप्रतरोऽसङ्ख्येयगुणं, तस्मादपि श्रेणीति गाथार्थः ।।६०१।।

ततश्च '**नियये**'त्यादि । '**अइ**[5]' इत्यादि । गाथाद्वयं सुवोध[6]म् । णवरं खंडाइं फुसिऊणं 'ठाति' तिष्ठति स्पृशतीत्यर्थः । न चैवं तावतो युक्तेयं कल्पनेति ।।६०२-६०३।।

असम्भवोऽयमिति चेत् । उच्यते—'**सामत्थ**'मित्यादि स्पष्टा । नवरं 'रूपि'द्रव्यं चाऽलोके 'नास्ती'ति 'सामर्थ्यमात्र'मवशिष्यत इति ।।६०४।।

सोपयोगेयमन्यकर्तृकी गाथा '**वड्ढंतो**' इत्यादि । प्रतीतार्थम्[7] ।।६०४क।।

इदानीं विमध्यमक्षेत्राभिवित्सया सम्बन्धगाथामाह—'**भणित**'मित्यादि । पुव्वद्धं कण्ठ्यम् । 'एतस्य' विमध्यमस्य 'कालमानं वक्ष्ये, यद् यस्मिन् क्षेत्रे भवति' । एतदुक्तं भवति—कियति क्षेत्रोपलम्भे किय[8]त्कालोपलम्भः ? कियत्कालोपलम्भे च कियान् क्षेत्रकालो[9]पलम्भ इति गाथार्थः ।।६०५।।

---

1 त्र P. 2 श P. 3 P adds सार्धं न परमार्थतो भिद्यते.
4 P has वद् अतो for वतो 5 P has साये for अइ. 6 ध्य P.
7 र्था P. 8 यान् P. 9 P drops काल.

तत्र—

अंगुलमावलियाणं भागमसंखिज्ज दोसु संखिज्जा ।
अंगुलमावलियंतो आवलिया अंगुलपुहुत्तं ॥६०६॥ नि० ३१॥

हत्थम्मि मुहुत्तंतो दिवसंतो गाउयम्मि बोद्धव्वो ।
जोयणदिवसपुहुत्तं पक्खंतो पण्णवीसाओ ॥६०७॥ नि० ३२॥

भरहम्मि अद्धमासो जंबुद्दीवम्मि साहिओ मासो ।
वासं च मणुयलोए वासपुहुत्तं च रुयगम्मि ॥६०८॥ नि० ३३।

खेत्तमसंखेज्जंगुलभागं पासंतमेव कालेणं ।
आवलियाए भागं भूयमणागयं च जाणाइ ॥६०९॥

तत्थेव य जे दव्वा तेसिं चिय जे हवंति पज्जाया ।
इय खेत्ते कालम्मि य जोएज्जा दव्वपज्जाए ॥६१०॥

संखेज्जंगुलभाए आवलियाएवि मुणइ तइभागं ।
अंगुलमिह पेच्छंतो आवलियंतो मुणइ कालं ॥६११॥

आवलियं मुणमाणो संपुण्णं खेत्तमंगुलपुहुत्तं ।
एवं खेत्ते कालं काले खेत्तं च जोएज्जा ॥६१२॥

संखिज्जम्मि उ काले दीवसमुद्दाऽवि होंति संखिज्जा ।
कालम्मि असंखिज्जे दीवसमुद्दा य भइअव्वा ॥६१३॥ नि० ३४॥

काले असंखए दीवसागरा खुड्डया असंखेज्जा ।
भयणिज्जा य महल्ला खेत्तं पुण तं असंखेज्जं ॥६१४॥

'अंगुले'त्यादि । 'हत्थम्मी'त्यादि । 'भरहम्मी'त्यादि । अङ्गुलं चावलिका च अङ्गुलावलिके । तयो'रङ्गुलावलिकयोर्भागमसङ्ख्येयं' पश्यत्यवधिज्ञानी । एतदुक्तं भवति—अङ्गुलासंख्येयभागावगाढानि योग्यद्रव्याणि पश्यन्नावलिकासंख्येयभागकालाभ्यन्तरे वृत्तान् भाविनश्च पर्यायान् जानाति । न क्षेत्रकालौ साक्षादिति भावना । तथा 'दोसु संखेज्ज'त्ति द्वयोरङ्गुलावलिकयोः संख्येयौ भागौ पश्यति । अंगुलसंख्येयभागं पश्यन्नावलिकाया अपि संख्येयमेव भागं पश्यतीत्यर्थः । भावना प्राग्वत् । तथाऽ'ङ्गुलं' सम्पूर्णं क्षेत्रतः पश्यन् कालतः 'आवलिकान्तः' पश्यति । 'आवलिका' दृश्यमाना सम्पूर्णा कालतः क्षेत्रतो'ऽङ्गुलपृथक्त्वं' दर्शयत्यवधिज्ञानिनः । 'पृथक्त्वं' द्विप्रभृतिरानवभ्यः । इति गाथार्थः ॥६०६॥ निर्युक्तिगाथा ३१॥

'हस्त' इति । 'हस्तविषयः' क्षेत्रतोऽवधिः । कालतो 'मुहूर्तान्तः', भिन्नं मुहूर्तमित्यर्थः । अवध्यवधिमतोरभेदोपचारादवधिः पश्यतीत्युक्तम् । तथा दिवसान्तः कालं पश्यतः । क्षेत्रतो 'गव्यूत' इति गव्यूतविषयो बोद्धव्यः । 'योजनं' तु पश्यन् 'दिवसपृथक्त्वं' पश्यति । तथा 'पक्षान्तः'—भिन्नं पक्षं पश्यन् क्षेत्रतः

पञ्चविंशति'योजनानि पश्यति। तथा 'भरतक्षेत्रविषये'ऽवधा'वर्ष'मास उक्तः। 'जम्बूद्वीपविपये च[1] साधिको मासः, वर्षं च मनुष्यलोकविषये'ऽवधौ। मनुष्यलोकेऽर्द्धतृतीयद्वीपसमुद्रपरिमाणः। 'वर्षपृथक्त्वं च'—वर्षसहस्रं वा 'रुचकद्वीपाख्ये' वाह्यद्वीप विषयेऽवधाववगन्तव्यमिति गाथार्थं ॥६०७-६०८॥ निर्युक्तिगाथा ३२-३३॥

भाष्यकार आह—'खेत्त'मित्यादि। अंगुलासंखेज्जभागं खेत्तं पासंतो तमेव'—असंखेज्ज'भागं' 'आवलियाए कालेणं' कालं अंगीकिच्च **'मुणति अतीतमणागतं च'** उपचारेण ॥६०९॥

यत आह—**'तत्थेव'** इत्यादि। **'संखेज्जे'**त्यादि। **'आवलिय'**मित्यादि। शेषं भावितं सुगमं वा ॥६१०-६१२॥

किं वहुना? **'संखेज्जम्मि उ'** इत्यादि। संख्यायते दिवसपक्षमासादिभिरिति संख्येयः। स चैकवर्षलक्षणोऽपि भवति। ततश्च 'तु'शब्दविशेपणात् संख्येयो वर्षसहस्रात् परतोऽभिगृह्यते। अत एवोक्तं—"वाससहस्सं च रुयगंमि" त्ति। कलनं 'कालः' कलासमूहो वा। तस्मिन् 'संख्येये काले'ऽववधिज्ञानगोचरे सति क्षेत्रतस्तस्यैवावधेर्गोचरतया 'द्वीपसमुद्रा अपि भवन्ति संख्येयाः'। 'अपि'-शब्दात् महानेकोऽपि तदेकदेशोऽपि, क्षेत्रप्रमाणस्यैव प्रस्तुतत्वात् संख्यायाश्चाप्रयोजकत्वात्। तथा 'कालेऽसंख्येये'—पल्योपमादौ अवधिविषये सति तस्यैवासंख्येयकालपरिच्छेदकस्यावधेः क्षेत्रतः परिच्छेद्यतया 'द्वीपसमुद्रास्तु भक्तव्या' विकल्पयितव्याः। कथं? कदाचिदसंख्येया एव, इहस्थस्य पुंसोऽसंख्येयद्वीपोदधिविपयावधिज्ञानोत्पत्तेः। कदाचित् संख्येया महान्तः, क्षेत्रप्रमाणस्य प्रस्तुतत्वादित्युक्तम्। कदाचित्त्वेकस्याप्येकदेशः **स्वयंभूरमण**तिर्यगवधेः, तस्यार्द्धरज्जुप्रमाणाम्भोनिधिसंस्थितत्वात्। कालासंख्येयकलघुत्वे[2] च तदेकदेशोपलब्धेः **स्वयंभूरमण**विपयमनुष्यवाह्यावधेर्वा। योजनापेक्षया तु सर्वेष्वपि पक्षेपु तुल्यमेव क्षेत्रं विवक्षितकालाऽसंख्येयकाक्रोडितत्वादिति गाथार्थः ॥६१३॥

एतामेव भजनां व्याचष्टे भाष्यकारः—**'काले'** इत्यादि। भावितवदनुसर्त्तव्येति ॥६१४॥

एवं तावत् परिस्थूरं न्यायमङ्गीकृत्य क्षेत्रवृद्ध्या कालवृद्धिरनियता कालवृद्ध्या च क्षेत्रवृद्धिरुक्ता। साम्प्रतं द्रव्यक्षेत्रकालभावपेक्षया च यस्य वृद्धौ यद् वृद्धिर्भवति न भवति वा तदभिधित्सुराह—

**काले चउण्ह वुड्ढी कालो भइयव्वु खेत्तवुड्ढीए।**
**वुड्ढीए दव्वपज्जव भइयव्वा खित्तकालाओ ॥६१५॥ नि० ३५॥**

**काले पवड्ढमाणे सव्वे दव्वादओ पवड्ढंति।**
**खेत्ते कालो भइओ वड्ढंति उ दव्वपज्जाया ॥६१६॥**

---

1...1 मासः, एकः पञ्च इत्यर्थः, तथा जम्बूद्वीपविषयेऽवधौ P. 2 P adds न.

भयणाए खेत्त-काला परिवड्ढंतेसु दव्वभावेसु ।
दव्वे वड्ढइ भावो भावे दव्वं तु भयणिज्जं ॥६१७॥

'काले' इत्यादि । 'काले'—आवलिकासंख्येयभागादौ वर्द्धमाने सति 'चउण्ह वुड्ढी' नियमात् क्षेत्रादीनां वृद्धिरिति प्रतिज्ञा कुतः ? कालात् सूक्ष्मसूक्ष्मतरसूक्ष्मतमत्वात् क्षेत्रादेः । तथाहि—यदि नाम स्थूरस्य कालस्य वृद्धिस्तन्ननु क्षेत्रस्य सुतरामेव तथा भवितव्यं, तदेकसमयवृद्धावितरस्य प्रदेशकोटीकोटीवृद्धेः । "नवि अत्थि नवि य होहिति उल्लावो" इत्यादिन्यायतोऽसद्भाव उच्यते । अत एव वक्ष्यति—"अङ्गुलसेढीमेत्ते ओसप्पिणिओ असंखेज्जे" ति । एवं क्षेत्रवृद्धौ द्रव्यवृद्धिर्दृश्या तस्याधेयाशून्यत्वात्, तदुपलब्धौ तदुपलब्धेरित्यर्थः । एवं द्रव्यवृद्धौ पर्यायवृद्धिस्तस्य पर्यायाविनाभूतत्वात्, तद् दृष्टौ च तद्दृष्टेः । तथा 'कालो भइयव्वो खेत्तवुड्ढीए'त्ति क्षेत्र वृद्धौ कालो भाज्य इति प्रतिज्ञा । कुतः ? प्रदेशान्तरोक्तविरोधप्रसङ्गात् । यदि हि नियमेन क्षेत्रवृद्धावपि कालवृद्धिर्भवेत् ततोऽसंख्येयासूत्सर्पिण्यवसर्पिणीष्वतिक्रान्तास्वेकमङ्गुलमात्रं लभ्यत इतिकृत्वा, यदुक्तं "हत्थंमि मुहुत्तंतो"त्ति तद् व्याहन्यते । एवं च वक्तव्यं स्यात् "हत्थंमि असंखि[1]ज्जाओ ओसप्पिणिओ हवंति नायव्वा" । तथा 'वुड्ढीय दव्वपज्जव'त्तीत्यादि । द्रव्यपर्याययोर्वृद्धौ सत्यां 'क्षेत्रकालौ भाज्यावेव', यतः प्रागुपलब्ध एव क्षेत्रमात्रादावनुसमयं तथा तथा क्षयोपसमाविर्भावितोऽपूर्वापूर्वद्व्यणुकादिसूक्ष्मपरिणामविशिष्टं पुद्गलास्तिकायं पश्यति । अतो द्रव्यवृद्धाविमौ भाज्यौ, न तु पर्याया भाज्याः । अपि तु पर्यायवृद्धौ द्रव्यं भाज्यम् । कदाचिद्वर्द्धते, द्रव्यवृद्धौ पर्यायवृद्धेर्ध्रुवत्वात् । कदाचिन्न वर्द्धते, एकस्मिन्नेवाणौ तत्प्रभूततरोपलब्धेरिति गाथार्थः ॥६१५॥निर्युक्तिगाथा ३५॥

'काले' इत्यादि । 'भयणाए' इ[2]त्यादि भाष्यगाथाद्वयं गतार्थ ॥६१६-६१७॥

उत्तरगाथासम्बन्धनार्थं प्रश्नयति—

अण्णोऽण्णनिबद्धाणं जहण्णयाईण खित्तकालाणं ।
समयप्पएसमाणं किं तुल्लं होज्ज हीणहियं ॥६१८॥

सुहुमो य होइ कालो तत्तो सुहुमयरं हवइ खेत्तं ।
अंगुलसेढीमित्ते ओसप्पिणिओ असंखेज्जा ॥६१९॥ नि० ३६॥

खेत्तं बहुयरमंगुलसेढीमित्ते पएसपरिमाणं ।
जमसंखेज्जोसप्पिणिसमयसमं थोवओ कालो ॥६२०॥

कालो खित्तं दव्वं भावो य जहुत्तरं सुहुमभेया ।
थोवासंखाणंतासंखा य जमोहिविसयम्मि ॥६२१॥

---

1 ज्जे P. 2 P has वे for इ.

सव्वमसंखेज्जगुणं कालाओ खेत्तमोहिविसयम्मि ।
अवरोप्परसंबद्धं समयपएसप्पमाणेणं ।।६२२।।
खेत्तपएसेहिंतो दव्वमणंतगुणियं पएसेहिं ।
दव्वेहिंतो भावो संखगुणोऽसंखगुणिओ वा ।।६२३।।
भणियं खेत्तपमाणं तम्माणमियं भणामि दव्वमओ ।
तं केरिसमारंभे परिणिट्ठाणे विमज्झे वा ।।६२४।।

'अण्णोण्णे'त्यादि । 'अन्योऽन्यं' मिथो निबन्धन[1]'योरेतावत्क्षेत्रोपलम्भे इत्येवमादिनियमितयोर्जघन्यमध्यमोत्कृष्टभेदभिन्नयोः क्षेत्रकालयोरवधिविषययोरिति गम्यते । किं ? 'समयमानं प्रदेशमानं च किं तुल्यं स्यादधिकं वाशब्दाद्धीनमि'ति ? उच्यते, सर्वत्र प्रतियोगिनः खल्वावलिकासंख्येयभागादेः कालादसंख्येयगुणं क्षेत्रम् ।।६१८।।

यत आह 'सुहुमो य' इत्यादि । 'सूक्ष्म एव भवति कालः', उत्पलपत्रशतव्यतिभेदोदाहरणसिद्धत्वात् । ततोऽपि सूक्ष्मतरं क्षेत्रं भवति, यतो'ऽङ्गुलश्रेणिमात्रे' क्षेत्रे प्रतिप्रदेशं समये ह्रियमाणे सत'यवसर्पिण्योऽसंख्येयाः' समतिगच्छन्तीत्यतः स्तोकः कालः स्थूरत्वादिति गाथार्थः ।।६१९।। निर्युक्तिगाथा ३६।।

'खेत्त'मित्यादि भाष्यगाथा गतार्था ।।६२०।।

विशेषाभिधानार्थमाह, अत्र च—'कालो' इत्यादि । कालादयो 'यथोत्तरं सूक्ष्माः' । कुत इत्याह—यतः 'स्तोकाः' अल्पाः । किं सामान्येनैव ? नेत्याह—स्तोका एते 'अवधिविषय एव' । तस्मात् न सामान्येनेति गाथार्थः ।।६२१।।

तथा—'सव्व'मित्यादि । 'ओहिविसयम्मि खेत्तं' अंगुलासंखेज्जभागादि 'कालतो' आवलियअसंखेज्ज[2]भागलक्खणातो[2] 'असंखेज्जगुणं' । किंविशिष्टं यदित्याह '[3]परस्परसम्बद्धं' जं अंगुलावलिकयोरसंख्येयभागादि । केनेत्यत आह—'समयमानेन प्रदेशमानेन' वेति गाथार्थः ।।६२२।।

एवं 'खेत्त'मित्यादि । क्षेत्रविशेषे[4]भ्यो'ऽङ्गुलासंख्येयभागादिभ्यः 'द्रव्यमनन्तगुणम्' । कैरित्याह—'प्रदेशै'रणुभिरित्यर्थः । तथा 'द्रव्येभ्यो भावः संख्येयगुणः' । "दो पज्जवे दुगुणिये"त्ति वचनात् । 'असंख्येयगुणो वा' एकैकस्मादिति गाथार्थः ।।६२३।।

निगमयन्नाह—'भणित'मित्यादि । उक्तं[5] त्रेधा क्षेत्रपरिमाणमवधेः । द्वारं उत्तरद्वारसम्बन्धनार्थमाह—अत ऊर्ध्वं द्रव्यं 'भणामि' वच्मि । किंविशिष्टं ? 'तन्मानमितं' जघन्याद्यवधिक्षेत्रप्रमाणमितम् । किमिति ? अवधिविषयद्रव्यावधिकत्वादेतन्निरूपणायाः । अन्यथा नानेनार्थः स्यात् । अत एतदारम्भकद्रव्यस्वरूप-

1 P has बद्ध for बन्धन. 2...2 भागादिलक्खणाओ P.
3 P adds य. 4 P has प्रदेशे for विशेषे. 5 P adds च.

जिज्ञासुः प्रश्नयति—'तद्' द्रव्यमवधिज्ञानगोचरमङ्गुलासंख्येयभागाद्यवगाहि च 'कीदृशं' कीदृक्स्वरूप'मारम्भे' प्रस्थाने ? तथा 'परिनिष्ठाने' भ्रंशे, 'विमध्ये' चेति गाथार्थः ।।६२४।।

आचार्य उत्तरमाह—

तेयाभासादव्वाण अंतरा एत्थ लभइ पट्ठवओ ।
गुरुलहु अगुरुयलहुयं तंपि य तेणेव निट्ठाइ ।।६२५।। नि० ३७।।

पट्ठवओ नामावहिनाणस्सारंभओ तयाईए ।
उभयाजोग्गं पेच्छइ तेयाभासंतरे दव्वं ।।६२६।।

गुरुलहु तेयासन्नं भासासन्नमगुरुं च पासेज्जा ।
आरंभे जं दिट्ठं दट्ठूणं पडइ तं चेव ।।६२७।।

तेयाभासाजोग्गं किमजोग्गं वा तयंतराले जं ।
ओरालियाइतणुवग्गणा कमेणं तयं सज्झं ।।६२८।।

ओरालविउव्वाहारतेयभासाणपाणमणकम्मे ।
अह दव्ववग्गणाणं कमो विवज्जासओ खेत्ते ।।६२९।। नि० ३८।।

कुइयण्णगोविसेसोवलक्खणोवम्मओ विणेयाणं ।
दव्वाइवग्गणाहिं पोग्गलकायं पयंसेंति ।।६३०।।

एगा परमाणूणं एगुत्तरवड्ढिया तओ कमसो ।
संखेज्जपएसाणं संखेज्जा वग्गणा होंति ।।६३१।।

तत्तो संखाईआ संखाइयप्पएसमाणं ।
तत्तो पुणो अणंताणंतपएसाण गंतूणं ।।६३२।।

ओरालियस्स गहणप्पाओग्गा वग्गणा अणंताओ ।
अग्गहणप्पाओग्गा तस्सेव तओ अणंताओ ।।६३३।।

एवमजोग्गा जोग्गा पुणो अजोग्गा य वग्गणाऽणंता ।
वेउव्वियाइयाणं नेयं तिविगप्पमिक्केक्कं ।।६३४।।

एक्केक्कस्साईए पज्जंतम्मि य हवंतिऽजोग्गाइं ।
उभयाजोग्गाइं जओ तेयाभासंतरे पढइ ।।६३५।।

कम्मोवरि धुवेयरसुण्णेयरवग्गणा अणंताओ ।
चउधुवणंतर तणुवग्गणा य मीसो तहाऽचित्तो ।।६३६।। नि० ३९।।

निच्चं होंति धुवाओ इयरा लोए न होंतिवि कयाई ।
एकोत्तरवुड्ढीए कयाइ सुण्णंतराओऽवि ।।६३७।।

जाओ हवंति ताओ सुण्णंतरवग्गणत्ति भण्णंति ।
निययं निरंतराओ होंति असुण्णंतराउत्ति ।।६३८।।

धुवणंतराइं चत्तारि जं धुवाइं अणंतराइं च ।
भेयपरिणामओ जा सरीरजोग्गत्तणाभिमुहा ।।६३९।।

खंधदुगदेहजोग्गत्तणेण वा देहवग्गणाउत्ति ।
सुहुमो दरगयबायरपरिणामो मीसयक्खंधो ।।६४०।।

जइणसमुग्घायगईएँ चउहिं समएहिं पूरणं कुणइ ।
लोगस्स तेहिं चेव य संहरणं तस्स पडिलोमं ।।६४१।।

जइणसमुग्घायसचित्तकम्मपोग्गलमयं महाखंधं ।
पइ तस्समाणुभावो होइ अचित्तो महक्खंधो ।।६४२।।

सव्वुक्कोसपएसो एसो केई न चायमेगंतो ।
उक्कोसपएसो जमवगाहट्ठिइओ चउट्ठाणो ।।६४३।।

अट्ठप्फासो य जओ भणिओ, एसो य जं चउप्फासो ।
अण्णेऽवि तओ पोग्गलभेया संतित्ति सद्धेयं ।।६४४।।

एगपएसोगाढाण वग्गणेगा पएसवुड्ढीए ।
संखेज्जोगाढाणं संखेज्जा वग्गणा तत्तो ।।६४५।।

तत्तो संखाईया संखाईयप्पएसमाणाणं ।
गंतुमसंखेज्जाओ जोग्गाओ कम्मुणो भणिया ।।६४६।।

तत्तो संखाईया तस्सेव पुणो हवंति जोग्गाओ ।
माणसदव्वाईणवि एवं तिविगप्पमेक्केक्कं ।।६४७।।

एगा समयठिईणं संखेज्जा संखसमयठिइयाणं ।
होंति असंखेज्जाओ तओ असंखेज्जसमयाणं ।।६४८।।

एगा एगगुणाणं एगुत्तरवुड्ढिया तओ कमसो ।
असंखेज्जगुणाण तओ संखेज्जा वग्गणा होंति ।।६४९।।

संखाईयगुणाणं संखाईया य वग्गणा तत्तो ।
होंति अणंतगुणाणं दव्वाणं वग्गणाऽणंता ।।६५०।।

वण्णरसगंधफासाण होंति वीसं समासभेएणं ।
गुरुलहुअगुरुलहूणं बायरसुहुमाण दो वग्गा ।।६५१।।

भणियं तेयभासाविमज्झदव्वावगाहपरिमाणं ।
ओहिन्नाणारंभो परिणिट्ठाणं च तं जेसुं ।।६५२।।

गुरुलहुदव्वारद्धो गुरुलहुदव्वाइं पिच्छिउं पच्छा ।
इयराइं कोइ पेच्छइ विसुज्झमाणो कमेणेव ।।६५३।।

अगुरुलहुसमारद्धो उड्ढं वड्ढइ कमेण सो नाहो ।
वड्ढंतो च्चिय कोई पेच्छइ इयराइं सयराहं ।।६५४।।

'तेया' इत्यादि। तैजसं च भाषा च तैजसभाषे, तयोर्द्रव्याणि तैजसभाषाद्रव्याणि। तेषां 'तैजसभाषाद्रव्याणामन्तरा'दन्तरे। "अर्थाद्विभक्तिपरिणतिः"। अथवा सप्तम्येव पाठः। 'एत्थ'त्ति। 'अत्रा'न्यदेव तदयोग्यं द्रव्यं 'लभते' पश्यति। क इत्याह—'पट्ठवओ'त्ति अवधिज्ञानप्रारम्भकोऽवधिज्ञानप्रतिपत्ता। किंविशिष्टं तदित्याह—'गुरुलहु अगुरुलहुयं'न्ति। अस्यार्थः—गुरु च तल्लघु च गुरुलघु न गुरुलघु अगुरुलघु। एतदुक्तं भवति—गुरुलघुपर्यायोपेतं गुरुलघु। अगुरुलघुपर्यायोपेतं चागुरुलघ्विति। इह च तैजसद्रव्यासन्नं गुरुलघु, भाषाद्रव्यासन्नमगुरुलघ्विति। 'तदपि च'ावधिज्ञानंतदावरणोदयाद् भ्रस्यत् स'त्तेनैव' द्रव्येणोपलब्धेन सता 'निष्ठां याति'—प्रतिपतति। 'अपि'शब्देन ज्ञापयति—प्रतिप्रा'तिन्ययं न्यायो, न त्ववश्यमिदं प्रतिपतत्येव। 'च'शब्दस्यास्यैवकारार्थत्वेनावधारणार्थत्वात्। एतदेवैवं निष्ठां याति, न शेषज्ञानानीति गाथार्थः ।।६२५।। निर्युक्तिगाथा ३७।।

'पट्ठवओ' इत्यादि। 'गुरुलहु' इत्यादि। गतार्थम् ।।६२६-६२७।।

अमुमर्थं श्रुत्वा शिष्यः प्रश्नयति—'तेयाभासा' इत्यादि। 'तैजसभाषयोर्यद्योग्य'मनुकूलं द्रव्यं तत् 'किं' कतमदित्याह—कथय भगवन्। 'तयोर्वाऽन्तराले यदयोग्यं' कतिप्रदेशं वा तदिति। अत्रोच्यते—'ओरालियाइ'त्ति। परमाण्वाद्यौदारिकवैक्रियादि'तनुवर्गणाक्रमेण साध्य'मिदानीं भवतः। अन्यथा तत्प्रतिपत्त्यसम्भवात् ।।६२८।।

अत उक्तं भगवता 'ओराले'त्यादि। 'द्रव्यवर्गणाक्रमः। क्षेत्रतस्त्वयमेव विपर्यासो' भवति। सांन्यासिकं चैतत्पदमिति समुदायार्थः ।।६२९।। निर्युक्तिगाथा ३८।।

आह—किमेता वर्गणाः प्ररूप्यन्ते? उच्यते, शिष्यासम्मोहार्थम्। तथा चोदाहरणम्—'कुत्ती'त्यादि। इह भरतक्षेत्रे मगधाजनपदे प्रभूतगोमण्डलस्वामी कुचिकर्णो नाम धनपतिरभवत्। स च तासां गवामतिबाहुल्यात् सहस्रादिसंख्यामितानां पृथक्पृथगनुपालनार्थं प्रभूतान् गोपांश्चकार। तेऽपि च परस्परसम्मिलितासु तासु गोष्वात्मात्मीयाः खल्वजानानाः सन्तोऽकलहयत्। तांश्च परस्परतो विवदमानानुपलभ्यासौ तदव्यामोहार्थमधिकरणव्यवच्छित्तये च शुद्धपञ्चवर्णं संयोगवर्णोपलक्षितानां गवां प्रतिगोपं विभिन्ना वर्गणा व्यवस्थापितवान्। एवं कुचिकर्णसमः शास्ता गोपसमेभ्यो विनेयेभ्यो गोवर्गसदृशं 'पुद्गलास्तिकायं' परमाण्वादिवर्गणाक्रमेण व्यवस्थापितवान् ।।६३०।।

तद्यथा—'एगा' इत्यादि गाथाओ। इयमासां भावना—इह वर्गणासमूहो मेलकः। तत्र एगपदेसियाणं एगा। एवं ता'वेक्केक्कपरमाणुवु'ड्ढीए संखेज्जपदेसियाणं संखेज्जाओ। तओ एगुत्तरवु'ड्ढीए चेव असंखेज्जपदेसियाणं असंखेज्जाओ। एवमे'गुत्तरवुड्ढीए चेव अणंतपदेसियाणं अणंताओ। एताओ सव्वा-

1 पा P. 2 ज्ञा P. 3 व P.
4 व P. 5 P adds गे.

ओऽवि ओरालियस्स अग्गहणपाओग्गाओ अइसुहुमत्तणओ। पुणो जोग्गाओ तत्तत्परमाणुयोगे वादरपरिणामोपपत्तेः। पुनरयोग्यास्तत्परमाणुमीलने सूक्ष्मत्वेनायोग्यत्वात्। इतोऽपि चायोग्यास्तत्परमाणुमीलनेनातिवादरत्वात्। पुनर्योग्यास्तत्परमाणुमीलनेन सूक्ष्मत्वादित्येवमादि यावत्कार्मणम्। स्थापना—

. . . .
. . .
. .
.

जाव १० संखेज्जाणं सं १५ असं० असं २० अणं अणं २५ जाव चउधुवणंतरवग्गणा। एताश्चैवम्—उरालअजोग्ग ३। विउव्व अजोग्ग ३। आहारअजोग्ग ३। तेयअजोग्ग ३। भासाअजोग्ग ३। आणुअजोग्ग ३। मणअजोग्ग ३। कम्मअजोग्ग ३। धुव०। अधुव०। सुन्न०। पत्तेय०। सुन्न०। वायर०। सुन्न०। सुहुम०। सुन्न। अचित्त। ध्रुवादिष्वंकयोजनैवं—ध्रुव। ९१। ९२। ९३। अध्रुव ९४। ९५। ९६। शून्य ९७। ९९। १०१। [शून्यांतर] १०२। १०३। १०४। **'चउधुव'**त्ति चउध्रुवणंतर वग्गणाओ। ताश्चैवम्—**'तणुवग्गणा'** चउरो, 'मिश्रं' वक्ष्य'त्यचित्तं च'। तत्र 'कर्मोपरी'त्यादेर्भावना—कर्मायोग्यानन्तरद्रव्यवर्गणैकाधिकसूक्ष्मतरत्वेनास्वपरिणामवत्याः खल्वारभ्यैकैकोत्तराः स्वस्थानानन्तपरमाणूपचिततथामूर्तिस्वाभाव्यात् सूक्ष्मसूक्ष्मतरपरिणामवत्यः सकललोकव्यापिन्यो विवक्षितानन्तकाजहद्वृत्तयोऽनन्ता ध्रुवपरिणामोपेतत्वात् पञ्चास्तिकायवन्नित्याः—शाश्वता इति वर्गणा ध्रुववर्गणाः। अध्रुवास्त्वे तद्विपरीताः। भाष्या[1]नुयायि पाठान्तरमिदम् ॥६३१-६३५॥

**'कम्मोवरि'**मित्यादि। कर्मग्रहणेन चात्र पदैकदेशाश्रयणात् कर्मवर्गणा आश्रीयन्ते। तदुपर्यव्यवहिता एकादिप्रदेशवृद्ध्याऽनन्ता 'ध्रुववर्गणा'। ध्रुवत्वं[2] चैतासां सर्वदा तत्तत्संख्या[2]विशेषाव्यभिचारात्, नत्वसंख्येयकालादुपर्यवस्थानं स्कन्धानां क्वचित्प्रतिपादितम्। तदुपर्येकादिप्रदेशवृद्ध्या अनन्ता 'एवेतराः' अध्रुववर्गणा इत्यर्थः। अध्रुवत्वं चैतासां [3]कदाचित्तत्संख्याविशेषशून्योऽपि लोकः पठ्यते न तु सर्वसंख्या[3]विशेषशून्य एव। अत एव चैतासामागमे संतरनिरन्तरवग्गणेति पर्यायशब्दः पठ्यते। तदनन्तरमेकादिप्रदेशवृद्ध्यैव वृद्धाः शून्येतरवर्गणानामनन्तकाश्चत्वारः पठ्यन्ते। अत्र चैवं अक्षराणामभिसम्बन्धः। शून्याश्चेतराश्च शून्येतराः, शून्येतराश्च ता वर्गणाश्च 'शून्येतरवर्गणाः'। ताश्च कियत्यो भवन्ति? अत आह—'अनन्ताः'। अनन्ता अपि शून्येतरत्वाभ्यां समुदिताः सत्योऽनन्ता आहोस्वित्प्रतिव्यक्त्यनन्ताः किंवान्यथेत्यत आह—**'चउधुवणंतरतणुवग्गणा य'**। चतस्रश्च ता ध्रुवाश्च चतुर्ध्रुवाः। ध्रुवग्रहणेन चात्र शून्यवर्गणा

1 P adds न.    2...2 च सदाभाव P.

3..3 कदाचित्तत्संख्याविवक्षितानन्तकजहद्वृत्तयो न स्युरपि वर्गणा अध्रुवाश्चेत्याश्रयणात्, तदनन्तरमेकादिप्रदेशवृद्धा अनन्ताः शून्यवर्गणाः। अत्रैतासां सर्वदा तत्तत्संख्याकस्थानानामन्तरा एकान्तरसंख्या P.

आगमपरिपठिता गृह्यन्ते। यत उक्तम्—"उक्कोससंतरनिरंतराओ उवरिं एगे छ्वे छूढे पढमधुवसुणवग्गणा होइ"। ता एव पदैकदेशोच्चारणात्। अध्रुवा-स्त्वेतद्विपरीताः। एवमनेनैव वृद्धिक्रमेण शून्यानि—व्यवहितान्यन्तराणि यासां ताः 'शून्यान्तराः'। ताश्च लोके कदाचिन्न भवन्त्यपि' विचित्रत्वाद्विस्रसागतिवश-पुद्गलास्तिकायगतेः। 'एगुत्तरवड्ढीए' इत्यादि द्वयव्याख्यानं प्रकटार्थम्। 'चतुधुवणं' ति। चतुःसंख्याप्रमितत्वाच्चत्वारि ध्रुवा नित्यत्वात्। 'अनन्तराः' स्वस्थानेऽनन्तपरमाणुनिर्वृत्ता अपि सत्य एकैकप्रदेशवृद्धत्वात्। तथा भेदाभेद-परिणामाभ्यां या औदारिकादिशरीरयोग्यत्वाभिमुखाः। 'खंधे' इत्यादि। 'स्कन्धद्वयमूर्त्तियोग्यत्वाभिमुखा वा'। 'या' इति द्रव्यवर्गणाः। "मीसो"त्ति व्याचिख्यासुराह—'सुहुमो'त्ति। 'सूक्ष्म एवार्धगतबादरपरिणाम'स्तदभिमुखो मिश्र उच्यते। ६३६-६४०॥

अचित्तमहास्कन्धस्त्वेवं भवतीत्याह—'जइण' इत्यादि। प्रथमे समये दण्डमित्येवमाद्यष्टसामयिक इति गाथार्थः॥६४१॥[1]

आह—महास्कन्धस्यैवं विशेषणमनर्थकमचित्तत्वाव्यभिचारित्वेन व्यव-च्छेद्याभावात्। न, 'केवलिसमुद्घाते सचित्तकर्म्मपुद्गल'लोकव्यापि'महास्कन्ध'-व्यवच्छेदित्वात् विशेषणस्य। तथाहि—'जइण' इत्यादि सुगमा॥६४२॥

अत्र परमतमाह—'सव्वुक्कोसे'त्यादि। 'केचनो' व्याचक्षते—'अयमेव सकलस्कन्धेभ्य उत्कृष्टप्रदेशनिर्वृत्तः'। ततः किमित्याह—'न चायमेकान्तो' न चायं नियम एव, दुष्प्रतिष्ठितत्वात्। कः प्रत्यय इत्याह—'यस्मादुत्कृष्टप्रदेशिकोऽ'न्यस्मात् प्रतियोगिनो'ऽवगाहनास्थितिभ्यां चतुःस्थानो' भवतीति। उक्तं च प्रज्ञापनायाम्—"उक्कोसपदेसियाणं भंते! खंधाणं केवइया पज्जवा पण्णत्ता? गोयमा! अणंता। से केणट्ठेणं भंते! एवं वुच्चइ? गोयमा! उक्कोसपदेसिए खंधे उक्कोसपदेसियस्स खंधस्स दव्वट्ठयाए तुल्ले", एकैकद्रव्यत्वात्, "पदेसट्ठताए तुल्ले", उत्कृष्टप्रदेशिकस्यैव प्रस्तुतत्वात्, "ओगाहणट्ठताए चउट्ठाणवडिए असंखेज्जतिभागहीणे वा संखेज्जतिभागहीणे वा संखेज्जगुणहीणे वा असंखेज्जगुण०-वण्णगंधरसफासपज्जवेहिं छट्ठाणवडिए"। तथा चाह—'अट्ठ' इत्यादि। 'अट्ठप्फासो त जओ भणिओ'। "उक्कोसपदेसो"त्ति अणुवट्टति। व्यतिरेकमाह—'एष चा'चित्तमहास्कन्धो 'यद्' यस्मा'च्चतुःस्पर्शो'ऽन्येन तुल्य इत्यर्थः। तस्मान्न तत्परवचनं साधीयः। ततोऽपि किमित्याह—'ततोऽन्येऽपि स्कन्धा' एतद्बृहत्तराः 'सन्तीति श्रद्धेय'मित्युक्ता द्रव्यवर्गणाः॥६४३-६४४॥

साम्प्रतं विपर्यासतः क्षेत्र इति व्याचिख्यासुराह—'एगपएसो' इत्यादि। 'एकप्रदेशावगाहिस्वभावानामेका वर्गणा'। सा चाणुकाद्यनन्ताणुकाऽपि स्यात्, ततः 'प्रदेशवृद्ध्या' प्रदेशावगाढानां[2] 'संख्येया' इति गाथार्थः॥६४५॥

---

1 ई P. 2 P has संख्येयावानां for प्रदेशावगाढानां.

'**तत्तो**' इत्यादि । 'ततो'ऽसंख्येयावगाढाना'मसंख्येया यात्वा कर्मणोऽयोग्या' भवन्ति ।।४४६।।

'**तत्तो**' इत्यादि, 'ततोऽसंख्येयास्तस्यायोग्या भवन्ति' वादरत्वात् । एवं मनआदि[1] औदारिकादिति क्षेत्रवर्गणाः ।।६४७।।

कालत आह—'एक्का' इत्यादि । प्रतीतार्थैवेति कालवर्गणाः ।।६४८।।

भावत आह—'**एगा**' इत्यादि । '**संखा**' इत्यादि । स्पष्टार्थम् । नवरमनन्तगुणान्यपि भावाधाराणि द्रव्याणि भवन्तीति ता अप्यनन्ता ।।६४९-६५०।।

'**वण्णे**'त्यादि । पंच वण्णा दोन्नि गंधा पंच रसा अट्ठ फासा एवं ते '**वीसं**' । तथा '**गुरुलघु**' त्ति गुरुलघुपर्यायाणां वादराणाम् । '**अगुरुलहूणं**'ति अगुरुलघुपर्यायाणां सूक्ष्माणामेतावेव द्वौ वर्गाविति ।।६५१।।

प्रकृतं निगमयन्नाह—'**भणिय**'मित्यादि । स्पष्टार्था नवरं 'येषु च' द्रव्येषु 'परिनिष्ठानं' तदपि भणितमिति ।।६५२।।

अत्र च 'गुरुलहु' इत्यादि । 'गुरुलघुद्रव्यारब्ध'स्तैजसप्रत्यासन्नारब्ध इत्यप्रकाश्याभिप्रायः । किं करोति । आह—'गुरुलघूनि द्रव्याणि दृष्ट्वा' औदारिकादीनीत्यभिप्रायः । 'कश्चित्तु क्रमेण विशुद्ध्यमान इतराणि' अगुरुलघूनि भाषादीनि 'पश्यति' । यस्तु न विशुद्ध्यते स तेष्वेव कियन्तमपि कालमास्ते पतति चेति गाथार्थः ।।६५३।।

तथा 'अगुरु' इत्यादि । भाषाद्रव्यारब्ध 'ऊर्ध्वमेव वर्धते क्रमेण, नाधः । आधस्त्येष्वस्य का वार्त्तेत्याह—'कश्चिदितराण्यपि पश्यति वर्धमानः' सन् पटुत्वादिति गाथार्थः ।।६५४।।

गुरुलहुमगुरुलहुं वा तेयाभासंतरेति निद्दिट्ठं ।
ओरालाईयाणं किं गुरुलहुमगुरुलहुयं वा ।।६५५।।
ओरालियवेउव्वियआहारगतेय गुरुलहू दव्वा ।
कम्मगमणभासाई एयाइं अगुरुलहुयाइं ।।६५६।। नि० ४०।।
गुरुयं लहुयं उभयं नोभयमिति वावहारियनयस्स ।
दव्वं लेट्ठुं दीवो वाऊ वोमं जहासंखं ।।६५७।।
निच्छयओ सव्वगुरुं सव्वलहुं वा न विज्जए दव्वं ।
वायरमिह गुरुलहुयं अगुरुलहुं सेसयं सव्वं ।।६५८।।
जइ गुरुयं लहुयं वा न सव्वहा दव्वमत्थि तो कीस ।
उड्ढमहोऽवि य गमणं जीवाणं पोग्गलाणं च ।।६५९।।
उड्ढं लहुकम्माणं भणियं गुरुकम्मणामहो गमणं ।
जीवा य पोग्गलाविय उड्ढाहोगामिणो पायं ।।६६०।।

---

1 P adds ख्यापारात्,

अन्नच्चिय गुरुलहुया अन्नो दव्वाण वीरियपरिणामो ।
अन्नो गइपरिणामो नावस्सं गुरुलहुनिमित्तो ॥६६१॥

परमलहूणमणूणं जं गमणमहोऽवि तत्थ को हेऊ ।
उड्ढं धूमाईणं थूलयराणंपि किं कज्जं ॥६६२॥

किं च विमाणाईणं नाहोगमणं महागुरुणंपि ।
तणुयरदेहो देवो हक्खुवइ व किं महासेलं ॥६६३॥

अह तस्स वीरियं तं तो नाहोगमणकारणं गुरुया ।
उड्ढगइकारणं वा लहुया एगंतओ जुत्ता ॥६६४॥

विरियं गुरुलहुयाणं जहाहियं गइविवज्जयं कुणइ ।
तह गइठिइपरिणामो गुरुलहुयाओ विलंघेइ ॥६६५॥

भणिओ खित्तद्धाणं सुद्धाणं चिय परोप्परनिबंधो ।
इह ताणं चिय भण्णइ दव्वेण समं निबंधोऽयं ॥६६६॥

पुच्छा—'गुरुलघु' इत्यादि स्पष्टा ॥६५५॥

उत्तरमाह—'ओरालिये'त्यादि । स्पष्टैव । नवर'मादि'शब्दात्प्राणापानः परिगृह्यते ॥६५६॥

अत्र च नयविचारप्रस्तावः । तौ च व्यवहारनिश्चयौ । व्यवहारत आह—'गुरुय'मित्यादि । 'व्यवहारनयस्य गुर्वा'दि 'लेष्ट्वा'दि यथासंख्यम् ॥६५७॥

निश्चयत आह—'णिच्छयओ' इत्यादि । पुव्वर्द्धं कण्ठ्यम् । किं तद्यदस्तीत्याह—'बादरं गुरुलघ्व'स्ति । लेष्ट्वादि 'शेषं चागुरुलघु' सूक्ष्मम् ॥६५८॥

व्यवहारोऽस्य चोद्यं कुर्वन्नाह—'जती'त्यादि । 'यदि' सर्व'गुरु' सर्व'लघु', 'वा'शब्दादुभयं च 'द्रव्यं नास्ति, ततः किमिति जीवानामूर्ध्वाधोगमनं पुद्गलानां च' ? अयमत्राभिप्रायः—गुरुत्वनिबन्धनमधोयानं लघुत्वनिबन्धनं चोर्ध्वयानं गुरुलघुनिबन्धनं तिरश्चीनमगुरुलघुनिबन्धनं च विमानावस्थानमिति ॥६५९॥

तथाहि—'उड्ढ'मित्यादि । गतार्था । नवरं 'प्रायो'ग्रहणमादित्यादेस्तिरश्चीनगमनाद्विमानानां चावस्थानादाकाशस्य त्वस्तित्वे सति सकल विकल्पातिरिक्तत्वात् । तस्माद्यदधोगमनस्वभावं तद् गुरु, इतरत् लघु, इति द्रव्यचतुष्टयसिद्धिमवोधि व्यवहारः ॥६६०॥

उच्यते—'अण्णो च्चिए'त्यादि । 'अन्यैव' च काचिद् 'गुरुता लघुता' । अन्यश्च द्रव्याणां' देवादीनां 'वीर्यपरिणामः' । अन्यश्चगतिपरिणामः । ततः किमित्याह—'नावश्यं गुरुनिमित्तो लघुनिमित्त' उभयनिमित्तो वा । कः ? उर्ध्वाधोमात्रगमनादिप्रकारः ॥६६१॥

कुतः ? 'परम' इत्यादि । 'यद्'—यस्मा'त्परमलघूनामप्यणूनाम्' । 'अपि'शब्दस्यात्र प्रयोगात् । 'गमनं' प्रापणम् । 'अधः' अधस्तात् । 'तत्र को

हेतुः' किं निमित्तं किं कार्यमिति यावत् । 'त'च्चोर्द्ध्वं' तमादीनामदभ्राणामपि' यद् गमनं तत्र 'किं कार्यं' को हेतुरित्यर्थः ।।६६२।।

तथा—'किं चे'त्यादि । यदि च गुरुत्वमधोगमनस्य हेतुः स्यात् ततः 'किमिति विमानदीनां महागुरूणमपि नाधोगमनम्' । एतदुक्तं भवति—लघोरप्यधोगतिपरिणामादधोगमनं, गुरोरप्यूर्ध्वगतिपरिणामादूर्ध्वगमनं, स्थितिपरिणामविशेषाच्च विमानाद्यवस्थानम् । तथा 'तनुतरदेहो देव उत्क्षिपति किं महाशैलं' यदि गुरुत्वमधोगतिकारणं स्यात् । ननु महीयसा महीध्रेणास्याक्रमणं न्याय्यमिति गाथार्थः ।।६६३।।

'अथे'त्यादि । 'अथ' मन्यसे 'तस्य'—लघोर्देवस्य 'तत्' महन्महीध्रोद्धरणं 'वार्य तो' इत्यादि पादत्रयं पठित्वा, अपि तु वीर्यमपि । तथाहि—वीर्याद् गुर्वप्यूर्ध्वं याति तत्स्वाभाव्याच्छैलवत्, लघ्वपि चाधस्तात् तत्स्वाभाव्यात्करताडितबाष्पवद्, तस्मादुक्तवत् ।।६६४।।

'विरिय'मित्यादि । दृष्टान्तोपसंहारः स्पष्टः । तथाहि—'एवं गतिस्थितिपरिणामो गुरुलघुते अतिक्रामति' । तस्मात् सूक्ष्मबादरभेदात् द्विविधमेव द्रव्यमवोधि निश्चयेनेति 'गुरुलघु अगुरुलघुयं चे'ति स्थापितमिति गाथार्थः ।।६६५।।

साम्प्रतमुत्तरगाथासम्बन्धनार्थमाह—'भणिओ' इत्यादि । 'उक्तः क्षेत्रकालयोः शुद्धयारेव परस्परनिबन्धो'"ऽङ्गुलमावलियाणं" इत्यादिना । 'इह तयोरेवायं द्रव्येण सहोच्यत' इति गाथार्थः ।६६६।।

तत्र—

संखेज्ज मणोदव्वे भागं लोगपलियस्स बोद्धव्वो ।
संखिज्ज कम्मदव्वे लोए थोऊणयं पलियं ।।६६७।। नि० ४१ ।।

लोगपलियाण भागं संखइमं मुणइ जो मणोदव्वं ।
संखेज्जे पुण भाए पासइ जो कम्मुणो जोग्गं ।।६६८।।

सयलं लोयं पासं पासइ पल्लोवमं स देसूणं ।
सुद्धाण किमत्थाणं गहणमिहं खेत्तकालाणं ।।६६९।।

कम्मद्दव्वमईओ पेच्छइ दुगमित्तियंति जं भणियं ।
उवरिंपि तओ कमसो साहिज्जा तयणुमाणेणं ।।६७०।।

तेयाकम्मसरीरे तेयादव्वे य भासदव्वे य ।
बोद्धव्वमसंखेज्जा दीवसमुद्दा य कालो य ।।६७१।। नि० ४२।।

एयाइं जओ कम्मयदव्वेहिंतोऽतिथूलयरयाइं ।
तेयाइयाइं तम्हा थोवयरा खेत्तकालऽत्थ ।।६७२।।

---

1..1 तथोर्ध्वं धूमादीनामदभ्राणामपि P.

'संखेज्ज' इत्यादि। 'मणोदव्वे' त्ति मनोद्रव्यविषयेऽवधौ प्रादुर्भूते सति। 'लोगस्स पलिओवमस्स य संखेज्जभागो बोद्धव्वो' प्रमेयत्वेनेति गम्यते। एतदुक्तं भवति—मनोद्रव्याणि साक्षात्कुर्वन् लोकस्य संख्येयभागं पश्यति, पल्योपमस्य च। तद्यथा हस्तशतान्तनाद् वकुलं पश्यन् हस्तशतमिति वकुलोपाधिनाकाशपरिच्छित्तिरिति भावनीयम्। तथा 'कम्मदव्वे' त्ति कार्मणशरीरप्रायोग्यावद्धद्रव्यविषये चावधौ 'संखेज्ज' त्ति संख्येया भागा लोकपल्योपमयोः पृथक् पृथग् वोद्धव्याः। तथा 'लोए'त्ति चतुर्दशरज्ज्वात्मकलोकविषये त्ववधौ कालतः 'स्तोकन्यूनं' देशोनं 'पल्योपमं' प्रमेयत्वेन गम्यत एव। ननु च घोटारूढस्य विस्मृतो घोटः। तथाहि—द्रव्योपनिवन्धाधिकारे किमनयोरेव केवलयोरयमुच्यत इति? उच्यते—कर्मद्रव्यमतिक्रम्यैतावन्तौ क्षेत्रकालौ पश्यतीति ज्ञापनार्थम्। एतद्वृद्धौ च द्रव्यवृद्धेरिति। अत एव च कार्मणद्रव्योपर्यपि ध्रुववर्गणादिद्रव्यपरिणामं पश्यतः क्षेत्रकालवृद्ध्या पल्योपमभरणादिना प्रकारेण परमावधिसम्भवोऽनुमेय इति गाथार्थः ॥६६७॥ निर्युक्तिगाथा ४१॥

'लोग' इत्यादि। 'सयल'मित्यादि। 'कम्मे'त्यादि। गतार्थम्। नवरं 'दुगमेत्तियंति' "लोगं थोवूणगं च पलियं"ति यदुक्तं चरमावयवे तत्रापि द्रव्योपनिवन्धः सामर्थ्यप्रापित इति वाक्यशेषः। यतश्चैवं ततः—'उवरिं पो'-त्यादि ॥६६८-६७०॥

एवं—'तेया' इत्यादि। तेजोविकारस्तैजसम्। कर्मविकारः कार्मणम्। शरीरशब्दः प्रत्येकमभिसम्वध्यते। ततश्च 'तैजसवद्धशरीरविषये'ऽवधौ 'कार्मणवद्धशरीरविषये' चावधौ तथा 'तैजसावद्धद्रव्यविषये भाषाद्रव्यविषये च' सत्यवधौ द्रव्यतः क्षेत्रतः। किमित्यत आह—'असंखेज्जा दीवसमुद्दा बोद्धव्वा' प्रमेयत्वेन। कालो य'त्ति कालश्चासंख्येयो वोद्धव्यः। स च पल्योपमासंख्येयभाग इति नियमः। अत्र च पदचतुष्टयेऽप्यविशेषणासंख्येयत्वेऽभिहितेऽप्यर्थादिदं लभ्यते—लघु वृहद् वृहत्तरं वृहत्तमं च भावनीयम्। एवं क्रमेण सूक्ष्मादिस्वभावत्वाद् वद्धादवद्धस्य सूक्ष्मत्वात् पटतन्तुवदिति गाथार्थः ॥६७१॥

व्याख्या 'एताइ'मित्यादि। 'एताइं' तेयातियाइं चत्तारि वत्थूणि 'जओ कम्मदव्वेहिंतो थूलाणि, तम्ह'त्ति तस्मात् 'अ'त्थे'त्यत्र "थोवं खेत्तं असंखेज्जा दीवसमुद्दा कालो य पल्लोपमअसंखभागो" अत आह—'थोवतरा खेत्तकाला' इति। कर्मद्रव्यविषयेत्ववधावनन्तरातीतमूलगाथायां लोकपल्योपमयोः पृथक् पृथक् संख्येया भागा उक्ताः "संखेज्जकम्मदव्वे"त्ति वचनादिति गाथार्थः ॥६७२॥

ननु च जघन्यावधिप्रमेयमभिदधता गुरुलघ्वगुरुलघु वा पश्यति, न सर्वमेवेत्युक्तम्। एवमङ्गुलासंख्येयादिविमध्यमावधेरपि नियत एव विषयस्तत्रस्थानां

---

1 P adds चेत्. 2...2 P drops it. 3 ए P.

केषांचिदेव दर्शनादित्युक्तम् । तत्किमुत्कृष्टावधेरप्येतावन्मात्रमेव सामर्थ्यमुतान्यद् ? अत्रोच्यते—

एगपएसोगाढं परमोही लहइ कम्मगसरीरं ।
लहइ य अगुरुयलहुयं तेयसरीरे भवपुहुत्तं' ॥६७३॥ नि० ४३॥

एगपएसोगाढं पेच्छइ पेच्छइ य कम्मयतणुंपि ।
अगुरुलहुदव्वाणि य चसद्दओ गुरुलहूइंति ॥६७४॥

तेयसरीरं पासं पासइ सो भवपुहुत्तमेगभवे ।
णेगेसु बहुतरए सरिज्ज न उ पासए सव्वे ॥६७५॥

एगपएसोगाढे भणिए किं कम्मयं पुणो भणियं ।
एगपएसोगाढे दिट्ठे का कम्मए चिंता ॥६७६॥

अगुरुलहुगहणंपि य एगपएसावगाहओ सिद्धं ।
सव्वं वा सिद्धमिओ रूवगयं लहइ सव्वंति ॥६७७॥

एगोगाढे भणिए संसओ सेसए जहाऽऽरंभे ।
सण्हयरं विच्छंतो थूलयरं न मुणइ घडाई ॥६७८॥

जह वा मणोविओ नत्थि दंसणं सेसएऽतिथूलेवि ।
एगोगाढे गहिए तह सेसे संसओ होज्जा ॥६७९॥

इय नाणविसयवइचित्तसंभवे संसयावणोयत्थं ।
भणिएऽवेगोगाढे केइ विसेसे पयंसंति ॥६८०॥

एगोगाढग्गहणेऽणुगादओ कम्मयंति जा सव्वं ।
तदुवरि अगुरुलहूइं चसद्दओ गुरुलहूइंपि ॥६८१॥

एवं वा सव्वाइं सहियाइं तेसिमेव नियमत्थं ।
सव्वं रूवगयंतिय एयं चिय नावरमओऽत्थि ॥६८२॥

**'एग'** इत्यादि । एकोऽसहायः, प्रकृष्टो देशोंऽश इति प्रदेशः, एकश्चासौ प्रदेशश्चेत्येकप्रदेशः, अवगाढं ति मग्नम्—'एकप्रदेशावगाढं' । किं तत् ? परमाणुद्व्यणुकादीति गम्यते । 'परमावधिः' उत्कृष्टावधिः । 'लभते' पश्यति पश्यकाभेदोपचारात् । **'कम्मगसरीरं'**ति कार्मणशरीरं च परमावधि'र्लभते' इति देशतोऽनुवृत्तिः । एवमुक्ते सत्याह—नेह परमाणुद्व्यणुकादि गम्यतेऽश्रुतत्वात् । ततश्च **'एगपदेसोगाढं परमोधी लभति'** । किमत आह—**'कम्मगसरीर'**मित्येवमस्तु साक्षाच्छ्रुतेः । उच्यते—न, एकप्रदेशावगाढमिति विशेषणात् । तस्यैकप्रदेशावगाहित्वायोगात् । तथा **'लभति य अगुरुलघुयं'** ति लभते चागुरुलघुद्रव्यम् 'एकप्रदेशावगाढं परमावधिरि'ति देशत एवानुवृत्तिः । उपलक्षणं चेदं जात्यपेक्षत्वादेकवचनस्य । ततश्च सर्वाण्यमूनि सर्वप्रदेशावगाढानि लभते । 'च'शब्दाद् गुरुलघूनि च । तथा **'तेयसरीरे'** त्ति तैजसशरीरविषयेऽवधाविह-जन्मसम्बन्धिनि कालतो 'भवपृथक्त्व'मतीतानागतं पश्यति । क्षेत्रतस्त्वसंख्ये-

यान् द्वीपसमुद्रानित्युक्तमनन्तरगाथायां, "तेयसरीरे वोद्धव्वा असंखेयदीवसमुद्दा" इति वचनात्। एतच्चात्रोक्तं भवति—तैजसशरीरोपलब्धौ यः पल्योपमासंख्येयभाग उक्तोऽभूत् स एतावानिति नियमितं भवतीति गाथार्थः ॥६७३॥ निर्युक्तिगाथा ॥४३॥

भाष्यम्—'एग' इत्यादि। गतार्थम् ॥६७४॥

'तेय' इत्यादि। गतार्थैव। नवरं 'एगभवे' त्ति। किमुक्तं भवति? विवक्षितभवोत्पन्नेऽवधावतीतानागत'भवपृथक्त्वं पश्यती'ति भावनीयम्। अनेकभवानङ्गीकृत्याह—'अनेकेषु भवेषूत्पन्ने पूर्वावधौ सति 'वहुतरान्' भवान् 'स्मरेत्' मनसा आलम्वेत। संभवत्येतत् न तु पृथक्त्वाभ्यन्तरानिव पश्येत्। यत आह—'ण तु पासती सव्वे'त्ति न तु पश्यति साक्षात्करोति[1] सर्वानेव, अपि तु कांश्चिदवविज्ञानविशिष्टान्। इतरांस्तु स्मरति इतरैर्दृष्टत्वात् प्राग्दृष्टमन्यत्र स्थितवत् ।०००००००००० जी००००००००००। एतदुक्तं भवति—पृथक्त्वमेव पश्यत्येतत् साक्षात्करणविषयत्वात् तैजसशरीरोपलम्भस्येति गाथार्थः ॥६७५॥

आहैवमपि—'एग' इत्यादि ॥ प्रथमेनैवावयवे'नैकप्रदेशावगाढे उक्ते किमिति भूयः कार्मणग्रहणं'? तथाहि—'एकप्रदेशावगाढत्वेन' सूक्ष्मे 'दृष्टे कार्मणे'ऽसंख्येयप्रदेशावगाहित्वेन परिस्थूरे 'का[2] चिन्ता' कथेति गाथार्थः ॥६७६॥

अपि च—'अगुरु' इत्यादि। 'अगुरुलघुग्रहणमपि' तृतीयपादोक्तं प्रथमपादोक्तेन चरितार्थत्वान्न कर्त्तव्यम्। 'च'शब्दार्थं चाशंक्याह 'सर्वं चैतत्सिद्धं लब्धमतोऽन्यस्माद्वचनाद् यद्वक्ष्यति—'रूपगतं' मूर्त्तजातं, 'लभते' पश्यति, 'सर्वं' कृत्स्नं, परमावधिरिति गम्यत इति। तस्मात् एकप्रदेशावगाढमात्रकमेवास्तु, मा वा भूदिति गाथार्थः ॥६७७॥

अत्रोच्यते—'एगो' इत्यादि। 'एगपदेसोगाढेऽवि' सुहुमे 'भणिते सेसते' असंखेज्जपदेसोगाढे 'संसयो' होति। दृष्टान्तमाह—'यथा, येन प्रकारेण'ऽऽरम्भे' श्लक्ष्णतरं' द्रव्यं 'पश्य'न्नपि, तेजोभाषान्तर इति गम्यते, 'स्थूरतरान्न मनुते घटादीन्', तेषामयोग्यत्वादिति कस्मान्न कार्मणचिन्तेति गाथार्थः ॥६७८॥

द्वितीयमाह—'जह वे'त्यादि। 'यथा वा मनःपर्यायज्ञानिनो नास्ति दर्शनं' साक्षादुपलम्भनं, 'शेषके' मनस्त्वपरिणतद्रव्यव्यतिरिक्ते वाह्ये मन्ये मन्दरमकराकरादा'वतिस्थूरेऽपि' तथा'ऽत्रापि' 'शेषे संशयो मा भूदतो द्वितीयावयवस्याप्यभिधानमिति गाथार्थः ॥६७८॥

'इय' इत्यादि। एव'मवधेविषयवैचित्र्यसम्भवे' सति 'भणिते'ऽप्याद्येऽवयवे 'संशयापोहार्थं' द्वितीयादिपदोपन्यासेन 'कांश्चिद्विशेषान् प्रदर्शयन्ति' 'भद्रबाहुस्वामिमिश्रा इति गाथार्थः ॥६८०॥

एवमिदं परिहृत्य प्रकारान्तरमाह—'एगो' इत्यादि। अथ'वैकप्रदेशावगाढग्रहणेन सर्वमणुकादि' गृह्यते 'आकार्मणात्'। ततश्च "एगपदेसोगाढं परमोही

1 P has कारेइ for करोति. 2 P drops का.
3...3 Lacking in P.

लभति जाव कम्मसरीरं"ति स्यात् । 'तदुपरि' कर्मोपरि, अगुरुलघुध्रुवादि' लभते "कम्मोवरिं धुवेयर" इति वचनात् । 'चशब्दाद् गुरुलघून्यप्यौ'दारिकादीनि लभते ॥६८१॥

**एवं वे**'त्यादि । एवं वा सर्वाणि' पुद्‌गलद्रव्याणि 'गृहीतानि' लभते । वक्ष्यमाणं तर्हि पुनरुक्तमित्यत आह—'तेषामेवा'खिलांनां परमाण्वादिवर्गणानां नियमार्थम् । वक्ष्यति—'सर्वं रूपगतमिति चैतावदेव, अतः परं न तद्विषयोऽस्ती'ति गाथार्थः ॥६८२॥

एवं तावत्परमावधिं द्रव्यतोऽभिधायाधुना क्षेत्रकालाभ्यामाह—

**परमोहि असंखेज्जा लोगमित्ता समा असंखिज्जा ।**
**रूवगयं लहइ सव्वं खेत्तोवमियं अगणिजीवा ॥६८३॥ नि० ४४॥**

**खित्तमसंखेज्जाइं लोगसमाइं समाणकालं च ।**
**दव्वं सव्वं रूवं पासइ तेसिं च पज्जाए ॥६८४॥**

**खेत्तोवमाणमुत्तं जमगणिजीवेहिं किं पुणो भणियं ।**
**तं चिय संखाईयाइं लोगमित्ताइं निद्दिट्ठं ॥६८५॥**

**अहवा दव्वं भणियं इह रूवगयंति खेत्तकालदुगं ।**
**रूवाणुगयं पेच्छइ नय तं चिय तं जओऽमुत्तं ॥६८६॥**

**परमोहीनाणविओ केवलमंतोमुहुत्तमित्तेण ।**
**मणुयक्खओवसमिओ भणिओ तिरियाण वोच्छामि ॥६८७॥**

**'परमोही**'त्यादि । "परमोही असंखेज्जाइं अलोगे लोगप्पमाणाइं खंडाइं खेत्ततो लहति" । 'समा'स्तूत्सर्प्पिण्यवसर्प्पिणी'रसंख्येयाः पश्यति' । द्रव्यतः 'सर्वं रूपगतम्' । भावतस्तु वक्ष्यमाणान् पर्यायानिति, अथ यदिदमुक्तम्—'**असंखेज्जा लोयमेत्त**'त्ति, अस्य नियमार्थमाह—उपमानमुपमितमिति भावे निष्ठाप्रत्ययः । क्षेत्रस्योपमितं 'क्षेत्रोपमितम्' । एतदुक्तं भवति—उत्कृष्टावधि'क्षेत्रोपमानमग्निजीवा' इति प्रागुक्ता एवेति मूलगाथौघार्थः ॥६८३॥ निर्युक्तिगाथा ४४॥

अथ साक्षेपपरिहारं विस्तरार्थमाह भाष्यकारः—'**खेत्त**'मित्यादि । उक्तार्था ॥६८४॥

अथ मूलगाथापश्चादर्धस्याप्रस्तुतत्वमवबुध्यमान आह—'**खेत्तोवमाण**'-मित्यादि । जमगणिजीवेहिं खेत्तोवमाणं तमुक्तम् । क्व ? अनन्तरगाथायां "एगपदेसोगाढ"मित्यस्यामार्थ्येन न्यायेन । अतः किं पुनरभिहितमधिकृतगाथा-पश्चादर्धं इति भावनीयम् । ततश्चाद्यमेवार्द्धमस्तु । तन्न, प्रतिविहितत्वात् । अथ भाष्यं परिहारमाह—'**तं चिय**' । "अगणिजीवखेत्तोवमाणसंखातीता'इं अलोए लोयप्पमाणमेत्ताइं खंडाइं निद्दिट्ठं' निर्युक्तिकृता पश्चादर्धं कुर्वतेति गाथार्थः ॥६८५॥

1 P has दीया for तीता.

परिहारान्तरमाह—'अहवे'त्यादि। 'अथवा', "एगपदेसोगाढ"मित्यनया गाथया पौर्वापर्येण 'द्रव्य'मेव परमावधे'र्भणितं'। निगमनमप्येतदेवेति भावनीयम्। ततः किमित्यत आह—'इह'त्ति इहास्यामधिकृतगाथायां 'खेत्तकालदुगं'ति "परमोही असंखेज्जा लोयमेत्ता समा असंखेज्जा" इत्येतत्, 'रूवगतं' ति "लहई सव्वं"ति मूलगाथावयवः। कोऽस्यार्थ इत्यत प्राह—'रूपानुगतं' रूपोपाधि 'पश्यति खेत्तकालदुगं'ति प्रक्रमः। विपक्षप्रतिषेधमाह—'न तु तदेव' द्रव्यं पश्यति, तस्'यामूर्त्तत्वात्', मूर्त्तिविषयत्वाच्चावधेरिति भावनीयमेतदर्हद्वचनं, मोक्षाङ्गत्वादिति गाथार्थः ॥६८६॥

अस्य च कृतिनोऽन्तर्मुहूर्त्तेन केवलश्रीसम्प्राप्तिरित्यत उच्यते—'**परमोही**'-त्यादि। स्पष्टार्था। नवरमुत्तरार्धेनानन्तरग्रन्थाभिसम्बन्ध इति ॥६८७॥

**आहारतेयलंभो उक्कोसेणं तिरिक्खजाणीसु।**
**गाउय जहण्णमोही नरएसु य जोयणुक्कोसो ॥६८८॥ नि० ४५॥**

**ओरालिय-वेउव्विय-आहारग-तेयगाइं निरएसु।**
**उक्कोसेणं पेच्छइ जाइं च तदंतरालेसु ॥६८९॥**

**भणिओ खओवसमिओ भवपच्चइओ स चरिमपुढवीए।**
**गाउयमुक्कोसेणं पढमाए जोयणं होइ ॥६९०॥**

**चत्तारि गाउयाइं अध्धुट्ठाइं तिगाउयं चेव।**
**अड्ढाइज्जा दोण्णि य दिवड्ढमेगं च नरएसु ॥६९१॥ नि० ४६॥**

**अद्धुट्ठगाउयाइं जहण्णयं अद्धगाउयंताइं।**
**जं गाउयंति भणियं तं पइ उक्कोसयजहण्णं ॥६९२॥**

**सक्कीसाणा पढमं दोच्चं च सणंकुमारमाहिंदा।**
**तच्चं च बंभलंतग सुक्कसहस्सारय चउत्थि ॥६९३॥ नि० ४७॥**

**आणयपाणयकप्पे देवा पासंति पंचमिं पुढविं।**
**तं चेव आरणच्चुय ओहिण्णाणेण पासंति ॥६९४॥ नि० ४८॥**

**छट्ठिं हेट्ठिममज्झिमगेविज्जा सत्तमिं च उवरिल्ला।**
**संभिण्णलोगनालिं पासंति अणुत्तरा देवा ॥६९५॥ नि० ४९॥**

**एएसिमसंखिज्जा तिरियं दीवा य सागरा चेव।**
**बहुययरं उवरिमगा उड्ढं च सकप्पथूभाई ॥६९६॥ नि० ५०॥**

**संखेज्ज जोयणा खलु देवाणं अद्धसागरे ऊणे।**
**तेण परमसंखेज्जा जहण्णयं पण्णवीसं तु ॥६९७॥ नि० ५१॥**

**वेमाणियवज्जाणं सामण्णमिणं तहावि उ विसेसो।**
**उड्ढमहे तिरियम्मि य संठाणवसेण विण्णेओ ॥६९८॥**

**पणवीसजोयणाइं दसवाससहस्सिया ठिई जेसिं ।**
**दुविहोऽवि जोइसाणं संखेज्ज ठिई विसेसेणं ।।६६६।।**

**वेमाणियाणमंगुलभागमसंखं जहण्णओ होइ ।**
**उववाए परभविओ तब्भवजो होइ तो पच्छा ।।७००।।**

**उक्कोसो मणुएसुं मणुस्सतेरिच्छिएसु य जहण्णो ।**
**उक्कोस लोगमेत्तो पडिवाइ परं अपडिवाई ।।७०१।। नि० ५२।।**

'आहारे'त्यादि । आहारकं च तैजसं च आहारकतैजसे तयोर्लाभ 'आहारकतैजसलाभः' । किमुक्तं भवति ? औदारिकवैक्रियाहारकतेजोद्रव्यपरिच्छेदः । स 'तूत्कृष्टेन' प्रकर्षेण 'तिर्यग्योनिषु' । योनियोनिमतामभेदोपचारात् तिर्यग्योनिकविषयो य इत्यर्थः । क[1]स्येति, मत्स्यादीनां योऽवधिरिति भावना । क्षेत्रकालौ त्वेतदनुसारेणास्य प्रमेयतया द्रष्टव्यौ । उक्तं च—"महतोऽप्येकदेशः सम्बद्धावध्युत्पत्तेर्मत्स्यस्ये" ति । उक्ताः क्षयोपशमिकाः[2] । साम्प्रतं भवप्रत्ययाः प्रक्रतथ उच्यन्ते । तत्राल्पत्वान्नारकाणामाह—**'गाउय'**मित्यादि । नरान् कायन्तीति नरकाः । ते च नारकाश्रयाः, आश्रयाश्रयिणोरभेदोपचारात् । तेषु 'नरकेषु च' । एतदुक्तं भवति—नारकाधारो योऽवधिः स 'जघन्यं' स्तोकं 'गव्यूतमे'कं साक्षात्करोति, उत्कृष्टतस्तु 'योजनम्' । इदमौघिकं, सामुदायिकत्वादिति गाथार्थः ।।६८८।। निर्युक्तिगाथा ४५।।

व्याख्या—**'ओरालिये'**त्यादि । 'औदारिकादि'शरीरद्रव्याण्यय'मुत्कृष्टतः पश्यति, तदयोग्यानि चे'ति गाथार्थः ।।६८९।।

एवम्—**'भणिओ'** इत्यादि । भवप्रत्ययः सप्तमपृथिव्यां गव्यूतमुत्कृष्टेन, प्रथमायां तु योजनं' क्षेत्रतः । द्रव्यकालौ त्वेतदनुसारेणेति गाथार्थः ।।५९०।।

साम्प्रतं रत्नप्रभादिषूत्कृष्टेतरमाह—**'चत्तारि'** इत्यादि । यथासंख्यमुत्कृष्टं सप्तस्वपि ।।६९१।। निर्युक्तिगाथा ४६।।

जघन्यमाह—**अद्धुट्ठादीपाइं** । जघन्यमर्धगव्यूतान्तानि सप्तस्वपि यथासंख्यम् । तथा चाभ्यधाय्यार्यश्यामेन—"रयणाप्पभापुढविनेरयियाणं भंते । केवतियं खेत्तं ओहिणा तथा जाणंति पासंति ? गोयमा ! जहन्नेण अद्धुट्ठाइं गाउयाइं, उक्कोसेणं चत्तारि, एवं जाव चरिमाए जहण्णेण अद्धगाउयं, उक्कोसेणं गाउयं ।" ननु च प्राक् सप्तम्यां गव्यूतस्योक्तत्वात् **'अद्धगाउयंताइं'** ति विरुध्यत, इत्यत आह—**'जं गाउयं ति भणितं'** मूलगाथायां 'तद्' गव्यूत'मुत्कृष्टं' योजनं 'प्रति'—अङ्गीकृत्य जघन्यं वर्त्तते, स्वस्थाने तु तदुत्कृष्टमेव । "जहन्नेणं अद्धगाउयं उक्कोसेणं गाउयं"त्यागमादिति गाथार्थः ।।६९२।।

देवनामाह—**'सक्कीसाणे'**त्यादि । **'आणये'**त्यादि । **'छट्ठी'**त्यादि । 'शक्रश्चेशानश्च 'शक्रेशानौ' तदुपलक्षितकल्पद्वयवासिसामानिकदेवा इत्यर्थः ।

---

1 त P.  2 क्यः P.

ते 'प्रथमां' पृथिवीं यावदवधिना 'पश्यन्ति' क्षेत्रत इति क्रिया द्वितीयगाथायामिति । एवमनया भावनया याव'च्चतुर्थीम्' । एवमानतप्राणतौ आरणाच्युतावपि । 'अवधि-ने'ति स्वरूपकथनम् । यदि नाम विशुद्धतरां वितिमिरतरां च, लोकपुरुषग्रीवानु-कारिणो 'ग्रैवेयकाः', ते 'आवस्त्यमध्यमाः षष्ठीं पश्यन्ति, उपरितनाः सप्तमीम्, अनुत्तरविमानपञ्चकवासिनः सम्भिना चासौ लोकनाडी च तां पश्यन्ति । तत्र सम्भिन्ना चतसृष्वपि दिक्षु सपरिकरा कन्याचोलकानुकारिणीत्यर्थः । मध्यादि तु एतदनुसारेण गाथात्रयार्थः ।।६९३-६९५।। निर्युक्तिगाथा ४७-४९।।

'**एतेसि**'मित्यादि । 'एतेषां' शक्रेशानादीना'मसंख्येयास्तिर्यक्'—तिरश्चीनं 'द्वीपाः' जम्बूद्वीपादयः, 'सागराः' लवणादयः, क्षेत्रतोऽवधिपरिच्छेद्या इति गम्यते । तथा'बहुतरं' बृहत्तरमुक्तद्वीपोदधिप्रमाणमुपरिमा''एवोपरिमकाः'—सनत्कुमारादयः पश्यन्ति यावदनुत्तरा 'ऊर्ध्वमास्वकल्पस्तूभात्' । 'आदि'शब्दाद् ध्वजादिपरिग्रह इति गाथार्थः ।।६९६।। निर्युक्तिगाथा ५०।।

तदेवं वैमानिकानामवधिप्रमाणमभिधायावरेषां सामान्येनैवाह—'**संखेज्जे**'-त्यादि । 'संख्येयानि योजनानि' । खलु'शब्दस्यावधारणार्थत्वे सति उभयथा प्रयोगं शब्दयिष्यामः । 'देवानां'—क्रीडावत्प्राणिविशेषाणा'मर्धसागरे'—ऽर्धसागरो-पमे 'न्यूने' खण्डे आयुषि सति संख्येयान्येव योजनानि । तथाऽर्धसागरे न्यून एव सत्यवधिक्षेत्रम् । ततः किमित्याह—'**तेण परं**' सम्पूर्णार्द्धसागरोपमादावायुषि स'त्यसंख्येयानि' योजनान्यवधिक्षेत्रप्रमाणं, देवानामिति वर्त्तते । एतच्च वैमानिक-वर्जानां सामान्यतः । विशेषतस्तूर्ध्वाधस्तिर्यक्संस्थानविशेषाद् ज्ञातव्यम् । तथा जघन्यकं देवानामिति वर्त्तते । 'पञ्चविंशतिरेव', तुशब्दस्यैवकारार्थत्वात् एतच्च दशवर्षसहस्रस्थितीनां भवनपतिव्यन्तराणामवसेयम् । ज्योतिष्काणामनल्पतरस्थिति-त्वात्संख्येययोजनान्येव जघन्यमितरच्चावसेयमेतावज्जीवित्वाद् उक्को० पल्यो० १-१०००००० वर्ष, ज० प० $\frac{1}{8}$ ।।६९७।। निर्युक्तिगाथा ५१।।

अमुमेवार्थं किञ्चिदाह—'**वेमाणिये**'त्यादि । अयमत्र भावः—यया दिश स्तोकः प्रभूतो वा तया संस्थानविशेषाद्वक्ष्यमाणाद् बोद्धव्य इति गाथार्थः ।।६९८।।

'**पण्वि**'त्यादि । 'पंचवीसयोजणाइं' जहन्नं खेत्तप्पमाणं शेषमुक्ता-र्थम् ।।६९९।।

वैमानिकानां जघन्यं नोक्तमित्यत आह—'**वेमाणियाण**'मित्यादि । 'वैमानिकानां पारभविकत्वेन' क्षायोपशमिको'ऽङ्गुलासंख्येयभागमेव स्यादुपपाता-द्यसमये' । 'द्वितीयसमये तु भवप्रत्यय एवे'ति गाथार्थः ।।७००।।

परमावधिस्तु कस्य स्यादित्यत आह—'**उक्कोस**' इत्यादि । 'उत्कृष्टो'-ऽवधिर्द्रव्यादिविषयो 'मनुष्येष्वेव' स्यात्, न त्रये, केवलज्ञानलाभप्रापकत्वात् । तस्य च मनुष्येष्वेव प्राप्तेः । तथा 'जघन्यो मनुष्यतिर्यक्ष्वेव' स्यात्, न द्वये, तद्यान्तरालद्रव्यदर्शनात् । अपि च—'**उक्कोसे**'त्यादि । उक्कोसेणं लोयं दट्ठूणं

पडिवतेज्जा, 'पर'मेकस्मादपि प्रदेशोपलम्भा'दप्रतिपाती'ति । कोऽस्य प्रस्ताव इति चेत् । उच्यते—प्रसङ्गागताभिधानलक्षण इति गाथार्थः ॥७०१॥ निर्युक्तिगाथा ५२॥

एवं खेत्तपरिमाणेत्ति दारं गतम् । संस्थानद्वारमाह—

थिबुगागार जहन्नो बट्टो उक्कोसमायओ किंची ।
अजहण्णमणुक्कोसो य खेत्तओऽणेगसंठाणो ॥७०२॥ नि० ५३॥

पणओ थिबुयागारो तेण जहन्नावही तयागारो ।
इयरो सेढिपरिक्खेवओ सदेहाणुवत्तीए ॥७०३॥

तप्पागारे-पल्लग-पडहग-झल्लरि-मुइंग-पुप्फ-जवे ।
तिरिअमणुएसु ओही नाणाविहसंठिओ भणिओ ॥७०४॥ नि० ५४॥

नेरइयभवणवणयरजोइसकप्पालयाणमोहिस्स ।
गेविज्जणुत्तराण य होंतागिईओ जहासंखं ॥७०५॥

तप्पेण समागारो तप्पागारो स चाययत्तंसो ।
उड्ढायओ य पल्लो उवरिं च स किंचि संखित्तो ॥७०६॥

नच्चायओ समोऽविय पडहो हिट्ठोवरिं पईओ सो ।
चम्मावणद्धविच्छिण्णवलयरूवा य झल्लरिया ॥७०७॥

उड्ढायओ मुइंगो हेट्ठा रुंदो तहोवरिं तणुओ ।
पुप्फसिहावलिरइया चंगेरी पुप्फचंगेरी ॥७०८॥

जवनालउत्ति भणिओ उब्भो सरकंचुओ कुमारीए ।
अह सव्वकालनियओ कायाइक्कोऽवि सेसाणं ॥७०९॥

नाणागारो तिरियमणुएसु मच्छा सयंभूरमणेव्व ।
तत्थ वलयं निसिद्धं तस्सिह पुण तंपि होज्जाति ॥७१०॥

भवणवइवंतराणं उड्ढं बहुगो अहो य सेसाणं ।
नारयजोइसियाणं तिरिअं ओरालिओ चित्तो ॥७११॥

'थिबुगागारे'त्यादि ॥ 'जघन्यो वृत्तस्तिबुकाकारत्वात्, उत्कृष्ट आयतः किञ्चिदि'तरस्तु नाना । 'खेत्तओ'त्ति क्षेत्रवशात् । वक्ष्यति च "तप्पागारे" इत्येवमादिनेति गाथार्थः ॥७०२॥

'पण' इत्यादि । स्पष्टत्वान्न वितन्यते । [1]सामान्यं स्वेतन्न विशेषः[1] । वस्तुस्थितिविवक्षया तु यदि स्यात् स्यात् को दोष इति ॥७०३॥

अथ निर्युक्तिगाथापश्चादर्धमाह निर्युक्तिकार एव 'तप्पागारे' इत्यादि ॥७०४॥ निर्युक्तिगाथा ५४॥

पूर्वार्धे पदानि सप्त किंविषयाणीत्यत आह—'नेरइये[2]'त्यादि । सुगमा ॥७०५॥

1 सामान्यतश्चैतन्न विशेषतः P.  2 P has ईए for इये.

व्याख्या 'तप्पे'त्यादि ॥७०६॥

'णच्चे'त्यादि ॥७०७॥

'उड्ढे'[1]त्यादि ॥७०८॥

'जवे'त्यादि । सुगमम् ॥७०९॥

अथायं सर्वकालमाभवं यावन्नियत एव, शेषणां तु कादाचित्क इति । आह च—"तिरियमणुयाणमोही नाणाविहसंठिओ भणिओ"त्ति । अस्य भाष्यम्—'नाणे'त्यादि सुगमा । नवरमिह तु—अवधाविति द्रष्टव्यम् ॥७१०॥

इह च 'भवणवती'त्यादि । 'भवनव्यन्तराणामयमुपरि, [2]'वहुरवश्च शेषाणां[2]' वहुः, 'नारकज्योतिष्काणां तिरश्चीनं, मनुष्यतिरश्चां तु विचित्र इति गाथार्थः ॥७११॥ द्वारम् ॥

**अणुगामिओ य ओही नेरइयाणं तहेव देवाणं ।**
**अणुगामी अणणुगामी मीसो य मणुस्सतेरिच्छे ॥७१२॥ नि० ५५॥**

**अणुगामिओऽणुगच्छइ गच्छंतं लोयणं जहा पुरिसं ।**
**इयरो य नाणुगच्छइ ठियपईवोव्व गच्छंतं ॥७१३॥**

**उभयसहावो मीसो देसो जस्साणुजाइ नो अन्नो ।**
**कासइ गयस्स गच्छइ एगं उवहयम्मि (म्मइ) जहऽच्छिं ॥७१४॥**

'अणिव'त्यादि । अनुगच्छती'त्यानुगामुक'स्तच्छीलत्वाल्लोचनवत् । 'तु'शब्दस्यावधारणार्थत्वादनुगामुक एवावधिः । केषामित्याह—'नारकाणाम्' । 'तथैवे'त्यानुगामुक एवेत्युक्तं भवति । केषामित्याह—'देवानाम्' । तत एव हेतोस्तद्वत् । तथा'ऽऽनुगामुक' उक्तशब्दार्थः । 'अनानुगामुक' उक्तस्वरूपव्यतिरिक्तत्वात् शृङ्खलाप्रतिवद्धप्रदीपवत् । तथा 'मिश्र'श्च—मिश्रोऽभिधीयते देशान्तिरगतपुरुषैकलोचनोपघातोपमः । एतत् त्रयं केषु भवतीत्याह—'मनुष्यतिर्यक्षु' । कथम् ? देवनारकव्यतिरिक्तानुभावादिति गाथार्थः ॥७१२॥

'अणु' इत्यादि । उभय' इत्यादि गतार्थम् ॥ द्वारम् ॥७१३-७१४॥

अथावस्थितद्वारम् । किमुक्तं भवति ? अवस्थिति'रवस्थानम् । [3]'तदघोघरावारत[3]' उपयोगतो लब्धितश्च चिन्त्यते ।

तत्र—

**खित्तस्स अवट्ठाणं तेत्तीसं सागरा उ कालेणं ।**
**दव्वे भिन्नमुहुत्तो पज्जवलंभे य सत्तट्ठ ॥७१५॥ नि० ५६॥**

**अद्धाएँ अवट्ठाणं छावट्ठी सागरा उ कालेणं ।**
**उक्कोसगं तु एयं एक्को समओ जहन्नेणं ॥७१६॥ नि० ५७॥**

1 ड्ढे P. 2...2 वहुरधो व शेषाणां P. 3...3 तदवधेराधारात्

आहारे उवओगे लद्धीए वा हविज्जऽवत्थाणं ।
आहारो से खित्तं तेत्तीसं सागरा तत्थ ॥७१७॥
विजयाईसूववाए जत्थोगाढो भवक्खओ जाव ।
खेत्तेऽवचिट्ठइ तहिं दव्वेसु य देहसयणेसु ॥७१८॥
दव्वे भिन्नमुहुत्तं तत्थऽण्णत्थ व हविज्ज खेत्तम्मि ।
उवओगो न उ परओ सामत्थाभावओ तस्स ॥७१९॥
दव्वे तत्थेव गुणा संचरओ सत्त वऽट्ठ वा समया ।
अण्णे पुण अट्ठ गुणे भणंति तप्पज्जवे सत्त ॥७२०॥
जह जह सुहुमं वत्थुं तह तह थोवोवओगया होइ ।
दव्व-गुण-पज्जवेसुं तह पत्तेयंपि नायव्वं ॥७२१॥
तत्थऽण्णत्थ य खित्ते दव्वे गुण-पज्जवो-वओगे य ।
चिट्ठइ लद्धी सा पुण नाणावरणक्खवोवसमो ॥७२२॥
सो सागरोवमाइं छावट्ठिं होज्ज साइरेगाइं ।
विजयाइसु दो वारे गयस्स नरजम्मणा समयं ॥७२३॥
सव्वजहण्णो समओ दव्वाइसु होइ सव्वजीवाणं ।
स पुण सुरनारगाणं हविज्ज किह खेत्तकालेसु ॥७२४॥
चरिमसमयम्मि सम्मं पडिवज्जंतस्स जं चिय विभंगं ।
तं होइ ओहिनाणं गयस्स बीयम्मि तं पडइ ॥७२५॥

'खेत्तस्से'त्यादि । 'क्षेत्रस्य' पञ्चानुत्तरविमानलक्षणस्य सम्बन्धि 'अवस्थान'मविचलभावेनासनं, क्षेत्रभवनमित्यभिप्रायः । कियन्तं कालं यावदवधेर्भवतीत्याह—'त्रयस्त्रिंशदेव सागरोपमाणि' भवन्ति 'कालेने'तिकालकाश्रित्य । उपयोगतस्तु कियन्तं कालमित्यत आह—'द्रव्ये'मेर्वादौ विषये 'भिन्नमुहूर्त्तो' मुहूर्त्तान्तर्यावदवधिरविचलित आस्ते इति । तथा 'पर्यायलाभे च' मेर्वादिद्रव्यपर्यायोपलम्भे 'चो'पयोगतएव 'सप्ताष्टौ' वा समयान'वस्थानम् । एतदुक्तं भवति—एकगुणोपलब्धिरेतावन्तं कालं, पुनरन्यत्रावश्यं संक्रम इति । अन्ये त्वाहुः—"द्रव्येऽन्तर्मुहूर्त्तं गुणेष्वष्टौ पर्यायेषु सप्त यथाक्रमं सूक्ष्मत्वादुपयोगोऽप्येवमेवे"ति । गाथार्थः ॥७१५॥ निर्युक्तिगाथा ५६॥

लब्धितः कियन्तं कालमयमास्त इत्यत आह—'अद्धे'त्यादि । 'अद्धाए' कालतो यत्र कुत्रचि'दवस्थान'मवधेर्लब्धिमङ्गीकृत्य कियन्तं कालं यावद् भवतीत्याह—'षट्षष्टिसागरोपमाणि[1]' । 'तु' शब्दान्नरजन्माधिकानि । निगमयन्नाह—'कालेणमुक्कोसयं तु एवं[3]' लब्ध्यवस्थानम् । जघन्यमाह—'एकः समयो जघन्येना'वधेर्लब्ध्यवस्थानम् । कथमिति चेद् वक्ष्यति भाष्यकार इति गाथार्थः ॥७१६॥

1 P adds अवधेः 2 नि P. 3 यं P.

व्याख्या—'आधारे' इत्यादि । 'आधाराद्यङ्गीकृत्यास्यावस्थानं स्यात्' । तत्रा'स्याधारः क्षेत्रं' विजयादि । 'तत्र' कालतोऽवस्थानं 'तेत्तीसं सागरा' इति । एतदेव भावयन्नाह—'विजये'त्यादि । 'विजयादिपूपपाते' सति 'यत्राभवक्षयमवगाढस्तत्र क्षेत्रे'ऽवधि'रवतिष्ठते, द्रव्येषु च देहपर्यङ्क'तूल्यादिष्वित्याधार इति गाथार्थः ।।७१७-७१८।।

उपयोगत आह—'दव्वे' इत्यादि । 'तत्रान्यत्र वा क्षेत्र उपयोगः'—तद्व्यापारो 'भवेद् द्रव्ये' द्रव्यविषये । कियन्तं कालं यावदित्याह—'भिन्नमुहूर्त्तं, न परतः, सामर्थ्याभावात्' ।।७१९।।

तथा 'दव्वे' इत्यादि । 'तत्रैव मेर्वादौ द्रव्ये गुणे' पीतपीत'तरादौ 'सञ्चरतो' व्यापारमनुभवतोऽवधिः । शेषं स्पष्टम् ।।७२०।।

सामान्येन दृष्टान्तमभिधायं पश्चादर्थेन दार्ष्टान्तिकमभिदधदिदमाह 'जहे जहे'त्यादि । एतदुपयोगतः । अथ लब्धित आह—'तत्थे'त्यादि । सुगमा ।।७२१-७२२।।

'सो' इत्यादि । 'सः' तदावरणक्षयोपशमः । शेषं गतार्थम् ।।७२३।।

"एक्को समयो जहण्णेणं" इत्यस्य व्याख्या—'सव्व' इत्यादि । 'सर्वजघन्यो'ऽवधिर्द्रव्यादिषु भव'त्येकं समयम्' । केषामित्याह—'सर्वजीवानां' नारकतिर्यङ्नरामराणामपि, अपि[2]शब्दलोपात् । एवमुक्ते सत्याह—'स पुनः' समयः 'सुरनारकयोर्भवेत् कथं' केन भावनाक्रमेण ? नैवेत्यभिप्रायः । क्व सतीत्याह—'खेत्तकालेसु'त्ति । खेत्तयो सागरोपमा ३३ कालश्रो ६६ एतावत्प्रमाणोऽयं कथमेकं समयं स्यादित्यर्थः । एतदुक्तं भवति—नरतिरश्चोरयं युक्तः प्रतिपातो[3]पयोगतोऽविरुद्धत्वात्, नत्वनयोरिति । उक्तवदिति गाथार्थः ।।७२४।।

उच्यते, नैतदेवं सिद्धान्ताभिप्रायापरिज्ञानात् । तथाहि—'चरिमे'त्यादि । इह सामान्यदेवादेर्भवचरमत्वेन साटसमये यदस्य विभंगं तत्सम्यक्त्वं लभमानस्या'वधिज्ञानं 'भवति । ततः [4]'सयस्स' चुतस्सू (स्सु?) व्वट्टस्स'[4]वा 'से इह वितियसमये भ्रश्यतीति ।।७२५।। द्वारम् ।।

अथ चलद्वारम्—चलतीति चलः । पुरः प्रसर्प्पति तीव्रत्वाद्धीरवीरपुरुषवदिरत्र विपर्यय इत्यत आह—

**वुड्ढी वा हाणी वा चउव्विहा होइ खेत्तकालाणं ।**
**दव्वेसु होइ दुविहा छव्विह पुण पज्जवे होइ ।।७२६।। नि० ५८।।**

**वुड्ढी वा हाणी वाऽणंतासंखिज्जसंखभागाणं ।**
**संखिज्जासंखिज्जाणंतगुणा चेति छब्भेया ।।७२७।।**

**पइसमयमसंखिज्जइभागहियं कोइ संखभागहियं ।**
**अन्नो संखेज्जगुणं खित्तमसंखिज्जगुणमण्णो ।।७२८।।**

---

1 ते P.
2 P drops अपि.
3 P has दित व for तो.
4...4 सयस्स चुतस्स भट्टस्स P.

पेच्छइ विवड्ढमाणं हायंतं वा तहेव कालंपि ।
नाणंतवुड्ढिहाणी पेच्छइ जं दोऽवि नाणंते ॥७२९॥
दव्वमणंतं सहियं अनन्तगुणवड्ढियं च पेच्छेज्जा ।
हायंतं वा भावम्मि छव्विहा वुड्ढिहाणीओ ॥७३०॥
वुड्ढीए चिय वुड्ढी हाणी हाणीए न उ विवज्जासो ।
भागे भागो गुणणे गुणो य दव्वाइसंजोए ॥७३१॥

किह खेत्तअसंखभागाइ संभवे संभवो न दव्वेऽवि ।
किह वा दव्वाणंते पज्जवसंखिज्जभागाइं ॥७३२॥
खेत्ताणुवत्तिणो पोग्गला गुणा पोग्गलाणुवत्ती य ।
सामण्णा विण्णेया न उ ओहिन्नाणविसयम्मि ॥७३३॥

दव्वाइं सखेत्ताओऽणंतगुणा पज्जवा सदव्वाओ ।
निययाहाराहीणा तेसिं वुड्ढी य हाणी य ॥७३४॥
न उ निययाहारवसा अवहिनिबंधो जओ परित्तो सो ।
चित्तो तहण्णहाविय आणागेज्भो य पाएण ॥७३५॥

'वुड्ढी वे'त्यादि । इह क्षेत्रं च कालश्च तौ क्षेत्रकालौ तयोः 'क्षेत्रकालयो'-रवधिविपययोः । 'वृद्धिर्वा'ऽपूर्वापूर्वांशोपलब्धिर्वा, हानिर्वो'पलब्धोपलब्धस्याप्य[2]-वृत्तिर्वा । किमत आह—'चतुर्विधा भवति' चतूरूपैव भवति, प्रथममेवासंख्येय-प्रदेशसमयोपलब्धेः । तद्यथा—"पच्छाणुपुव्वीए पाठो—असंखेज्ज गुण[3]वुड्ढी वा संखेज्जगुणवुड्ढी वा संखेज्जभागवुड्ढी वा असंखेज्जभागवुड्ढी वा ।" एवं हानिरपि । तथा 'द्रव्येपु भवति द्विविधा' द्विविधैवेति शेपं प्रतिषेधः, प्रथममेवा-नन्तद्रव्योपलब्धेः । तद्यथा "पच्छाणुपुव्वीए चेव पढ (ड ?) णा अणंतगुणा-हियं वा[4] अणंतभागब्भहियं वा ।" पर्याये पुनः 'षड्विधा' षड्रूपैव । शेषप्रति-षेधस्तत्प्रथमतयैव समुदायमङ्गीकृत्यानन्तपर्यायोपलब्धेः । तद्यथा पश्चानुपूर्व्या च[5] स्थापना । एवं हानिरपि[6] । तद्यथा—अणंतगुणवुड्ढी वा (१), असंखेज्जगुणवुड्ढी वा (२), संखेज्जगुणवुड्ढी वा (३), संखेज्जभागवुड्ढी वा (४), असंखेज्जभागवुड्ढी वा (५), अणंतभागवुड्ढी वा (६) इत्येप गाथार्थः ॥७२६॥ निर्युक्तिगाथा ५८॥

आह—नात्र भावार्थं विद्मः किं चातुर्विध्यादि ? अत आह भाष्यकारः—'वुड्ढी वे'त्यादि । षट्स्थानक स्थापनया भावितार्था । किमयमुत्क्रम इति चेत् । उच्यते—अस्य व्यापकत्वोपदर्शनार्थमेतदन्तर्गते च चतुर्द्विस्थानके इति दर्शनार्थ-मिति गाथार्थः ॥७२७॥

एवं निरूप्य निर्युक्तिगाथाद्यार्धं व्याचिख्यासुराह—'पयी'त्यादी 'पेच्छती'त्यादि । अस्याक्षरघटना—'कोयि'त्ति 'कश्चिद'वधिज्ञानी 'अनुसमयं' प्रागु-

1 व P.
2 व्या P.
3 व P. Also in the words that follow.
4 P adds हाणी वा.
5 P has पूर्व्येव for र्व्या च.
6 P adds बोद्धव्या.

पलब्धात्पनकोपलक्षितक्षेत्रात् । किमत आह—'**असंखेज्जभागहियं खेत्तं पेच्छति विवड्ढमाणं**' । कुतः ? विशुध्यमानत्वेन तीव्रत्वात् । तद्यथा

एवं '**कोई संखभागब्भहियं खेत्तं पेच्छति विवड्ढमाणं**', तद्यथा

तथा '**अन्नो संखेज्जगुणं खेत्तं पेच्छति विवड्ढमाणं**', तद्यथा

तथा '**अण्णो असंखेज्जगुणं खेत्तं पेच्छति विवड्ढमाणं**', तद्यथा

जम्बूद्वीपमात्रं लोकमात्रं वा । किमस्यायमेव प्रकारोऽन्यो वेत्याह—'**हायंतं वा**' प्रतिसमय मनेनैव प्रकारेण क्षीयमाणं वा, प्रतिलोममिति शेषः । एवं जहा खेत्तं '**तहेव कालंपि पेच्छति विवड्ढमाणं हायंतं वा**' । अस्यैव नियमार्थमाह—'नानंतवृद्धिहानी' अनयोः 'पश्यति' । कुत इत्याह—'यस्माद्द्वावपीमौ नानन्ता' ववधिविषय इति गम्यते ॥७२८-७२९॥

तृतीयं पादं व्याचिख्यासुराह—'**दव्वमणंतं सहियं**' ति । कोऽर्थः ? प्रागुक्तात्पनकद्रव्यराशेः पुनस्त'दनन्तभागवृद्धं' पश्यति कश्चित् । कश्चित्तु तदेवा'नन्तगुणवर्धितं पश्येत्', समस्तलोकमात्रद्रष्टृसंभवात् । एवं '**हायंतं वा**' प्रातिकूल्येनेति गम्यते । चतुर्थपादव्याचिख्यासयाऽऽह—'भावे च षड्विधे वृद्धिहानी' इत्युक्तवद् । इति मूलगाथार्थोऽपि भाष्यकृता व्याख्यात इति ॥७३०॥

अथानयोर्वृद्धिहान्योर्लक्षणमाह '**वुड्ढीए चिय वुड्ढी**'त्यादि । अत्र '**दव्वाइ संजोए**'त्ति कालखेत्तदव्वभावाणं इत्युक्तं भवत्यन्यतरस्य कस्यचित् । किमत आह—'वृद्धौवृद्धिरेवा'न्येषां त्रयाणामुक्तत्वात् "काले चउण्हवुड्ढी" ति वचनात्, नतु कस्यचिद् वृद्धावन्येषां हानिरनुक्तत्वात् । अवस्थानं तु स्यादुक्तत्वात् । "कालो भतितव्वो खेत्तवड्ढीए"त्ति वचनादिति वाक्यार्थः । अथवा वृद्धाविवान्यतमस्येतरेषां वृद्धिर्नतु हानिर्यद्वक्ष्यति '**न उ विवज्जासो**' त्ति वाक्यार्थः । तथा '**हाणी हाणीए**'त्ति कस्यचिद्धानावपरस्यापि हानिरेव, 'न तु विपर्यासो' न तु वृद्धिरसंभवात् । अवस्थानं तु स्यात् । तथा '**भागे भागो**' त्ति एकस्य भागे वर्द्धमाने सत्यपरेषामपि भाग एव वर्द्धते संख्येयासंख्येयानन्तलक्षणस्तथा संख्येयासंख्येयलक्षणश्च, नतु तृतीयेऽपि स्थाने संख्येयलक्षणक्षेत्रकालभागवृद्धावपि द्रव्यस्यानन्तगुणवृद्धिदर्शनात् । अत एव **पूज्यपादैः स्वटीकायां** 'प्रायो'ग्रहणं कृतमित्येवमादि । तथा '**गुणणे गुणो**'त्ति संख्येयगुणवृद्धौ संख्येयगुणवृद्धिरेव, असंख्येयगुणवृद्धावपि सैवेत्यर्थः । स्थापना—

| |
|---|
| असं० गु० वृ० |
| संख० गु० वृ० |
| संख भा० वृ० |
| असं० भा० वृ० |

इति गाथार्थः ॥७३१॥

तत्रैतत्स्यात्—क्षेत्रचतुःस्थानकवद् द्रव्यस्यापि चतुःस्थानकमस्तु, तत्रस्थत्वात्। द्रव्यद्विस्थानकवच्च पर्यायाणामप्येतदेवास्तु तन्निबन्धनत्वात्। आह च—'किह' इत्यादि। 'कथं क्षेत्रस्यासंख्यभागादिसंभवे द्रव्येऽपि न तत्संभवो' येनोच्यते—"दव्वेसु होइ दुविह"त्ति। ननूच्यतां—"दव्वेसु वि होइ चउह'त्ति। 'कथं वा द्रव्यानन्त्ये सति पर्यायाणामसंख्येयभागवृद्ध्यादि'चतुष्टयम्। स्थापना—

| |
|---|
| अनन्त गु० वृ० |
| असं० गु० वृ० |
| संख गु० वृ० |
| सं० भाग वृ० |
| असं० भा० वृ० |
| अनं० भा० वृ० |

अणंत गु० वृ० अणं० भा० वृ० मध्यमभिधीयते, भागगुणद्वयं त्वाद्यचरमं तुल्यमेव येनोच्यते 'छव्विह' त्ति तन्निबन्धनत्वात्तस्या इति गाथार्थः ॥७३२॥

तत्र, यत इह गाथायां विशेषन्यायस्याङ्गीकृतत्वादित्थमुपन्यासस्तथाहि—**'खेत्त'** इत्यादि। 'क्षेत्रानुवर्त्तिनः' क्षेत्र परिसंख्यानवन्तः 'पुद्गलाः'—स्कन्धादयस्तदाधेयत्वात्। तथा 'गुणाश्च' पर्यायाश्च 'पुद्गलानुवर्त्तिन' इति **'सामन्ना विन्नेय'** त्ति सामान्यन्यायमङ्गीकृत्यैवमित्युक्तं भवति। कथं पुनर्नैवमित्याह—'न त्ववधिविषये' एत एवं ॥७३३॥

तत्र स्वक्षेत्रानन्तगुणत्वाद् द्रव्याणां, पुद्गलेभ्यश्च पर्यायाणामित्याह—**'दव्वाइ'**मित्यादि। 'स्वक्षेत्राद्धि द्रव्याण्यनन्तगुणानि, स्वद्रव्यादपि च पर्याया अनन्तगुणाः'। अतोऽवधिविपये न क्षेत्रानुवर्त्तिनः पुद्गला इति द्विस्थानकमेव। न च द्रव्यानुवर्त्तिनः पर्याया इति षट्स्थानकमेवेति। अथ सामान्यन्यायस्य

निगमनमाह—अतो 'निजाधाराधीना तेषां' द्रव्यपर्यायाणां [1]"वृद्धिः का हानिर्वा वृद्धिहानिर्वा[1]"। एतदुक्तं भवति—तस्मात्सामान्यन्यायमङ्गीकृत्य यावती क्षेत्रस्य वृद्धिर्वा हानिर्वा तावत्येव हि द्रव्यस्य तदाधारत्वात्। यावती च द्रव्यस्य तावत्येव पर्यायाणामिति गाथार्थः ।।७३४।।

प्रकृतन्यायनिगमनमाह—'न तु' इत्यादि। 'न तु' निजाधारवशादवधिनिबन्धो यस्मादसौ परीत्तोऽसंख्येयत्वात्। क्षेत्रकालयोरपि च 'चित्रोऽयम्[2]'। तत्रानुपपत्तिश्चोद्या। 'तथा चान्यथा च' प्रवृत्तेराज्ञाग्राह्य त्वाच्च। 'प्रायो'-ग्रहणं यथायोगं युक्त्यभिधानादिति ।।७३५।। द्वारम् ।।

तीव्रमन्दाविति द्वारमाह—

फड्डा य असंखेज्जा संखेज्जा यावि एगजीवस्स।
एगप्फड्डुवओगे नियमा सव्वत्थ उवउत्तो ।।७३६।। नि० ५९।।

फड्डा य आणुगामी अणाणुगामी य मीसया चेव।
पडिवाई अपडिवाई मीसा य मणुस्सतेरिच्छे ।।७३७।। नि० ६०।।

जालंतरत्थदीवप्पहोवमो फड्डगावही होइ।
तिव्वो विमलो मंदो मलीमसो मीसरूवो य ।।७३८।।

उवओगं एगेणवि दिंतो सो फड्डएहिं सव्वेहिं।
उवउज्जइ जुगवं चिय जह समयं दोहिं नयणेहिं ।।७३९।।

कह नोवओगबहुया भण्णइ न विसेसओ न सामण्णो।
तग्गयविसेसविमुहो खंधावारोवओगोव्व ।।७४०।।

अणुगामि-नियय-सुद्धाइं सेयराइं च मीसयाइं च।
एक्केक्कसो विभिन्नाइं फड्डयाइं विचित्ताइं ।।७४१।।

निययाणुगामियाणं को भेओ को व तव्विवक्खाणं।
नियओऽणुजाइ नियमा नियओऽनियओ व अणुगामी ।।७४२।।

चयइच्चिय पडिवाई अणाणुगामी चुओ पुणो होइ।
नरतिरिगहणं पाओ जं तेसु विसोहिसंकेसा ।।७४३।।

गहणमणुगामियाईण किं कयं तिव्वमंदचिंताए।
पायमणुगामि नियया तिव्वा मंदा य जं इयरे ।।७४४।।

अण्णे पडिवायुप्पायदार एवाणुगामियाईणि।
नरतिरियग्गहणेणं अहवा दोसुंपि न विरुद्धं ।।७४५।।

'फड्डाये'त्यादि। 'फड्डानि'—अवधिज्ञानज्योत्स्नानिर्गमस्थानानि जालान्तरस्थप्रदीपोपमत्वात्। तानि 'चैकजीवस्य संख्येयान्यसंख्येयान्यपि च'

1...1 वृद्धिः हानिर्वा वृद्धिर्न हानिर्वा अहनिर्वा वृद्धिः P.

2 P has चित्रेयं for चित्रोऽयम्.

भवन्ति, क्षायोपशमिकविशेषात् । एवं च स्थिते 'एकफड्डकोपयोगे नियमात् सर्वैरुपयुक्तो' लभ्यते, एकोपयोगत्वाल्लोचनवत् । तत्रैतत् स्यात्—प्रक्रमविरोधस्तीव्रमन्दद्वाराभिधाने फड्डकावधिप्ररूपणादिति । तन्न, तीव्रमन्दत्वात् फड्डकानाम् । आह च ग्रन्थकार एव—'**फड्डा ये**'त्यादि । अनुगमनशीलान्'यनुगामुकानि' नियता'नीत्यभिप्रायः । एवमननुगमनशीला'न्यननुगामुकानि' ध्वंसस्वाभाव्ये सत्यपि तत्रैवागतस्य पुनर्भावीनीत्यभिप्रायः । 'मिश्राणि चैवे'त्युभयत्राप्युभयस्वभावानीत्यभिप्रायः । आद्ययोर्विपर्ययमाह—'**पडिवाति अपडिवाति**'त्ति प्रतिपतनशीलानि 'प्रतिपातीनि', तद्देशापेक्षया देशान्तरभावीनि तु भवन्तीत्यर्थः । अप्रतिपतनशीलान्'यप्रतिपातीनि' नियतान्येवेत्यर्थः । 'मिश्राणि' चोभयसामान्यानि चेत्यर्थः । एतानि च 'मनुष्यतिर्यक्षु' भवन्ति । एतेष्वेव विशुद्धिसंक्लेशसद्भावादिति निर्युक्तिगाथाद्वयार्थः ।।७३६-७३७।। निर्युक्तिगाथा ५९-६०।।

'**जालंतरत्थे**'त्यादि । प्रागर्द्धेनास्य स्वरूपम् । कः पुनरयं तीव्रादिरित्याह—'यो विमलः स तीव्र' उच्यते 'मलिनस्तु मन्दः, मिश्रस्तूभयस्वभावः' सदेशत्वादिति गाथार्थः ।।७३८।।

इह च '**उवयोग**'मित्यादि प्रकटार्था[2] ।।७३९।।

अत्राह—'**कह**'मित्यादि । 'कथं नोपयोगप्राचुर्य'मनेकैरुपयुज्यमानस्य स्यात्? उच्यते—एकोपयोगि[3]त्वादित्युक्तत्वात् । एकोपयोगो ह्यात्मा तत्स्वाभाव्याल्लोचनद्वयवदिति । अथवाऽनेकवस्तुविषयोपयोगे ह्येतत् स्यात्, न चायं तद्धर्म्मा । अत आह—'भण्यते' अत्र प्रतिवचनं, 'स[4]' तैरुपयोगो जीवस्य 'न विशेषतो' न भेदेन, किंतु '**सामण्णो**'त्ति सामान्यः साधारणः । कुतः ?—'**तग्गयविसेसविमुहो**' त्ति तद्गतविशेषवैमुख्याल्लोचनद्वयेन 'स्कन्धावारोपयोगवत्' । यथा हि जालगृहान्तर्ज्वलितप्रदीपप्रभानिर्गम एकः, एकत्वादन्तः प्रदीपस्य, एवमत्राप्येकत्वात् परिच्छेत्तुरसावपि तदुपयोग एक एवेति गाथार्थः ।।७४०।।

द्वितीयां मूलगाथां व्याचिख्यासुराह—'**अणुगामी**'त्यादि । 'अणुगामिनियतशुद्धा' इति विकल्पास्त्रयः । 'सेतरा' इति त्रय एव । ततश्च षड्विकल्पाः । '**मीसयाइं च**' त्ति अणुगामिअणणुगामीणि णिययाणि ययाणि सुद्धासुद्धाइं । एवं 'विचित्राणि, एकैकशो विभिन्नत्वात्' । स्थापना—

अनुगामिनियत

| शु० | अशु० | मि० | शु० | ऽमि० | |
|---|---|---|---|---|---|
| ज० | ज० | ज० | ज० | ज० | ज० |
| म० | म० | म० | म० | म० | म० |
| उ० | उ० | उ० | उ० | उ० | उ० |
| इयं शुद्धा द्वितीय व्याख्यास्थापना | | | | | |

मिस याइं व त्ति
अणुगामीणि
अणणुगामीणि
उभयं

1 P adds अनियत. 2 र्थं P. 3 न P. 4 न P.

| |
|---|
| णिययाणि |
| अप्रति० |
| अणियता० |
| प्रति० |
| उभयम् |

| |
|---|
| शुद्धाणि |
| अशुद्धा |
| उभयम् |

| |
|---|
| अणु० ३ |
| ज० म० उ० |
| अणणु० |
| ज । म । उ । |
| उभय |
| ज । म । उ । |

| |
|---|
| णियता |
| ज । म । उ । |
| अनियत |
| ज । म । उ । |
| उभय |
| ज । म । उ । |

यद्वा—'अणुगामिणिययसुद्धा' इति, एत एव सुद्धे'[1]। सेतराइं व' त्ति प्रतिपक्षभूतानि एवाशुद्धे। 'मीसयाइं व'त्ति उभयस्वभावे एव। एवं विचित्राणि, एकैकशो जघन्यादिभेदेन वर्त्तमानत्वादिति। स्थापना। एवमुक्ते सत्याह—'नियये'त्यादि। 'निययाणुगामियाणं' अप्रतिपात्यनुगामित्यर्थः। को भेदः को विशेषः। 'को वा तद्विपक्षयो'रनानुगामिप्रतिपातिनोरित्यर्थः। उच्यते—'नियओ'त्ति यो नियतत्वेनाप्रतिपाती सो'ऽनुयात्येव नियमात्', तत्स्वभावत्वाल्लोचनवत्। अनुगामुकस्तु 'नियतोऽपि' स्यात् तत्स्वभाव्याल्लोचनवत्, 'अनियतोऽपि' स्यात् कियदपि यात्वा विध्वंसगमनादेकलोचनोपघातावदिति गाथार्थः ।।७४१-७४२।।

विपक्षेऽधुनोत्तरमाह—'चयती'त्यादि। 'प्रतिपाती' नामानियतः। स 'नियमात् च्यवत एव' गच्छतः, अन्यत्र तु [2]सकृदप्यवधिज्ञानोत्पत्तेः। 'अनानुगामुकस्तु च्युतः सन् पुनरपि' तत्रैवायातस्य 'भवति'। पश्चादर्द्धं व्याचिख्यासुराह—'नरे'त्यादि। गतार्थम्। चोदक आह—'गहण'मित्यादि। 'तीव्रमन्दद्वारे किमेषां ग्रहः'? उच्यते—एतद्ग्रहण एवानयोः स्वरूपोक्तेः। आह च—'पाय'मित्यादि। स्पष्टम् ।।७४३-७४४।।

'अण्णे' इत्यादि। अथवा'ऽन्ये' सूरयः 'प्रतिपात्युत्पादद्वार एव' वक्ष्यमाणे'ऽनुगामुकादी'न्यवधिज्ञानान्याचक्षते, न पुनरत्र। केनेदं सिद्धम्? अत

---

1 P has विशुद्धानि for सुद्धे. 2 P adds भवत्य.

आह—'नरतिरियग्गहणेणं[1]', तिर्यङ्मानुष्यग्रहणे[2] लिङ्गादित्यर्थः। न चैतदेव प्रमाणं, यत आह—'अथवा द्वयोरपि' द्वारयोस्तेऽनुगामुकादयो 'न विरुद्धा' आर्थेन न्यायेनेति सामर्थ्याद् गम्यते। एतदभिधाने तीव्रमन्दत्वाभिधानादित्येवमाद्युभयत्रोत्प्रेक्ष्य वक्तव्यमिति ॥७४५॥ द्वारम् ॥

अथ प्रतिपातोत्पादद्वारम्—

बाहिरलंभे भज्जो दव्वे खेत्ते य कालभावे य।
उप्पा-पडिवाओऽवि य तदुभयं चेगससयेणं ॥७४६॥ नि० ६१॥

बाहिरओ एगदिसो फड्डोही वाऽहवा असंबद्धो।
दव्वाइसु भयणिज्जा तत्थुप्पायादओ समये ॥७४७॥

उप्पाओ पडिवाओ उभयं वा होज्ज एगसमएणं।
कहमुभयमेगसमये विभागओ तं न सव्वस्स ॥७४८॥

दावानलो व्व कत्थइ लग्गइ विज्झाइ समयमन्नत्तो।
तह कोइ ओहिदेसो संजायइ नासए बिइओ ॥७४९॥

अभिंतरलद्धीए तु तदुभयं नत्थि एगसमएणं।
उप्पापडिवाओऽवि य एगयरो एगसमयेणं ॥७५०॥ नि० ६२॥

अब्भिंतरलद्धी सा जत्थ पइवप्पभव्व सव्वत्तो।
संबद्धमोहिनाणं अब्भंतरओऽवहीनाणी ॥७५१॥

उप्पाओ विगमो वा दीवस्स व तस्स नोभयं समयं।
न भवणनासा समयं वत्थुस्स जमेगधम्मेणं ॥७५२॥

उप्पायव्वयधुवया समयं धम्मंतरेण न विरुद्धा।
जह रिउवक्कंगुलिता सुरनरजीवत्तणाइं वा ॥७५३॥

उप्पज्जइ रिउयाए नासइ वक्कत्तणेण तस्समयं।
न उ तम्मि चेव रिउयानासो वक्कत्तभवणं च ॥७५४॥

लद्धत्तलाभनासो जुज्जइ लाभो य तस्स समएणं।
जइ तम्मि चेव नासो निच्चविणट्ठे कुओ भवणं ॥७५५॥

सव्वुप्पायाभावा तदभावे य विगमो भवे कस्स।
उप्पायवयाभावे काऽवठिइ सव्वहा सुण्णं ॥७५६॥

दव्वाईणं तिण्हं पुव्वं भणिओ परोप्परनिबंधो।
इह दव्वस्स गुणेणं भण्णइ दव्वासिओ जं सो ॥७५७॥

'बाहिरलंभे' इत्यादि। 'बाहिरलंभे' बाह्यावधिप्राप्तौ 'भाज्यः' सेव्यः। क इत्याह—'उत्पादः प्रतिपातस्तदुभयं चैकसमयेन' 'अपिशब्द 'च' शब्दौ पूरणसमुच्चयार्थौ। क्वेत्याह—'द्रव्ये क्षेत्रे काले भावे च'। एतदुक्तं भवति—कदाचि-

1 P adds नरतिर्यग्ग्रहणात्.            2 यात् P.

दस्यैकसमये उत्पाद एव[1] कदाचिद्व्यय एव कदाचित्तूभयं दावदृष्टान्तेन सदेशत्वादिति समुदायार्थः ।।७४६।। निर्युक्तिगाथा ६१।।

लक्षणमाह—'**बाहिरओ**' इत्यादि । '**बाहिरओ**' नाम '**एगओ दिशो**', एकया दिशा प्रतिबद्ध इत्यर्थः । 'फड्डुकावधिर्वाऽसंबद्ध एव', अथवा वलयाकारत्वादसंबद्धः । 'तत्र द्रव्यादौ सेव्या'विकल्पनीया वा 'उत्पादादयः समकं' युगपत् । एतदुक्तं भवति—सदेशोऽयं ततश्चैकायतैकतो दिग्गं[2] यदैव तिरश्चीनं सङ्कोचस्तदैं[3]वाग्रतो विकाशः । एवं प्रायः फड्डुकावधावपि । वलयाकारोऽप्येकया दिशाऽस्य शुषिरपूरणमावर्त्ते, परया तु तद्विधानमेव यदोत्पादविनाशौ । यदात्पाद एव तदा तनु सद् वलयं विसरति, व्यये तु पृथु सत्तनूभवति, विचित्रत्वादिति गाथार्थः ।।७४७।।

एतदेव भावयन्नाह—'**उप्पाओ**' इत्यादि । पूर्वार्द्धं गतार्थम् । एवमुक्ते सत्याह—'**कहमुभयमेगसमये**'त्ति । उत्पादव्ययौ भिन्नकालवे'कसमये युक्तावविरुद्धत्वात् नतूभयमिति । उच्यते—'**विभागतो तन्न सव्वस्स**'त्ति । 'विभागत' एकदेशमङ्गीकृत्य, 'तद्'—उत्पादव्ययोभयमववेरिति प्रकृतं । 'न सर्वस्य' निर्मूलत एव तदस्याभिदध्महे । तथाहि—'**दावानलोवे**'त्यादि । 'यथा दावानलः कुत्रचित्' शुष्ककुशस्तम्बादौ 'लगति' बीजं[4] तस्मिन्नेव च 'समयेऽन्यत्र' भूतृणादौ 'विध्यायाति' सदेशत्वात् । तथा किमित्यत आह –'तह कोइ ओहिदेसो' लगति—वड्ढइ विज्झायइवितिओ नासति'त्ति गाथार्थः ।।७४८-७४९।।

विपर्ययमविकृत्याह—'**अब्भिंतरलद्धीए तु**' इत्यादि । 'अभ्यन्तरावधिप्राप्तौ' । 'तु'विशेषणार्थः । किं ? 'तदुभय'मुत्पादव्ययोभयं 'नास्ति' न विद्यते । 'एकसमयेन' एकस्मिन् समये, अदेशावधित्वेन सर्वात्मप्रदेशावधित्वात्, सम्बद्धावधित्वादित्यर्थः । किं तर्ह्यस्त्यस्यैकसमयेनेत्याह—'उत्पादप्रतिपातावन्यतरावि'ति गाथार्थः ।।७५०।।

लक्षणमाह—'**अब्भितरे**'त्यादि प्रतीतार्था ।।७५१।।

'**उप्पाओ**' इत्यादि । 'तस्ये'त्यभ्यन्तरावधे'रुत्पादः' प्रादुर्भावस्तथा 'विगमो वा' भ्रंशो वा 'समय'त्ति एकै[5]कस्मिन् समये भवेत् । एतदुक्तं भवति—एकस्मिन् समये उत्पाद एव स्याददेशत्वात् प्रदीपस्येव । एवं व्ययोऽपि । अनभिमतप्रतिषेधमाह—'नोभय'मुत्पादव्ययद्वयमस्यैकसमये स्यात् । किं ? कारणमित्याह—'य' त्ति यस्माद् 'वस्तुनो' द्रव्य'स्यैकेन धर्मेणै'केन स्वभावेन 'समकं' हेलयैव 'न भवननाशौ' नोत्पादव्ययौ स्याताम् । नह्यङ्गुलिद्रव्यं येन धर्मेणर्जु भवति तेनैवर्जुत्वेन व्येति, विरोधात् । धर्मान्तरेण त्वेकसमयमपि भवेत् । यतो यस्मिन्नेव समये तत्तथोत्पद्यते, तस्मिन्नेव चान्यथा व्येति, द्रव्यतया त्ववस्थितमेवास्त

1 P adds बुद्धिरेव   2 ग्गे P.   3 दै P.
4 P drops बीजं.   5 P drops कै.

इत्याह—'उप्पाते'त्यादि । पूर्वार्द्धेन दार्ष्टान्तिकः पश्चादर्द्धेन तु दृष्टान्तः । यस्मिन्नेव समये ऋजुत्वोत्पादस्तस्मिन्नेव वक्रत्वनाशोऽङ्गुलिर्द्रव्यतया त्ववस्थितैवेति भावनीयं सर्वत्र ।।७५२-७५३।।

तथा च—'उप्पज्जती'त्यादि । 'उदेत्यकौटिल्येना'ङ्गुलिद्रव्यमिति शेषः । 'नश्यति कौटिल्येनै'कदा तिष्ठति वेति गम्यते । अत्राविरोधः । 'नतु तस्मिन्ने'वा कौटिल्यसमये 'नाशोऽकौटिल्यताया'स्तथा भावि'वक्रत्वभवनं वा', विरोधात् ।।७५४।।

तथा चाह—'लद्ध' इत्यादि । इह वस्तुनो कौटिल्यादेर्लब्धा'त्मलाभस्य सतो नाशो युज्यते, लाभश्च'—स्वस्वभावावाप्तिश्च 'तस्य' कौटिल्यादेः 'समयेन' । ततश्च 'यदि तस्मिन्नेवो'त्पत्तिसमये नाशः प्रतिपादितस्ततो 'नित्यविनष्टे' नित्यमनाविर्भूते 'कुतो भवनं' कुतः स्वात्मलाभप्राप्तिः ? अत एवमेकेन पर्यायेण विनाशोत्पादे ।।७५५।।

किमत आह—'सव्वुप्पाये'त्यादि । सर्वस्या'मूला'दुत्पत्त्यभावस्तदभावे च 'विनाशाभावो[1]', लब्धात्मलाभस्य ध्वंसात्तस्य चाप्राप्तेः । 'तदभावे च स्थित्यभावः', ततश्च 'सर्वाभाव'स्ततोऽप्यायाता'ऽशेषस्य जगतः शून्यते'ति । दार्ष्टान्तिकभावना त्वेवम्—

"उप्पज्जइ वज्झेणं णासइ अब्भितरेण तस्समयं ।
ण उ तंमि चेव अंतो नासो वज्झो[2]हि भवणं वा ।।१।।

[3]तस्मात् णोभयं समयं स्थितम् ।।७५६।।

उत्तरगाथासम्बन्धनार्थमाह—'दव्वातीणमि'त्यादि । सुगमा । नवरं 'पूर्व'मिति "संखेज्जमणोदव्वे" इत्येवमादिना ।।७५७।।

दव्वाओ असंखेज्जे संखेज्जे यावि पज्जवे लहइ ।
दो पज्जवे दुगुणिए लहइ य एगाओ दव्वाओ ।।७५८।। नि० ६३।।

एगं दव्वं पेच्छं खंधमणुं वा स पज्जवे तस्स ।
उक्कोसमसंखिज्जे संखिज्जे पेच्छए कोई ।।७५९।।

दो पज्जवे दुगुणिए सव्वजहण्णेण पेच्छए ते य ।
वण्णाइए य चउरो नाणंते पेच्छई कयाई ।।७६०।।

सागारमणागारा ओहि-विभंगा जहण्णया तुल्ला ।
उवरिमगेवेज्जेसु परेण ओही असंखेज्जो ।।७६१।। नि० ६४।।

सविसेसं सागारं तं नाणं निव्विसेसमणगारं ।
तं दंसणंति ताइं ओहिविभंगाण तुल्लाइं ।।७६२।।

आरब्भ जहण्णाओ उवरिमगेवेज्जगावसाणाणं ।
परओऽवहिनाणं चिय न विभंगमसंखयं तं च ।।७६३।।

---

1...1 विनाशः अभावो भवेत् कस्य P. 2 उज्झा P.
3...3 तम्हा तं णोभयं समयं इति P.

'दव्वाओ' इत्यादि। इहावधिज्ञान्येकस्मात् परमाण्वादे'र्द्रव्यादसंख्येयान् पर्यायान्' नीलनीलतरादीनेकादि गुणकृष्णादीन् वा गुरुलघ्वादीन् वा 'लभते' उत्कृष्टतः। मध्यमः 'संख्येयान्'। जघन्यस्तु 'द्वौ पर्यायौ द्विगुणितौ,' चतुरो वर्णादीनित्यर्थः। इति गाथार्थः ॥७५८॥ निर्युक्तिगाथा ६३॥

'एगं दव्व'मित्यादि। 'दो पज्जवे'त्यादि। सुबोध्यम्। नवरं 'नानन्तान्' प्रतिव्यक्तिकं, न समुदायमङ्गीकृत्य ॥७५९-७६०॥द्वारम्॥

अथ "नाणदंसणविब्भंङ्गे" इति द्वारत्रयमभिधीयते, कस्य कियानवधिरिति। तत्र गाथा—'सागारे'त्यादि। जघन्य एव 'जघन्यकः' सर्वस्तोक इत्यर्थः। तस्मात् 'जघन्यका'दारभ्य 'तुल्यौ' सदृशौ भवतः। सर्वत्रेति शेषः। कावित्याह—'अवधिविभङ्गाववधिश्च विभङ्गश्च तौ' किंविशिष्टौ यावित्याह—'साकारानाकारौ'। एतदुक्तं भवति—सम्यग्दृष्टेरवधिः, स च साकारो भवत्यनाकारश्च। मिथ्यादृष्टेर्विभङ्गोऽसावपि च साकारोऽनाकारश्च। तौ जघन्यादारभ्य सर्वत्र तुल्यौ। किमविशेषेण? नेत्याह—'उपरिमग्रैवेयकेषु'। 'तु'-रपिशब्दार्थः। तेनैतदुक्तं भवति—भवनपतिभ्य[1] आरभ्य उपरितन[2]ग्रैवेयकेष्वप्ययमेव न्यायो यदुत—'सागारमणागारा ओहि विभंगाजहण्ण'तो आरब्भ तुल्ला'। परतस्तु किमित्यत आह—'परतोऽवधि'रेव, तत्र मिथ्यादृष्ट्युपपातासम्भवात्। स चासंख्येय इत्यत आह—स 'चासंख्येयो' योजनापेक्षया। देवानां चायं प्रायो निरूपित इति गाथार्थः ॥७६१॥ निर्युक्तिगाथा ६४॥

'सविसेस'मित्यादि। 'आरब्भे'त्यादि गतार्थे ॥७६२-७६३॥ द्वारम् ॥

साम्प्रतं देशद्वाराभिधानायाह—

नेरइय-देव-तित्थंकरा, य ओहिस्सऽबाहिरा होंति।
पासंति सव्वओ खलु सेसा देसेण पासंति ॥७६४॥ नि० ६५॥

ओहिण्णाणक्खेत्तब्भंतरगा होंति नारयाईया।
सव्वदिसोऽवहिविसओ तेसिं दीवप्पभोवम्मो ॥७६५॥

अब्भितरत्ति भणिए भण्णइ पासंति सव्वओ कीस।
ओयइ जमसंतयदिसो अंतोऽवि ठिओ न सव्वत्तो ॥७६६॥

निययावहिणो अब्भितरत्ति वा संसयावणोयत्थं।
तो सव्वओऽभिहाणं होउ किमब्भितरग्गहणं ॥७६७॥

अब्भितरत्ति तेणं निययावहिणोऽवसेयया भइया।
भवपच्चयाइवयसा सिद्धे कालस्स नियमोऽयं ॥७६८॥

सेसच्चिय देसेणं न उ देसेणेव सेसया किंतु।
देसेण सव्वओवि य पेच्छन्ति नरा तिरिक्खा य ॥७६९॥

1 त P.　　2 P has म for तन.　　3 P adds या.

'नेरइय' इत्यादि। नरकेषु भवा 'नारकाः'। क्रीडाभाजो 'देवाः'। तीर्थकरणशीला'स्तीर्थकराः'। द्वन्द्वश्च समासः। 'च' एवकारार्थत्वादवधारणार्थः। अस्य च व्यवहितं प्रयोगं दर्शयिष्यामः। त एते नारकादयो'ऽवधेरवधिज्ञान'स्याबाह्या भवन्ति'। अवध्युपलब्धस्य क्षेत्रस्यान्तर्वर्त्तन्ते, सर्वतोऽवमासकत्वात् प्रदीपवदित्युक्तं भवति। ततश्चार्थादबाह्यावधय एव भवन्ति, नैषां बाह्यावधिर्भवतीत्यर्थः। तथा 'पश्यन्त्या'लोकयन्ति 'सर्वतः' सर्वासु दिक्षु। 'खलु'शब्दोऽप्येवकारार्थः। स चाप्यवधारण एव सर्वास्वेव[1] दिग्विदिक्ष्विति। तत्रैतत्स्याद्‌एतेऽवधेरबाह्या भवन्तीत्यनेनैव पश्यन्ति सर्वतः खल्विति सिद्धत्वात् द्वितीयपदोपादानं न कर्त्तव्यं गतार्थत्वात्। तन्न, संदेहापनोदार्थत्वात्। तथाहि—वलयाकारावधिमन्तोऽप्यवधिज्ञानोपलब्धक्षेत्रान्तर्भवन्तो न सर्वतः पश्यन्ति दिगन्तरालादर्शनात्। अत उच्यते—पश्यन्ति सर्वत एव। शेषास्तु 'शेषा'स्तिर्यग्नरा 'देशेने'त्येकदेशेन 'पश्यन्ति'। अत्र चेष्टतोऽवधारणविधिः। शेषा एव देशतः पश्यन्ति, न तु शेषा देशत एवेति गाथार्थः। अथवाऽन्यथाव्याख्यायते—ततश्च 'नारकदेवतीर्थकरा अवधेरबाह्या भवन्ती'ति। कोऽर्थः? अवधिज्ञानमन्तोऽमीभवन्ति। अयमर्थः। अत इदानीं संशयः—किमेते देशतः पश्यन्तीत्यत आह—'पश्यन्ति सर्वत एव'। आह—यद्येवं 'पश्यन्ति सर्वत' इत्येतावदेवास्तु। 'अभ्यन्तर'ग्रहणमनर्थकं, संशयोद्भूतिहेतुत्वात्, अस्य च तद्व्यावृत्तिहेतुत्वात्। तन्न, एतद्ग्रहणे सत्य'प्यभ्यन्तर'ग्रहणस्य नियतावधित्वविशेषकत्वादतो नियतावधयोऽमी भवन्ति सर्वतोऽवभासवन्तश्चेति पौर्वापर्यम्। तत्रैतत्स्यात्—नियतावधित्वमप्यमीषामत एव सिद्धं, "भवप्रत्ययो नारक देवानामि"ति वचनात्। तीर्थकृतामपि पारभविकोऽवधिरिति प्रसिद्धेस्ततश्च 'पासंती' त्याद्येवास्त्विति। तन्न, यतः भवप्रत्ययादिवचसा सिद्धे कालस्य नियमोऽयम्। भवक्षयं यावदमी अभ्यन्तरावधयः पश्यन्ति च सर्वत इति पुनरपि पौर्वापर्यमिति गाथार्थः ॥७६४॥ निर्युक्तिगाथा ६५॥

आद्यं व्याख्यानं कुर्वन्नाह भाष्यकार—:'ओहि' इत्यादि। 'अवध्यभ्यन्तरा नारकादयो भवन्ति' यतः[2] 'सव्वे'त्यादि स्पष्टम्। चोदक आह—'अब्भितर' मित्यादि पूर्वार्द्धं स्पष्टम्। सूरिराह—'जं अन्तोवि ठिओ न सव्वतो उय'इ'। कोऽसौ? 'असंततदिशो' वलयाकार एकदिशो वेति भावनेति। गाथाद्वयार्थः ॥७६५-७६६॥

द्वितीयं व्याख्यानं कुर्वन्नाह—'नियते'त्यादि। अथवाऽभ्यन्तरेति कोऽर्थः? नियतावधयो, नियमेनामीषामवधिर्भवतीत्याकूतम्। ते च किं देशतः पश्यन्त्युत नेति। अत आह—'संशयापनोदार्थं' पश्यन्ति सर्वत एवेत्याह। यद्येवं 'ततः सर्वतोऽभिधानमेवास्तु किमनेनेति'। उच्यते—'अब्भितर त्तो'त्यादि। 'तेने'ति। ततस्तर्ह्यभ्यन्तरेति कोऽर्थः? 'नियतावधयो' नियमेनामीषामवधिर्भवतीत्यभिप्रायप्रकटनम्। 'अवशेषा'स्तु तिर्यङ्मनुष्याः 'भजिताः' कदाचिन्नियतावधयः कदाचि-

1 P has स्वपि for स्वेव.　　2 P adds सर्वतः　　3 द P.

त्वनियतावधय इति गाथार्द्धार्थः । भवप्रत्ययादिवचनादेवेदं सिद्धमिति चेत् । अत आह—'भवे'त्यादि । गतार्थम् ॥७६७-७६८॥

चरमावयवं व्याचिख्यासुराह—'सेस च्चिये'त्यादि । गतार्था ॥७६९॥ द्वारम् ॥

अथ क्षेत्रद्वारम्—

संखेज्जमसंखेज्जो पुरिसमबाहाए खेत्ततो 'ओही ।
संबद्धमसंबद्धो लोगमलोगे य संबद्धो ॥७७०॥ नि० ६६॥

ओही पुरिसे कोई संबद्धो जह पभा व दीवम्मि ।
दूरंधयारदीवयदरिसणमिव कोइ विच्छिण्णो ॥७७१॥

संखिज्जमसंखिज्जं देहाओ खित्तमंतरं काउं ।
संखेज्जासंखेज्जं पेच्छइ तदंतरमबाहा ॥७७२॥

संबद्धासंबद्धो नरलोयंतेसु होइ चउभंगो ।
संबद्धो उ अलोए नियमा पुरिसेऽवि संबद्धो ॥७७३॥

तत्र 'संखेज्ज' इत्यादि । तत्र क्षेत्रतोऽवधिर्द्वेधा भवति, 'संबद्धमसंबद्धो'त्ति । किमुक्तं भवति ? इह कश्चिदवधिः, पुरुषे पूर्णः सुखदुःखानामिति पुरुषः, तस्मिन् पुरुषे द्रष्टरि सम्बद्धः प्रतिष्ठितः सन्ततत्वात् प्रदीपप्रभावत् । कश्चिच्चासम्बद्धस्त्रु[1]टितत्वात्, प्रकृष्टतमोव्याकुलप्रदेशव्यवहितप्रदीपप्रभासमुद्योतितक्षेत्रदर्शनवत् । तत्र यस्तावदसंबद्धः स संख्येयोऽसंख्येयो वा । कथं ? 'पुरिसमबाहाए' त्ति अबाधन'मबाधा'ऽपान्तरालमित्यर्थः । पुरुषस्याबाधा 'पुरुषाबाधा' । तया हेतुभूतया सह । अयमभिप्रायः—असम्बद्धोऽवधिः 'क्षेत्रतः संख्येयो वा असंख्येयो वा' योजनापेक्षया । एवं सम्बद्धोऽपि । तदनेन स्वतन्त्रावधिचिन्तनमात्रं कृतम् । इदानीमयमबाधया चिन्त्यते । अत्र चतुर्भंगी—संख्येयाऽबाधा संख्येयोऽवधिः (१), संख्येयाऽबाधाऽसंख्येयोऽवधिः (२), असंख्येयाऽबाधा संख्येयोऽवधिः (३), असंख्येयाऽबाधाऽसंख्येयोऽवधिरिति (४) । सम्बद्धे तु विकल्पाभावः । तथा 'लोगमलोगे य संबद्धो' त्ति लोके चतुर्दशरज्ज्वात्मके पञ्चास्तिकायवति, अलोके च—केवलाकाशास्तिकायात्मके । 'चः' समुच्चये । 'संबद्धः' लग्नः । कथं ? 'लोगे'त्ति पुरुषे संबद्धो लोके च, लोकप्रमाणावधिः । पुरुषे न लोके, देशतोऽभ्यन्तरावधिः । न पुरुषे न लोके शून्यः । न पुरुषे न लोक इति बाह्यावधिः । अलोकसम्बद्धस्त्वात्मसम्बद्ध एवेति गाथार्थः ॥७७०॥ निर्युक्तिगाथा ६६॥

'ओही'त्यादि । 'संखेज्जे'त्यादि । 'संबद्धे'त्यादि ॥७७१-७७३॥ उक्तार्थम् । स्थापना तु पर्यन्ते । द्वारम् ॥

---

1 क P.

| संखे | संखे | संव | संव |
|---|---|---|---|
| अवाधा | अवधि | पुरु | लो |
| । | । | । | । १ |
| । | ऽ | । | ऽ २ |
| ऽ | । | ऽ | । ३ |
| ऽ | ऽ | ऽ | ऽ ४ |

गतिद्वारमधुना—

गइ नेरइयाईया हेट्ठा जह वण्णिया तहेव इहं ।
इड्ढी एसा वण्णिज्जइत्ति तो सेसियाओऽवि ॥७७४॥ नि० ६७॥

जे पडिवज्जंति मइं तेऽवहिनाणंपि समहिआ अण्णे ।
वेयकसायाईया मणपज्जवनाणिणो चेव ॥७७५॥

सम्मा सुरनेरइयाऽणाहारा जे य होंति पज्जत्ता ।
ते च्चिय पुव्वपवण्णा वियलाऽसण्णी य मोत्तूणं ॥७७६॥

आमोसहि विप्पोसहि खेलोसहि जल्लमोसही चेव ।
संभिन्नसोय उजुमइ सव्वोसहि चेव बोद्धव्वो ॥७७७॥ नि० ६८॥

चारण आसीविस केवली य मणनाणिणो य पुव्वधरा ।
अरहंतचक्कवट्टी बलदेवा वासुदेवा य ॥७७८॥ नि० ६९॥

संफरिसणमामोसो मुत्तपुरीसाण विप्पुसो विप्पो ।
अन्ने विडित्ति विट्ठा भासंति य पत्ति पासवणं ॥७७९॥

एए अन्ने य बहू जेसिं सव्वे य सुरभओऽवयवा ।
रोगोवसमसमत्था ते होंति तओसहिप्पत्ता ॥७८०॥

जो सुणइ सव्वओ मुणइ सव्वविसए व सव्वसोएहिं ।
सुणइ बहुए व सद्दे भिन्ने संभिन्नसोओ सो ॥७८१॥

रिजु सामण्णं तम्मत्तगाहिणी रिजुमई मणोनाणं ।
पायं विसेसविमुहं घडमेत्तं चिंतियं मुणए ॥७८२॥

विउलं वत्थुविसेसण माणं तग्गाहिणी मई विउला ।
चिंतियमणुसरइ घडं पसंगओ पज्जवसएहिं ॥७८३॥

अइसयचरणसमत्था जंघाविज्जाहिं चारणा मुणओ ।
जंघाहिं जाइ पढमो नीसं काउं रविकरेऽवि ॥७८४॥

एगुप्पाएण गओ रुयगवरमिओ तओ पडिनियत्तो ।
बीएणं नंदिस्सरमिहं तओ एइ तइएणं ।।७८५।।
पढमेण पंडगवणं बीओप्पाएण नंदणं एइ ।
तइओप्पाएण तओ इह जंघाचारणो हो(ए)इ ।।७८६।।
पढमेण माणुसोत्तरनगं स नन्दिस्सरं तु बिइएण ।
एइ तओ तइएणं कयचेइयवंदणो इहइं ।।७८७।।
पढमेण नन्दणवणे बीओप्पाएण पंडगवणंमि ।
एइ इहं तइएणं जो विज्जाचारणो होइ ।।७८८।।

आसी दाढा तग्गयमहाविसाऽऽसीविसा दुविहभेया ।
ते कम्मजाइभेएण णेगहा चउविहविगप्पा ।।७८९।।
मणनाणिग्गहणेणं विउलमई केवली चउब्भेओ ।
सम्मत्तनाणदंसणचरणेहिं खयप्पसूएहिं ।।७९०।।
ओहिन्नाणावसरे मणपज्जवकेवलाण किं गहणं ।
लद्धिपसंगेण कयं गहणं जह सेसलद्धीणं ।।७९१।।
सोलस रायसहस्सा सव्वबलेणं तु संकलनिबद्धं ।
अंछंति वासुदेवं अगडतडम्मी ठियं संतं ।।७९२।। नि० ७०।।

घेत्तूण संकलं सो वामगहत्थेण अंछमाणाणं ।
भुंजिज्ज विलिंपिज्ज व महुमहणं ते न चाएंति ।।७९३।। नि० ७१।।

दो सोला बत्तीसा सव्वबलेणं तु संकलनिबद्धं ।
अंछंति चक्कवट्टिं अगडतडम्मी ठियं संतं ।।७९४।। नि० ७२।।

घेत्तूण संकलं सो वामगहत्थेण अंछमाणाणं ।
भुंजिज्ज विलिंपिज्ज व चक्कहरं ते न चाएंति ।।७९५।। नि० ३७।।

जं केसवस्स उ बलं तं दुगुणं होइ चक्कवट्टिस्स ।
तत्तो बला बलवगा अपरिमियबला जिणवरिंदा ।।७९६।। नि० ७४।।

खीर-महु-सप्पिसाओवमा उ वयणा तयासवा होंति ।
कोट्ठयधन्नसुनिग्गलसुत्तत्था कोट्ठबुद्धीया ।।७९७।।
जो सुत्तपएण बहुं सुयमणुधावइ पयाणुसारी सो ।
जो अत्थपएणऽत्थं अणुसरई स बीयबुद्धी उ ।।७९८।।
उदय-क्खय-खउवसमो-वसमसमुत्था बहुप्पगाराओ ।
एवं परिणामवसा लद्धीओ होंति जीवाणं ।।७९९।।
केई भणंति वीसं लद्धीओ तं न जुज्जए जम्हा ।
लद्धित्ति जो विसेसो अपरिमिया ते य जीवाणं ।।८००।।

गणहरतेयाहारयपुलायवोमाइगमणलद्धीओ ।
एवं बहुगाओऽविय सुव्वंति न संगिहोयाओ ॥८०१॥
भव्वाभव्वाइविसेसणत्थमहवा तयंपि सवियारं ।
भव्वावि अभव्वा विय जं चक्कहराइओ भणिया ॥८०२॥
पोग्गलपरियट्टद्धं जं नरदेवंतरं सुए भणियं ।
तो सो भव्वो कालो जमयं निव्वाणभावीणं ॥८०३॥
भणिओऽवहिणो विसओ तहावि तस्संगहं पुणो भणइ ।
संखेवरुईण हियं अव्वामोहत्थमिट्ठं च ॥८०४॥
दव्वाइं अंगुलावलिसंखेज्जाईयभागविसयाइं ।
पेच्छइ चउग्गुणाइं जहण्णओ मुत्तिमंताइं ॥८०५॥
उक्कोसं संखाइयलोगपोग्गलसमानिबद्धाइं ।
पइदव्वं संखाइयपज्जायाइं च सव्वाइं ॥८०६॥
ओहिविभागे भणियंपि लद्धिसामण्णओ मणोनाणं ।
विसयाइविभागत्थं भण्णइ नाणक्कमायातं ॥८०७॥

'**गति**'त्यादि । 'गतिर्नारकादिका' । 'आदि'शब्दादिन्द्रियादिपरिग्रहः । 'अधस्ताद् यथा' मतिप्रस्ताव 'उक्तैवामिहाप्य'वधौ । विशेषं वक्ष्यति भाष्यकारः । 'एषा चर्द्धिरतो'ऽनेन प्रस्तावेन 'शेषा अप्या'मर्पोषध्यादय उच्यन्त इति गाथार्थः ॥७७४॥ निर्युक्तिगाथा ६७॥

व्याख्या—'जे' इत्यादि । 'ये मतिज्ञानस्य प्रतिपद्यमानकास्तेऽवधेरपि[1]' । किमविशेषेण ? नेत्याह—'समधिका अन्ये'ऽवधेः प्रतिपद्यमानकाः । तद्यथा 'वेदातीताः' श्रेणिद्वयेऽवधेः प्रतिपद्यमानका भवन्ति । मतेस्तु नोक्ताः, सम्यक्त्वप्राप्तावेतल्लाभात् । एवं सर्वत्र भावना । तथा 'कषायातीता'श्च सूक्ष्मसम्परायादयः । तथा 'मनःपर्यायिज्ञानिनश्चे'ति गाथार्थः ॥७७५॥

तथा '**सम्मा**' इत्यादि । अपरिवडिय 'सम्मद्दिट्ठी[2]णो' मणुया 'नारगसुरेसु उववज्जमाणा अणाहारगदारे' अनाहारकमङ्गीकृत्य पडिवज्जमाणया, मतेः पुनरमी नोक्ताः । तथा 'ये च भवन्त्यपर्याप्तका' अविग्रहोपपातादौ अपर्याप्तकद्वारे शक्तिमङ्गीकृत्य । पूर्वप्रतिपन्नेषु का वार्त्तेत्यत आह—'त एवास्य पूर्वप्रतिपन्ना' ये मतेः । किमविशेषेण ? नेत्याह—'विकलेन्द्रिया[3]संज्ञिनो मुक्त्वा', तेषां तद्विषयत्वादेवेति गाथार्थः ॥७७६॥

[ ऋद्धिवर्णनम् ]

प्रागुक्तसम्बन्धं गाथाद्वयमाह—'**आमोसहो**'त्यादि ॥७७७॥ निर्युक्तिगाथा ६८॥ '**चारणे**'त्यादि ॥७७८ निर्युक्तिगाथा ६९॥

---

1 P has इति for अपि.   2 ट्ठि P.   3 P adds न.

'संफरिसण'मित्यादि भाष्यगाथाः पञ्च प्रतीतार्थाः। नवरं 'यः किल सर्वतः शृणोति स संभिन्न श्रोताः'। यद्वा श्रोतांसीन्द्रियाणि सम्भिन्नान्येकैकशः 'सर्वविषयै'रस्य परस्परतो वेति स 'सम्भिन्नश्रोताः'। 'सम्भिन्नान् वा परस्परतो लक्षणतो विधानतश्च 'सुबहूनपि शब्दान् शृणोति स संभिन्न श्रोते'ति ॥७७९-७८३॥

अथ 'चारण'त्ति पदम्। 'अतिसये'त्यादि। अतिशयो—यथावत् श्रुताभ्यासजनितो विद्यादिलाभः। 'अतिशयेन चरणे' गमने 'समर्थाः' प्रत्यलाः। के च त इत्याह—'मुनयः' साधवो भगवन्तः। ते च द्विविधा भवन्ति। कथमित्याह—'जंघाविज्जाहिं चारण'त्ति जङ्घाचारणा विज्जाचारणा य। प्रथमसामर्थ्योपवर्णनायाह—'जंघाभ्यां याति प्रथमो' जङ्घाचारणः। किं कृत्वेत्याह—'निश्रां कृत्वा'ऽवलम्बनं कृत्वा'रविकरानप्या'दित्यकिरणानपि, मेरुशिखरादाविति गम्यत इति गाथार्थः ॥७८४॥

कथमित्यत आह—'एगु' इत्यादि'[1]। 'अत' एतस्मात्कर्मभूमिस्थानाद् 'एकोत्पादेन' एकक्रमेण 'गतो' याति 'रुचकवरं' द्वीपं, चैतवन्दनार्थमिति गम्यते। 'ततो' रुचकवरात् 'प्रत्यागच्छन् द्वितीयेनो'त्पा'तेन 'नन्दीश्वरद्वीपं' तदाराद्वर्त्तिनमागच्छति। 'ततस्तृतीयेना'वस्कन्देन '[2]इह'त्ति गतो यत[2] आसीदिति गाथार्थः ॥७८५॥

एवं तावत् तिर्यक्सामर्थ्यम्। अथ ऊर्ध्वमाह—'पढमेणे'त्यादि। 'प्रथमेन' क्रमेणामुतः 'पण्डकवनं याति', मेरोः शिखरमित्यर्थः। 'द्वितीयेन नंदनवनं' प्रथमां मेखलामित्यर्थः। 'तृतीयेन त्विहैती'ति गाथार्थः ॥७८६॥

विद्याचारणसामर्थ्यमा'ह—'पढमेणे'त्यादि। अयमपि 'प्रथमेना'वस्कन्देन 'मानुपोत्तरं पर्वतमे'ति। द्वितीयेन 'नन्दीश्वरमे'ति यातीत्यर्थः। तत्परावृत्तः एति 'ततो' णंदीसराओ[4] 'कृतचैत्यवन्दन इह' भरतक्षेत्रादाविति गाथार्थः ॥७८७॥

एतत्तिर्यग्, ऊर्ध्वमथ आह—'पढमेणे'त्यादि। प्रकटार्था[5] ॥७८८॥

'आसीदाढे[6]'त्यादि। 'आस्यो' दं[7]ष्टाः। तासु विषमेषामित'यासीविषाः'। 'ते द्वेधा—कर्मभेदेन जातिभेदेन च'। तत्र जातिभेदेन 'चतुर्विधविकल्पा' वृश्चिकमण्डूकोरगमनुष्यजातयो यथार्थसम्वन्धात्। 'कर्मतस्तु' क्रियातस्तु तपश्चरणादितोऽन्यतो वा गुणतो'ऽनेकविधा'स्तद्यथा तिर्यञ्चो मनुष्या देवाश्चासहस्रारादिति गाथार्थः ॥७८९॥

'मणे'त्यादि। 'मनोज्ञाननिग्रहणाद् विपुलमतिः', प्रागुक्तामासीत्, स्वरूपज्ञापनार्थम्। 'केवली य'त्ति। स च 'चतुर्द्धा'। कैरित्याह—'सम्यक्त्वादिभिः क्षायिकै'रिति गाथार्थः ॥७९०॥

---

1. P adds दि. 2...2 इह एति यतो गतः P. 3 P adds अपि.
4 उ P. 5 P has स्पष्टार्था for प्रकटार्था. 6 P drops दाढे.
7 द P.

एतदप्रस्तुताभिधानं ज्ञानान्तरतया मन्यमान आह 'ओही'त्यादि । स्पष्टा । नवरं 'लद्धी' एते मनःपर्यायकेवले । अत उक्ते, 'प्रसङ्गा'याततत्वाच्चारणादिवत् । "पुव्वधर"त्ति । पूर्वाणि धारयन्तीति पूर्वधराः । "अर्हदा"दयस्तु प्रतीताः । इति निर्युक्तिगाथाद्वयार्थः ।।७९१।।

साम्प्रतमत्रैव वासुदेवादीनां महापुरुषाणां वीर्यान्तरायक्षयोपशमादि[1]भवं सामर्थ्यमुत्कीर्त्यते—'सोलसे'त्यादि गाथाः पञ्च । 'अ[2]च्छन्ति' आकर्षन्ति । 'भुंजेज्ज'त्ति भुञ्जीत । 'विलिम्पेत वा न चाये'त्या'कष्टुम् । ततः सामान्यजनपद-बलाद् 'बलदेवा बलवत्तराः' । 'जिनवरेन्द्रास्त्वनन्तबलाः', समस्तवीर्यान्तरायकर्म-क्षयादिति । शेषं स्पष्टत्वान्नाख्यातम् ।।७९२-७९६।। निर्युक्तिगाथा ७०-७४।।

तदेवमेता लब्धयः किल संक्षेपेणोक्ताः साम्प्रतमेतदधिकारानुवृत्तेर्वि-मध्यमप्रमाणोपदर्शनाय चाह भाष्यकारः—'खीर' इत्यादि । 'जो सुत्ते'-त्यादि ।।७९७-७९८।।

उपसंहरन्नाह—'उदये'त्यादि ।।७९९।।

तदेवमभिधाय केषांतिन्मतमाशिशङ्किपुराह—'केइ' इत्यादि । 'केचन' प्रज्ञाभिमानिनो 'व्याचक्षते' यथा 'विंशतिरेव लब्धयः', नाधिका न्यूना वेति । उक्तं च—

"आमोसही य खेले जल्ले विप्पे य होंति सव्वे य ।
कोट्ठे य वीयवुद्धी पयाणुसारी य संभिन्ने ।।१।।
उजुमति-विउल क्खीरे मधु-अक्खीणे विउव्विचरणे य ।
विज्जाहर-अरहंता चक्की बल-वासु वीसतिमे ।।२।।
भवसिद्धियाणमेता वीसंपि हवंति एत्थ लद्धीओ ।
भवसिद्धियाण महिलाण जत्तिया जाउ तं वोच्छं ।।३।।
जिणबलचक्की-केसव-संभिन्ने जंघचरण पुव्वे त ।
एयाओ इत्थीए भवियाए ण[3] होंति लद्धीओ[4] ।।४।।
उ[5]जुमति-विउलमतीओ सत्त य एयाओ अभवियणराणं ।
पडिसिद्धा लद्धीओ[6] असंभवा तो[7] सयाकालं ।।५।।
अभवियमहिलाण इमाउ चेव ण[8] हवंति तह य अप्पुव्वं ।
खीरासव-महुलद्धी दुगं तु सेसा तु[9] अविरुद्धा ।।६।।"

अतः पूर्वपक्षतः 'केइ[10] भणंति वीसं लद्धीओ'त्ति । भणंतु काऽन्नानुपपत्तिरित्याह—'तन्न, लब्धेरतिशयत्वात्तस्य च जीवेष्वपरिमितत्वादि'ति गाथार्थः ।।८००।।

1 P adds प्र. 2 अं P. 3 न P. 4 उ P.
5 रि P. 6 उ P. 7 उ P. 8 णं P.
9 उ P. 10 ई P.

अपि च यदि सत्यमेव विंशतिर्लब्धयः स्युस्ततोऽन्यासामपि परिगणनं स्यात् । तथा च सति संख्यानियमो प्ला[1]व्येत, गणधरादिलब्धिपरित्यागप्रसङ्गात् । तथा च—'गणधरे'त्यादि स्पष्टा ॥८०१॥

सूरिरेवाह—'भव्वा' इत्यादि । अथ चेत् 'भव्याभव्यादिविशेषणार्थमे'वं लब्धीनां प्ररूपणप्रयासः, एतदुक्तं भवति—एता विंशतिर्भव्यानामेव, शेषास्त्वभव्यानामिति । उच्यते—'तदप्ये'वं प्ररूपणं 'सविचारम्'—अनैकान्तिकम्, अन्यत्रापि समानत्वाद् व्यभिचाराच्च । तथाहि—नैता भव्यानामेव । अपि त्वभव्यानामप्युक्तवत् । कथं चाऽन्यत्रापि समानत्वमित्याह—'यद्' यस्मात् 'चक्रधरादय भव्या एव सन्तोऽभव्या अपि', अभव्यलब्धिष्वपि मध्ये 'भणिताः' पठिताः सूत्रेऽतोऽन्यत्रापि समानम् ॥८०२॥

आह—कथं पुनर्ज्ञायते भव्या एव चक्रधरा इति ? उच्यते 'पोग्गले'त्यादि । 'यद'—यस्मा'न्नरदेवान्तरं श्रुते भणितं' कालतः 'पुद्गलपरावर्त्तस्याप्यर्द्धम्' । "होऊण चक्कवट्टी पुणो वि अह होइ एत्तियद्धाए" त्ति । 'तो' ततो'ऽसौ भव्यो' वर्त्तते । कुत इत्याह—'यत्' यस्मात्'कालोऽयं'—पुद्गलपरावर्त्तार्धप्रमाणः कालश्चा 'निर्वाणभाविनां' भव्यानामित्यर्थः । अभव्यानां त्वन्तरकालो वनस्पतिकाल इति गाथार्थः ॥८०३॥

उपसंहारन्नाह—'भणिओ' इत्यादि । 'उक्तोऽवधेर्विषयः' "ओही खेत्तपरिमाणे" इत्यादि द्वारगाथाद्वयेन । 'तथापि येऽति संक्षेपरुचयः' सत्त्वास्'तद्धिताय तत्संग्रहं भूयोऽपि वच्मि[2] 'भणति च', अर्थात् सूत्रकारः । 'अव्यामोहार्थत्वादिष्टं चै'तच्छिष्यादिहितत्वादिति गाथार्थः ॥८०४॥

'दव्वाइं' इत्यादि । इह ओहिणा[3]णी 'जहण्णओ मुत्तिमंताइं दव्वाइं पेच्छति' क्षेत्रकालाभ्यां तु 'अङ्गुलावलिकासंख्येयभागाभ्यान्तरतः' । भावतो 'चउग्गुणाइं' । "दो पज्जवे दुगुणिए"त्ति वचनात् ॥८०५॥

'उक्कोस'मित्यादि भावितार्था । तदनेन यदुक्तं "तं समासओ चउव्विहं पण्णत्तं"ति तदाख्यातमिति । अवधिज्ञानार्थस्तत्परिसमाप्तः[4] ॥८०६॥

[मनःपर्यायज्ञानम्]

'ओहि' गाहा । 'मनःपर्यायज्ञानमिदानीम्' । त'च्चावधेर्विभागे लब्धिसामान्यतो(तयो ?)पदिष्टमपी'ह 'विषय'स्वाम्या'दि'विशेषोपदर्शनाय 'ज्ञान'पञ्चक'क्रमायातमुच्यते' ॥८०७॥

**मणपज्जवनाणं पुण जणमणपरिचिंतियत्थपागडणं ।**
**माणुसखेत्तनिबद्धं गुणपच्चइयं चरित्तवओ ॥८०८॥ नि० ७५॥**

---

1 पा P. 2 क्ति P. 3 वधा P. 4 प्तेः P.

पुणसद्दो उ विसेसे रूविनिबंधाइतुल्लभावेऽवि ।
इदमोहिन्नाणाश्रो सामिविसेसाइणा भिन्नं ।।८०९।।
तं संजयस्स सव्वप्पमायरहियस्स विविहरिद्धिमश्रो ।
समयक्खेत्तब्भितर सण्णिमणोगयपरिण्णाणं ।।८१०।।
मुणइ मणोदव्वाइं नरलोए सो मणिज्जमाणाइं ।
काले भूयभविस्से पलियासंखिज्जभागम्मि ।।८११।।
दव्वमणोपज्जाए जाणइ पासइ य तग्गएऽणंते ।
तेणावभासिए उण जाणइ बज्झेऽणुमाणेणं ।।८१२।।
सो य किर अचक्खुद्दंसणेण पासइ जहा सुयन्नाणी ।
जुत्तं सुए परोक्खे पच्चक्खे न उ मणोनाणे ।।८१३।।
जइ जुज्जए परोक्खे पच्चक्खे नणु विसेसश्रो घडइ ।
नाणं जइ पच्चक्खं न दंसणं तस्स को दोसो ।।८१४।।
श्रन्नेऽवहिदंसणश्रो वयंति न य तस्स तं सुए भणियं ।
न य मणपज्जवदंसणमन्नं च चउप्पयाराश्रो ।।८१५।।
अहवा मणपज्जवदंसणस्स मयमोहिदंसणं सण्णा ।
विब्भंगदंसणस्स व नणु भणियमिदं सुयाईयं ।।८१६।।
जेण मणोनाणविश्रो दो तिण्णि व दंसणाइं भणियाइं ।
जइ श्रोहिदंसणं होज्ज होज्ज नियमेण तो तिण्णि ।।८१७।।
अन्ने उ मणोनाणी जाणइ पासइ य जोऽवहिसमग्गो ।
इयरो य जाणइ च्चिय संभवमेत्तं सुएऽभिहियं ।।८१८।।
अन्ने जं सागारं तो तं नाणं न दंसणं तम्मि ।
जम्हा पुण पच्चक्खं पेच्छइ तो तेण तन्नाणी ।।८१९।।
भण्णइ पण्णवणाए मणपज्जवनाणपासणा भणिया ।
तो एव पासए सो संदेहो हेउणा केण ।।८२०।

'मण' इत्यादि । 'मन:पर्यायज्ञानं'—प्राग्निरूपितशब्दार्थम् । 'पुन:' शब्दो विशेषणार्थ: । इदं हि रूपिद्रव्यनिबन्धनक्षायोपशमिकप्रत्यक्षादिसामान्येऽपि सत्यवधिज्ञानात् स्वाम्यादिभेदेन विशिष्टमिति[1] स्वरूपमस्याह—'जनमन:परिचिन्तितार्थप्रकटनम्' । 'मानुषक्षेत्रम्'—अर्धतृतीयद्वीपसमुद्रपरिमाणं; त'न्नि-वद्धम्' । 'गुणप्रत्यय'मसाधारणक्षान्त्यादिगुणप्रभवम् । इदं च 'चारित्रवत' एव स्यात् । एतदुक्तं भवति—श्रामपौष्याादिऋद्धिप्राप्तस्यैवेति समुदायार्थ: । 'पुण' इत्यादि । 'त'मित्यादि व्याख्यातार्थम् ।।८०८-८१०।।

यदुक्तं—"तं समासओ चउव्विहमि"त्येतदाह—'मुणती'त्यादि । 'मन्यमानान्ययं जानीते' योग्यानि 'काले' त्रिविधेऽपि । कियत्प्रमाणे ? 'पल्योपमासंख्येयभागेऽतीतादौ' । पर्यायत आह—'दव्वमणो' इत्यादि । द्रव्यात्मकं मनो द्रव्यमन-

1 P adds श्रर्थभेदेतेति.

स्तस्य पर्याया 'द्रव्यमनःपर्याया'स्तान् 'जानाति' विशेषभूयिष्ठपरिच्छेदतः साक्षात्करोति स्पष्टावभासित्वात्, करतलामलकवत्। तथा 'पश्यति च'। [1]किंविशिष्टा[1] नित्याह—'तद्गतान्' द्रव्यमनोऽस्तित्वपर्यायसम्बद्धानित्यर्थः। कियत इत्याह—'अनन्तान्'। अन्यानपि भावान् किं साक्षात्करोति? नेत्याह—'तेन पुन'र्द्रव्यमनसा'ऽवभासितान् वाह्यान्' मन्दरमकराकरादीन् 'जानात्यनुमानेन', न साक्षात्। अमूर्त्तत्त्वादपि वाह्यस्येति गाथार्थः ॥८११-८१२॥

आह—अन्यत्र प्रतिपादितं "जाणति ण पासति"। अतः किमुक्तं—'जाणति पासति य'? इत्यत आह—'सो य किरे'त्यादि। 'स च किल' मनःपर्यायज्ञानी 'अचक्षुर्दर्शनेन'—शेषेन्द्रियोपलब्धिरूपावग्रहादिमतिव्यापारेण तान् 'पश्यति'। क इवेत्याह—'यथा' येन प्रकारेण 'श्रुतज्ञानी' अचक्षुर्दर्शनेन पश्यतीत्युक्तं विकल्पत इति भावः। एवं परिहृते सत्याह—'युक्तं' घटमानकं 'श्रुते' ज्ञान'स्वभावे मेर्वादावचक्षुर्दर्शनेन दर्शनमिति प्रक्रमः। किमिति? 'परोक्षत्वात्त'स्य। 'न तु' नैव 'मनःपर्यायज्ञाने' ज्ञात'स्वभाव एव युक्तमचक्षुर्दर्शनेनावग्रहादिरूपमतिव्यापारेण तद्दर्शनं, तस्य 'प्रत्यक्षत्वादि'ति गाथार्थः ॥८१३॥

उच्यते—'जइ जुज्जए' इत्यादि। 'यदि परोक्षे' श्रुते 'युज्यते'ऽचक्षुदर्शनेन दर्शनं 'तन्ननु प्रत्यक्षे'स्मिन् 'विशेषतः' सुतरां 'घटते'ऽवग्रहादिलक्षणमतिव्यापाराचक्षुदर्शनेन दर्शनम्। तथाहि—'ज्ञान' मनःपर्यायज्ञानं 'यदि प्रत्यक्षं न दर्शनम्'-चक्षुदर्शनं तत'स्तस्य' मनःपर्यायविदः 'को दोषः'? नैव दोषः। तस्यान्यविषयत्वात्। अवधिज्ञानिनश्चक्षुदर्शनाचक्षुर्दर्शनवत्। अत एव "जाणइ पासइ" यदुक्तमिति गाथार्थः। अन्ये पुनरस्य पश्यत्तामेवं समर्थयन्तीत्याह—'अण्णे' इत्यादि। 'अन्ये त्वाहुः—असौ अवधिदर्शनेन' पश्यतीति ब्रुवतां को दोष इत्यत आह—'न च' नैव 'तस्य' मनःपर्यायविद'स्तद'वधिदर्शनं 'सूत्रे प्रतिपादितम्'। 'न य अण्णं च' त्ति। 'न च अन्यच्चतुष्प्रकाराद्' दर्शनादधिकं 'मनःपर्यायदर्शन'मस्ति, "चक्षुरचक्षुरवधिकेवलदर्शनमि"ति सूत्रश्रुतेरिति गाथार्थः ॥८१४-८१५॥

'अहवे'त्यादि ॥ 'अथ चेन्मनःपर्यायदर्शनस्यावधिदर्शनमिति संज्ञा मता' तस्यां सूत्रश्रुताविति। कस्येवेत्यत आह—'विभंगदंसणस्स व' यथा विभङ्गदर्शनस्यावधिदर्शनमिति संज्ञा। सिद्धश्च दृष्टान्तः। उच्यते—'भणितं नन्विदं' त्वया 'श्रुतातिक्रान्तं' किं वाङ्मात्रेण? नेत्याह—'जेणे'त्यादि। 'येन मनोज्ञानविदो' भगवत्यामासीविषोद्देशके 'द्वे दर्शने प्रतिपादिते' चक्षुरचक्षुर्दर्शने, त्रिज्ञानित्वाद्, 'त्रीणि वा' चतुर्ज्ञानित्वे सति। ततश्च 'यद्यवधिदर्शनं स्या'न्मनःपर्यायदर्शनं सूत्रश्रुतौ 'ततः स्यान्नियमेन त्रीणी'त्यतस्त्रयमेवावक्ष्यदिति गाथार्थः ॥८१६-८१७॥

'अन्ने' इत्यादि। 'अन्ये तु' मन्यन्ते—अयं 'जानाति पश्यति चे'ति। क इत्यत आह—यो'ऽवधिज्ञानवानपि'। 'इतरस्तु जानात्येव' केवलं त्रिज्ञानी। अतः सूत्रे 'सम्भवमात्रं भणितं' नन्द्यादौ "जाणति पासती" ति गाथार्थः ॥८१८॥

1...1 सामान्येन, क्व स्थिता P. 2 त P. 3 न P.

'अन्ने' इत्यादि । 'अपरे'ऽभिदधति, 'यद्'—यस्मा'त्तन्म'नःपर्यायज्ञानं 'साकारं' सविशेषं 'तो' ततस्'तज्ज्ञानमु'च्यते, तेन[1] जानात्येव । 'न तत्र दर्शनम्' । 'यस्मात्पुन'स्तानेव स्कन्धान् 'प्रत्यक्षं पश्यति' साक्षात्करोति, 'तो' तत'स्तेन' प्रत्यक्षद्रष्टृत्वेन, 'तज्ज्ञानी' भण्यते । क्षमाश्रमणटीका त्वियम्—"अन्ये त्वाहुः साकारोपयोगान्तःपातित्वान्न तद् दर्शनं, दृश्यते चानेन प्रत्यक्षत्वादवधिवदिति । एतदपि—न दर्शनं, दृश्यते चानेन—विरुद्धमुभयधर्मान्वयाभावाद्वा न किञ्चिदिति ।" गाथार्थः ॥८१९॥

उच्यते—'भणती'त्यादि कण्ठ्या ॥८२०॥

सत्पदप्ररूपणादि तु स्वाम्यनुसारेणावधेरिवानुसर्त्तव्यमिति ॥ समाप्तं मनःपर्यायज्ञानम् ॥

[केवलज्ञानम्]

अथ केवलमुच्यते—

अह सव्वदव्वपरिणामभावविन्नत्तिकारणमणंतं ।
सासयमप्पडिवाई एगविहं केवलन्नाणं ॥८२१॥ नि० ७६॥

मणपज्जवनाणाओ केवलमुद्देससुद्धिलाभेहिं ।
पुव्वमणंतरमभिहियमहसद्दोऽयं तयत्थम्मि ॥८२२॥

सव्वद्दव्वाण पओगवीससामीससा जहाजोग्गं ।
परिणामा पज्जाया जम्मविणासादओ सव्वे ॥८२३॥

तेसिं भावो सत्ता सलक्खणं वा विसेसओ तस्स ।
नाणं विण्णत्ती तीए कारणं केवलण्णाणं ॥८२४॥

किं वहुणा ! सव्वं सव्वओ सया सव्वभावओ नेयं ।
सव्वावरणाईयं केवलमेगं पयासेई ॥८२५॥

पज्जायओ अणंतं सासयमिदं च सदोवओगाओ ।
अव्वयओऽपडिवाई एगविहं सव्वसुद्धीए ॥८२६॥

केवलनाणेणऽत्थे नाउं जे तत्थ पन्नवणजोग्गे ।
ते भासइ तित्थयरो वइजोग सुयं हवइ सेसं ॥८२७॥ नि० ७७॥

नाऊण केवलेणं भासइ न सुएण जं सुयाईओ ।
पण्णवणिज्जे भासइ नाणभिलप्पे सुयाईए ॥८२८॥

तत्थवि जोग्गे भासइ नाजोग्गे गाहयाणुवित्तीए ।
भणिए व जम्मि सेसं सयमूहइ भणइ तम्मत्तं ॥८२९॥

वइजोगो तं न सुयं खओवसमियं सुअं जओ न तओ ।
विन्नाणं से खइयं सद्दो उण दव्वसुयमित्तं ॥८३०॥

---

1 P adds च.

सेसं छउमत्थाणं विन्नाणं जं सुयाणुसारेणं ।
तं भावसुयं भण्णइ खओवसमिओवओगाओ ॥८३१॥

भण्णंतं वा न सुयं सेसं कालं सुयं सुणेंताणं ।
तं चेव सुयं भण्णइ कारणकज्जोवयारेण ॥८३२॥

अहवा वइजोगसुयं सेसं सेसंति जं गुणब्भूयं ।
भावसुयकारणाओ जमप्पहाणं तओ सेसं ॥८३३॥

वइजोगसुयं तेसिंति केइ तेसिंति भासमाणाणं ।
अहवा सुयकारणओ वइजोगसुयं सुणेंताणं ॥८३४॥

केवलनाणं नन्दी मंगलमिति चेह परिसमत्ताइं ।
अहुणा स मंगलत्थो भण्णइ पगओऽणुओगत्ति ॥८३५॥

'अथे'त्यादि । 'अथे'त्यानन्तर्ये[1] वक्ष्यमाणोपपत्तिभ्यः । शेषं स्पष्टम् । गाथाः षट् यावदिति शेषः ॥८२१॥ निर्युक्तिगाथा ७६॥८२२-८२६॥

इह तीर्थकृत् समुत्पन्नकेवलज्ञानः सद्धर्म्मदेशनां करोतीति ध्वनिर्द्रव्यश्रुतम् । स च भावश्रुताविनाभावीति तत्सम्भवेऽनिष्टापत्तिरिति मा भूदव्युत्पन्नधियां मतिमोहोऽत उच्यते—'केवले'त्यादि । स्पष्टा[2] । नवरं 'वइजोग'त्ति तस्यासौ वाग्योग उच्यते । 'शेषं' छद्मस्थानां 'श्रुतं भवति' श्रुतानुसारप्रभवत्वात् ॥८२७॥

शेषं भाष्यकृदाह—'नाऊणे'त्यादि । 'केवलेनैव ज्ञात्वा भाषते, नास्मद्विधवच्छ्रुतेन, तदतीतत्वात्' । 'पन्नवणजोग्गा(ग्गे)' प्रज्ञापनीया'स्तान् भाषते, नेतरान्, वाग्गोचरातिक्रान्तत्वात् ॥८२८॥

'तत्थवी'त्यादि सुगमा ॥८२९॥

'वइ' इत्यादि । तस्यासौ ध्वनि'र्वाग्योगमात्रं, न तु श्रुतं, श्रुतस्य क्षायोपशमिकत्वात्, न चासौ' क्षयोपशमस्तस्यास्ति । एतदुक्तं भवति - क्षायिकं तस्य विज्ञानं, शब्दस्तु द्रव्यमात्रम् ॥८३०॥

"सुतं'(ति) सेसं" ति व्याचिख्यासुराह—'सेस'मित्यादि । सुगमा ॥८३१॥

अहवा "सुतं भवति सेसं" कालमित्यध्याहारः । तथा चाह—'भण्णंतं वे'त्यादि । इह भगवता 'भण्यमानं न श्रुतं, शेषं तु कालं श्रुतम्' । तच्च 'सुणेंताणं' गणहराणमित्यर्थः । अथवा 'तं चेव' सद्दमेत्तं 'सुतं भन्नति' । कथम् ? वाग्योग एव श्रुतं "वाग्योगश्रुत"मितिविग्रहः । कुत इत्याह—'कारणे कार्योपचाराद्' वृष्टौ तन्दुलोपचारवत् ॥८३२॥

"अहवे'त्यादि । 'वइजोगसुयं सेसं'ति कोऽर्थ इत्याह—'सेसंति जं गुणब्भूयं' । कुत एतदेवमित्याह—'भावे'त्यादि । पच्छद्धं कंठं ॥८३३॥

1 P has यर्थो for र्ये. 2 P adds र्था. 1 P adds भवइ.

अथवा—'वइ' इत्यादि । 'केति' भणंति । 'वतिजोगसुतं तेसिं' । 'तेसिं'ति कोऽर्थ इत्यत आह—'भासमाणाणं' तीर्थकराणाम् । ननु "तित्थगर" इत्येकवचनाभिधानादेवं वचनभेददोषः । तन्न "अच्छंदा जेण भुंजंति, न से चाइत्ति वुच्चइ"त्ति न्यायसिद्धत्वात् । 'अहवा वइजोगसुतं' ति वाग्योग एव श्रुतम् । केषां ? 'शृण्वतां श्रुतकारणत्वादि'ति गाथार्थः । तदेवं तत्त्वादिभिर्निरूप्य गत्यादिभिरिदं निरूप्यते—तत्र गतौ सिद्धमनुष्ययोः केवलमस्ति, इन्द्रियेष्वतीन्द्रियस्य, एवं त्रसकायाकाययोः, सयोगायोगयोः, अवेदकस्य, अकषायस्य, शुक्ललेश्यालेश्ययोः, सम्यग्दृष्टेः, केवलज्ञानिनः, केवलदर्शनिनः, [1]संयतनोअसंयतयोः, साकारानाकारोपयोगयोः, आहारकानाहारकयोः, भाषकाभाषकयोः, परीत्तनोपरीत्तयोः, पर्याप्तकनोपर्याप्तकयोः, बादरनोबादरयोः, नोसंज्ञिनः, भव्यनोभव्ययोः, चरमाचरमयोः, द्रव्यप्रमाणं प्रतिपद्यमानानामुत्कृष्टतोऽष्टशतम् । पूर्वकेवलिनोऽनन्ताः । क्षेत्रं जघन्यतो लोकस्यासंख्येयभागः, उत्कृष्टतो लोकः । स्पर्शनमप्येवमेव । कालतः साद्यपर्यवसितं, नास्यान्तरमस्ति । भागाल्पबहुत्वे प्राग्वत् ॥८३४॥

## [समुदायार्थद्वारम्]

अथैतावत्कालादारब्धव्याख्यानस्य फलमाह—'केवल'मित्यादि । 'केवलज्ञानं समाप्तम्' । तत्समाप्तौ 'नन्दी' । तत्समाप्तावपि 'मंगलं' समाप्तमिति । अथ समुदायार्थद्वारमभिधित्सुराह—'अधुणे'त्यादि । 'अधुना' साम्प्रतं 'सप्रकृतः' प्रस्तुतो'ऽनुयोगोऽभिधीयते' । किंविशिष्ट इत्याह—'मङ्गलार्थः' मङ्ग्यते हितमनेनेति मङ्गलं तस्यार्थः, मङ्गलसाध्य इत्यर्थः ॥८३५॥

## [अनुयोगशब्दार्थः]

साम्प्रतं स इति सामान्येनोक्तत्वदाचार्य एवं प्रश्नं कारयन्नाह—

**सो मइनाणाईणं कयरस्स सुयस्स जं न सेसाइं ।**
**होंति पराहीणाइं न य परबोहे समत्थाइं ॥८३६॥**
**पाएण पराहीणं दीवोव्व परप्पबोहयं जं च ।**
**सुयनाणं तेण परप्पबोहणत्थं तदणुओगो ॥८३७॥**
**सोऽहिगओ च्चिय आवस्सयस्स कयरस्स किंत्थ चिंताए ।**
**तं चिय सुयंति साहइ सुयाणुयोगाभिहाणेण ॥८३८॥**

**'सो'** इत्यादि । 'सो'ऽनुयोगः 'ज्ञानपञ्चकमध्ये कस्य' उच्यते । 'श्रुतस्य', तस्यैव गुर्वायत्तत्वात् । परप्रत्यायकत्वाच्च ॥८३६॥

तथाहि—**'पाएण'**त्यादि । 'प्रायो'ग्रहणं प्रत्येकबुद्धादेः स्वयमपि भावात् । येन कारणेनैवं तेन 'तदनुयोग' आरम्यते । किमर्थम् ? 'परप्रवोधार्थम्' । तथाहि—

1 P adds संयतनो.

सर्व एव शास्त्रारम्भः परप्रबोधायैवारभ्यते, न पुनराहोपुरुषिकया जनरञ्जनार्थं वा । यशः ख्यातिलाभनिरपेक्षत्वान्मुमुक्षूणामिति गाथार्थः ॥८३७॥

एवमुक्ते सत्याह—'सोऽधी'त्यादि । 'सः' अनुयोगो'ऽधिकृत एवावश्यकस्य', "कयप्पवयणप्पणामो" इत्यादिना । अतः 'कतरस्स'त्ति किमत्रानया चिन्तया' येनोच्यते—"सो मतिनाणादीणं कतरस्स"त्ति ? उच्यते । इह 'सुताणुयोगाभिहाणेण' सुत्तस्सत्ति उत्तरेण 'तदा'वश्यकं 'श्रुतमेव' नत्वन्यत् किञ्चित् क्रिया'दीत्येतत् साधयति' कथयति । को दोषः ? तस्मात् प्रतिष्ठितमिदं कतरस्स सुतस्सत्ति गाथार्थः ॥८३८॥

आह—यद्येवमनुयोग इति कः शब्दार्थ इत्यत आह—

अणुजोयणमणुओगो सुयस्स नियएण जमभिहेएणं ।
वावारो वा जोगो जो अणुरूवोऽणुकूलो वा ॥८३९॥

अहवा जमत्थओ थोवपच्छभावेहिं सुयमणुं तस्स ।
अभिहेए वावारो जोगो तेणं व संबंधो ॥८४०॥

'अणु' इत्यादि । 'अनुयोजनमनुयोगः' । किमुक्तं भवतीत्याह—'सुतस्स नियमेण जमभिधेयेणं' संबंधणं । 'वावारो वा योगो'त्ति । 'वा' इत्यथवा । 'योगो' योजनं 'वावारो'त्ति जमुक्तं भवति, ततश्च योग एवानुयोगोऽनुशब्दलोपात् । पुनरपि किमुक्तं भवतीत्याह—'योऽनुरूपोऽनुकूलो वा' । सूत्रस्यार्थेन सह योगो व्यापारः सोऽनुयोग इति गाथार्थः ॥८३९॥

'अहवे'त्यादि । 'अथवा यत्' यस्मा'दर्थतः':—अर्थतः सकाशात् 'स्तोकपश्चाद्भावाभ्यां सूत्रं अणु' । ततः किमित्यत आह—'तस्या'णोः सूत्र'स्याभिधेयो' व्यापारो योगो'ऽनुयोगः । 'तेन वा'ऽणुना 'योगो' यः सोऽणुयोग इति गाथार्थः ॥८४०॥

[आवश्यकानुयोगः]

ततः आवस्सयस्स अणुयोगोत्ति स्थितम् अत्राह—

आवस्सयस्स जइ सो तत्थंगाईण अट्ठ पुच्छाओ ।
तं होइ सयुक्खंधो अज्झयणाइं च न उ सेसा ॥८४१॥

नणु नंदीवक्खाणे भणियमणंगं इहं कओ संका ।
भण्णइ अकए संका तस्सानियमं च दाएइ ॥८४२॥

नाणाभिहाणमेत्तं मंगलमिट्ठं न तीए वक्खाणं ।
इहमट्ठाणे जुज्जइ जं सा वीसुं सुयक्खंधो ॥८४३॥

इह साणुग्गहमुइयं न उ नियमोऽयमहवाऽपवादोऽयं ।
दाइज्जइ कहणाए कयाइ पुरिसादवेक्खाए ॥८४४॥

---

1 ये P.

'आव' इत्यादि 'यद्यसावावश्यकस्य', तच्च श्रुतविशेषः। 'तत्राङ्गादीनामष्टौ पृच्छाः'। "आवस्सयं णं किं अंगं अंगाइं सुतक्खंधो सुतक्खंधा अज्झयणं अज्झयणाइं उद्देसो उद्देसा" ? उत्तरमाह—'तं' आवस्सयं '**सुतक्खंधो अज्झयणाइं च सेसपडिसेहो**' त्ति गाथार्थः ।।८४१।।

अपर आह—'**नणु**' इत्यादि। 'नन्वि'त्यसूयायां। '**नन्दी**' ज्ञानपञ्चकस्वरूपाभिधायी ग्रन्थः। 'तद्व्याख्यान इदं भणितमनङ्गम'ङ्गानङ्गाधिकारे। 'इह कुतः शङ्का' येनाष्टौ प्रश्ना प्रयुज्यन्त इति। 'भण्यते, अकृते' आदौ नन्दीव्याख्याने 'शङ्का' सन्देहो जायते। अपि च पृच्छयन् गुरु'स्तस्या'दौ नन्दीव्याख्यान'स्यानियमं दर्शयती'ति गाथार्थ ।।८४२।।

आह—मङ्गलार्थमवश्यमेव नन्दीव्याख्यानात् कथमनियमप्रदर्शनमिति, '**नाणा**' इत्यादि। इहादौ 'मङ्गलमिष्टम्'। किं ? 'ज्ञानाभिधानमात्रम्'। अनभिमतप्रतिषेधमाह—'न तस्या व्याख्यानम् अस्थानत्वा'दुत्सर्गेणेत्यभिप्रायः। तथाहि—पथि गच्छन्नध्वगो दधि दृष्ट्वा मङ्गलमिति गृह्णाति, नतु भक्षयत्यपि। किमित्याह—'यदसौ' नन्दी 'पृथक्श्रुतस्कन्ध' इति गाथार्थः ।।८४३।।

इह पीठे किमिति प्रपञ्चत उक्ते ति चेत्। उच्यते। 'इहे'त्यादि। 'इहा'-वश्यकारम्भे। 'सानुग्रहम'नुग्रहार्थम्। 'उदितमु'क्तं ज्ञानपञ्चकव्याख्यानं प्रपञ्चतः। 'न तु नियमोऽयं' तद्व्याख्याने। अतो[1]ऽभिधानमात्रस्यैव नियमो, मङ्गलार्थत्वात्। अथवेदमन्यत् परिहारान्तरम्—'अपवादोऽयमि'ह नन्दीकथनेन कथ्यते। कथमित्याह—'कदाचित् पुरुषाद्यपेक्षयाऽन्यारम्भेऽन्यदप्युत्क्रमेणाभिधीयते' समस्तदव्युयोगवदित्यतोऽष्टौ पृच्छा इति गाथार्थः ।।८४४।।

अत्र च—

**आवस्सयसुयक्खंधो नामं सत्थस्स तस्स जे भेया।**
**ताइं अज्झयणाइं नासो आवस्सयाईणं ।।८४५।।**

**कज्जो पिहप्पिहाणं जहत्थमजहत्थमत्थसुण्णं ति।**
**नामे चेव परिच्छा गज्झं जइ होहिइ जहत्थं ।।८४६।।**

**नामाईओ नासो चउव्विहो मंगलस्स व स नेओ।**
**विण्णेओ य विसेसो सुत्तगओ किंचि वुच्छामि ।।८४७।।**

**आगमओ दव्वावासयं तमावासयं पयं जस्स।**
**सिक्खियमिच्चाइ तयं तयणुवउत्तो निगदमाणो ।।८४८।।**

**सिक्खियमंतं नीयं हिययम्मि ठियं जियं दुयं एइ।**
**संखियवण्णाइ मियं परिजियमेन्तुक्कमेणंपि ।।८४९।।**

---

1 P has अपि तु for अतः

जह सिक्खियं सनामं तह तंपि तहा ठियाइ नामसमं ।
गुरुभणियघोससरिसं गहियमुदत्तादओ ते य ।।८५०।।

नवि हीणक्खरमहियक्खरं च वोच्चत्थरयणमालव्व ।
वाइद्धक्खरमेयं वच्चासियवण्णविण्णासं ।।८५१।।

न खलियमुवलहलंपिव अमिलियमसरूवधण्णमेलोव्व ।
वोच्चत्थगंथमहवा अमिलियपयवक्कविच्छेयं ।।८५२।।

न य विविहसत्थपल्लवविमिस्समट्ठाणछिन्नगहियं वा ।
विच्चामेलिय कोलियपायसमिव भेरिकंथ व्व ।।८५३।।

मत्ताइनिययमाणं पडिपुण्णं छंदसाऽहवऽत्थेणं ।
नाकंखाइसदोसं पुण्णमुदत्ताइघोसेहिं ।।८५४।।

कंठोट्ठविप्पमुक्कं नाव्वत्तं बालमूयभणियं व ।
गुरुवायणोवयातं न चोरियं पोत्थियाओ वा ।।८५५।।

आगमओऽणुवउत्तो वत्ता दव्वंति सिद्धमावासं ।
किं सिक्खियाइसुयगुणविसेसणे फलमिहऽब्भहियं ।।८५६।।

जह सव्वदोसरहियंपि निगदओ सुत्तमणुवउत्तस्स ।
दव्वसुयं दव्वावासयं च तह सव्वकिरियाओ ।।८५७।।

उवउत्तस्स उ खलियाइयंपि सुद्धस्स भावओ सुत्तं ।
साहइ तह किरियाओ सव्वाओ निज्जरफलाओ ।।८५८।।

अहिए कुणालकविणो हीणे विज्जाहराइ दिट्ठंता ।
बालाउरातिभोयणभेसज्जविवज्जआ उभए ।।८५९।।

चंदगुत्तपपुत्तो उ बिंदुसारस्स नत्तुओ ।
असोगसिरिणो पुत्तो अन्धो जायइ कागणिं ।।८६०।।

जो जहा वट्टए कालो तं तहा सेव वानरा ।
मा वंजुल परिब्भट्ठो वानरा पडणं सर ।।८६१।।

विज्जाहर रायगिहे उप्पय पडणं च हीणदोसेण ।
कहणोसरणागमणं पयाणुसारिस्स दाणं च ।।८६२।।

तित्तकडुभेसजाइं मा णं पीलेज्ज ऊणए देइ ।
पउणइ न तेहिं अहियेहिं मरइ बालो तहाहारे ।।८६३।।

अत्थस्स विसंवाओ पयभेआओ तओ चरणभेओ ।
तत्तो मोक्खाभावो मोक्खाभावेऽफला दिक्खा ।।८६४।।

नोआगमओ जाणयभव्वसरीराइरित्तमावासं ।
लोइयलोगुत्तरियं कुप्पावयणं जहा सुत्ते ।।८६५।।

लोउत्तरे अभिक्खणमासेवालोयओ उदाहरणं ।
स रयणदाहगवाणियनाएण जईहुवालद्धो ।।८६६।।
आगमओ भावावासयं तदत्थोवओगपरिणामो ।
नोआगमओ भावे परिणामो जाण किरियासु ।।८६७।।
लोइयलोउत्तरियं कुप्पावयणं च तं समासेणं ।
लोउत्तरं पसत्थं सत्थे तेणाहिगारोऽयं ।।८६८।।

'आवस्सए'त्यादि । 'कज्जो' इत्यादि । 'शास्त्रनाम आवश्यकश्रुतस्कन्धस्तद्भेदाश्चाध्ययनानि' । "तम्हा आवस्सयं निक्खिविस्मामि" इत्येवमादि । आह च--'न्यासो'निक्षेपः । 'आवश्यकादीनां पृथक् पृथक् कार्यः' । किं कारणम् ? यतो नाम त्रिविधं भवति 'यथार्थाऽयथार्थशून्यताभेदात्' । यथार्थ शिखी । अयथार्थ पलाशः । डित्थादिस्त्वर्थशून्यम् । अतो 'नाम्न्येवा'स्यास्माभिः 'परीक्षा' कर्त्तव्या । ततश्च 'ग्राह्यं यदि यथार्थं स्यात्' । तत्रैव समुदायार्थपरिसमाप्तेर्विवेचितकारितत्वाद् भगवदर्हच्छासनप्रतिपन्नानामिति गाथाद्वया[1]र्थः ।।८४५-८४६।।

अथ भेदतत्त्वपर्यायैरभिदधदावश्यकनिक्षेपं तावदाह--'नामादी'त्यादि । आवश्यकस्य हि 'चतुर्विधो नामादिन्यासः' । 'स च मङ्गलस्येव' । तद्यथा नामावश्यकमित्येवमादि । 'विज्ञेयश्च विशेषोऽस्य सौत्रो'ऽनुयोगद्वारेषूक्तः । तथा च 'किञ्चिद्वि'शेषं 'वक्ष्यामि', अनुग्रहप्रवृत्तत्वादिति गाथार्थः ।।८४७।।

[द्रव्यावश्यकविवरणम्]

तत्र नामस्थापने क्षुण्णार्थे । द्रव्यावश्यकं द्वेधा—आगमनोआगमभेदात् । तत्र 'आगमतो' इत्यादि । आगमतो द्रव्यावश्यकं कतमत् उच्यते । "जस्स णं आवस्सएत्ति पदं सिक्खितं ठितं जित"मित्येवमादि "जाव णो अणुप्पेहाए" । तथा चाह भाष्यकारः—'तमावसयं पद'मित्यादि । स्पष्टम् । एतच्च सांन्यासिकं चोद्यबीजमित्यभिप्राय इति गाथार्थः ।।८४८।।

शिक्षितमिति किमुक्तं भवतीत्याह—'सिक्खित'मित्यादि । 'अन्तं नीत'मधीतत्वात् । शेषं सुगममिति गाथार्थः ।।८४९।।

पञ्चानामपि पदानां दृष्टान्तमाह—'जहे'त्यादि । 'यथा हि स्वनाम शिक्षितं' स्थितं जितं मितं 'परिचित'मेवमेतदपी'त्यस्यायमर्थः । 'वाचनाचार्याभिहितघोषैः सदृशं गृहीतं' घोषसममुच्यते । 'ते चोदात्तादयः'—उदात्तानुदात्तस्वरिताः ।।८५०।।

'न वी'त्यादि । अन्यूनाक्षर'महीनाक्षरम्' । 'अनधिकाक्षर'मनत्यक्षरम् । तथा 'वाइद्धक्खर'मेवं भणंति[2] 'सितवन्नविन्नासं', अन्यत्रान्यत्रापादितवर्णम् ।

---

1 P drops द्वय. 2 P adds यदुत वच्चा.

अत इदं वर्णमात्रत एव विवक्ष्यते, न पदवाक्यतस्तस्यान्यविपयत्वात् । दृष्टान्तमाह 'वोच्चत्थरयणमाल व्व' प्रत्यन्त निवास्याभीरीप्रोतरत्नमालावत् । एतद्विपर्ययेण 'अव्वाइद्धक्खर'ति गाथार्थः ॥८५१॥

'न खलिय'मित्यादि । 'न स्खलितमुपलाकुलभूमिलाङ्गलवत्' । तथा 'न मिलितं' । तत्र 'मिलितमसमानजातीयधान्यमेलकवत्' सङ्कीर्णम् । यन्नैवं तदमिलितम् । अस्यैव द्वितीयं व्याख्यानं कुर्वन्नाह—'वोच्चत्थगंथमहव'त्ति, अथवा विपर्यस्तग्रन्थंमिलितं विपर्ययेण चामिलितं । तृतीयं व्याख्यान्तरमाह—'अहव'त्ति द्विरावर्त्यते । अथवा'ऽमिलितः'—असंसक्तः 'पदवाक्यविच्छेदो' यत्र त'दमिलितपदवाक्यविच्छेद'ममिलितमिति गाथार्थः ॥८५२॥

"अविच्चामेलिय"त्ति पदमाचिख्यासुराह—'न ये'त्यादि । न य विच्चामेलिय'त्ति सम्बन्धः । किञ्च किच्चामेलितम् ? अत आह—'विविधसत्थपल्लवविमिस्सं', यथा "धम्मोमंगलमुक्किट्ठमत एकनवते कल्पे मत्तोऽन्ये मदर्थाश्च गुणाः, न ह्याभ्यामर्थं परिच्छिद्य प्रवर्त्तमानः[1] जीवा द्विविधाः" इत्येवमादि । तथा अस्थान'च्छिन्नग्रथितं' वा । यथा—"प्राप्तराज्यस्य रामस्य राक्षसा निधनं गता" इत्येवमादि । यद्वा 'कोलिकपायसवद्' यद्वा 'भेरीकन्थाव'न्न यत् तदेतदिति गाथार्थः ॥८५३॥

'पडिपुन्न'न्ति दुविहं—सुत्तओ अत्थओ य । तत्र सूत्रतः 'मत्तादि' इत्यादि । 'मात्रादिनियतमानं अहवा छन्दसा'—छन्देण 'पडिपुण्णं' सूत्रतः । अत्थेण उ पडिपुण्णं किमत आह—'अत्थेणं नाकाङ्क्षादिसदोषं', न क्रियाध्याहारं यदपेक्षत इत्यर्थः । पडिपुण्णघोसं इत्येतदाह—'उदात्तादिघोप'संवृ[2]तत्वात् प्रति'पूर्ण'घोपमिति गाथार्थः ॥८५४॥

'कंठ' इत्यादि । कंठ्या । नवरं 'वा'शब्दात्कर्णाघाटितम् । आह—"आगमतोऽनुपयुक्तो द्रव्यावश्यक"मित्येतावतैवाभिलपितार्थसिद्धेः किमनेन भणिएण "जस्स णं आवस्सएत्ति पय"मित्यादिना ? आह च 'आगमतो' इत्यादि गतार्था ॥८५५-८५६॥

'जहे'त्यादि । 'यथोक्तगुणविशिष्टमपि निगदतः सूत्रमा'वश्यकादिपद'मनुपयुक्तस्य द्रव्यश्रुतं द्रव्यावश्यकं च, तथा सर्वा' गमनागमनप्रत्युपेक्षणादि 'क्रिया' द्रव्यावश्यकं चेति ज्ञापनार्थम् । अस्य विपर्ययमाह—'उवउत्तस्से'त्यादि । 'उपयुक्तस्य त्वा'वश्यकादिपदे'स्खलिता दि'दोषदुष्टमपि पठतः 'शुद्धस्वभावात्वाद् भावतः सूत्रं कथयति यथा तथा सर्वाः क्रियाः निर्जराफलाः' कथयति उपयुक्तस्य । तस्मादुपयोगे दृढं यत्नः कार्यः प्रथममिति गाथा[3]र्थः ॥८५७-८५८॥

"[4]अहिए' इत्यादि[4] । अत्र च 'हीणक्खरे' अवायदंसणत्थमिणमो उदाहरणम्—

1 ने P. 2 भृ P.
3 P adds इय. 4 ..4 This portion is dropped in P.

"भरहम्मि य रायगिहं, सेणियराया जिणिदभत्तिगओ ।
पुत्तो अभयकुमारो, बुद्धीएँ चउव्विहाएँ जुत्तो ॥१॥
अह अन्नया जिणिंदो, वीरो तत्थेव गुणसिलुज्जाणे ।
सुरविज्जाहरचारणसंथुव्वंतो समोसरिओ ॥२॥
धम्मकहाअवसाणे, गच्छंतेसु सुरचारणाईसु ।
एगस्स एगअक्खरविस्सरणे ण वहई विज्जा ॥३॥
तो तं मंडुक्कं पिव उप्फिडसंफिडणयं करेमाणं ।
दट्ठूणं विज्जाहरमिणमो राया विचिंतेइ ॥४॥
किं मन्ने एस एवं अहवा पुच्छामि जिणवरं गंतुं ।
वीरेण वि से कहियं पम्हुट्ठं अक्खरं सेगं ॥५॥
तं च सुणेत्ता अभओ पदाणुसारी त णं[2] भणइ गन्तुं ।
भो विस्सरियं तुहमेगमक्खरं अवहिओ सरसु ॥६॥
[3]जइ पुण मम सामणं सिद्धिमिहं[3] कुणसि तो तुहं अहयं ।
लहमि पयं[4] पडिवन्ने कहिओ से साहणोवाओ ॥७॥
तो सो तस्सेवेगक्खरस्स लाभेण रयतगिरिसिहरे ।
संपत्तो वरविज्जाहरंगणाकीडणसुहिल्लि ॥८॥
अत्थोवणतो उ इहं, कायव्वो अधि[5]य अक्खरे ऊणे ।
होई विणासो सुत्ते, अत्थे किरियाऽफलियदिक्खा ॥९॥
अण्णे भणंति स तहा दिट्ठो अभएण पुच्छिओ कहितं ।
पढसु य विज्जं पढिया लद्धं च तमक्खरं तेण ॥१०॥"

पाठक्रममङ्गीकृत्येदं पूर्वं कथितमित्यभिप्रायः । 'अहिए कुणाल'मक्कडा तंजहा—

"राया उ[6] चंदउत्तो, पाडलिपुत्तंमि पुरवरे आसि ।
पूत्तो सि बिंदुसारो, तस्सवि पुत्तो असोगसिरी ॥१॥
निच्चमसोगाहिं तओ विसेसओ दोहिं अग्गमहिसीहिं ।
रज्जध[7]रपुत्तरयणुज्जलाहिं सह भुंजती भोए ॥२॥
तस्स य एगाएँ सुतो वालो नामेण पुण कुणालो त्ति ।
दिन्ना से वालभुत्ती उज्जेणी तस्स राएणं ॥३॥
अह अन्नया कदाई कुणालवालस्स माइसवत्तीए ।
सहितस्स वासभवणे कहितं वरकंचुइज्जेणं ॥४॥

---

1 दी P.   2 यं P.   3...3 जइ य पुणो मम सामण्णसिद्धिमिह P.
4 P has तयं for पयं.   5 वि P.   6 यु P.   7 व P.

भगवं कुणालवालो वट्टइ अइरेगअट्ठवासो त्ति ।
तेण वि लिहिओ लेहो, सयमेव अधीयओ कुमरो ॥५॥

तीएविय सो गहिओ णयणंजणविदुयं अगारस्स ।
उवरिं दिण्णं रण्णो, छाइल्लाए[1] मणं हरउं ॥६॥

पडियप्पिओ य रण्णो, णयावि अनु[2]वाइओ पमत्तेणं ।
संवत्तिऊण मुद्दाएँ अंकिओ णीउ उज्जेणीं ॥७॥

वायाविओ य तेण य, ण लेहओ कहइ तं विरोहित्ति ।
सयमेव वाइउं चिन्तियं कुणालेणिमं तत्थ ॥८॥

मोरियवंसाणऽम्हं, आण अप्पडिहता तिहुयणंमि ।
ता किं तातस्साणं पढमं लंघेज्ज अहमेव ॥९॥

भो भो आणेह लहुं, जलंतजलणं फुलिंगवीभत्थं[3] ।
तत्तं लोहसलागं, जेणं अंजेमि अ[4]च्छीणि ॥१०॥

तो अंजिऊण तीए हाहारवभरियदसदिसाभोयं ।
जाओ य णयणविरहेण सयलअत्थमियजियलोओ ॥११॥

तो जाणिऊण रण्णा, दिण्णो से तुच्छजीवणो गामो ।
गंधव्ववेयणिउणो य तत्थ, सो भुंजती भोए ॥१२॥

तो तस्सवि संसारस्सभावदोसेण दारओ जा[5]ओ ।
तो सो अणज्जमाणो गायंतो वसुमतिं भमति ॥१३॥

पाडलिपुत्तं पत्तो, कहियं रण्णो इमेरिसो कोइ ।
उग्गाइ किन्नरो इव, रण्णा हक्कारिओ तो सो ॥१४॥

रण्णो पुरओ गायइ, अंतरिओ[6] जमणियाए रम्माए ।
तुट्ठेण य सो भणितो रण्णा मग्गाहि किं देमि ॥१५॥

सो भणति—

चन्दगुत्तपवोत्तो तु, विंदुसारस्स णत्तुतो ।
असोगसिरिणो पुत्तो, अन्धो जायइ कागणी ॥१६॥

तो उण रन्ना पुट्ठो कोऽसि तुमं तेण साहियं सव्वं ।
ओसारिया य पोत्ती, भणिओ य पुणोऽवि किं देमि ॥१७॥

सो भणति कग्गणिं[7] राइणा वि तुच्छं ति मग्गितं भणितो ।
मंतीहि य से कहियं रायसुते कग्गणी[8] रज्जं ॥१८॥

रायावि भणति अन्धो, करेसि रज्जेण किं तओ आह ।
मम पुत्तो उप्पण्णो संपति इह रातिणा भणिते ॥१९॥

1 P has छइल्लधाए for छाइल्लाए. 2 णु P. 3 ट्ठ P. 4 श्रं P.
5 श्रा P. 6 उं P. 7 P has कागणि for कग्गणि. 8 P has कागणी for कागणी.

संपति चिय से नामं, पतिट्ठियं तस्स रायपुत्तस्स ।
तं चेव य से रज्जं रण्णा पितिसंतियं दिण्णं ॥२०॥"

सो चेव उवणओत्ति । अहवा भावाहिए इमं लोइयं उदाहरणं—

"कामियसरआसण्णे, वंजुलरुक्खो महालओ अत्थि ।
तत्थ य चडिऊण जले, जो पडइ तिरिक्खओ संतो ॥१॥

सो होइ किल मणूसो, अह मणुओ पडइ होइ तो देवो ।
अह वितियंपि पडेज्जा, पुव्विल्लो चेव तो होति ॥२॥

एवं च ठिते सह वाणरीए तत्थेव वाणरो आओ ।
दिट्ठं च तत्थ पडियं, नरमिहुणं ताउ रुक्खाओ ॥३॥

जातं च देवमिहुणं, पडिआणि दुएऽवि नरजुयं जायं ।
सो भणति पुण पडामो, जा देवजुयं किल भवामो ॥४॥

तीए वरजुवतीए, पडिओ धरेंतीए सो णरो सलिले ।
जाओ पुणोऽवि सोच्चेव मक्कडो सिरिमति'च्छंतो ॥५॥

णारी रण्णा गहिया, सोऽवि य माइंदजालपुरिसेहिं ।
रण्णो पुरओ णच्चंतएसु सो वाणरो मुक्को ॥६॥

तं दट्ठूणं वरहाररयणपरिमंडियं णियं जुयइं ।
पत्थेइ तीए[1] भणितो एस सिलोगोत्ति निउणाए ॥७॥

जो जहा वट्टए कालो, तं तहा सेव वाणरा ।
मा वंजुल परि[2]ब्भट्ठो, वाणरा पडणं सर ॥८॥"

उवणओ एस एवेत्यधिकृतगाथापूर्व्वार्द्धार्थः । अथ भावहीणाहिए उदाहरणम् । तथा चाह—'उभये'त्ति । भावहीणे भावाहिए य दृष्टान्तः । क इत्यत आह—'बालाउराइभोयणभेसज्जविवज्जओ' । एतदुक्तं भवति—

"तित्तकडुभेसयाइं मा णं पीलेज्ज ऊणये देति ।
पउणइ ण तेहिं अहिएहिं मरति (बालो तथाहारे) ॥"

ग्लान इति गम्यते । एवं बालोऽप्याहारमङ्गीकृत्येति गाथार्थः ॥८५९॥

अस्य व्याख्या 'चंदगुत्ते'त्यादि गाथाः पञ्च ॥८६०-८६४॥

इत्यागमतो द्रव्यावश्यकं गतम् । द्वितीयभेदमधिकृत्याह—'णोआगमतो' इत्यादि । 'नोआगमतो ज्ञशरीरद्रव्यावश्यकम्'—

"परिणिव्वुयमुणिदेहं सिद्धसिलातलगतं मुणेयव्वं ।
अणुभूयभाववेक्खा, वइ तडवडिओ घतघडोव्व ॥१॥"

तथा 'भव्यशरीरद्रव्यावश्यकं' यच्छरीरमावश्यकमिति पदं ज्ञास्यति योग्यत्वात् घृतघटवदेव । 'उभयव्यतिरिक्तं' तु त्रिविधम् । कथमित्याह—

1 ती P. 2 हि P.

'लोइय'त्ति। "जे इमे राईसरादि मुखादिप्रक्षालनमुपसि कुर्वते"। 'लोकोत्तरं' च—"जे इमे समणगुणमुक्कजोगी जाव उभयो कालं आवासयस्स उवट्ठायन्ति"। तथा 'कुप्पावयणियं' "तिण्हं तिसट्ठाणं पावादुयसयाणं कोट्टकिरिदादीणं उवलेवणसंमज्जणादि"। एवं 'जहा सुत्ते' अणिओगदारेषु तथा वन्नेयव्वंति गाथार्थः ।।८६५।।

"वसंतपुरे अगीतत्थसंविग्गपरिवारो तहाविहो चेव गणी[1] परिवसति। तत्थ य एगो साधू दिवसदेवसियं उदउल्लाइअणेसणादि पडिगाहेत्ता रयणीए महतामहता संवेगेणालोएति। तस्स पुण गणी अगीतत्थत्तणतो पायच्छित्तं देंतो इमं भणइ—अहो! इमो धम्मसद्धिओ! सुहं पडिसेविउं, दुक्खं आलोइउं, अतो असढत्ता एसो[2] सुद्धोत्ति। इमं च दट्ठुं अन्ने मण्णंति—आलोइज्जइ चेव एयं, ण एत्थ दोसो त्ति। वच्चइ कालो, अण्णता तत्थ गीतत्थसंविग्गो साधू आगतो, तेण सा दिवसदेवसिया अविही दिट्ठा। चिंतियं च—अहोऽणेण इमे विणासिज्ज[3]-न्ति, ततो तेण कहाणयं कहियं—गिरिणगरे कोडीसरो णाम वाणियओ महल्ल-मोल्लरयणाणं घरं भरिऊण पलीवेइ, तं च लोगो पसंसति—वइसाणरं तिप्पेहिति त्ति। एवं वरिसाणि वच्चंति। अण्णता तेण तं तहा पलीवियं वातवसेण य सव्वं णगरं दड्ढं। ततो राइणा हक्कारिऊण सव्वस्सहरणो कतो णिद्धाडिओ य सविसयाउ त्ति। अण्णोऽवि मधुराए एवं चेव करेइ। सो राइणा सुतो, सव्वस्स-हरणो चेव काउं विसज्जितो। भणिओय—अडविमि किं न पलीवसि? एवं भो! जहा तेण वणिएण अवसेसावि गेहा दड्ढा एवं तुमं पसंसंतो एते साहुणो मिगसंठा-णिएसव्वे भामित्ता[4] परिच्चयसि। जाहे य सो गणी ण ठाइ ताहे तेण साधुणो भणिता—भो! भो! एस अगीयत्थो णिद्धम्मो य, अलमेयस्स वसवत्तित्तेण सो तेहिं ततो निद्धाडित्तो त्ति।" आह च—'लोउत्तरे' इत्यादि। 'स' इत्यगीतार्थः, शेषं स्पष्टम् ।।८६६।।

द्रव्यावश्यकं गतम्, 'भावावश्यकम'पि द्वेधा—आगमतो नोआगमतश्च। तत्र 'आगमतो' इत्यादि। पूर्वार्धं स्पष्टम् ।। द्वारं ।। 'नोआगमतो' 'ज्ञानक्रिया-परिणामो', मिश्रत्वादिति गाथार्थः ।।८६७।।

तदपि त्रेधा—'लोइय'मित्यादि। 'लोइयं' पुव्वण्हे भारहं अवरण्हे रामायणं। 'कुप्पावयणियं' इज्याञ्जल्यादि। 'लोकोत्तरं शास्त्रे प्रशस्तं, तेनैव चायमधिकार' इति गाथार्थः ।।८६८।।

तस्साभिन्नत्थाइं सुपसत्थाइं जहत्थनिययाइं।
अव्वामोहाइनिमित्तं आह पज्जायनामाइं ।।८६९।।
आवस्सयं अवस्सं करणिज्जं धुवनिग्गहो विसोही य।
अज्झयणछक्कवग्गो नाओ आराहणा मग्गो ।।८७०।।

---

1 P adds गच्छो य.
2 P has चयओ for त्ता एसो.
3 य P.
4 P has भामिन्तो for भामित्ता.

समणेण सावएण य अवस्सकायव्वयं हवइ जम्हा ।
अंतो अहो निसिस्स उ तम्हा आवस्सयं नाम ॥८७१॥

जदवस्सं कायव्वं तेणावस्सयमिदं गुणाणं वा ।
आवासयमाहारो आ मज्जायाभिविहिवाई ॥८७२॥

आ वस्सं वा जीवं करेइ जं नाणदंसणगुणाणं ।
संनिज्झभावणच्छायणेहिं वा वासयं गुणओ ॥८७३॥

'तस्से'त्यादिना पर्ययित आह गाथाः पञ्च । अत्र च 'आवस्सयं'ति । 'अवश्यंकरणादावश्यकम्' । किञ्च तत् ? चक्रवालसामाचार्यनुष्ठानम् । 'ध्रुवनिग्रहो'ऽनादिकालीनकर्म्मापनयनम् । एवं च पदानि नव दश वेति । 'यतश्चाहोरात्रान्तः श्रमणादिना कर्त्तव्यमत आवश्यकम्' । 'आपाश्रयो वेदं गुणानाम् । आङो मर्यादाभिविधिवचनत्वा'दापाश्रयं, ततश्च प्राकृतशैल्या लिङ्गव्यत्यया'दावासयं' ति । 'गुणानां वा वश्यमात्मानं करोती'ति । यथाऽन्तं करोतीत्यन्तकः । गुणशून्यं वा आत्मान'मावासयति गुणै'रिति, 'गुणसान्निध्य'-मात्मनः करोतीत्यर्थः । 'गुणैर्वाऽऽवासकम्'—अनुरञ्जकं वस्त्रधूपादिवदिति । 'गुणैर्वाऽऽत्मानमाच्छादयती'ति "वस आच्छादने" इति कृत्वा ॥८६८-८७३॥

## [श्रुतनिक्षेपाः]

तदेवं भेदतत्त्वपर्यायैरावश्यकमुक्तं, श्रुतस्कन्धपदयोरप्यतिदेशनं तावदाह—

एवं चिय सेसाइं विउसा सुयलक्खणाणुसारेण ।
कमसो वत्तव्वाइं तहा सुयक्खंधनामाइं ॥८७४॥

आगमओ दव्वसुयं वत्ता सुत्तोवओगनिरवेक्खो ।
नोआगमओ जाणयभव्वसरीराइरित्तमिदं ॥८७५॥

पत्ताइगयं सुत्तं सुत्तं च जमंडजाइ पंचविहं ।
आगमओ भावसुयं सुओवउत्तो तओऽणण्णो ॥८७६॥

नोआगमओ भावे लोइय लोउत्तरं पुराऽभिहियं ।
सम्मत्तपरिग्गहियं सम्मसुयं मिच्छमियरंति ॥८७७॥

आगमओ भावसुयं जुत्तं नोआगमे कहं होइ ।
जइ नागमो न सुत्तं, जइ सुत्तमणागमो किह णु ॥८७८॥

उवओगो जम्मत्ते तं तं जइ वाऽऽगमोऽवसेसं तु ।
नोआगमोत्ति एवं किमणुवउत्तम्मि दव्वसुयं ॥८७९॥

अविसुद्धनयमएण व जइ लद्धिसुयमणुवउत्तेऽवि ।
भावसुयं चिय पढओ किमणुवउत्तस्स दव्वसुयं ॥८८०॥

आगमसुओवओगो सुद्धो चिय न चरणाइसंमिस्सो ।
मीसेऽवि वा विवक्खा सुयस्स चरणाइभिन्नस्स ॥८८१॥

चरणाइसमेयम्मि उ उवओगो जो सुए तओ समए ।
नोआगमोत्ति भण्णइ नोसद्दो मीसभावम्मि ॥८८२॥

सव्वनिसेहे दोसो सव्वसुयमणागमो पसज्जेज्जा ।
होज्जा वाऽणागमओ सुयवज्जमणागम सुयं तु ॥८८३॥

देसनिसेहे सयलं नोआगमओ सुयं न पावेज्जा ।
भिन्नंपि व तं देसो चरणाईणं पसज्जेज्जा ॥८८४॥

होज्ज व नोआगमओ सुओवउत्तोऽवि जं स देसम्मि ।
उवजुज्जइ न उ सव्वे तेणायं मीसभावम्मि ॥८८५॥

आह नणु मीसभावे नाभिहिओ अभिहिओ य नोसद्दो ।
देसे तदन्नभावे दव्वे किरियाएँ भावे य ॥८८६॥

सच्चमयं देसाईसु तहवऽत्थवसेण सद्दविणिओगो ।
अमियत्था य निवाया जुज्जइ तो मीसभावेऽवि ॥८८७॥

अविसेसियसंमिस्सोवओगदेसुत्ति वा सुयं काउं ।
नोआगमभावसुए नोसद्दो होज्ज देसेऽवि ॥८८८॥

नोआगमओ कोई सद्दसहायमुवओगमिच्छंति ।
नणु सुतरमागमत्तं हि दव्वभावागमे जुत्तं ॥८८९॥

अह नागमोत्ति सद्दो नोआगमया य तदहियत्तणओ ।
आगमओ दव्वसुयं किह सद्दो नागमो जइ णो ॥८९०॥

अन्ने नोआगमओ सामित्ताणासियं सुयं बेंति ।
जइ न सुयमणुवओगे नणु सुयरमणासियं नत्थि ॥८९१॥

सुय-सुत्त-गंथ-सिद्धंत-सासणे आण-वयण उवएसो ।
पण्णवण आगमोऽवि य एगट्ठा पज्जया सुत्ते ॥८९२॥

'एवं चिये'त्यादि स्पष्टार्था । नवरं 'सुयाणुसारेणं' अनुयोगद्वारानुसारेणेति गाथार्थः ॥८७४॥

अथ प्रपञ्चतः श्रुतपदमुच्यते—तच्चतुर्धा, मङ्गलवत् । नामस्थापने प्राग्वत् । तत्र द्रव्यश्रुतमागमनोआगमभेदात् । आद्यं प्रतिपादयन् गाथापूर्वार्द्धमाह । द्वितीयं च पश्चार्धम् । 'आगमतो दव्वसुय'मिति प्रतीतार्थाः ॥८७५॥

किं तदिदमित्याह 'पत्तादिगतं सुत्तं' पुस्तकपत्रकादिन्यस्तम् । "अहवा सुत्तं पंचविहे पन्नत्ते—अण्डए वोंडए वालए वागते किट्टिसे" इति । आह च 'सुत्तं चे'-त्यादि । तद् द्रव्यश्रुतं व्यतिरिक्तमिति प्रक्रमात्[1] ॥द्वारम्॥ 'भावश्रुतं' द्वेधा—आगमनोआगमभेदादेव । तत्रागमतो भावश्रुतं क इत्याह—'श्रुतोपयुक्तो' वक्ता 'ततोऽनन्यत्वात्' ॥द्वारम्॥ ८७६॥

'नो आगमतो' इत्यादि। 'भावे' भावविषयं 'नोआगमतो' भावश्रुतम्। किमत आह—'लोइयं' भारतादि। 'लोकोत्तरं' चाचारादि क्षायोपशमिक विशेषात्। तच्च 'प्रागेवोक्तम्'। तच्च 'सम्यक्त्वादिपरिग्रहात्' तथोच्यते ।।८७७।।

अत्राह—'आगमतो' इत्यादि। इह हि 'आगमतो भावावश्यकश्रुतं युक्तं' घटमानकम्, अविरुद्धत्वात् जनन्यवन्ध्यावत्। किं तु न युक्तमित्याह—'नो आगमे' नो आगमतस्तु 'कथं भवति'? न कथञ्चिद्विरोधाज्जीवाचैतन्यवत्। तथा कोऽयं नो आगमो नाम? 'जदि' इत्यादि। 'यदि नोआगमो'—न आगमस्ततो 'न सुत्त'[1] ति न भावश्रुतम्। 'अथ श्रुतं कथं नोआगमो', जीवा चैतन्यवदिति। तस्मादयुक्त मेतद् द्वितीयं भावश्रुतमिति गाथार्थः ।।८७८।।

स्यात् पठतः 'उवओग' इत्यादि। 'उपयोगो' दत्तावधानता। 'जंमत्ते' त्ति यावति यावति 'तत्तद् यदि चागमो' भवतामभिप्रेतः। 'अवसेसं तु' उपयोगाविषयीकृतं श्रुतं नोआगमत इति। ततश्च सर्वप्रतिषेधात् नोआगमतो भावश्रुतं योक्ष्य[2]त इति[3] उच्यते। 'एवम'नया कल्पनया 'किं' कस्मात् 'अनुपयुक्ते' पठति वक्तरि 'दव्वसुतं' अधस्तादुक्तं येनोच्यते "नोअणुप्पेहाए"त्ति। एतदुक्तं भवति—अनुपयोगत्वेन तस्यापि नोआगमत्वाद्, अनुपयोगत्वेन तत्रापि लब्धिसद्भावादित्यभिप्राय इति गाथार्थः ।।८७९।।

अथैतत्परिजिहीर्षोः सूरेर्मतमाह चोदक एव 'अवी'त्यादि। 'यदि अविशुद्धनयमतेन' द्रव्यास्तिकनयमतेन यदि 'तल्लब्धिश्रुतं' सन्नोआगरूवं 'अणुवयुत्तेऽपि' वक्तरि पठति सति 'भावसुतं चिय'त्ति भावश्रुतमेव वर्त्तत इत्युच्यते, ननु तदेवावर्त्तते। तथाहि—यद्येवं ततः 'पठतः किमणुवयुत्तस्स दव्वसुतं'? एतदुक्तं भवति—तदपि भावश्रुतमेवास्तु, लब्धिसद्भावादिति चोद्यार्थः ।।८८०।।

उच्यते नैतच्चोद्यं, सिद्धान्तानभिप्रायात्। तथाहि—सर्वप्रतिषेधवचन एव नोशब्द इदं स्यात्, न मिश्रवचन इति। आह च—'आगमसुतोवओगो'[4] इत्यादि। आगच्छती'त्यागमः'। श्रूयत इति 'श्रुतम्'। आगमश्चासौ श्रुतं च आगमश्रुतम्। तद्विषय उपयोग 'आगमश्रुतोपयोगः'। 'शुद्धएव केवल एव। किमुक्तं भवतीत्याह—'न चरणादिसम्मिश्रो' न चारित्रदर्शनाभ्यां संवलितो यदेष्यते तदा आगमतस्तत् भावश्रुतमभिधीयत इति शेषः। ज्ञानदर्शनचारित्र'मिस्सेऽवि वे' त्यथवा मिश्रेऽप्युपयोगे 'चरणादिभिन्नस्य श्रुतस्य विवक्षा' क्रियते, ततश्चागमतस्तावदेवं भावश्रुतं भवतीति गाथार्थः ।।८८१।।

नोआगमतः पुनः कथं भवतीत्याह—'चरणादी'त्यादि। 'यः' पुनः 'श्रुते उपयोगः'। किंविशिष्टे श्रुत इत्याह—'चरणादिसमेते' चरणदर्शनाभ्यामनुविद्धे। स किमित्यत आह—तत् को[5]ऽसौ 'समये' सिद्धान्ते 'नोआगम इति' एवं

---

1 यो P. 2 ज्य P. 3 P adds चेद्.
4 P has योग for ओगो. 5 P has तो for त्को.

'भण्यते', नोआगमतो भावश्रुतं भण्यत इति भावना। किं कारणमित्याह— यतो 'नोशब्दो'ऽयं 'मिश्रभावे'। मिश्रवचनो वर्त्तत इति ॥८८२॥

एवं चैतत्। अन्यथाऽयं सर्वनिषेधवचनो वा त्वयेष्यते देशनिषेधवचनो वेति द्वयी गतिः। किंचातः? तत्र प्रथमविकल्पे प्रसङ्गमापादयन्नाह—**'सव्व'** इत्यादि। 'सर्वनिषेवे' सर्वप्रतिषेधवचने नोशब्देऽभ्युपगते भवतो 'दोष' अपराधः स्यात्, यत एवं 'सर्वं श्रुतमनागमः प्रसज्येत'। आगमो न भवतीति नोआगमः। तत्प्राप्तेः श्रुतस्य मत्यादिचतुष्टयीभवनमित्यभिप्रायः। आगमस्य वा श्रुतत्वीभवनमिति। आह च—**'होज्जा वा'** भवेद्वा। कः किमित्यत आह—**'अणागमसुतं'**। तु अनागमो—मत्यादिचतुष्टयलक्षणः, ओत्वस्य[1] लुप्तत्वात्। श्रुतमेवनान्यः। किंविशिष्टो य इत्याह—**'सुतवज्ज'**न्ति श्रुतवर्ज्जः। किं कारणमित्याह—'अनागमतो' अनागमाद्धेतोः। **क्षमाश्रमणटीका**ऽपीयम्—"'सव्वणि' गाहा। निषेधवचनत्वे पुनर्नोशब्दस्य सर्वनिषेधो देशनिषेधो वा गम्यते, तत्र सर्वनिषेधे तावन्नोआगमतो भावश्रुतमिति सर्वश्रुतस्यानागमत्व प्रसङ्गः स्यात्, अश्रुतस्य वा मत्यादेः श्रुतत्वप्रसङ्गः।" इति गाथार्थः ॥८८३॥

अथ ब्रूषे—न ब्रूमो नोशब्दस्य सर्वप्रतिषेधवचनत्वेन सव्वसुतमणागमो पसज्जति[2] किंतु देशे। अत आह—**'देस'** इत्यादि। इह नोशब्दे 'देशनिषेवे' देशोऽस्यागमो न भवतीति वाचके सति भवतः 'सकलं श्रुतं नो आगमतो' नो आगमरूपेण[3] 'प्राप्नुयाद्', एकदेशे अनागमत्वात्। इष्यते च सर्वत्र नोआगमतया सर्वश्रुतं, ज्ञानदर्शनचारित्रपर्यायानुविद्धत्वात्। **'भिन्नं वि वे'**त्यादि। 'वे' त्यथवा एवं सति। 'अपि' सम्भावनार्थः। ततश्चायमर्थः—'चरणादीनां भिन्नं' सत् निःकृष्टं स'त्तत्'—श्रुतं 'देशः' प्रसज्येत[4]। अनेनैव प्रकारेण, एतदप्यसम्भावनीयं [5]सम्भाव्येत इष्यते वा[5] भिन्नदेशं घात्वंजनकपिसवर्णकवत्। अन्यथा संकरैकत्वादिदोषप्रसङ्गात्। तस्मात् पारिशेष्यान्मिश्रवचनेऽस्मिन्नोआगमतो भावश्रुतमिति भावः ॥८८४॥

**'होज्ज'** इत्यादि। 'वा' इत्यथवाऽपरयापि भङ्ग्याऽयं नोशब्दो मिश्रवचन इत्युच्यते। कहं? **'होज्ज व णोआगमतो सुओवयुत्तोवि'** त्ति। एतस्याक्षरघटना—'श्रुतोपयुक्तोऽपि' सन् 'भवेन्नोआगमतो' भावश्रुतम्। उपयोगतद्वतोरभेदात्। किमित्यत आह—'यत्' यस्मात्। 'असौ' उपयोगवान् 'देश उपयुज्यते' ज्ञानदर्शनचारित्रकलापैकभागश्रुतैक देशे प्रणिहितो भवति 'न तु सव्वे' एक समय इत्यमुपयोगाभावात्। येन कारणेनैवं 'तेनायम'नयाऽपि भङ्ग्या 'मिश्रभावे' भवति, क्वचिदुपयोगानुपयोगप्रवृत्तेः। पूर्वत्र तु मिश्र उक्त आसीत्, चरणादिसमेते इह त्वित्येवमतो महान् विशेष इति गाथार्थः ॥८८५॥

---

1 P has उत्वस्य for ओत्वस्य. 2 च P. 3 P adds न.
4 P has जेत् for ज्येत. 5...5 सम्भाव्यते वा P.

'आहे'त्यादि । 'ननु मिश्रभावे नोशब्दो' न क्वचि'दभिहितः । अभिहितश्च देशादौ' । तथाहि—विवक्षया नोशब्दो देशवचना उक्तो द्रव्ये घटादौ । यथा—देशे नोघटः, यो घटः स देशे नोघटो, न तु सर्वत्र, अघटप्रसङ्गात् । तत्प्रसंगे च घटाभावप्रसङ्गात् । सर्वत्रैवमिति शून्यतापत्तिः । अथ पुनर्देशे घटस्तत एकघटे घटबहुत्वप्रसङ्गः । एवं पटादिष्वपीति व्यवहाराभावः । तथा 'तदन्यभावे' नोघटः पटादिस्तत्संव्यवहारव्यपदेशज्ञानदर्शनात् । 'द्रव्ये' नोशब्दो घटैकदेशवचनादिरेव विवक्षयोक्तत्वात् । 'क्रियायां' नोपचति नोपक्तव्यमस्ति । तथा 'भावे च' नो शय्यते नोस्थीयते इति गाथार्थः ॥८८६॥

उच्यते—'सच्च'मित्यादि । 'सत्यमयं देशादिषु' पठितो, न मिश्रभावे । किन्तु 'तथाऽप्यर्थवशेन शब्दविनियोगः' क्रियते । अपि'चाय'तार्थाश्च निपाता' द्योत्येनार्थेनार्थवत्त्वात् यत एवं 'ततो युज्यतेऽयं मिश्रभावेऽपी'ति गाथार्थः ॥८८७॥

अस्तु वाऽयं भवदनुरोधेन देशादि नियत एव तथापि देशवचन एव तर्हि भविष्यतीति । आह च—'अविसेसिते'त्यादि । 'अविशेषितत्वेन सम्मिश्रोपयोग'-स्तस्य 'श्रुतमेकदेश इतिकृत्वा' । किमत आह—'नोआगमतो भावश्रुते, साध्ये 'देशवचनोऽपि नोशब्दः स्यात्' । घटग्रीवाख्यैकदेशे नोघटाभिधानवत् । यथाहि—सामान्यैकघटस्यैको देशो नोघट इत्युच्यते, एवं ज्ञानादित्रयाद्युपयोगाच्छ्रुतोपयोगोऽपीति । नोआगमतो भावश्रुतमिदमेकदेशवचनत्वादिति गाथार्थः ॥८८८॥

अत्र च—'नो' इत्यादि । 'केचनो नोआगमतो' भावश्रुति'मिच्छन्ति' । 'उपयोगं' प्रणिधानम् । किंविशिष्टमित्याह—'शब्दसहायं' शब्दानुविद्धमित्यर्थः । शब्दोपयोगयोरैक्यं, नोपयोगमात्रम् । अत्रोच्यते—'ननु सुतरामेव'गमतो 'भावश्रुतत्वं द्रव्यभावागमसंयोगे युक्तं' घटते । कुतस्तत्रानागमतो ? न हि तत्रोपलसंनिपातो भवतीत्यभिप्रायः ॥८८९॥

इदं विचुकूटयिषोः परस्य मतमाशङ्कते—'अहे'त्यादि । 'अथ चेच्छब्दो' ध्वनि'र्निगम इति कृत्वा' ततश्च 'तदधिकत्वात्' शब्दाधिकत्वादुपयोगस्य 'नो आगमता'पत्तिः नो आगमतैव । उपयोगमात्रस्य शब्दसाहाय्यात्, यदि नो आगमतो भावश्रुतमित्यर्थः । उच्यते, यद्यसावुपयोगसहायः शब्द आगमो न तत 'आगमतो द्रव्यश्रुतं कथं' त्वयाऽप्यधस्तात् प्रतिपन्नमिति शेपातस्मात् "णण्वि" त्यादि स्थितम् ॥८९०॥

'अण्णे' इत्यादि । 'अन्ये' सूरयो व्याचक्षते—आगमतो भावश्रुतं स्वामित्वाश्रितमुपयोगं, तथा 'नो आगमत' इत्यत्र 'तु' शब्दलोपो द्रष्टव्यः । ततश्च 'नो आगमतः पुनः स्वामित्वानाश्रित'मन्य इत्याद्यनुवर्त्तते । उच्यते—'यदि' सम्बद्धमप्य'**नुपयोगे ण सुयं**' ति न भावश्रुतम्, अधीयानस्या नुपयुक्तत्वात् । 'नणु सुतरामनाश्रितं' स्वामिनि 'नास्ति' नोआगमतो भावश्रुतम् । यदि सम्बद्धमपि

---

1 मि P.    2 P has वर्यं for न.

द्रव्यश्रुतं प्रतिपन्नमसम्बद्धं तु कस्मात् प्रतिपद्यते ? क्व वा तदित्थंभूतमिति । तस्मादेतदपि [1]फल्ग्विति गाथार्थः ॥८९१॥

तत्त्वं तु सूत्रयतीति सूत्रम् । पर्यायशब्दानाह—'सुये'त्यादि स्पष्टा ॥८९२॥ द्वारम् ॥

[स्कन्धनिक्षेपाः]

स्कन्धोऽपि मङ्गलवच्चतुर्धा । द्रव्यत आह—

खंधपएणुवउत्तो वत्ताऽऽगमओ स दव्वखंधो उ ।
नो आगमओ जाणयभव्वसरीराइरित्तोऽयं ॥८९३॥

सच्चित्तो अच्चित्तो मीसो य समासओ जहासंखं ।
दुपयाइ दुपएसाइओ य सेणाइदेसाई ॥८९४॥

अहवा कसिणोऽकसिणो अणेगदव्वो स एव विण्णेओ ।
देसाऽवचिओवचिओ अणेगदव्वो विसेसोऽयं ॥८९५॥

आगमभावदखंधो खंधपयत्थोवओगपरिणामो ।
नोआगमओ भावम्मि नाण-किरिया-गुणसमूहो ॥८९६॥

सामाइयाइयाणं छण्हऽज्झयणाण सो समावेसो ।
नोआगमोत्ति भण्णइ नोसद्दो मीसभावम्मि ॥८९७॥

गण-काए य निकाए संधे वग्गे तहेव रासी य ।
पुंजे पिंडे नियरे संघाए आउल समूहे ॥८९८॥

'खंधे'त्यादि । पूर्वार्द्धं स्पष्टम् ॥ द्वारम् ॥ नोआगमतस्तु त्रिविध इत्याह—[2]"नोआगमओ" इत्यादि । उत्तरार्धं स्पष्टम् ॥८९३॥

व्यतिरिक्तत्रैविध्यमाह[2]—'सच्चित्तो' इत्यादि । स चायं 'यथासंख्यम्' । 'द्विपदादि'रसंख्येयात्मप्रदेशमात्रो नरहयस्कन्धादिः । 'द्विप्रदेशादिः' प्रतीतः । 'सेणातिदेसो य' त्ति, सेणाए अग्गिमे खन्धे सेणाए मज्झिमे खन्धे इत्येवमादीति गाथार्थः ॥८९४॥

'अहवे'त्यादि । 'अथवा' त्रिविधः स्कन्धः 'कृत्स्नोऽनेकद्रव्यश्च' । तत्र 'कृत्स्नः' स एव द्विपदादिरक्षतः । 'अकृत्स्नः' स एव द्विप्रदेशादिरवयवत्वात् । "तिपदेसियाउ दुपदेसिओ अकसिणखंधो" इत्येवमादि । तथा 'अणेगदव्वो' त्ति 'स चा'नेकद्रव्यः सामान्येन जीवच्छरीरपिण्डः । 'देशे' नखादा'वपचितो—हीनो जीवतया, त'थोपचितश्च' । युक्त'श्चायम'स्यान्यतो 'विशेष' इति ॥८९५॥

भावस्कन्धमाह—'आगमे'त्यादि । पुव्वद्धं कंठं ॥ द्वारम् ॥ 'नोआगमतो ज्ञानक्रियासमूहः' ॥८९६॥

---

1 P adds परि. 2...2 This portion is dropped in P.

कथमित्याह—**'सामाइ[1]'** इत्यादि । **'सो'** त्ति णोआगमतो भावस्कन्धः । शेषं स्पष्टम् ।।८९७।।

**'गणे'**त्याद्येकार्थिकानि स्पष्टानि । इति गाथार्थः ।।८९८।।

[आवश्यकस्य षडर्थाधिकाराः]

उक्तः स्कन्धोऽपि । साम्प्रतं व्यस्तस्य सतोऽस्यावश्यकादिपदत्रयस्यैकवाक्यता क्रियते । षण्णां श्रुतविशेषाणां समुदायः स्कन्ध उच्यते । आवश्यकं च तत् श्रुतस्कन्धश्चेत्यावश्यकश्रुतस्कन्ध इति । शास्त्राभिधानमेतदिति । आह—

**किं पुण छक्कज्झयणं जेण छलत्थाहिगारविणिउत्तं ।**
**सामाइयाइयाणं ते य इमे छज्जहासंखं ।।८९९।।**
**सावज्जजोगविरई उक्कित्तण गुणवओ य पडिवत्ती ।**
**खलियस्स निंदणा वणतिगिच्छ गुणाधारणा चेव ।।९००।।**
**दारक्कमागयाणं वीसुं वीसुमिहसोहनिप्फन्ने ।**
**अज्झयणाणं नासं वक्खामो लाघवनिमित्तं ।।९०१।।**
**आवस्सयस्स एसो पिंडत्थो वण्णिओ समासेणं ।**
**एत्तो एक्केक्कं पुण अज्झयणं वण्णयिस्सामि ।।९०२।।**
**तत्थऽज्झयणं सामाइयंति समभावलक्खणं पढमं ।**
**जं सव्वगुणाहारो वोमं व्वि सव्वदव्वाणं ।।९०३।।**
**अहवा तब्भेयच्चिय सेसा जं दंसणाइयं तिविहं ।**
**न गुणो य नाणदंसणचरणव्वइरित्तो जओ अत्थि ।।९०४।।**

**'किं पुणे'**त्यादि । किं पुनः कारणमिदमावश्यक'मध्ययन षट्कमि'ति ? आह—'येन षड्भिरर्थाधिकारैर्नियुक्तं सामायिकादीनाम्' । 'ते चामी' अर्थाधिकारा—**'सावज्जे'**त्यादि सामायिकाध्ययने सकल'सावद्ययोगविरति'रर्थाधिकारः । द्वितीये त्वर्हतां 'गुणोत्कीर्त्तना' । तृतीये 'गुणवतः प्रतिपत्तिः' कृतिकर्मादिलक्षणा । श्रुतशील'स्खलननिन्दना' चतुर्थे । पञ्चमे चारित्रात्मनो 'व्रणचिकित्सा' । षष्ठे तु व्रतातिचारेतरोपचितकर्मविशरणार्थमनशनादि'गुणधारणमि'ति गाथार्थः ।।८९९-९००।।

आह—उक्तमावश्यकश्रुतस्कन्धाऽध्ययनानीत्यतोऽध्ययननिक्षेपोऽपीहैव कर्त्तव्योऽवसर प्राप्तत्वात् श्रुतानन्तरं स्कन्धवत् । उच्यते—**दारक्कमे**'त्यादि । द्वाराणि—उपक्रमादीनि । तेषां 'क्रमस्ते'नागतानां प्रत्येकं प्रत्येकमिह' शास्त्रे 'ओघनिष्पन्ने' निक्षेपे शेषं स्पष्टम् ।।९०१।।

उपसंहरन्नाह—**'आवस्सयस्से'**त्यादि । तद्व्यावर्णनाच्चोक्तं चतुर्थं मूलद्वारं "तस्स फलजोगमङ्गलसमुदायत्थे"ति । गाथार्थः ।।९०२।।

---

1 P adds य.

पञ्चममाह—'तत्थे'त्यादि। स्पष्टा नवरं 'प्राथम्यमस्य सकलगुणाधारत्वात्' ॥९०३॥

'अहवे'त्यादि। 'अथवे'ति प्राथम्यकारणान्तरोपदर्शनार्थः। 'तद्भेदा एव' सामा[1]यिकविशेषा एव। 'शेषा' अध्ययनविशेषाः। 'यस्मात्' तत्सामायिकं 'दर्शनादि त्रिविधं'। "सामाइयं पि तिविधं सम्मत्त मुतं तहा चरित्तं च" त्ति वचनात्। 'न च'न्यो 'गुण'एतद्विरहे'णास्तीत्य'त'स्तदाधारत्वाच्चेदमाद्यमिति गाथार्थः ॥९०४॥

[सामायिकाध्ययनस्यानुयोगद्वाराणि]

अणुओगद्दाराइं महापुरस्सेव तस्स चत्तारि।
अणुओगोत्ति तदत्थो दाराइं तस्स उ मुहाइं ॥९०५॥

अकयद्दारमनगरं कएगदारंपि दुक्खसंचारं।
चउमूलद्दारं पुण सपडिद्दारं सुहाहिगमं ॥९०६॥

सामाइयमहपुरमवि अकयद्दारं तहेगदारं वा।
दुरहिगमं चउदारं सपडिद्दारं सुहाहिगमं ॥९०७॥

ताणीमाणि उवक्कमनिक्खेवाणुगमनयसनामाइं।
छत्तिदुदुविगप्पाइं पभेयओऽणेगभेयाइं ॥९०८॥

'तस्य' च सामायिकाध्ययनस्य—'अणुओग' इत्यादि। अनुयोगः क इत्यत आह—'तदर्थो'ऽध्ययनार्थस्तत्प्रवेशस्थानानि तु 'द्वाराणि'। नचैतत् परिकल्पनमनर्थकं, दृष्टान्तसिद्धत्वात्। यथा हि पुरं—'अकये'[2]त्यादि। 'अकृतद्वारमनगरं' भवति, सन्ततप्राकारवलयादि[3]वेष्टितत्वात्। तत्रैतत् स्याद्—एकद्वारं नगरं भविष्यतीति। आह—'कृतैकद्वारमपि दुःखसञ्चारं' भवति। संप्रभिन्नमदजलकरीन्द्रोष्ट्रवाजिरथवरपदातिस्त्रीजनादिसङ्कुलत्वात् कार्यातिपाति च स्यात्। 'चतुर्मलद्वारं पुनः सप्रतिद्वारं' सुखनिष्काशप्रवेशं स्याद्, दृष्टत्वात्। दार्ष्टान्तिकोपसंहारमाह—'सामाइये'त्यादि। स्पष्टा[4] ॥९०५-९०७॥

'ताणी'त्यादि पूर्वार्द्धम् ॥ द्वारम् ॥ 'छत्ती[5]'त्याद्युत्तरार्द्धम् ॥द्वारम्॥ अथैतेषां निरुक्तम्। तत्र 'उप' सामीप्ये। "क्रमुपादविक्षेपे"। उपक्रमण'मुपक्रमः'। दूरस्थस्य सतो वस्तुनस्तैस्तैः प्रकारैः समीपापादनमित्यर्थः। निक्षेपणं 'निक्षेपः'। "क्षिप प्रेरणे" इति। निश्चित्य[6] क्षेपो 'निक्षेपः'। मोचनं रचनं न्यास इति यावत्। अनुगम्यतेऽनेनेत्यादिनाऽनुगमनं वा 'अनुगमः'। अणुणो वा सूत्रस्य गमोऽ'णुगमः'। अनुरूपार्थगमनं वाऽनुगमः। सूत्रार्थानुगमः सूत्रार्थानुसरणमित्यर्थः। "णीञ् प्रापणे"। वक्तैव सूत्रार्थप्रापणव्यापारोपयोगान्नयतीति नयः ॥९०८॥

---

1 म P. 2 ते P. 3 P drops दि. 4 P drops स्पष्टा. 5 इ P. 6 त: P.

अत उच्यते—

## [ उपक्रमद्वारम् ]

सत्थस्सोवक्कमणं उवक्कमो तेण तम्मि व तओ वा ।
सत्थसमीवीकरणं आणयणं नासदेसम्मि ॥९०९॥

निक्खिप्पइ तेण तहि तओ व निक्खेवणं व निक्खेवो ।
नियओ व निच्छिओ वा खेवो नासोत्ति जं भणियं ॥९१०॥

अणुगम्मइ तेण तहिं तओऽणुगमणमेव वाऽणुगमो ।
अणुणोऽणुरूवओ वा जं सुत्तत्थाणमणुसरणं ॥९११॥

स नयइ तेण तहिं वा तओऽहवा वत्थुणो व जं नयणं ।
बहुहा पज्जायाणं संभवओ सो नओ नाम ॥९१२॥

दारक्कमोऽयमेव उ निक्खिप्पइ जेण नासमीवत्थं ।
अणुगम्मइ नाणत्थं नाणुगमो नयमयविहूणो ॥९१३॥

संबन्धोवक्कमओ समीवमाणीय नत्थनिक्खेवं ।
सत्थं तओऽणुगम्मइ नएहिं नाणाविहाणेहिं ॥९१४॥

गुरुभावोवक्कमणं का परिवाडी कइत्थमज्झयणं ।
भावम्मि कम्मि वट्टइ किमिदं दव्वं गुणो कम्मं ॥९१५॥

जीवगुणोऽजीवगुणो किं नाणं दंसणं चरित्तं वा ।
पच्चक्खं अणुमाणं ओवम्ममहागमो वाऽवि ॥९१६॥

लोइयलोउत्तरिओ किं सुयमत्थोऽहवोभयं होज्जा ।
अप्पणओऽणंतरओ परंपरं वाऽऽगमो कस्स ॥९१७॥

किं दिट्ठिवाइयं कालियं व किं वा सुयत्थपरिमाणं ।
ससमय-परसमयोभयसिद्धंताण व को वच्चो ॥९१८॥

को व समएगदेसो समुदायत्थाहियार इह नियओ ।
अज्झयणोवक्कमणं कायव्वमिहेवमाईहिं ॥९१९॥

'सत्थस्से'त्यादि । 'निक्खिप्पती'त्यादि । 'अणिव'त्यादि । 'स णयती'-त्यादि । सुप्रसिद्धमिति ॥९०९-९१२॥ द्वारम्॥

अमीषामित्थं क्रमाभिधाने किं प्रयोजनमित्यत आह—'दारे'त्यादि । 'नानुपक्रान्तं निक्षिप्यते' अमुष्टिस्थमोक्षणवत् । 'न चान्यस्तमनुगम्यते' नाननुगतं नयावसरं भवतीति गाथार्थः ॥९१३॥

यतश्च—'संबंधे'त्यादि । सम्बन्धरूप उपक्रमः 'सम्बन्धोपक्रमः । तस्मात्स-मीपमानीय शास्त्रं' प्रथमं ततः पुन'र्न्यस्तनिक्षेपं पुनरनुगम्यते नानाविधानै'र्नयैः' ।

1 P has विधैः for विधानैः.

अतोऽयमेव क्रमोऽत्र एतावन्तमात्रो वयाह—"तस्स फलजोगमंगल"-त्यादि ॥९१४॥

साम्प्रतमनुग्रहार्थमुपक्रमसङ्क्षेपाधिकारोपप्रदर्शनमिदं गाथापञ्चकमाह—'गुरुभावोवक्कमण'मित्यादि। इह सामायिकाध्ययनार्थं बुभुत्सुना विनेयेन 'गुरोर्भावोपक्रमः' कर्त्तव्यः कया पुनरयं भङ्ग्या गुप्रसन्नः स्यात्? तथा 'का परिपाटी' कयाऽऽनुपूर्व्येदं 'कतिथमि'ति वाच्यम्। 'क्व वा भावे वर्त्तते'? 'किं चेदं द्रव्यादीनाम्'। 'जीवगुणत्वे' च सति 'कतमो ज्ञानादेः'। ज्ञानत्वे सति 'कतमत् प्रत्यक्षादेः'। आगमत्वेऽपि च सति 'लौकिको लोकोत्तरो वा'। लौकिकत्वेऽपि 'सूत्रमर्थ उभयम्'। सर्वथा प्रतिषेधः, लोकोत्तरत्वे सूत्रार्थोभयस्वभावः। तत्रापि 'अप्पयओ'त्ति। 'कस्य क आत्मागमोऽनन्तरागमः परम्परागमो वेति। तथा किमिदं दृष्टिवा[1]दिकमुत कालिकम्'। कालिकत्वेऽस्य 'किं सूत्रार्थप्रमाणम्? स्वसमयोऽस्य वाच्यः'। तत्वेऽपि 'कोऽस्य समयैकदेशः समुदायार्थत्वेनाविनिगते। एवमादिभी रूपैरध्ययनोपक्रमणं कार्यम्।' व्याख्यानाङ्गत्वात् गुरुभावोपक्रम-वत् ॥९१५-९१९॥

तथा च—

नामाई छब्भेओ उवक्कमो दव्वओ सचित्ताई।
तिविहो य पुणो दुविहो परिकम्मे वत्थुनासे य ॥९२०॥

परिकम्मं किरियाए वत्थूणं गुणविसेसपरिणामो।
तदभावे य विणासो दव्वाईणं जहाजोगं ॥९२१॥

खेत्तमरूवं निच्चं न तस्स परिकम्मणा न य विणासो।
आहेयगयवसेण उ करणविणासोवयारोऽत्थ ॥९२२॥

नावाएँ उवक्कमणं हल-कुलियाईहिं वावि खेत्तस्स।
संमज्जभूमिकम्मे पंथतलागाइयाणं च ॥९२३॥

जं वत्तणाइरूवो कालो दव्वाण चेव पज्जाओ।
तो तक्करणविणासे कीरइ कालोवयारोऽत्थ ॥९२४॥

छायाएँ नालियाए व परिकम्मं से जहत्थविन्नाणं।
रिक्खाईचारेहि व तस्स विणासो विवज्जासो ॥९२५॥

जं परहिययाकूयावधारणमुवक्कमो स भावस्स।
तस्सासुभस्स मरुइणिगणियामच्चाइओऽभिहिया ॥९२६॥

सीसो गुरुणो भावं जमुवक्कमए सुहं पसत्थमणो।
सहियत्थं स पसत्थो इह भावोवक्कमोऽहिगओ ॥९२७॥

को वक्खाणावसरे गुरुचित्तोवक्कमाहिगारोऽयं।
भण्णइ वक्खाणंगं गुरुचित्तोवक्कमो पढमं ॥९२८॥

1 P adds द॰.

गुरुचित्तायत्ताइं वक्खाणंगाइं जेण सव्वाइं ।
तो जेण सुप्पसन्नं होइ तयं तं तहा कज्जं ॥९२९॥
जो जेण पगारेणं तुस्सइ करणविणयाणुवत्तीहिं ।
आराहणाएँ मग्गो सो च्चिय अव्वाहओ तस्स ॥९३०॥
आगारिंगियकुसलं जइ सेयं वायसं वए वुज्जा ।
तहवि य सिं नवि कूडे विरहम्मि य कारणं पुच्छे ॥९३१॥
निवपुच्छिएण गुरुणा भणिओ गंगा कओमुही वहइ ।
संपाइयवं सीसो जह तह सव्वत्थ कायव्वं ॥९३२॥
जुत्तं गुरुमयगहणं को सेसोवक्कमोवओगोऽत्थ ।
गुरुचित्तपसायत्थं तेऽवि जहाजोगमाओज्जा ॥९३३॥
परिकम्मनासणाओ देसे काले य जा जहा जोग्गा ।
ताओ दव्वाईणं कज्जाऽऽहाराइकज्जेसु ॥९३४॥
उवहियजोग्गद्दव्वो देसे काले परेण विणएणं ।
चित्तण्णू अणुकूलो सीसो सम्मं सुयं लहइ ॥९३५॥
अहवोवक्कमसामण्णओ सया पगयनिरुवओगावि ।
अण्णत्थ सोवओगा एवं चिय सव्वनिक्खेवा ॥९३६॥
गुरुभावोवक्कमणं कयमज्झयणस्स छव्विहंमियाणिं ।
तत्थऽणुपुव्वाईसुं इदमज्झयणं समोयारे ॥९३७॥
अणुपुव्विसमोयारो कज्जो सामाइयस्स संभवओ ।
नियमावतारणं पुण कित्तणगणणाणुपुव्वीसु ॥९३८॥

'णामादी'त्यादी । इह प्रथम उपक्रमाख्यो द्वारविशेषो द्वेधा—शास्त्रीय इतरश्च । तत्रेतरः 'षोढा'—नामस्थापनाद्रव्यक्षेत्रकालभावभेदात् । नामस्थापने प्राग्वत् । 'द्रव्यत' आगम-नोआगमभेदात् । तत्र नोआगमतो व्यतिरिक्तः 'सचि'त्तादी तिविधो' त्ति सचित्तद्रव्योपक्रमोऽचित्तद्रव्योपक्रमो मिश्रद्रव्योपक्रमश्च । तत्र सचित्तद्रव्योपक्रमो द्विपदचतुष्पदापदानाम् । पुनरेकैको 'द्वेधा—परिकर्मणि वस्तुनाशे चे'ति गाथार्थः ॥९२०॥

परिकर्म[2] किमुच्यत इत्याह—'परिकम्म'मित्यादि । पुव्वद्धं कण्ठं । यथा कुष्माण्डघृतरसायनाद्युपयोगात् पुरुषस्य वर्णवयोऽवस्थापनं भण्डसकलप्रोतनादिभिर्वा कर्णादिवार्द्धिक्यादिकरणमिति । अन्ये तु शास्त्रपरिज्ञानगन्धर्वनृत्यादिकलासम्पादनमपि द्रव्योपक्रममित्याचक्षते । तन्न, भावत्वादस्य । स्यादपि चात्मद्रव्यसंस्कारविवक्षायामिति । एवं शुकसारिकादावपि भावनीयम् । चतुष्पदेषु हस्त्यादिषु, अपदेषु, चाम्रतरुकेतक्यादिषु वृक्षायुर्वेदात् । तत्रैतत्स्यात्—

1 च्चि P.  2 P adds त्रि.

तरोर्वार्द्धिक्याद्युपक्रमणं युक्तं, कालान्तरे स्वयं भावित्वात्, न तु पुंसो वर्णादिसम्पादने कालान्तरेऽपि विवक्षितहेतुजालमन्तरेणानुपपत्तेः । तन्न । कालान्तरेऽपि विवक्षित हेतुजालमन्तरेणानुपपत्त्यसिद्धेः । वर्णस्य नामकर्मविपाकित्वेन स्वयमपि भवनस्वभावत्वात् । विभ्रमविलासादीनां तु यूनोऽवस्थायां दर्शनात् । अत उक्तं **'परिकम्मं किरियाए वत्थूणं गुणविसेसपरिणामो'**त्ति । 'तदभावे च' वस्त्वभावापादने च 'विनाश' उपक्रम्यते कालान्तरभावित्वात् । आह—अनयोर्न विशेष उभयत्र पूर्वरूपपरित्यागेनोत्तररूपावस्थानात् । उच्यते, नैतत् । एकत्र प्रत्यभिज्ञादिदर्शनात्, अन्यत्र त्वदर्शनात् । अथवैकत्र नाशस्यैव विवक्षितत्वात् । केषामिमावित्याह—'द्रव्यादीनाम्' । द्रव्यस्य द्विपद-चतुष्पदा-ऽपदलक्षणस्य चैतन्यवतः खड्गदशनजिह्वादिभिरचेतनस्य च पद्मरागमणेः क्षारमृत्पुटपाकादिना परिकर्म, विनाशस्त्वयोघनघातादिभिः । मिश्रस्य तस्यैव द्विपदादेरलङ्कारादिसहितस्य । 'आदि'शब्दात् क्षेत्रकालपरिग्रहः । खड्गप्रहारगजवन्धनाङ्कनभेदादिभिरिति गाथार्थः ॥९२१॥

एवमुक्ते सत्याह—**'खेत्तम्मि'**त्यादि । 'क्षेत्रं ह्य'रूपित्वान्नित्यमतस्तस्य नेमौ' । उच्यते—सत्यम् । किं त्वा'धेयद्रव्यगतिवशेनैव करणविनाशोपचारावत्र' । मञ्चाः क्रोशन्ति यथेति ॥९२२॥

आह—**'णावाए'** इत्यादि । इह 'क्षेत्रस्य' जलाधारस्य 'नावु'डुपतरण्डका-'दिभिरुपक्रमणं' क्रियते । इतरस्य च 'हलादिभिः' । एवं 'संमज्जनभूपन्थतडागादि'-करणेन च क्षेत्रोपक्रम इति गाथार्थः ॥९२३॥

**'जमि'**त्यादि । 'यतः कालो हि वर्तनादिरूपो द्रव्यपर्यायो वा' चन्द्रोपरागादिलक्षणो वा'ऽतस्तत्करणविनाशे कालोपचारः क्रियत' इति गाथार्थः ॥९२४॥

अस्य च कालस्य—**'छायाए'**[1] इत्यादि । प्रतीतार्था ॥९२५॥

अथ भावोपक्रमस्य तावल्लक्षणमाह—**'जं परे'**त्यादि । 'यत्परहृदयाकूतावधारण'मभिलषितार्थपरिपुष्ट्येऽसौ 'भावस्योपक्रमः' । स द्वेधा—आगमत उपक्रमपदार्थज्ञस्तत्र चोपयुक्तः । नोआगमतो द्वेधा—प्रशस्तोऽप्रशस्तश्च । तत्र 'तस्याशुभस्य' भावोपक्रमस्य स्वरूपप्रतिपादका 'मरुकिणिगणिकाऽमात्यादयो' दृष्टान्ता 'अभिहिताः' । इति गाथार्थः ।

"पाडलीपुत्ते कविल' त्ति माहणी तीएँ तिन्नि धूताओ ।
ता चिंतेइ कहं पुण एयाओ होज्ज सुहियाओ ॥१॥
ताओ मए उवाओऽत्थ तीएँ परिणा'विता पढम धूया ।
भणिया य हला मेज्जालयम्मि' जइया ठिओ होई ॥२॥

1 रा P. 2 चे P. 3 दि P.
4...4 [illegible] P.

तुह भत्तारो तइया सव्वायासेण कइय[1] वाराओ ।
वरणेउरेण चलणेण मत्थए देज्ज दढपण्हि ।।३।।
ताएवि तह कए सो हा हा ! दुक्खाविय त्ति व रडंतो[2] ।
मलिऊणं आढत्तो तीए कमलोवमे चलणे ।।४।।
तो सा. वसिउं गोसे साहइ माऊएँ पुच्छि[3]यं तीए ।
तीएऽवि णाउ जामाउयस्स भावो उवाएणं ।।५।।
भणिया य पुत्ति ! जं जं करेसि विणयं च अविणयं वावि ।
तं तं ते भत्तारो अमयं व घ[4]यं व मण्णेही ।।६।।
ता तेण समं पुत्तय ! दुल्लहलंभंमि माणुसे जम्मे ।
भुंजसु सच्छंदमती भोए एसो तुहं दासो ।।७।।
वितियाएवि तहच्चिय, भणियाए खीलपण्हिघिक्काहिं ।
परिपिट्टिउ भत्तारो खणमेत्तं झिखिउं थक्को ।।८।।
सावि य[5] तीए भणिया जणणीए पुत्ति ! तुज्झ भत्तारो ।
परिझिखणओ होहिति कएऽकए वावि कज्जंमि ।।९।।
झिखणओ च्चिय णवरं ण तु धाडेहिति ततोऽवराहेऽवि ।
भुंजसु तुमंपि भोए णियतवलद्धेण कंतेण ।।१०।।
तइयाएवि तहच्चिय आढप्पंते कुसीलदुहिताए ।
अभिमाणधणेण वरेण तेण हक्कासि जं दिण्णा ।।११।।
[6]भीता सा[7] महिवट्ठे पडिया सहसा पुणोवि उट्ठेउं ।
आढत्ता दाउं जे, पण्ही भत्तारसीसंमि ।।१२।।
तत्तो पुणोवि हक्काएँ थरहरंती महीयले पडिया ।
जणणीएँ[8] वयणकारी तहेव काउं समाढत्ता ।।१३।।
तो तेणवि खरभिउडीभीमनिडालेण रोसरत्तच्छं ।
णूणं गहेण गहिय त्ति तेण तीए ममं दिण्णा ।।१४।।
तो तेण सासुयारोसपसरपरिवड्ढमाणवेरेणं ।
ओयारेऊण मणाउ वाहिरे थंभये वद्धा ।।१५।।
तो सिसिरमासदूसहसीततुसारोय[9] भिन्नसव्वंगा ।
हेट्ठिमणरएव्व कहंचि जीविता तत्थ रयणीए ।।१६।।
मुक्का य सासुयाए धरिज्जमाणी वि रोसपसरेणं[10] ।
रोयंती जणणीए गता समीवंमि सा भणति ।।१७।।

---

1 यि P. 2 P has रडन्तो for रडन्तो. 3 च्छ P.
4 व P. 5 त P. 6 P adds तं. 7 P drops सा.
8 ये P. 9 रेय P. 10 ण P.

पुत्तग ! जइ तस्सुट्टियणिसण्णगस्सुट्ठिया णिसण्णा य ।
होहिसि तुमं ततो से, भोच्छिसि भत्तं च पोत्तं च ।।१८।।
तो मम वयणाओ तुमं अणुयत्तसु दसविहाए[1] जुत्तीए ।
मम जामाउयमेयं[2] अणुयत्तसु देवदुल्लहयं ।।१९।।"

इयाणि **'गणिय'**त्ति—**पाडलिपुत्ते** णगरम्मि **देवदत्त** त्ति दारिया अत्थि ।

"वित्थडभत्ति महाविमलधवलपासायदुल्ललिता ।।१।।
सव्वालंकारधरी णवजोव्वणमाणतिहुयणब्भहिया ।
कोढीयकाणकुंटयसत्तागारोव्व परिभोज्जा ।।२।।
तीए य चिंतियमिदं मज्झ गिहं विविहवेसपुरिसाणं[3] ।
अट्ठारसपगइब्भंतराण को सो ण जो एइ ।।३।।
तो णियणिया दिजाती मग्गेहिं समुच्चरंतवण्णड्ढा ।
विद्धालिहणसुसिक्खियचित्तकरेणं सभाभित्ती ।।४।।
चित्ताविया मणोज्जा, तीए घडकारलोहकारेहिं ।
तंतायकट्ठभारयणिवसेट्ठिसुतातिचरियड्ढा ।।५।।
सा आगयस्स तरत्रण्णदायिणो पढमगं पयत्तेणं ।
दाति[4]ज्जइ जेण ततो, णज्जइ को एस पुरिसो त्ति ।।६।।
सोऽवि य तं दट्ठूणं, विसेसओ संसती णियं जाइं ।
लट्ठं लट्ठं ति इमो घडकारो भामतो चक्कं ।।७।।
इय तस्स तई भावं, चित्तेणमिमेण जाणिउं कुसला ।
अणुयत्तइ तह चेव य जह सो तुट्ठो धणं देइ ।।८।।"

**'अमच्चे'** त्ति ।

"मधुराए जउणसेणो राया चित्तण्णुओ य से मन्ती ।
सो अण्णया च वाहिं विणिग्गतो आसवाहणियं ।।१।।
तत्थ य गोप्पयमज्झंमि मुत्तियं वेसरेण तं च तओ ।
झल्लमलंतं दट्ठुं, चिरकालं चितंई इणमो ।।२।।
होइ थिरोदगमेत्थं उदगणिवाणं ति वाहिउं तुरगं ।
वोलीणो सो राया, [5]मंती चित्तं वियाणेउं ।।३।।
कारावते तलातं सहसंत्रवणुव्वरंतपालीयं[5] ।
दिट्ठं च तयं रण्णा, दसमाओ णवरि वरिसाओ ।।४।।
पडिपुच्छियं च रण्णा केण खणावितमितं कया किं वा ।
कहितं चागारिंगियकुसलेण य ते[6] अमच्चेणं ।।५।।

1 ये P. 2 चं P. 3 ण P. 4 इ P.
5..5 मंतीएवि तं वियाणेउं ।।३।। काराविथं तलायं सहसंबवणुव्व रम्मपालीयं P.
6 से P.

रण्णावि विविहचिंतणणाणासंकाये भीयहिययेणं ।
पूयात्थामलयेच्चिय, अवराहो से कओ घणियं ॥६॥"

इति गाथार्थः ॥९२६॥

साम्प्रतं प्रशस्तलक्षणमाह—**'सीसो'** इत्यादि । 'शिष्यः' श्रोता । 'गुरो'-र्व्याख्यातुः । 'भावम्' अन्तर्गतं मनः । 'यदुपक्रमते' तदन्तर्लीनतयाऽतीन्द्रियं सत् यदिङ्गिताकारज्ञत्वेन प्रत्यक्षमिव करोति । किंविशिष्टमित्याह—'शुभं' शुभभाव-हेतुत्वात् शुभस्तम् । किंविशिष्टः सन् ? 'प्रशस्तमनाः' किमर्थमित्याह—'स्वहितार्थम्' । 'स एव प्रशस्तः । इह च स एवाधिकृत' इति गाथार्थः ॥९२७॥

एवमुक्ते सत्याह—**'को'** इत्यादि । 'कोऽध्ययननोपक्रमावसरेऽनेनाधि-कार' ? उच्चते । 'प्रथमव्याख्याङ्गत्वा'दध्ययनोपक्रमात्, एदतदुक्तं भवति—यथाऽध्ययनोपक्रमादृते व्याख्यानं कर्त्तुं न शक्यते, एवं गुरोश्चेतः-समाधानमन्तरेण श्रोत्राऽपि न श्रोतुं पार्यत इति ॥९२८॥

आह च—**'गुरु'** इत्यादि सुबोध्या ॥९२९॥

तस्मात्—**'जो'** इत्यादि । यदि गुरुः **'आगारिंगिते'**त्यादि । शिष्य-विशेपणमाद्यपादे इति ॥९३०-९३१॥

**'णिवे'**त्यादि । सुबोध्या । कथानकं च प्रतीतम् ॥९३२॥

यद्येवं—**'जुत्त'** मित्यादि । 'युक्तमेव गुरुभावोपक्रमणमिति । कि शेषैः' ? उच्यते—गुरोर्द्रव्याद्युपक्रमो हरति चेतः ॥९३३॥

तथा हि **'परिकम्मे'**त्यादि । 'परिकर्म्म' [1]शुण्ठ्यादिना दव्यादेः संस्करणम् । 'नाशनं' त्वम्लभावादेः । 'देशे'ऽजाङ्गले विपये जाङ्गले वा । 'काले' ग्रीष्मादौ । 'ताः कुर्यात्' गुरोः । ततश्च **'उवहिये'**त्यादि सुचर्चमिति गाथार्थः ॥९३४-९३५॥

**'अहवे'**त्यादि । 'अथवा' द्रव्योपक्रमादय 'उपक्रमसामान्यादि'ह 'प्ररूपिताः' सन्तो'ऽन्यत्र सोपयोगा' भविष्यन्तीति लाघवार्थम् । 'एवमेव च सर्व-निक्षेपाः' ॥९३६॥

तदेवं लौकिकोपक्रमव्यावर्णनप्रसंगेन—**'गुरुभावो'** इत्यादि । 'गुरुभावोप-क्रमणं कृतम्' । 'अध्ययनस्येदानीं' शास्त्रीयमुपक्रममङ्गीकृत्य क्रियते । कतिविध-मित्याह—'पड्विधं' षोढा, आनुपूर्वी नाम प्रमाणं वक्तव्यताऽर्थाधिकारः समवतार इति । पच्छद्धं कंठं ॥९३७॥

तथाहि—**'अणि'** इत्यादि । 'आनुपूर्व्या सामायिकस्यावतारः कार्यः । कथम् ? 'सम्भवतो' यत्र यत्र सम्भवति । एवं सामान्येनाभिधाय विशेषमाह—

---

1 P adds गुड.

'नियमावतारणं पुनरुत्कीर्त्तनगणनानुपूर्व्योः'

"नामं ठवणाद्रविते, खेत्ते काले य गणण अणुपुव्वी ।
उक्कित्तण संठाणे सामायारी य भावे य ॥१॥"

त्ति गाथार्थः ॥९३८॥

तत्रोत्कीर्त्तनानुपूर्व्या सामायिकमुत्कीर्त्यते । गणनानुपूर्व्या तु कथमिति चेत् । उच्यते—सा त्रिविधा । तद्यथा—"पुव्वाणुपुव्वी पच्छाणुपुव्वी अणाणुपुव्वी" त्ति । तत्र—

पुव्वाणुपुव्विश्रो तं पढमं पच्छाणुपुव्विश्रो छट्ठं ।
जायइ गणिज्जमाणं अनियमियमणाणुपुव्वीए ॥९३९॥

एगादेगुत्तरया छग्गच्छगया परोप्परब्भत्था ।
पुरिमन्तिमदुगहीणा परिमाणमणाणुपुव्वीणं ॥९४०॥

पुव्वाणुपुव्विहेट्ठा समयाभेएण कुण जहाजेट्ठं ।
उवरिमतुल्लं पुरश्रो, नसेज्ज पुव्वक्कमो सेसे ॥९४१॥

'पुव्वा' इत्यादि । स्पष्टा ॥९३९॥

अनानुपूर्वीणां[1] चेयं करणगाथा—'एगा' इत्यादि । 'एकाद्या एकोत्तरा' । आनुपूर्वीप्रक्रममङ्गीकृत्य संख्यामाह—'छग्गच्छगता' षट्समूहप्रतिबद्धा । सा च 'परस्पराभ्यस्ता' पूर्वत उत्तरेण गुणिता इत्यर्थः । या अङ्कावली भवति सा पुनः 'पुरिमंतिमदुगहीणा' कीरइ, आनुपूर्वीपश्चानुपूर्वित्वात् तस्य द्वयस्य, ततश्च 'परिमाणमनानुपूर्वीणां' सिद्ध्यति ॥९४०॥

कथं चेत् ? उच्यते—'पुव्वाणु' इत्यादि । 'पुव्वाणुपुव्वी', सा च वंपकाए[2] ततश्च 'हेट्ठा कुण' अधस्तात् न्यसेत् [3]ज्येष्ठमध्ययनम् । किमवि[3]गणप्य ? नेत्याह—'समयाभेदेन' पङ्क्त्यविनाशेन । उक्तं च—

"जहियंमि तु णिक्खित्ते पुणरवि सो च्चेव होइ दायव्वो ।
सो होइ समयभेदो, वज्जेयव्वो पयत्तेणं ॥१॥"

तत 'उपरिमतुल्यं पुरतो'ऽग्रतो न्यसेत् । यादृगुपरि लक्ष्यत इत्यर्थः । पृष्ठतः का वार्त्तेत्यत आह—'पूर्वक्रमः शेषे' । शेषे रन्ध्रे[4] पूर्वक्रमं यदास्ते तत्परिपाट्या न्यस्येदित्यतः सिद्धमेतत्प्रमाणं ७१८ । तत्र यदुक्तं परस्पराभ्यस्तेति तत्रेदं करण-गाथाद्वयम्—

"दो एक्कगाइं दोण्णि उ तिण्णि दुगा छ त्ति चउ छ चउवीसा ।
एते वि पंचगुणिया विसुत्तरं होइ सयमेगं ॥१॥
एयंपी[5] छग्गुणियं सत्तसया होंति वीसतऽब्भहिया ।
एते तु दुरूवूणा सत्तसयऽट्ठारसा होंति ॥२॥"

---

1 अणाणुपुव्वीणं P.
2 P has क्रमाद्रूपा for वंपकाए.
3...3 ज्येष्ठं पूर्वमङ्कं न कर्त्तं वि P
4 P has शेषांश्च for शेषेरन्ध्रे.
5 पि य P.

अत्र चासम्मोहार्थं त्रितय एव दर्श्यते—दंसणं णाणं चरित्तं ।१। तत्थ दंसणस्स जेट्ठो णत्थि त्ति तो णाणस्स हेट्ठा णाणजेट्ठो दिज्जइ, एवमेव समयाभेदात्, **'पुरतो उवरिमतुल्लो सेसे उ पुव्वक्कमो'** ।२। ततो णाणहेट्ठे दंसणे ठविज्जमाणे समयभेदो होइ उवरिमतुल्लणसणओ, ततो किं दंसणहेट्ठा णाणं धरिज्जतु ? उच्यते—एवं पि समयभेद एव । अतो चारित्तस्स हेट्ठा णाणं ठविज्जइ, पुव्वक्कमो सेसे ।३। ततो दंसणहेट्ठा दंसणे वि ठविज्जमाणे सो च्चिय दोसो, चारित्राधश्चारित्रन्यासप्राप्तेः । अतश्चारित्राधो दर्शनम्, उवरिम० पुव्वक्कमो ।४। ततो चारित्तहेट्ठे दंसणे ठविज्जमाणे सो चेव दोसो, तो किं दंसणहेट्ठा णाणं ठविज्जउ ? उच्यते—एवं पि सो चेव दोसो, ज्ञानस्याधो ज्ञानदानप्राप्तेः । अतो ज्ञानस्याधो दर्शनं दीयते, पुव्वक्कमो० ।५। ततो नाणहेट्ठे दंसणे दिज्जमाणे सो चेव दोसो, ततो चरणहेट्ठा णाणं ठविज्जइ उव० पुव्व० ।६। अत्र चतस्रः अनानुपूर्व्य इति गाथार्थः । स्थापना—

| दं० | ना० | च० |
|---|---|---|
| १ | २ | ३ |
| २ | १ | ३ |
| १ | ३ | २ |
| ३ | १ | २ |
| २ | ३ | १ |
| ३ | २ | १ |

॥९४१॥

जं वत्थुणोऽभिहाणं पज्जयभेयाणुसारि तं नामं ।
पइभेयं जं नमए पइभेयं जाइ जं भणियं ॥९४२॥

छव्विहनामे भावे खओवसमिए सुयं समोयरइ ।
जं सुयताणावरणक्खओवसमजं तयं सव्वं ॥९४३॥

'ज'मित्यादि । 'यद्वस्तुनोऽभिधानं' ज्ञानरूपादि'पर्यायप्रभेदानुसरणस्वभावं तन्नाम' । किमुक्तं भवतीत्याह—"णम् प्रह्वत्वे" इति 'भेदं भेदं प्रति यन्नमति प्रतिभेदं याति' यद्वाचकत्वे'नेति भणितं' भवति ॥९४२॥

तच्चैकादिदशान्तमतः—'छव्विहे'त्यादि । 'छव्विह णामे' छब्भावा—औदयिकः १, औपशमिकः २, क्षायिकः ३, क्षायोपशमिकः ४, पारिणामिकः ५, सान्निपातिकः ६ । अतो भावेऽभिकृते 'खयोव' इत्यादि । स्पष्टतम् ॥ द्वारम् ॥९४३॥

दव्वाइचउभेयं पमीयए जेण तं पमाणं ति ।
इदमज्झयणं भावोत्ति भावमाणे समोयरइ ।।९४४।।

जीवाणणणत्तणओ जीवगुणे बोहभावओ नाणे ।
लोउत्तरसुत्तत्थोभयागमे तस्सभावाओ ।।९४५।।

सुयओ गणहारीणं तस्सिस्साणं तहाऽवसेसाणं ।
एवं अत्ताणंतरपरम्परागमपमाणम्मि ।।९४६।।

अत्थेण उ तित्थंकरगणहरसेसाणमेवमेवेदं ।
मूढणयंति न संपइ नयप्पमाणेऽवयारो से ।।९४७।।

आसी पुरा सो नियओ अणुओगाणमपुहुत्तभावम्मि ।
संपइ नत्थि पुहुत्ते होज्ज व पुरिसं समासज्ज ।।९४८।।

संखामाणे कालियसुयपरिमाणे परित्तपरिमाणं ।
सुयओ तदत्थओ पुणभणियं तमणंतपज्जायं ।।९४९।।

'दव्वादी'त्यादि । 'प्रमीयतेऽनेनेति प्रमाणम्' । 'तच्चतूरूपं द्रव्यादिविषयत्वात्' । ततश्चे'दमध्ययनं' द्रव्यादित्रयव्यपोहेन 'भाव इति कृत्वा भाव प्रमाणे समवतरतो'ति गाथार्थः ।।९४४।।

ननु च भावप्रमाणं त्रेधा—गुणनयसंख्याभेदात् । ततश्च कतमदेतदिति । उच्यते—गुणप्रमाणम् । ननु चेदमपि द्वेधा—जीवजीवभेदादिति । उच्यते—जीवगुणप्रमाणमिति । आह च—'जीवाणण्ण' इत्यादि । 'आत्मभावानर्थान्तिरत्वात् 'जीवगुणप्रमाण' एवास्य समवतारः । ननु च तदपि त्रेधा—ज्ञानदर्शनचारित्रभेदात् । अतः क्वास्य समवतार इत्याह—'बोधस्वभावत्वाज्ज्ञाने' । ननु च चतुर्धा ज्ञानं—प्रत्यक्षानुमानोपमानागमभेदात् । उच्यते—'आगमे'ऽस्य समवतारः । ननु चासौ द्वेधा—लौकिक-लोकोत्तरभेदात् । उच्यते—'लोगुत्तरे'त्ति लोकोत्तरे । ननु चायं त्रेधा—सूत्रार्थोभयरूपत्वात् । अत आह—'सुत्तत्थोभयागमे'त्ति । सूत्रागमेऽर्थागमे उभयागमे वाऽस्य समवतारः । किं कारणमित्याह—'तत्स्वभावत्वात्' ।।९४५।।

ननु च सूत्रागमस्त्रिविधः—आत्मानन्तरपरम्परभेदात् । एवमर्थागमोऽपि । अतः कथं केषां क इत्यत आह—'सुततो' इत्यादि । 'अत्थेण तु' इत्यादि गाथार्द्धं । तत्र 'श्रुतमङ्गीकृत्य गणधारिणां तथा तच्छिष्याणां' जम्बूस्वाम्यादीना'मवशेषाणां च' तच्छिष्याणां प्रभवादीनाम् । 'एव'मनेनैव क्रमेण । किमत आह—जधासंखं 'अत्ते'त्यादि स्पष्टम् । तथा एवमेवेदमध्ययनमर्थमङ्गीकृत्य 'तीर्थकर-गणधर-जम्बूनां किम् "अत्ते"त्यादि अनुवर्त्तते ।।द्वारम्।। 'नय' इति । 'मूढनयमिदमिति कृत्वा नास्याधुना'ऽस्मिन् 'समवतारः' ।।९४६-९४७।।

तथा च—'आसी'त्यादि । 'सो' त्ति समोतारः । शेषं स्पष्टम् । 'स्याद्वा पुरुषमाश्रित्या'सावपीति गाथार्थः ।।९४८।। द्वारम् ।।

संख्या नामस्थापनाद्रव्यक्षेत्रकालौपम्यपरिमाणभावभेदभिन्ना। तत्र—'संखे'त्यादि। सूत्रतो नियतपरिमाणं "संखेज्जा अक्खरा" इत्यादिवचनात्। 'अर्थतस्त्वनन्तम्', "अनन्तागमा" इत्यादिवचनादिति गाथार्थः ॥९४९॥ द्वारम् ॥

अथ वक्तव्यता। सा च त्रिविधा, स्वसमयवक्तव्यतादिभेदात्। आह च—

समओ जो सिद्धंतो सो सपरोभयगओ तिविहभेओ।
तत्थ इमं अज्झयणं ससमयवत्तव्वयानिययं ॥९५०॥

परसमओ उभयं वा सम्मद्दिट्ठिस्स ससमओ जेणं।
तो सव्वज्झयणाइं ससमयवत्तव्वनिययाइं ॥९५१॥

मिच्छत्तसमूहं सम्मत्तं जं च तदुवगारम्मि।
वट्टइ परसिद्धंतो तो तस्स तओ ससिद्धंतो ॥९५२॥

सावज्जजोगविरई अज्झयणऽत्थाहिगार इह सो य।
भण्णइ समुदायत्थो ससमयवत्तव्वयादेसो ॥९५३॥

अहुणा य समोयारो जेण समोयारियं पइद्दारं।
सामइयं सोऽणुगओ लाघवओ नो पुणो वच्चो ॥९५४॥

'समओ' इत्यादि। सुगमा ॥९५०॥

केन कारणेनेत्यत आह—'पर' इत्यादि। पूर्वार्द्धमसकृद् भावितभावार्थम्। 'तो' इत्यादि स्पष्टम् ॥९५१॥

अपि च—'मिच्छत्ते'त्यादि। स्पष्टा ॥९५२॥ द्वारम् ॥

(अर्थाधिकारः) 'सावज्जे' इत्यादि। 'इहाध्ययनार्थाधिकारो सावद्ययोगविरतिः'। 'स च' सावद्ययोगविरतिलक्षणोऽर्थाधिकारः 'समुदायार्थो भण्यते'। असावपि च 'स्वसमयवक्तव्यतैकदेशः' संपूर्णाया इति शेषः ॥९५३॥ द्वारम् ॥

'अधुणे'त्यादि। साम्प्रतं 'समवतारः'। 'स चानुगत' इति सम्बन्धः। चकारश्चोक्तवद् भिन्नक्रम इति। सम्भवतः 'प्रतिद्वारं समवतारितत्वात् तस्य'। तत्रैतत्स्यात्—पुनरप्येतद् ग्रन्थावर्त्तनेन समवतार्यताम्। तन्न। यतो 'लाघवार्थं' ग्रन्थगौरवपरिहारार्थं 'न पुनरसौ वाच्यो'ऽन्याय्यत्वात्। तदेवमयं [1]'क्षयोपशम उपक्रामितः'[1] ॥९५४॥ इत्युपक्रमः समाप्तः।

## [निक्षेपद्वारम्]

अथ निक्षेपः। किमर्थं पुनरयं भण्यत इत्यत आह—

भण्णइ घिप्पइ य सुहं निक्खेवपयाणुसारओ सत्थं।
ओहो नामं सुत्तं निक्खेयव्वं तओऽवस्सं ॥९५५॥

1...1 क्षयोपशमत उत्क्रामितः P.

ओहो जं सामण्णं सुयाभिहाणं चउव्विहं तं च ।
अज्झयणं अज्झीणं आओ झवणा य पत्तेयं ॥९५६॥
नामाइचउब्भेयं वण्णेऊणं सुयाणुसारेणं ।
सामाइयमाउज्जं चउसुंपि कमेण भावेसु ॥९५७॥
जेण सुहप्पज्झयणं अज्झप्पाणयणमहियमयणं वा ।
वोहस्स संजमस्स व मोक्खस्स व जं तमज्झयणं ॥९५८॥
अज्झीणं दिज्जंतं अव्वोच्छित्तिनयओऽत्थिकाय व्व ।
आओ नाणाईणं झवणा पावाण कम्माणं ॥९५९॥
सामाइयंति नामं विसेसविहियं चउव्विहं तं च ।
नामाइं निरुत्तीए सुत्तप्फासे य तं वोच्छं ॥९६०॥
इह जइ कीस निरुत्ते तत्थ व भणिएह भण्णए कीस ।
निक्खेवमित्तमिहइं तस्स निरुत्तीएँ वक्खाणं ॥९६१॥
तो कीस पुणो सुत्ते सुत्तालावो तओ न तन्नामं ।
इह उण नामं नत्थं तं वक्खायं निरुत्तीए ॥९६२॥
इह पुण कीस न भण्णइ जं निक्खेवो इमो स निज्जुत्ती ।
निज्जुत्ती वक्खाणं निक्खेवो नासमेत्तं तु ॥९६३॥
नणु निज्जुत्तिअणुगमे भणिया एसावि नासनिज्जुत्ती ।
सच्चमियं निज्जुत्ती इयं तु निक्खेवमित्तस्स ॥९६४॥
निक्खेवमित्तमहवा अत्थवियारो य नासजुत्तीए ।
सद्दगओ य निरुत्ते सुत्तप्फासम्मि सुत्तगओ ॥९६५॥
जो सुत्तपयन्नासो सो सुत्तालावयाण निक्खेवो ।
इह पत्तलक्खणो सो निक्खिप्पइ न पुण किं कज्जं ॥९६६॥
सुत्तं चेव न पावइ इह सुत्तालावयाण कोऽवसरो ।
सुत्ताणुगमे काहिइ तण्णासं लाघवनिमित्तं ॥९६७॥
इह जइ पत्तोवि तओ न नस्सए कीस भण्णए इहइं ।
दाइज्जइ सो निक्खेवमेत्तसामण्णओ नवरं ॥९६८॥
संपयमोहाईणं संनिक्खित्ताणमणुगमो कज्जो ।
सोऽणुगमो दुविगप्पो नेओ निज्जुत्तिसुत्ताणं ॥९६९॥
निज्जुत्ती तिविगप्पा नासोवग्घायसुत्तवक्खाणं ।
निक्खेवस्साणुगया उद्देसाईहुवग्घाओ ॥९७०॥

'भण्णइ' इत्यादि । 'भण्यते' व्याख्यायते व्याख्यात्रा । 'गृह्यते चा'दीयते च श्रोत्रा । 'सुख'मक्लेशेन । 'निक्षेपपदानुसारतो' निक्षेपाख्यानुयोगद्वारोपष्टम्भेन । 'शास्त्रं' सामायिकाध्ययनादि । यत'स्ततोऽवश्यं' नियमे'नौघो नाम सूत्रं च निक्षेप्तव्यम्' । ओघनामनिष्पन्नसूत्रालापकभेदेन त्रिविधत्वादिति गाथार्थः ॥९५५॥

तत्रौघनिष्पन्न इति किमुक्तं भवतीत्याह—'**ओहो**' इत्यादि। 'ओघो यत्सामान्यं श्रुतमित्यभिधानं तच्चतुर्विधम्। तद्यथा—'**अज्झयण**'मित्यादि पदचतुष्टयन्यास इति गाथार्थः ॥९५६॥

'**नामाद**'त्यादि। अत्र चैकैकं 'नामादिना चतुर्भेदं व्याख्यायानुयोगद्वारानुसारेण'। किमत आह—'**सामायिकं**' सामायिकाध्ययनम् 'आयोज्यं' वक्तव्यं 'चतुर्ष्वपि क्रमेण' आनुपूर्व्या '**भावेसु**'त्ति भावाध्ययने भावाक्षीणे भावाये भावक्षपणायां चेत्यर्थः। इति गाथार्थः ॥९५७॥

एकैकस्याध्ययनादेर्निरुक्तमाह—'**जेणे**'त्यादि। 'येन' कारणेन 'शुभं'—प्रशस्तम्। 'अध्यात्मं' चेतः। ततश्च शुभमध्यात्मं जनयतीति '**सुहप्पज्झयणं**'। 'प'-कार लोपः प्राकृतशैल्या। ततो '**तमज्झयणं**' ति सम्बन्धः। अथवा '**अज्झप्पाणयणं**' ति 'प'का'रा'कार'ण'कारलोपात्। शेषं प्राग्वत्। '**वा**' इत्यथवा। 'अधिकं' विशेषेण 'अयनं' गमनं प्रापणम्। कस्येत्याह—'बोधस्य संयमस्य वा[1], कारणत्वात्। 'मोक्षस्य वे'ति गाथार्थः ॥९५८॥

'**अज्झीण**'मित्यादि। स्पष्टा। इत्ययमोघनिष्पन्न उक्तः ॥९५९॥

साम्प्रतं नामनिष्पन्नः। तत्र—'**सामाइये**'त्यादि। 'सामायिकमित्येतन्नाम विशेषविहितं', न सामान्यकृतम्। 'तच्चा'स्य विशेषनाम कतिविधमित्यत आह—'चतुर्विधं' चतूरूपम्। तच्चास्य वर्त्तते। कथमित्यत आह—'नामादि' नामसामायिकादि। इदं च निक्षेपमात्रम्। निक्षेपश्च क्वचिद् व्याख्येय इति भावनीयम्। ततः किमत आह—'**तं**'ति तदस्य नामादिनिक्षेपं '**वोच्छं**' वक्ष्ये। क्वेत्याह—'**निरुत्तीए**'त्यादि। अनुगमाख्यद्वारप्रतिद्वारे। तथा 'सूत्रस्पर्शे च'—अनुगमाख्यद्वारविशेष एव। सुत्तफासगतं नामादि सौत्रं निक्षेपं कृत्वा तद्व्याख्यानादिति गाथार्थः ॥९६०॥

इदानीमतिगहनद्वार[2]विवेचनार्थं चोद्यं कारयन्नाह—'**इहे**'त्यादि। 'इह'—अस्मिन्नवसरप्राप्ते नामनिष्पन्नेऽपि[3] निक्षेपे 'यदि' सामायिकं नाम प्राप्तं ततः '**कीस निरुत्ते**'त्ति किमिति निरुक्तौ वक्ष्यते[4]? 'अथ तत्रेदं वक्ष्यते[5] इह किमिति भण्यते'? उच्यते, '**निक्खेवमेत्तमिहइं तस्स**'त्ति। 'तस्य'—सामायिकनामादे-'रिह'—नामनिष्पन्ने निक्षेपे निक्षेपद्वारांशे 'निक्षेपमात्र'मधिक्रियते। तच्च कृतमेव नामसामायिकमित्येवमादिवचनात्। '**निरुत्तीए वक्खाणं**'त्ति निरुक्तौ तु व्याख्यानं तस्याधिक्रियते। निक्षेपव्याख्यानयोश्च महान् विशेष इति गाथार्थः ॥९६१॥

आह—यद्येवं '**तो कीस**' इत्यादि। यदि निक्षेपद्वारन्यस्तं सामायिकनाम निरुक्तौ व्याख्यायते 'ततः किमिति पुनः' भूयो द्वितीयां वारां 'सूत्रे' सूत्रस्पर्शिकायां तद्वक्ष्यते[6], येनोच्यते "सुत्ताफासे व तं वोच्छं"ति। "करोमि भदंत! सामायिक"-

---

1 च P. 2 P adds कलाप. 3 P drops अपि.
4 से P. 5 से P. 6 से P.

मिति प्रवन्धेन। तस्मात् सर्वमेतदसम्बद्धमिति। उच्यते—न, अभिप्रायापरिज्ञानात्। तथाहि—'सूत्रालापकः खल्वसौ' त्रुटिमात्रसमाननिर्देशभावी। अनभिमतप्रतिषेधमाह—'**ण तं णाम**'न्ति, न तन्नाम। सूत्रालापकव्याख्या सा, न तु नाम्नो व्याख्या सा, तस्या निरुक्त[1]विषयत्वात्। असम्बद्धतां परिहरन्नाह—'इह च' नामनिक्षेपे सामायिक'नाम न्यस्तं, तद् व्याख्यानं तु निरुक्तौ'। अतः सुव्यवस्थितमादिप्रतिज्ञागाथासूत्रमिति गाथार्थः ॥९६२॥

आह—परिहृतं नामैतत्। तथापि 'इहे'त्यादि। 'इह **पुण**'त्ति इहैव निक्षेपद्वारे तन्नामनिक्षेपमात्रं कृत्वा लाघवार्थमध्ययननामार्थनिरूपणमपि '**कीस ण भण्णइ**' किमिति न क्रियत इत्यर्थः। उच्यते—'यद्' यस्मा'दयं' तन्नामादिनिक्षेपो निक्षेपद्वारम्। '**सा णिज्जुत्ति**'त्ति सा निरुक्तिर्नियुक्तिर्वर्त्तते। ततो निक्षेपमात्रे व्याख्यानावसरः। तथा चाह—'**णिज्जुत्ती वक्खाणं**' उपोद्घातस्येति शेषः। निक्षेपस्तु 'न्यासमात्रं' रचनामात्रमिति महदन्तरमिति गाथार्थः ॥९६३॥

अत्रैवान्येन करणेनाह—'**नणु**' इत्यादि। 'नन्वेषाऽपि न्यासनिर्युक्तिः' नन्वेषाऽपि निक्षेपस्य व्याख्या '**भणिता**' प्रतिपादिता। क्वेत्याह—'**णिज्जुत्तिअणुगमे**' अनुगमाख्यद्वारस्याद्यभेदे। कः प्रत्यय इति चेत्। उच्यते—यतः श्रूयन्ते गायन्तो निक्षेपनिर्युक्त्यनुगमोऽनुगतो यदिदमधो निक्षिप्तम्, अत इहैव निक्षेपार्थव्याख्याऽप्यस्तु, किमुच्यते तस्य निरु[2]क्त्यादौ व्याख्येति? उच्यते—'सत्यमियं निर्युक्तिर्न्यासस्य', निक्षेपस्येत्यर्थः। 'किं त्वियं नामादिनिक्षेपमात्रस्यैव' नामादिन्यासस्वरूपनिरूपणमात्रार्थैवेयं, न तु निक्षेपशब्दार्थनिरूपणार्थापि, तस्य निरुक्तिविषयत्वादिति गाथार्थः ॥९६४॥

पुनरपीदं प्रकरणं विषयविभागे व्यवतिष्ठापयिषुराह—'**णिक्खेव**' इत्यादि। 'अथवा' निक्षेपद्वारे सामायिकस्य '**णिक्खेवमेत्त**'। '[3]तस्य अण्णं भासिज्जइ। तथा 'तदर्थविचारमात्रं तु न्यासनिर्युक्तौ' निक्षेपनिर्युक्तौ। यथा "जस्स जीवस्स वे"-त्येवमादि। 'निरुक्तौ तु शब्दविचारः'। 'सूत्रस्पर्शे च सूत्रगत' एव भविष्यति। सूत्रार्थपर्यालोचनारूपत्वात्, नतु सामायिकनाम्न इति ॥९६५॥

नामनिष्पन्नो गतः। सूत्रालापकनिष्पन्नमाह—'**जो**' इत्यादि ॥ '**सुत्त**'-मित्यादि। 'यः सूत्रपदानां' नामादि'न्यासः' सोऽयम्। 'स चेह प्राप्तावसरोऽपि न निक्षिप्यते'। आह—'**किं कज्जं**'? उच्यते—'इह सूत्राप्राप्तेस्तदालापकानामविभागः, यत एवं तस्माल्लाघवार्थं सूत्रानुगमे न्यासं करिष्यत' इति गाथार्थः ॥९६६-९६७॥

अत्राप्याह—'इहे'त्यादि। 'इह यद्यसौ प्राप्तोऽपि सन्न न्यस्यते किं तेनोक्तेन'? तद्यथासूत्रालापकनिष्पन्नश्चेति। उच्यते, 'निक्षेपमात्रमङ्गीकृत्योपदर्श्यत एव नवरं' केवलं, न तूपन्यस्यते, ग्रन्थगौरवप्रसङ्गात्। इत्युक्तः सूत्रालापकनिक्षेपः। तदुक्तौ च निक्षेप इति ॥९६८॥

1 क्ति P. 2 रु P. 3 र्‍ु P. 4 P adds न.

## [अनुगमद्वारम्]

अथ तृतीयद्वारसम्बन्धनार्थमाह—'संपत'मित्यादि । 'साम्प्रतमोघादीनां निक्षिप्तत्वादनुगमः कार्यं' इत्यनुगमः प्राप्तः । 'स चानुगमो द्वेधा—सूत्रानुगमो निर्युक्त्यनुगमश्चे'ति गाथार्थः ॥९६९॥

तत्र तावन्निर्युक्त्यनुगमस्त्रिविधः—निक्षेपनिर्युक्त्यनुगम उपोद्धातनिर्युक्त्यनुगमः सूत्रस्पर्शनिर्युक्त्यनुगमश्चेति । आह च—'निज्जुत्ती'त्यादि । पूर्वार्द्धमुक्तार्थम् । तत्र 'निक्षेपस्यानुगता' निक्षेपमात्रस्यावसिता, सैवास्य व्याख्या यन्न्यासमात्रमितिकृत्वा ॥द्वारम्॥ त'थोद्देशादिभि'र्द्वारै'रुपोद्धातः' शास्त्रोत्पत्तिरनुगम्यत इत्यध्याहारः ॥९७०॥

तद्यथा—

**उद्देसे निद्देसे य निग्गमे खेत्त काल पुरिसे य ।**
**कारण पच्चय लक्खण नए समोयारणाऽणुमए ॥९७१॥ नि० ७८॥**

**किं कइविहं कस्स कहिं केसु कहं केच्चिरं हवइ कालं ।**
**कइ संतरमविरहियं भवाऽऽगरिस फासण निरुत्ती ॥९७२॥ नि ७९।**

'उद्देस' इत्यादि ॥ 'किमि'त्यादि ॥९७१-९७२॥ निर्युक्तिगाथा ७८-७९॥

**अज्झयणं उद्देसोऽभिहियं सामाइयंति निद्देसो ।**
**सामण्णविसिट्ठाणं अभिहाणं सत्थनामाणं ॥९७३॥**

**दारोवन्नासाइसु निक्खेवे ओहनामनिप्फन्ने ।**
**उद्देसो निद्देसो भणिओ इह किं पुणग्गहणं ॥९७४॥**

**इह विहियाणमणागयगहणं तत्थऽन्नहा कहं कुणउ ।**
**तेसिं गहणमकाउं दारन्नासाइकज्जाइं ॥९७५॥**

**अहवा तत्थुद्देसो निद्देसोऽविय कओ इहं तेसिं ।**
**अत्थाणुगमावसरे विहाणवक्खाणमारद्धं ॥९७६॥**

**अन्ने उ विसेसमिहं भणंति नोद्देसवद्धमेयंति ।**
**जाणावियमज्झयणं समासदारावयारेणं ॥९७७॥**

**अंगाइपण्हकाले कालियसुयमाणसमवयारे य ।**
**तमणुद्देसयवद्धं भणियं चिय इह किमब्भहियं ॥९७८॥**

**नणु निग्गमो गउ च्चिय अत्ताणंतरपरंपरागमओ ।**
**तित्थराईहिंतो आगयमेयं परंपरया ॥९७९॥**

**इह तेसिं चिय भण्णइ निद्देसो निग्गमो जहा तं च ।**
**उवयातं तेहिंतो खेत्ताइविसेसियं बहुहा ॥९८०॥**

अज्झयणलक्खणं नणु खओवसमियं गुणप्पमाणे वा ।
नाणागमाइगहणे भणियं किमिहं पुणो गहणं ॥९८१॥

निद्देसमेत्तमुत्तं वक्खाणिज्जइ सवित्थरं तमिह ।
अहवा सुयस्स भणियं लक्खणमिह तं चउण्हंपि ॥९८२॥

भणिया नयप्पमाणे भण्णंतीहं नया पुणो कीस ।
मूलद्दारे य पुणो एएसिं को णु विणिओगो ॥९८३॥

जे च्चिय नयप्पमाणे ते च्चिय इहइं सवित्थरा भणिया ।
जं तमुवक्कममेत्तं वक्खाणमिणं अणुगमोत्ति ॥९८४॥

अहवा तत्थ पमाणं इहं सरूवावहारणं तेसिं ।
तत्तो वक्कंता वा इह तदणुमयावतारोऽयं ॥९८५॥

सामाइयसमुदायत्थमेत्तवावारतप्परा एए ।
मूलद्दारनया पुण सुत्तप्फासोवओगपरा ॥९८६॥

जीवगुणो नाणंति य भणिए इह किंति का पुणो संका ।
तं चिय किं जीवाओ अण्णमणन्नंति संदेहो ॥९८७॥

भणिए खओवसमि ंति किं पुणो लब्भए कहं तंति ।
इह सो च्चिय चिंतिज्जइ किह लब्भइ सो खओवसमो ॥९८८॥

किं बहुणा जमुवक्कमनिक्खेवेसु भणियं पुणो भणइ ।
अत्थाणुगमावसरे तं वक्खाणाहिगारत्थं ॥९८९॥

सत्थसमुत्थाणत्थो पायेणोवक्कमो तहाऽयंपि ।
सत्थस्सोवग्घाओ को एएसिं पइविसेसो ॥९९०॥

उद्देसमेत्तनियओ उवक्कमोऽयं तु तव्विवोहत्थं ।
पाएणोवग्घाओ नणु भणिओऽयं जओऽणुगमो ॥९९१॥

नासस्स व संबंधणमुवक्कमोऽयं तु सुत्तवक्खाए ।
संबंधोवग्घाओ भण्णइ जं सा तदंतम्मि ॥९९२॥

'अज्झे'त्यादि । इह शास्त्रा'ध्ययनमि'ति सामान्याभिधान'मुद्देश' उच्यते । 'सामायिकमिति' च विशेषोक्ति'र्निर्देशः' । अमुमेवार्थं पश्चादर्द्धेनाह—'**सामण्णे**'-त्यादि । तत्र '**अभिधाणं**' इत्यभिधानमुद्देसनिर्देशौ । कयोरित्यत आह—'**सत्थणामाणं**'ति । शास्त्रं च नाम शास्त्रनामनी तयोः । किंविशिष्टयोः ? 'सामान्यविशिष्टयो'रोघविशेषविशिष्टयोरित्यर्थः । इति गाथार्थः ॥९७३॥

आह—यद्येवं न वाच्यमेतद् द्वारद्वयं, प्रागेव गतार्थत्वात् । अनुयोगद्वारप्रारम्भवेलायामेव अस्य च सामायिकाध्ययनस्य चत्वारीत्याद्युक्तत्वात् । आह च चोदकः—"**दारो**' इत्यादि । 'द्वारोपन्यासस्याऽऽदावेतौ भणितौ', "अस्य च सामायिकाध्ययनस्ये"ति वचनात् । 'ओघनामनिष्पन्ननिक्षेपयोश्चेतावुक्तौ',

"अध्ययनं सामायिक"मिति वचनात् । अत इह—उपोद्घाते 'किं पुनरनयोर्ग्रहण-मि'ति गाथार्थः ।।९७४।।

उच्यते—'इहे'त्यादि । 'इहो'पोद्घातस्वस्थान'वि[1]हितयोः' सतोस्तयोः सूत्रद्वारोपन्यासादा'वनागतग्रहणम'कारि । इत्थं चैतत् । 'अन्यथा कथं करोतु तयोर'ध्ययनसामायिकरूपयोरुद्देशनिर्देशयो'र्ग्रहणमकृत्वा द्वारोपन्यासादौ कार्याणि' उपक्रमादिद्वारन्यासादीनि, आकाशस्येवेति प्रतीतिः स्यादिति गाथार्थः ।।९७५।।

**अहवे**'त्यादि । 'अथवा तत्र' द्वारोपन्यासादावनयोस्तन्मात्रतैव पठिता, 'इह' तूपोद्घातनिर्युक्तौ 'तयोर्विधानतो लक्षणतश्च व्याख्यानं प्रारब्धम्' । किमिति ? 'अर्थानुगमावसरत्वात्' साम्प्रतकालस्य । तदनेन कालक्रमेणाध्ययनं व्याख्यातुं पार्यते न हेलयैवेत्येतदाहेति गाथार्थः ।।९७६।।

**'अण्णे तु'** इत्यादि । 'अन्ये तु' व्याख्यातार 'इहो'पोद्घाते द्वारोपन्यासाद्युक्तयोरप्यनयो'र्विशेषं भणन्ति' । किंविशिष्टमित्याह—'इदमध्ययनं नोद्देशकप्रतिबद्धमिति ज्ञापितं' भवति । केनेत्याह 'समासद्वारावतारेण' । अङ्गश्रुतस्कन्धाध्ययनसमासद्वारावतारेणेहोद्देशनिर्देशाभिधानेनेत्यर्थः । इति गाथार्थः ।।९७७।।

आह—अस्त्वयं न्याय इति । तन्न, पौर्वापर्यानवबोधात् । तथाहि—**'अंगादी'**-त्यादि । 'अंगादिपण्हकाले तमणुद्देसयबद्धं भणियं चिय' "तं णो उद्देसो णो उद्देसत्ति"वचनात् । तथा 'कालियसुतसमोतारे जं भणियं' अर्थात् "ण संखेज्जा उद्देसा।" 'इह किमभ्यधिकम'ज्ञातं ज्ञाप्यते ? संस्मार्यत इति चेत्, नत्व(त्व?)तिप्रसङ्ग इति गाथार्थः ।।९७८।।

तदेवमाद्यं द्वारद्वयं शोधितमिदानीं तृतीयशुद्धये प्राह । आह—**'णणिव'**-त्यादि ।।९७९।।

नन्वागमद्वारे निर्गमोक्तेः किमितीह भूय उच्यते ? उत्तरमाह—**'इहे'**-त्यादि । 'इह'निर्गमे उपोद्घाते वा 'तेषामेव' जिनगणधराणां 'भण्यते' प्ररूप्यते । क इत्यत आह—'निर्देशः', क एते जिनादय इति । तथा 'निर्गमो' निष्कासो, मिथ्यात्वतमसः । 'तच्च' सामायिकं 'यथा तेभ्यः प्रसूतम्' । किंविशिष्टम् ? 'क्षेत्रादिविशेषितं' द्रव्यक्षेत्रकालपुरुषकारणप्रत्ययादिविशिष्टम् । 'बहुधा' नानेति गाथार्थः ।।९८०।।

लक्षणमधिकृत्याह—**'अज्झयण'**मित्यादि । 'नन्वध्ययनलक्षणं क्षायोपशमिक'[2]युक्तमेव नास्ति[2] इह किं भूयो लक्षण ग्रहणम्' ? तथा 'गुणप्रमाणे वा णाणमिदं भणितं, तत्राप्यागमादिग्रहणे भणितमिदमतः किमितीह लक्षणग्रहण-मि'ति गाथार्थः ।।९८१।।

---

1 नि P. 2...2 मुक्तमेव नाम्नि P.

उच्यते—'**णिद्देस**' इत्यादि। तस्य लक्षणस्यावस्ता('न्निर्देशमात्रमुक्तमिह तु तत्सविस्तरं व्याख्यायत' इति को दोषः ? 'अथवा'ऽवस्तात् 'सुतसामाइयस्स तल्लक्षणमुक्तम्, इह तु चतुर्णामपि' सामायिकानामुच्यते। ''सम्मत्त सुतं देसे सव्वे तह होइ सामईयं''ति गाथार्थः ॥९८२॥

नयानङ्गीकृत्याह—'**भणिता**' इत्यादि। ''गुणनये''ति वचनाद् 'भणिता नयद्वारे नया इह किमुच्यन्ते' ? तथा 'मूलद्वारे चतुर्थे' भणिताः। 'को वाऽनयोर्द्वारयोर्विनियोग' इति गाथार्थः ॥९८३॥

उच्यते—'**जे**' इत्यादि। 'आवस्त्या एवेह सविस्तरमुच्यन्ते'। द्वितीयं परिहारमाह—'यस्मात्तत्र तेषामुपक्रमणमात्रकमुक्तमिह तु तेव्याख्यानं'—कः किमिच्छतीत्येवमादीति गाथार्थः ॥९८४॥

'**अहवे**'त्यादि। 'अथवा तत्र' मूलद्वारे 'प्रमाणं' भणितं यथा सप्त ते नया इति। 'इह तु तेषामेव स्वरूपनिरूपणम्। अथवा तत्रोपक्रान्तानामिह तदनुमतावतारो'ऽयं चिन्त्यत इति गाथार्थः ॥९८५॥

तथा—'**सामाइये**'त्यादि। नयप्रमाणोक्ता उपोद्घातोक्ताश्च नयाः 'सामायिकसमुदायार्थमात्रव्यापारपराः', न सूत्रार्थविनियोगिनः। मूलद्वारनयास्त्वेवमिति गाथार्थः ॥९८६ ॥

आह—'**जीवगुणो**' इत्यादि। पृच्छा। उच्यते, 'स एव हि गुणो गुणिनोऽर्थान्तिरमनर्थान्तरं वेति सन्देहात्' किमित्याहेति गाथार्थः ॥९८७॥

आह—'**भणिए**' इत्यादि। षड्विधनाम्नि 'क्षायोपशमिकमेतदिति भणिते पुनः कथं लभ्यत इति कोऽस्य विभागः' ? ननु तदावरणक्षयोपशमाल्लभ्यत इति को न जानाति ? उच्यते, 'इह स एवास्य कथं लभ्यत इति चिन्त्यत' इति गाथार्थः ॥९८८॥

एवमेवंजातीयानां चोद्यानां परिहारजातिमाह—'**किं बहुणे**'त्यादि स्पष्टम्। नवरमुपक्रमनिक्षेपयोरुद्देशमात्रनियतत्वात् ॥९८९॥

आह—'**सत्थे**'त्यादि। उपक्रमोपोद्घातयोरविशेषः शास्त्रसमुत्थानार्थाविशेषात् ॥९९०॥

**उच्यते**—'**उद्देसे**'त्यादि। 'उपक्रमो हि शास्त्रोद्देशनियतः, अयं चोपोद्घातः प्रायेण तदुद्दिष्टवस्तुप्रबोधनार्थः'। किमित्यत आह—'ननु भणितोऽयं यतोऽनुगमः'। एतदुक्तं भवति नामश्रुतेरेव शब्दार्थभेदः प्रतीयते तयोरिति विशेष इति गाथार्थः ॥९९१॥

'**णासे**'त्यादि। 'न्यासस्य' वाऽध्ययनसम्बन्धिनः 'सम्बन्धनमुपक्रमो' वर्त्तते, आद्यत्वात् तस्य चानन्तरत्वात्। 'अयं तूपोद्घातः सूत्रव्याख्यायाः'

सूत्रव्याख्यानविधेः 'सम्बन्धः[1]', प्रथमत्वात् तस्याश्च चरमत्वात्। 'तथाहि तदन्ते सूत्रं व्याख्यायत' इति प्रतीतम् ॥९९२॥

एवमुपोद्घातणिज्जुत्तऽणुगमो संमत्तो।

संपइ सुत्तप्फासियनिज्जुत्ती जं सुयस्स वक्खाणं।
तीसेऽवसरो सा उण पत्तावि ण भण्णए इहइं ॥९९३॥
किं जेणासइ सुत्ते कस्स तई तं जया कमप्पत्ते।
सुत्ताणुगमे वोच्छिइ होहिइ तीए तया भागो ॥९९४॥
अत्थाणमिदं तीसे जइ तो सा कीस भण्णए इहइं।
इह सा भण्णइ निज्जुत्तिमेत्तसामन्नओ नवरं ॥९९५॥
तेणेदाणिं सुत्तं सुत्ताणुगमेऽभिधेयमणवज्जं।
अक्खलियाइविसुद्धं सलक्खणं लक्खणं चेमं ॥९९६॥
अप्पग्गंथमहत्थं बत्तीसादोसविरहियं जं च।
लक्खणजुत्तं सुत्तं अट्ठहि य गुणेहिं उववेयं ॥९९७॥
निद्दोसं सारवं चेव, हेउजुत्तमलंकियं।
उवणीयं सोवयारं च, मियं महुरमेव य ॥९९८॥
अप्पक्खरमसंदिद्धं सारवं विस्सतोमुहं।
अत्थोभमणवज्जं च सुत्तं सव्वण्णुभासियं ॥९९९॥

'संपती'त्यादि। 'साम्प्रतं सूत्रस्पर्शनिर्युक्त्यनुगमः। स च श्रुतव्याख्यानलक्षणस्तस्यावसरः। सा[2] पुनरहि प्राप्तलक्षणा[3]ऽपि न भण्यते'। किमित्यत आह—'किं जेणा[4]' इत्यादि। 'येनासति सूत्रे कस्यासाविति'। तथाहि—सूत्रं स्पृशतीति सूत्रस्पर्शिका। तस्य चेहाद्याप्यभावात् किं स्पृशत्विति। ततश्च तत्सूत्रं 'यदा' यस्मिन् काले 'क्रमप्राप्ते सूत्रानुगमे उच्चारयिष्यति भविष्यति तस्यास्तदाऽवसर' इति गाथार्थः ॥९९३-९९४॥

आह—'अत्थाण'मित्यादि। 'यद्येवं किमिह सोच्यते'? उच्यते, 'निर्युक्त्यनुगमसामान्यात्' निक्षेपद्वारे निक्षेपसामान्यात्, सूत्रालापकनिक्षेपवत् ॥९९५॥ समाप्तो निर्युक्त्यनुगमः॥

येन चैवम्—'तेण' इत्यादि। 'तेनेदानी'मनेनैव सम्बन्धेन सूत्रस्यानुगमोऽनुसरणमिति 'सूत्रानुगमस्तस्मिन् सूत्रमभिधेयम्'—अभिधातव्यमवसरप्राप्तत्वात्। किं यथाकथञ्चिदेव? नेत्याह—'अनवद्यं' निर्दोषम्। किमिति? सर्वज्ञप्रणीतत्वात्। सर्वज्ञप्रणीतत्वेन च भवजलधिपोतभूतत्वात्। भवजलधिपोतभूतस्य च भक्तिबहु-

1 P has सम्बन्धनं for सम्बन्धः. 2 स P.
3 णो P. 4 P has जेण for किं जेणा.

इति । अर्थपुनरुक्तमिन्द्रः शक्र इति । अर्थादापन्नस्य स्वशब्देन पुनर्वचनं यथा—पीनो[1] देवदत्तो दिवा न भुङ्क्त इत्यर्थादापन्नं रात्रौ भुङ्क्त इति । तत्र यो ब्रूयात् दिवा न भुङ्क्ते रात्रौ भुङ्क्त इति स पुनरुक्तमाह । व्याहतं नाम यत्र पूर्वेणापरं विहन्यते, यथा—"कर्म्म चास्ति फलं चास्ति, कर्त्ता नास्ति तु कर्मणा"-मित्येवमादि । अयुक्तमनुपपत्तिक्षमं यथा—

"तेषां कटतटभ्रष्टैर्गजानां मदविन्दुभिः ।
व्या[2]वर्त्तत नदी घोरा, हस्त्यश्वरथवाहिनी ॥१॥"

इत्येवमादि । 'क्रमभिन्न'मित्यादि । क्रमभिन्नं यत्र यथासंख्यमनुदेशो न क्रियते । यथा—स्पर्शनरसनघ्राणचक्षुःश्रोत्राणामर्थाः स्पर्शरसगन्धवर्णशब्दा इत्यादि[3] वक्तव्ये स्पर्शरूपशब्दगन्धरसा इति ब्रूयादित्येवमादि । वचनभिन्नं वचनव्यत्ययः, यथा—वृक्षावेतौ पुष्पिताविति वक्तव्ये वृक्षावेते पुष्पित[4] इत्येवमादि । विभक्तिभिन्नं विभक्तिव्यत्ययः, यथैष वृक्ष इति वक्तव्ये एष वृक्षमित्याह । लिङ्गभिन्नं लिङ्गव्यत्ययः, यथेयं स्त्रीति वक्तव्ये अयं स्त्रीत्याह । अनभिमतमनुपदिष्टं स्वसिद्धान्ते, यथा—सप्तमः पदार्थो दशमं वा द्रव्यं **वैशेषिकस्य,** प्रधानपुरुषाभ्यामधिकं **सांख्यस्य,** चतुःसत्यातिरिक्तं च **शाक्यस्ये**-त्येवमादि । अपदं पद्यविधावन्यच्छन्दोऽधिकारेऽन्यच्छन्दोऽभिधानम्, यथाऽऽर्यापदे **वैतालीयादिपदाभिधानम्** । स्वभावहीनं यद्वस्तुनः स्वभावतोऽन्यथावचनम्, यथा—शीतोऽग्निः मूर्त्तिमदाकाशमित्येवमादि । व्यवहितमन्तर्हितम् । तथाहि—यत्र प्रकृतमुत्सृज्याप्रकृतं व्यासतोऽभिधाय पुनः प्रकृतमधिक्रियते, यथा—हेतुकथामधिकृत्य सुप्तिङन्तपदलक्षणप्रपञ्चम्, अर्थशास्त्रं वाऽभिधाय पुनर्हेतुवचनमित्येवमादि । कालेत्यादि । कालदोषोऽतीतादिकालव्यत्ययः, यथा—रामो वनमनुप्रविशति वध्यते कर्ण इत्येवमादि । यतिदोषो यतिव्यत्ययः । यतिर्विच्छेदस्तस्याकरणमस्थानकरणं वा यथा—**स्रग्धरा**-यास्त्रिसप्तकेष्वकरणमन्यत्र वा करणमित्येवमादि । छविदोषश्छविविहीनता । छविर्ह्यलङ्कारविशेषस्तेजस्विता । समयविरुद्धं यत् स्वसिद्धान्तविरुद्धम् । यथा—**सांख्यस्यासत्कारणे** कार्यम्, सद्वैशेषिकस्येत्येवमादि । वचनमात्रमहेतुकं यथेष्ट-भूदेशलोकमध्याभिधानवत् । अर्थापत्तिदोषो यत्रार्थादनिष्टापत्तिः । यथेह ब्राह्मणो न हन्तव्य इत्यर्थादब्राह्मणघातापत्तिः । असमासदोषः समासव्यत्ययः । यत्र वा समासविधौ सत्यसमासवचनम् । यथा—राज्ञः पुरुषोऽयमित्येव-मादि । उपमादोषो हीनाधिकोपमानुपमाभिधानम् । यथा मेरुः सर्ष-पोपमः, सर्षपो मेरूपमः, मेरुः समुद्रोपम इत्येवमादि । रूपकदोषः स्वरूपावयवव्यत्ययः । यथा—पर्वतरूपावयवानां [5]पर्वतरूपानभिधानं[5] समुद्रा-वयवानां चाभिधानमित्येवमादि । अनिर्देश्यदोषो यत्रोद्दिश्य पदानामेक-

---

1 P drops पीनो   2 व्या P.   3 P drops आदि.
4 P has पुष्पितौ for पुष्पितः.   5...5 पर्वतेनाभिधानम् P.

वाक्यभावो न क्रियते। यथेह देवदत्तः स्थाल्यामोदनं पचतीति वक्तव्ये पचतिशब्दानभिधानम्। पदार्थदोषो यत्र वस्तुपर्यायवाचिनः पदार्थस्यार्थान्तर-परिकल्पनमाश्रीयते। यथेह द्रव्यस्वरूपपर्यायवाचिनां सत्तादीनां द्रव्यादर्थान्तर-परिकल्पनमुलूकस्य। सन्धिदोषो विश्लिष्टसंहितत्वं व्यत्ययो वेति। एभिर्विमुक्तं 'द्वात्रिंशद्दोषरहितं लक्षणयुक्तं सूत्रं' तदिति वाक्यशेषः। 'द्वात्रिंशद्दोषरहितं यच्चे'ति वचनात्तच्छन्दनिर्देशो गम्यते। तथा'ऽष्टाभिश्च गुणैरुपेतं' तत्, लक्षणयुक्तमिति वर्त्तते। ते चेमे गुणाः—'णिद्दोस'मित्यादि। 'निर्दोषमु'क्तवत्। 'सारवद्' बहुपर्यायं गोशब्दवत् सामायिकाभिधानवद्वा। 'हेतुयुक्तमु'-पपत्त्युपेतम्। 'अलङ्कृतमु'पमादिभिः। 'उपनीतमु'पनयोपसंहृतम्। 'सोपचारम'-ग्राम्याभिधानम्। 'मितं' वर्णादिनियतपरिणाम्। 'मधुरं' श्रवणहारीति श्लोकार्थः ॥९९६-९९८॥

तथा—'अप्पक्खरे'त्यादि। 'असंदिग्ध'मसंशयं न यथा सैन्धवाभिधानेऽश्वलवणपुटपुरुषाभिधानादिसंशयः। अल्पाक्षरं सारवच्चोक्तम्। अन्यपरिपाट्या [1]'चायमचोद्यम्'[1]। 'विश्वतोमुख'मनेकमुखमनुसूत्रमनुयोगचतुष्टयाभिधानात्। 'सारव'त्तु प्रतिमुखमनेकार्थाभिधायकमित्यपुनरुक्तम्। वै-हि-हकारादयोऽनेकार्थाः पदच्छिद्रपूरणायैवोपादीयमानाः स्तोभका इत्युच्यते। 'स्तोभकः' क्षेपकस्तद्विरहा'दस्तोभकः'। 'अनवद्य'मगर्ह्यमित्यादिलक्षणम्। इ"त्यल्पग्रन्थमहार्थमि"त्यादिग्रहणकगाथार्थः ॥९९९॥

सुत्तेऽणुगए सुद्धेत्ति निच्छिए तह कए पयच्छेए।
सुत्तालावयनासे निक्खित्ते सुत्तफासो उ ॥१०००॥

एवं सुत्ताणुगमो सुत्तालावगगओ य निक्खेवो।
सुत्तप्फासियनिज्जुत्ती नया य वच्चंति समयं तु ॥१००१॥

सुत्तं पयं पयत्थो संभवओ विग्गहो वियारो य।
दूसियसिद्धी नयमयविसेसओ नेयमणुसुत्तं ॥१००२॥

पयमत्थवायगं जोयगं च तं नामियाइ पंचविहं।
कारग-समास-तद्धिय-निरुत्तवच्चोऽविय पयत्थो ॥१००३॥

परबोहहिओ वऽत्थो किरिया-कारगविहाणओ वच्चो।
पज्जायवयणओऽविय तह भूयत्थाभिहाणेणं ॥१००४॥

पच्चक्खओऽहवा सोऽणुमाणओ लेसओ व सुत्तस्स।
वच्चो व जहासंभवमागमओ हेउओ चेव ॥१००५॥

पायं पयविच्छेओ समासविसओ तयत्थनियमत्थं।
पयविग्गहोत्ति भण्णइ सुद्धपए सो न संभवइ ॥१००६॥

1—1 चेदमित्यचोद्यं P.

सुत्तगयमत्थविसयं व दूसणं चालणं मयं तस्स ।
सद्दत्थण्णायाओ परिहारो पच्चवत्थाणं ॥१००७॥

एवमणुसुत्तमत्थं सव्वनयमयावयारपरिसुद्धं ।
भासेज्ज निरवसेसं पुरिसंव पडुच्च जं जोग्गं ॥१००८॥

होइ कयत्थो वोत्तुं सपयच्छेयं सुयं सुयाणुगमो ।
सुत्तालावगनासो नामाइन्नासविणिओगं ॥१००९॥

सुत्तप्फासियनिज्जुत्तिनिओगो सेसओ पयत्थाई ।
पायं सोच्चिय नेगमनयाइमयगोयरो होइ ॥१०१०॥

पायं पयविच्छेओऽवि सुत्तफासोवसंहिओ जेण ।
कत्थइ तयत्थकारगकालाइगई तओ चेव ॥१०११॥

अणुओगद्दाराणं परूवणं तप्पओयणं जं च ।
इय चेव परिसमवियमव्वामोहत्थमत्थाणे ॥१०१२॥

दाइयदारविभागो संखेवेणेह वित्थरेणावि ।
दाराणं विणिओग नाहिइ काउं जहाजोगं ॥१०१३॥

'सुत्ते' इत्यादि । तदेवं सूत्रानुगमतः 'सूत्रेऽनुगते' उच्चारिते सति यथा "करेमि भंते ! सामायिय"मित्येवमादि । तथा 'शुद्धे इति' एवं विनिश्चिते' । 'तथा' सूत्रानुगमादेव च 'पदच्छेदे कृते', यथा "करोमि भदन्त !" इत्येवमादि । तथा सूत्रालापकनिक्षेपात् 'सूत्रालापकन्यासे च निक्षिप्ते' नामकरणमित्यादिना संभवतः । ततः किमित्यत आह—'सुत्तफासो' त्ति ततः पुनः सूत्रस्पर्शो व्यापार्यत इति ॥१०००॥

## [नयद्वारम्]

ततश्च—'एव'मित्यादि । 'एवं सूत्रानुगमो'ऽनुगमद्वितीयभेदः । तथा 'सूत्रालापककृतश्च निक्षेपः' निक्षेपतृतीयभेदः । तथा 'सूत्रस्पर्शनिर्युक्तिः' निर्युक्त्यनुगमतृतीयभेदः । 'नयाश्च' मूलद्वारविहिता 'व्रजन्ति' गच्छन्ति 'समकं युगपत्, प्रतिसूत्रमित्यध्याहारः ॥१००१॥

## [व्याख्याविवरणम्]

एते चैवं व्याख्यायमाने सति गच्छन्तीत्यतो व्याख्यालक्षणमाह—'सुत्त'मित्यादि । 'सूत्र'मिति प्रथममुक्तलक्षणं सूत्रं पठनीयम् । पुनः पदच्छेद इत्यादि द्वारगाथासूत्रं कण्ठ्यम् । नवरमेवं ज्ञेयम् । अनुसूत्रं व्याख्यानं नयमतादिति ॥१००२॥

पदमधिकृत्याह—'पद'मित्यादि । इहा'र्थस्य वाचकं पदं भवति द्योतकं च' । तत्र वृक्षस्तिष्ठतीत्येवमादि 'वाचकम्' । प्रादयश्चादयश्च प्रायेण

'द्योतकम्'। एवं सामान्येन। न[1] पुनर्विशेषतः। विशेषतः[2] प्राह—'तत्पुनर्नामिकादि पञ्चविधम्'। तत्राश्व इति नामिकम्। खल्विति नैपातिकम्। परीत्यौपसर्गिकम्। धावतीत्याख्यातिकम्। संयत इति मिश्रम्। पदार्थश्चतुर्विधस्तद्यथा—'कारकवाच्यः' कारकविषयो यथा पचतीति पाचकः। 'समास'विषयो यथा राज्ञः पुरुषो राजपुरुषः। 'तद्धित'विषयो वसुदेवस्यापत्यं वासुदेवः। 'निरुक्त'विषयो भ्रमति च रौति च भ्रमर इति गाथार्थः ॥१००३॥

'पर' इत्यादि। 'अथवा परबोधहितः पदार्थ'स्त्रिधा 'वाच्यः'। तद्यथा—'क्रियाकारकविषयो' यथा—"घट चेष्टायामि"ति, घटतेऽसाविति घटः। तथा 'पर्यायवचनतोऽपि'। यथा घटः कुटः कुम्भ इति। 'तथा भूतार्थाभिधानत'श्च। ऊर्ध्वकुण्डलौष्ठायतवृत्तग्रीवत्वाद् घट इति यथेति गाथार्थः ॥१००४॥

अत्रैव प्रकारान्तरमाह—'पच्च' इत्यादि। अथवाऽसौ पदार्थो वाच्यः सूत्रस्य। कथम्? 'प्रत्यक्षतो' यथाश्रुतित एव, सम्यग्दर्शनादीनि मोक्षकारणम्। '**अहवाऽणुमाणतो सो वच्चो सुत्तस्स**'। 'अनुमान'मर्थापत्तिः। ततश्च मिथ्यादर्शनादीनि तु न। '**लेसतो व**' त्ति। अथवा लेशतोऽसौ सूत्रस्य वाच्यः। किमुक्तं भवति? समस्तपदोपादानान्न व्यस्तानीत्यर्थः। तथा—'**वच्चो वे**' त्यादि। 'अथवा यथासंभवं वाच्य'स्तद्यथा—'आगमतो' भव्याभव्याभिधानादिवत्। 'हेतुतो' न सर्वगतोऽयमात्मा, कर्तृत्वात् कुलालादिवत्। आह—मूर्तोऽपि स्यात्तत एव हेतोस्तद्वत्। उच्यते, इष्यत एव संसारीति गाथार्थः ॥१००५॥

'**पाय**'मित्यादि। इह 'बाहुल्यतः पदविच्छेदः' पदविश्लेषः। 'समासविषयः' समासाव्यभिचारी। स चानेकार्थो बहुव्रीहिविशेषणसमासादिप्रकारेण। अत'स्तदर्थनियमार्थः[3] पदविग्रहो भण्यते' पदयोः पदानां वा समासः क्रियते। यथा राज्ञः पुरुषः राजपुरुषः, श्वेतः पटोऽस्येति श्वेतपटः। 'स च शुद्धपदे न संभवत्ये'वेति गाथार्थः ॥१००६॥

'**सुत्त**' इत्यादि। 'सूत्रगतं' सौत्रेण न्यायेन। 'अर्थगत'मार्थेन न्यायेन। यच्छिष्यचोदकाभ्या 'दूषण'मारभ्यते त'च्चालनं मतम्'। 'तस्य शब्दार्थन्यायतः परिहारः प्रत्यवस्थानं' मतमिति। यथा "करोमि भदन्त! सामयिकमि"त्यत्र गुर्वामन्त्रणावचनो भदन्तशब्द इति। अतश्चोद्यते—गुरुविरहे तदभिधानमयुक्तम्, अनर्थकत्वात्। न, आचार्याभावेऽपि स्थापनाचार्यक्रियोपस्थापनज्ञापनार्थत्वात्। तद्यथाऽर्हत्प्रतिमोपसेवनम्। गुरुगुणज्ञानोपयोगाद्वा विज्ञातभावाचार्यमन्त्रणवचनाद्वा। आचार्यगुणमनोनिबन्धनाद् विनयमूलधर्मोपदर्शनात्। स्वातन्त्र्यप्रतिषेधार्थं वेति गाथार्थः ॥१००७॥

---

1 P drops न. 2 P drops विशेषतः. 3 र्थं P.

## [अनुयोगद्वारोपसंहारः]

उपसंजिहीर्षुराह—'एव' मित्यादि । 'एवं सूत्रं सूत्रं प्रति सर्वनयमतावतार-परिशुद्धमर्थं भाषेत निरवशेषं' योऽस्यार्हद्भिरुक्तः सत्यां शक्तौ । 'पुरुषं वा' नयमतानभिज्ञं 'प्रतीत्य यद्योग्यं' वस्तु तदभिदध्यादिति गाथार्थः ।।१००८।।

इह च—'होई'त्यादि । 'सुत्ते'त्यादि । सुबोधार्थम् ।।१००९-१०१०।।

किन्त्वाद्यगाथाद्यावयवापवादमाह—'पाय'मित्यादि । 'प्रायो' बाहुल्यतः । 'पदविच्छेदोऽवि'त्ति सूत्रानुगमोऽपीत्यर्थः । 'सुत्तफासोवसंहिदो'त्ति । 'सूत्रस्पर्शे'-ऽर्थप्रत्यायनफले 'उपसंहृत' उपक्षिप्तो वर्तते । केन कारणेनेत्याह—'जेण कत्थई तओ चेव' त्ति । येन क्वचिद् देशे 'तत एव' पदविच्छेदात् । 'तदत्थ'त्ति । तस्य पदस्यार्थ'स्तदर्थ'स्तस्मिन् 'गतिः' परिच्छेदो भवति । तथा 'कारकगति'श्च । तथा 'कालगतिः' । 'आदिशब्दः स्वभेदप्रख्यापकः । कालश्च वर्तमानो वृत्त एष्यंश्चे-त्यनुयोगद्वारप्रघट्टकपरिसमाप्तिरिति गाथार्थः ।।१०११।।

तत्रैतत्स्यात्—अस्थानमस्येह । अध्ययनपरिसमाप्तिविषयत्वादिति । तन्न, यतः—'अणु' इत्यादि । 'इह' व्यवधानभयादेत'त्प्ररूपणादि अस्थान एवो'क्त'म-व्यामोहार्थत्वा'च्च । तथाहि—'दाइते'त्यादि । स्पष्टा । तदेवं नन्दीअनुयोगद्वार-प्रघट्टश्च शोधित इति गाथार्थः ।।१०१२-१०१३।। [1]पेडबंधो समत्तो[1] ।

## [उपोद्घाते मङ्गलोपचारः]

।। नमः श्रुतदेवतायै ।।

अथ यथाविवक्षितमापूरयन्नाह भाष्यकारः—

**संपयमत्थाणुगमे सत्थोवग्घायवित्थरं वोच्छं ।**
**कयमंगलोवयारो सोऽतिमहत्थो त्ति काऊणं ।।१०१४।।**

'संपद'मित्यादि । 'साम्प्रत'मधुना 'अर्थानुगमे'ऽर्थानुगमद्वारे सामान्ये स्थितः 'शास्त्रस्या'धिकृत'स्योपोद्घातविस्तर' इति समासस्तं 'वोच्छं' वक्ष्ये । किंविशिष्टः सन्नित्यत आह—'कृतमङ्गलोपचारः सन्' विहिततीर्थकरादिनमस्कारः सन् । किमिति ? तस्य सकलानुयोगसाधारणत्वे'नातिमहार्थत्वात्' श्रेयोभूतत्वात् । श्रेयःप्रवृत्तौ च प्रायो विघ्नसम्भवादिति गाथार्थः ।।१०१४।।

आह—

**नणु मंगलं कयं चिय किं भुज्जो अह कयंपि कायव्वं ।**
**दारे दारे कीरइ तो कीस न मंगलग्गहणं ।।१०१५।।**

**नणु मज्झम्मिवि मंगलमाइट्ठं तं च मज्झमेयंति ।**
**सत्थमणारद्धं चिय एयं कत्तोच्चयं मज्झं ।।१०१६।।**

---

1...1 P drops it.

चउरणुओगद्दारं जं सत्थं तेण तस्स मज्झमिणं ।
साहइ मंगलगहणं सत्थस्संगाइं दाराणि ॥१०१७॥
तहवि न मज्झं एयं भणियमिहावस्सयस्स जं मज्झं ।
तं मंगलमाइट्ठं इदमज्झयणस्स होज्जाहि ॥१०१८॥
भणियं च पुव्वमेयं सव्वं चिय मंगलंति किमणेणं ।
मंगलतियबुद्धिपरिग्गहंपि काराविओ सीसो ॥१०१९॥
आवस्सयस्स तं कयमिणं तु नावासमेत्तयं किंतु ।
सव्वाणुओगनिज्जुत्तिसत्थपारंभ एवायं ॥१०२०॥
दसगालियाइनिज्जुत्तिगहणओ भणियमुवरि वा जं च ।
सेसेसुवि अज्झयणेसु होइ एसेव निज्जुत्ती ॥१०२१॥
सामाइयवक्खाणे दसालियाईण कोऽहिगारोऽयं ।
जं पायमुवग्घाओ तेसिं सामन्न एवायं ॥१०२२॥
इह तेसिं तम्मि गए वीसुं वीसुं विसेसमित्तायं ।
घेच्छिइ सुहं लहुं चिय तग्गहणं लाघवत्थमओ ॥१०२३॥
तम्हा जेण महत्थं सत्थं सव्वाणुओगविसयमिणं ।
सत्थंतरमेवऽहवा तेण पुणो मंगलग्गहणं ॥१०२४॥

'णणु' इत्यादि । 'ननु मङ्गल'मादौ 'कृतमेव' "आभिणिवोहियणाण" मित्यादिवचनात् । अतः 'किं भूय'स्तत्करणप्रयासः ? 'अथ कृतमपि क्रियते' ततः किमिति 'द्वारे द्वारे न क्रियते' ? क्रियतां कृतत्वादिहेवेति गाथार्थः ॥१०१५॥

अथाचार्यदेशीयस्तावदाह 'णणु' इत्यादि । 'ननु मध्येऽपि मङ्गलं प्रतिज्ञातं', "मज्झे" त्ति वचनात् । 'तच्चेदमि'ति का पुनरुक्ततेति ? मूलचोदक आह— 'शास्त्रस्याद्याप्यनारब्धत्वात् कौतस्त्यमेतन्मध्यम्' ? तथाहि—नैकोऽप्यस्याद्यापि वर्ण उच्चार्यते, अधस्तान्मङ्गलमात्राभिधानादिति गाथार्थः ॥१०१६॥

देशीयोऽप्यनाभोगतया द्वारद्वयमतिक्रान्तमिति मध्यम'वबुध्यमान आह— 'चउ' इत्यादि । 'चतुरनुयोगद्वारात्मकत्वाच्छास्त्रस्य' द्वारद्वयातिक्रान्त'श्चेदं मध्यं', मध्यत्वाच्चेदमपि मध्यमङ्गलम् । यच्चास्यधायि भवता शास्त्रस्याद्याप्यनारब्धत्वादिति तत्र ब्रूमः—'साहइ'त्ति । यत्पुनः शास्त्रेऽनारब्धेऽपि मध्य-'मङ्गलग्रहणं' करोति तत् 'साहइ' कथयत्येतद् यदुत 'शास्त्राङ्गानि' शास्त्रावयवाः 'द्वाराणि' अनुयोगद्वाराणि वर्त्तन्ते । शास्त्रस्वरूपमेवेत्यर्थः । इति गाथार्थः ॥१०१७॥

मौल आह—'तहवी'त्यादि । तदेवमध्ययनमात्रमङ्गीकृत्य भवत्यपि, न तु षड्विधश्रुतस्कन्धं, तया चाह—'तथाऽपि' एवमपि 'नैतन्मध्यं भणितं', सकलश्रुतस्कन्धस्येत्यध्याहारः । यत 'इहावस्सगस्स' त्ति इहावश्यकश्रुतस्कन्धस्य 'यन्मध्यं

1 P adds म.

**तं मंगलमादिट्ठ**" ति [1]तन्मङ्गलमध्यं[1] मङ्गलमादिश्यते । इदं तु कस्येति चेदाह— 'इदमध्ययनस्यास्यैव स्याद्' उपक्रमनिक्षेपयोर्गतमध्यत्वात् । अन्यथा "सत्थमणारद्धं चिय एयं कत्तोच्चयं मज्भं ?" । तस्मात् "नणु मंगलं कयं चिय" इत्यादि प्रकरणार्थ इति गाथार्थः ।।१०१८ ।।

अपिच—'**भणति**'मित्यादि । 'भणितं च प्रागेतत् सर्वमेवा'विशेषेण शास्त्रं 'मङ्गलमिति', तस्मा'त्किमनेन[2]' मध्यमङ्गलकरणप्रयासेन ? तत्रैतत्स्यात्—अनेन मध्यमङ्गलबुद्धिराधीयत इति । आह—'मङ्गलत्रयबुद्धिपरिग्रहमपि शिष्यः कारितः' प्रागेव । [3]तस्मान्निदवन्[3] इदमवशिष्यत इति गाथार्थ ।।१०१९।।

अस्येदानीं दर्प शातयन् सिद्धान्तवाद्याह—"[4]**आवस्सए**[4]"त्यादि । 'आवश्यकस्य' **आवश्यकश्रुतस्कन्धस्य** 'तद'ादिमध्यावसानमङ्गलं 'कृतम्' । 'इदं तु नावश्यकमात्र'मस्माभिर्व्याख्यातुमारभ्यते, 'किन्तु सर्वानुयोगनिर्युक्तिशास्त्रप्रारम्भ एवायम्' । अत [5]एतदविघ्न[5]संपादनाय "कयमंगलोवयारो" इत्याहेति गाथार्थः ।।१०२०।।

कुत एतदेवमित्यत आह—'**दसे**'त्यादि । '**दशकालिकादिनिर्युक्तिग्रहणात्**' सर्वानुयोगनिर्युक्ति प्रारम्भोऽयमिति । वक्ष्यति "आवस्सयस्से"त्येवमादि । यत'श्चोपरिष्टा'दप्युपोद्घातस्य परिसमाप्तौ 'भणितं यदुत सेसेसु वी'त्यादि गाथार्थः ।।१०२१।।

अत्राप्याह—'**सामाइय**[6]' इत्यादि । 'सामायिकव्याख्याने कोऽमीषां भागो' येनोच्यते "दसगा[7]लियस्स तहे"त्येवमादि ? उच्यते, किमिद[8]मकृष्टंक्वसे[8] ? 'ज'मित्यादि स्पष्टम् । 'प्रायो'ग्रहणं **दशकालिकस्यशय्यम्भवस्वामिनो** निर्गतत्वात् । तथा चाह—'**इहे**'त्यादि । 'इहे'ति सामान्योपोद्घाते । 'तेषां' मावश्यकादीनां 'तस्मिन्' उपोद्घाते 'गते'ऽतिक्रान्ते सति '**वीसुं विसुं**' पत्तेयं पत्तेयं '**विसेसमेत्तायं**' विशेषमात्रं यथाऽमुकादमुकं निर्गतमिति 'ग्रहीष्यति सुखं' सुखेनाप्रयासेन । तदपि 'लघु' शीघ्र'मेव' । मनो'लाघवार्थमिह तद्ग्रहणं' लाघवार्थोऽयमधिकार इति गाथार्थः ।।१०२२-१०२३।।

'**तम्हा**' इत्यादि । 'तस्माद् येन' कारणेन 'महार्थ'मिदं उपोद्घाताख्यं 'शास्त्रं सर्वानुयोगव्यापकत्वात्, येन वेदं शास्त्रान्तरं तेन भूयो'ऽप्यस्य 'मङ्गलग्रहणं' क्रियते ।।१०२४।।

## [तीर्थनिरूपणम्]

तद्यथा—

**तित्थयरे भगवंते अणुत्तरपरक्कमे अमियनाणी ।**
**तिण्णे सुगइगइ गए सिद्धिपहपएसए वंदे ।।१०२५।। नि० ८०।।**

---

1...1 तन्मध्य P. 2 न्ये P. 3...3 तस्मात् भगवन् P.
4...4 आवासए P. 5...5 एव तदविघ्नं P. 6 P adds आदि.
7 का P. 8...8 मसकुज्भंवसे P.

तिज्जइ जं तेण तहिं तओ व तित्थं तयं च दव्वम्मि ।
सरियाईणं भागो निरवायो तम्मि य पसिद्धे ॥१०२६॥
तरिया तरणं तरियव्वयं च सिद्धाणि तारओ पुरिसो ।
बाहोडुवाइ तरणं तरणिज्जं निन्नयाईयं ॥१०२७॥
देहाइतारयं जं बज्झमलावणयणाइसत्तं च ।
णेगंताणच्चंतियफलं च तो दव्वतित्थं तं ॥१०२८॥
इह तारणाइफलयंति ण्हाणपाणावगाहणाईहिं ।
भवतारयंति केई, तं नो जीवोवघायाओ ॥१०२९॥
सूणंगं पिव तमुदूहलं व न य पुण्णकारणं ण्हाणं ।
न य जइजोगं तं मंडणं व कामंगभावाओ ॥१०३०॥
देहोवगारि वा तेण तित्थमिह दाहनासणाईहिं ।
महु-मज्ज-मंस-वेस्सादओऽवि तो तित्थमावन्नं ॥१०३१॥
भावे तित्थं संघो सुयविहियं तारओ तहिं साहू ।
नाणाइतियं तरणं तरियव्वं भवसमुद्दोऽयं ॥१०३२॥
जं नाणदंसणचरित्तभावओ तव्विवक्खभावाओ ।
भवभावओ य तारेइ तेण तं भावओ तित्थं ॥१०३३॥
तह कोह-लोह-कम्ममयदाहतण्हा-मलावणयणाइं ।
एगंतेणऽच्चंतं च कुणइ य सुद्धिं भवोघाओ ॥१०३४॥
दाहोवसमाइसु वा जं तिसु थियमहव दंसणाईसु ।
सो तित्थं संघोच्चिय, उभयं व विसेसणविस्सेसं ॥१०३५॥
कोहग्गिदाहसमणादओ व ते चेव जस्स तिण्णऽत्था ।
होइ तियत्थं तित्थं तमत्थसद्दो फलत्थोऽयं ॥१०३६॥
अहवा सम्मद्दंसणनाणचरित्ताइं तिन्नि जस्सऽत्था ।
तं तित्थं पुव्वोइयमिह अत्थो वत्थुपज्जाओ ॥१०३७॥
इह सम्मं सद्धाणोवलद्धिकिरियासभावओ जेणं ।
तित्थमभिप्पेयफलं सम्मपरिच्छेयकिरियव्व ॥१०३८॥
णाभिप्पेयफलाइं तयंगवियलत्तओ कुतित्थाइं ।
वियलनयत्तणओऽविय विफलाइं वियलकिरियव्व ॥१०३९॥
अहव सुहोतारुत्तारणाइ दव्वे चउव्विहं तित्थं ।
एवं चिय भावम्मिवि तत्थाइमयं सरक्खाणं ॥१०४०॥
तच्चणियाण वितियं विसयसुहकुसत्थभावणावणियं
तइयं च बोडियाणं चरिमं जइणं सिवफलं तु ॥१०४१॥
नणु जं दुहावयारं दुक्खुत्तारं च तं दुरहिगम्मं ।
लोयम्मि पूइयं जं सुहावयारं सुहुत्तारं ॥१०४२॥

एवं तु दव्वतित्थं भावे दुक्खं हियं लहइ जीवो ।
मिच्छत्तऽन्नाणाविरइविसयसुहभावणाणुगओ    ।।१०४३।।

पडिवण्णो उण कम्माणुभावओ भावओ परमसुद्धं ।
किह मोच्छिइ जाणंतो परमहियं दुल्लहं च पुणो ।।१०४४।।

अइकक्खडं व किरियं रोगी दुक्खं पवज्जए पढमं ।
पडिवन्नो रोगक्खयमिच्छंतो मुंचए दुक्खं ।।१०४५।।

इय कम्मवाहिगहिओ संजमकिरियं पवज्जए दुक्खं ।
पडिवन्नो कम्मक्खयमिच्छंतो मुंचए दुक्खं ।।१०४६।।

'तित्थगरे भगवंते' इत्यादि । इह हि तीर्थकरणशीलास्'तीर्थकरा'स्तान् 'वन्द' इति क्रिया । तत्र "तॄ प्लवनतरणयो"रित्यस्य "पातॄतुदिवचिरिचिसिचिभ्यस्थगि"ति थक् प्रत्ययेऽनुबन्धलोपे च कृते "ऋृत इद्धातो"रिति इत्वे रपरत्वे "हलि चे"ति दीर्घत्वे परगमने च 'तीर्थ' इति स्थिते, "डुकृञ् करणे" इत्यस्य "चरेष्ट" इत्यस्मात् सूत्रात् टप्रत्ययाधिकारेऽनुवर्त्तमाने "कृञो हेतुताच्छील्यानुलोम्येष्वि"ति टप्रत्ययेऽनुबन्धलोपे च कृते गुणे रपरत्वे परगमनत्वेन च 'तीर्थकर' इति तस्मात्[1] शेषं भाष्य एव व्याख्यास्यामः । तच्चेदम्—'तिज्जती'त्यादि । तत्र तीर्थकरणात्तीर्थकराः । अत्र[2] तीर्थमिति कोऽर्थ इत्यत आह—'तिज्जति जं तेण'त्ति तीर्यतेऽनेनेति 'तीर्थम्' । अयमात्मा परं पारं प्राप्यत इत्यर्थः । 'तहिं'त्ति तीर्यतेऽस्मिन्निति वा । 'तओ व'त्ति तीर्यतेऽस्मादिति वेति 'तीर्थम्' । 'तयं च'त्ति तच्च तीर्थं नामादि यावद् व्यतिरिक्तम् । 'दव्वम्मि' द्रव्येऽविकृते । किमत आह—'सरिदादीनां' समो भूभागो निरपाय'श्च द्रव्यतीर्थम् । 'तत्र' द्रव्यतीर्थे 'सिद्धे' सति कानि सिद्धानि सम्बन्धिशब्दतया प्रसिद्धानि भवन्तीत्यत आह—'तरिता' इत्यादि प्रतीतार्था ।। १०२५ (निर्युक्तिगाथा ८० )—१०२७ ।।

किं पुनः कारणमिदं द्रव्यतीर्थमित्यत आह—'देहादी'त्यादि । 'यस्मादि'दं 'देहादि'मात्रं 'तारयति' परं कूलं नयति, न त्वात्मानं, मोक्षस्य परमार्थेन परकूलत्वेन व्यवस्थितत्वात् । 'बाह्यमलापनयनादिशक्तत्वाच्च' । एतदुक्तं भवति—तण्हाइयं वितण्हीकरेइ अवणेइ बाहिरं पंकं, नान्तरं तस्य प्राणातिपातादिमहापातकपञ्चकजनितत्वात् । तस्य च तद्विनिवृत्तिमन्तरेणोत्पत्तिनिरोधाभावात् । प्रागुपात्तस्य च विशिष्टक्रियासव्यपेक्षाध्यवसायजन्यस्य तत्प्रत्यनीकक्रियासहगताध्यवसायतः क्षयोपशमोपपत्तेः । अलं चसूर्येति । तथा'ऽनैकान्तिकफलत्वादनात्यन्तिकफलत्वाच्च' । तथा ह्यनेन कदाचित् तीर्यते कदाचिच्च म्रियत इति । तीर्णमपि न पुनस्तीर्यत इति प्रसिद्धम् । 'तो' इति । ततो 'द्रव्यतीर्थं तत्', स्वयमपि च द्रव्यत्वादिति गाथार्थः ।।१०२८।।

एतदेव केनचिद् विशेषेण भिन्दत् भावयन्नाह—'इहे'त्यादि । 'इह' केचिदुदकसूकराः प्रलपन्ति—'ण्हाणपाणावगाहणादीहिं' विधीए सेविज्जंतं उदयं

---

1 P has स्यात् for तस्मात्.    2 च P.

'भवातोऽवि तारेइ'। कुत इत्याह—'तारणादिफलदं'ति शरीरसंतारणादि[1]फलोपकारित्वाद्[1] दृष्टेन परोक्षानुमानादिति भावना। 'तं णो'त्ति। तदेतन्नास्ति। कुत इत्याह—'जीवोपघातसद्भावा'दिति गाथार्थः ॥१०२९॥

'सूण'मित्यादि। अयमिह पौर्वापर्येण प्रयोगः—'स्नानं पुण्याय न भवति', जीवोपघातनान्तरीयकत्वात्, 'जालवदुदूखलवद्वा'। न च दृष्टमात्रेण परोक्षसिद्धिर्नियामकाभावात्, प्रत्यक्षसिद्धप्राण्युपमर्दवाधितत्वादित्येवमादि स्वधियोत्प्रेक्ष्योत्प्रेक्ष्याऽसकृद् वक्तव्यं, दलत्वात्। अथवा किं वहुनोक्तेन? 'ण ये'त्यादि। गाहापच्छद्धं स्पष्टम्। नवरं व्यतिरेकेण ज्ञानम्। 'देहो' इत्यादि। अथ चेद्'दाहनाशनादिभिर्देहोऽपकारीति तीर्थं' स्यादुत्तरं पश्चार्द्धेनाह—'मध्वादयोऽपि तीर्थं', देहोपकारित्वाविशेषादिति गाथार्थः ॥१०३०-१०३१॥ द्वारम् ॥

"भावे"त्यादि। 'भावे'—भावविषयं 'तीर्थम्'। इत्यत आह—'संघः' साध्वादिसमुदायो गुणसंघातत्वात्। किंविशिष्टमत आह—'श्रुतविहितम्'। उक्तञ्च—"तित्थं भंते! तित्थं? तित्थकरे तित्थं? गोयमा! अरहा ताव तित्थंकरे, तित्थं पुण चाउव्वन्नो समणसंघो।" 'तत्र' संघे तद्विशेषः, 'तरिता साधुः, ज्ञानादित्रयं तु तरणं, तरणीयं भवोदन्वानि'ति। इह च तीर्थादीनां परस्परतोऽन्यताऽनन्यता च विवक्षातोऽवसेया। तत्र सम्यग्दर्शनादिपरिणामानन्यत्वात् संघस्तीर्थं, तरणात्तदन्तभावित्वात्तद्विशेष एव, तरिता साधुः स्वातन्त्र्येण सम्यग्दर्शनाद्यनुष्ठानात्। तस्य च करणभावापन्नस्य साधकतमत्वेन करणत्वात् तरणत्वम्। तरणीयमात्मन एवौदयिकादिसंसारपरिणामस्तत्परित्यागादिति गाथार्थः ॥१०३२॥

किमित्ययं भाव इत्याह—'ज'मित्यादि। 'यस्माद् ज्ञानादिस्वाभाव्याद्धेतोस्तद्विपक्षात्'—मिथ्यात्वादिलक्षणात् 'तारयत्यु'त्तारयति, तथा 'भवसत्तायाश्चातस्तद् भावतीर्थमि'ति। उक्तञ्च—

"रागाद्यम्भाः प्रमादव्यसनशतचलद्दीर्घकल्लोलहेलः
क्रोधेर्ष्यावाडवाग्निर्मृतिजननमहानक्रचक्रौघरौद्रः।
तृष्णापातालकुम्भो भवजलधिरयं तीर्यते येन सद्यस्
तज्ज्ञानादिस्वभावं कथितमिह सुरेन्द्रार्चितैर्भावतीर्थम् ॥१॥"

इति गाथार्थः ॥१०३३॥

'तहे'त्यादि। 'तथे'त्युपपत्त्यन्तराकर्षणार्थः। क्रोधश्च लोभश्च कर्म च 'क्रोधलोभकर्मणि'। 'तन्मया दाहतृष्णामलाः'। क्रोधात्मको दाहः, परितापरूपत्वात्। लोभात्मिका तृड्, आशंसादिरूपत्वात्। कर्मात्मको मलो मलिनस्वभावत्वात्। तेषा'मपनयनानी'ति समासः। ता'न्येकान्तेन'—नियमेन। 'अत्यन्तं च'—सर्वात्मना 'करोति' यतः 'शुद्धिं च भवौघात्'। "तेण तं भावओ तित्थं"ति गाथार्थः ॥१०३४॥

---

1...1 फलं दृष्टमेतत् P.

'त्रिषु वा स्थितत्वात्' त्रिस्थमिति । आह च—'दाहे'त्यादि ।

"दाहोवसमे तण्हाए छेयणे मलपवाहणे चेव ।
जं तिसु वत्तइ तित्थं, भावत्थो वण्णिओ चेव ।।१।।"

'अहवा दंसणादीसु तिसु जं ठियं तो' ततः त्रिस्थं भण्यते । पुनश्च 'तित्थं' स्यात् । तत्तु 'संघ एवे'ति । 'उभयं वा' त्रिस्थसंघलक्षणं 'विशेषणविशेष्यं' स्यात् । तद्यथा—कः संघ इति प्रश्ने त्रिस्थविशेषणविशिष्ट[1] इत्युत्तरम् । कः त्रिस्थ इति च प्रश्ने संघत्वविशेषणविशिष्टो य इत्युत्तरमिति गाथार्थः ।।१०३५।।

त्र्यर्थत्वात् त्रिफलत्वाद्वा तित्थमित्याह—'कोहादी[2]'त्यादि । गतार्था ।।१०३६।।

त्रिपर्यायत्वाद्वा तित्थमित्याह—'अहवे'त्यादि । गतार्था ।।१०३७।।

प्रमाणमाह—'इहे'त्यादि । 'इहजैनमेव तीर्थमभिप्रेतेनार्थेनार्थवत्, सम्यक् श्रद्धानोपलब्धिक्रियासद्भावात्, सम्यक्परिच्छेदक्रियावत्' । यथाहि—नैपुण्यवतो वैद्यस्यासाधारणश्रद्धापरिज्ञानक्रियाभिश्चिकित्साऽभिप्रेतार्थाऽर्थवती, एवमिदमपीति । वैधर्म्येण कूटवैद्य इति गाथार्थः ।।१०३८।।

तथाहि—'णा' इत्यादि । 'न कुशासनानि' क्षायोपशमिकत्वे सत्यप्यभिप्रेतफलानी'ति प्रतिज्ञा । 'ज्ञानादिविकलत्वाद्विकलक्रियावत्', प्रधानैहि[3]कविकलक्रियावत् । तथा 'विकलनयत्वादपि च'- एकनयान्तराधिष्ठितत्वादपि च विकलानि तानि । एकौषधविरहितविवक्षितद्रव्यसंघातवदिति गाथार्थः ।।१०३९।।

एवं तावद् द्रव्यभावतीर्थद्वयं चर्चितम् । 'अहव सुहोयार' इत्यादि । सुहोयारं सुहुत्तारं१, [4]सुहोयारं दुरुत्तारं२, दुहोयारं सुहुत्तारं३, दुहोयारं दुहुत्तारं४ ।[4] 'तच्च' इत्यादि सुगमम् ।।१०४०-१०४१।।

एवमुक्ते सत्याह—'णणु' इत्यादि । सुगमा । नवरं तस्मादाद्यभङ्गो ज्यायान् न चरम इति, लोकप्रसिद्धिवाधितत्वात् ।।१०४२।।

उच्यते—'एव'मित्यादि । 'एवं' पूजितं भवति 'द्रव्यतीर्थमेव', प्रथमभङ्गव्यवस्थितत्वात् । 'भावे' तु भावमङ्गीकृत्य 'दुःखं' कथञ्चि'द्धितं' संसारसमुद्रतरकाण्डं 'लभते' प्राप्नोति 'जीवः' प्राणी । किंकारणमित्याह—'मिथ्यात्वानुगतत्वात्' । उक्तञ्च—

"जह जरियस्स ण रुच्चइ, सक्कर पित्तवसेण ।
तह जिणवयणु न रुच्चई, जीव हो कम्मवसेण ।।१।।"

तथा 'ऽज्ञानानुगतत्वात्' । उक्तञ्च—

"विवरीयदिट्ठिपसरा चंपकफुल्लं इमं ति मण्णंता ।
अग्गीं कीडपयंगा, पडंति अण्णाणदोसेण ।।१।।"

1 ष्टो यः P.   2 ती P.   3 P drops हि.
4...4 This portion is wanting in P.

तथा'ऽविरत्यनुगतत्वात्'। उक्तञ्च—

"पावट्ठाणेहिंतो अप्पडिविरतो णिरंकुसो जीवो ।
णस्सइ हियाउ करिणीविमोहिओ वणगइंदो व्व ।।१।।"

'विषयसुखभावनानुगतत्वाच्च'—आलजालचिन्तनव्यामूढमनस्त्वाच्चेति गाथार्थः ।।१०४३।।

अभिलषितमर्थं प्रतिपादयन्नाह—'पडो'त्यादि। 'पडिवन्नो पुण'मिच्छत्तादीणि जिणिउं। अत एवाह—'कम्माणुभावओ'। कथम्? 'भावतः' परमार्थेन। जिणवयणंति सामर्थ्याद् गम्यते। किंविशिष्टमित्याह—'परमशुद्धं' अलियादिदोस-रहियं। एतदुक्तं भवति—भावतित्थे ओअरिओ पव्वइओ त्ति यदुक्तं भवति 'किह मोच्छिइ' पुणो कहं उत्तरिही? कहं उण्णिक्खमिहित्ति भणियं होइ। 'जाणंतो परममतिदुल्लहं' पव्वज्जं।

"लद्धं जं सामण्णं, सत्तट्ठ भवेहिं णेइ णेव्वाणं ।
तं इह जावज्जीवं भण को सो जो ण णिव्वहइ ।।१।।"

अवि य—

"इह माणुसजम्मं चिय, दुलहं जीवस्स होइ संसारे ।
किं पुण पंचमहव्वयगुणगणमणहारि सामण्णं ।।१।।"

इति गाथार्थः ।।१०४४।।

दृष्टान्तान्तरमाह—'अति' इत्यादि। 'इये'त्यादि। सुचर्चः[1]। तस्मात् सुष्ठु संभवति चरमभङ्ग इति ।।१०४५-१०४६।।

## [तीर्थंकरनिरूपणम्]

एवं तीर्थं निरूप्य तीर्थकरमाह—

अणुलोमहेउतस्सीलयाय जे भावतित्थमेयं तु ।
कुव्वंति पगासंति य ते तित्थयरा हियत्थकरा ।।१०४७।।

ईसरियरूवसिरिजसधम्मपयत्ता मया भगाभिक्खा ।
ते तेसिमसामण्णा संति जओ तेण भगवंते ।।१०४८।।

विरियं पक्कमो इह परेऽरयो वा जओ तदक्कमणं ।
सोऽणुत्तरो वरो सिं अणुत्तरपरक्कमा तो ते ।।१०४९।।

अमियमणंतं नाणं तं तेसिं अमियणाणिणो तो ते ।
तं जेण नेयमाणं तं चाणंतं जओ नेयं ।।१०५०।।

तिण्णा समइक्कंता भवण्णवं कं गइं गया तरिउं ।
सुगईण गई पत्ता सुगइगइगया तओ होंति ।।१०५१।।

---

1 र्च P.

सच्चिय सुगईण गई सिद्धी सिद्धाण जो पहो तीसे ।
तद्देसया पहाणा सिद्धिपहपएसया तो ते ॥१०५२॥
सिद्धिपहो पुण सम्मत्तनाणचरणाइं वक्खमाणाइं ।
भवहेउविवक्खाओ तिठाणपडिकूलकिरिय व्व ॥१०५३॥
वंदेऽभिवादयेऽभित्थुणामि वा ते तिलोगमंगल्ले ।
सामण्णवंदणमिणं तित्थयरत्ताविसिट्ठाणं ॥१०५४॥
पत्तेयवंदणमिओ संपइ तित्थाहिवस्स वीरस्स ।
सुयनाणत्थप्पभवो सविसेसेणोवगारित्ति ॥१०५५॥
तुल्लगुणाणं परिसं नमिऊण जहेव सामियं नमइ ।
तह तुल्लगुणेऽवि जिणे नमिउं तित्थाहिवं नमइ ॥१०५६॥

'अणुलोमे'त्यादि । 'ये' इत्यनिर्दिष्टस्वरूपाः परमपुरुषविशेषाः । 'तु:' पुनःशब्दार्थः । 'ये पुनर्भावितीर्थमिदं' श्रमणसङ्घलक्षणं 'कुर्वन्ति' निष्पादयन्ति, तथा 'प्रकाशयन्ति' केवलज्ञानज्योत्स्नयोज्ज्वालयन्ति च । कथं कुर्वन्तीत्यत आह—'अनुलोमहेतुताच्छील्यतया' । तत्र "कृञो हेतुताच्छील्यानुलोम्येष्वि"ति करोतेर्हेतौ ताच्छील्यानुलोम्ये टप्रत्ययो भवति । तत्र हेतौ, सद्धर्मतीर्थक्रिया-हेतवो यद्वद् यशस्करी विद्येति । ताच्छील्ये, कृतिनोऽपि सन्तस्तीर्थकरनामकर्मो-दयाद् भव्यसत्त्वानुकम्पापरतया सद्धर्मतीर्थदेशनाकरणशीलाः कुलकरनृपवत् । आनुलोम्ये, स्त्रीपुरुषबालवृद्धस्थविरजिनकल्पिकानामुत्सर्गापवादविधानानुरूप्यतः सद्धर्मतीर्थानुलोमकारिणो वचनकरवत् । 'इत्थंभूतास्तीर्थकरा' उच्यन्ते । अत एवाह—'हितार्थकराः' । हितमर्थं कुर्वन्ति भव्यसत्त्वानामिति 'हितार्थकरा' निर्वाणकरा इत्युक्तं भवति । तदेवं तीर्थकर इति पदं व्याख्यातम् । अथवा 'पङ्कदाहपिपासाना'मित्येवमादि । 'पङ्क'स्तावत्पापमित्येवमादि । तीर्थकरः पुन'र्यत् कालत्रयवर्तिभि'रित्येवमादीति गाथार्थः ॥१०४७॥

'भगवंते'त्ति । अथ केऽमीषां मता भगाभिख्या भगसंज्ञा इत्यत आह—'ईस'रिये'त्यादि । तत्र त्रिविधातिशेषमय'मैश्वर्यं'[1], 'रूपं' निरुपमा रूपसम्पत् २, 'श्री'स्तपस्तेजोविभूतिः ३, 'यशो'ऽचिन्त्यगुणाविर्भूतिर्भुवनव्यापि ४, 'धर्म' उत्तमक्ष-मादिरशेषचारित्रमोहनीयमलापगमादक्षत इत्यर्थः ५, प्रयतनं 'प्रयत्नो'ऽप्रमादः ६ । त एते भगसञ्ज्ञाः । शेषं स्पष्टम् ॥१०४८॥

'विरिय'मित्यादि । अशेषवीर्यान्तरायप्रक्षयात्'पराक्रमो वीर्यं', शेषं स्पष्टम् । 'अमिते'त्यादि स्पष्टम् । अमितेत्यादि बहुव्रीहिः । 'तिण्णे'त्यादि । सुगमा नवरं तरन्ति स्म 'तीर्णाः' । 'स च्चिये'त्यादि । 'तस्या एव सुगतीनां गतेः' । सिद्धेः पन्थाः 'सिद्धिपथः' । प्रधानाः प्रगताः प्रशस्ता आदौ वा देशकाः

1 P has इस्स for ईस.

'प्रदेशका' । सिद्धिपथस्य प्रदेशकाः 'सिद्धिपथप्रदेशका'स्तान् । 'सिद्धि'त्यादि स्पष्टा ।।१०४९-१०५३।।

'वंदे' इत्यादि । "वदि अभिवादनस्तुत्यो"रिति । 'वन्देऽभिवादयेऽभिष्टुवे वा'ऽहमित्युक्तं भवति । 'सामान्यवन्दनमिदं' मङ्गलार्थं 'तीर्थंकरत्वादविशिष्टाना'मृषमादीनामिति मूलगाथार्थः ।।१०५४।।

[तीर्थंकरमहावीरवन्दना]

उत्तरगाथासम्बन्धमाह—'पत्तेये'त्यादि । 'तुल्ले'त्यादि । सुखोन्नेयम् ।।१०५५-१०५६।।

वंदामि महाभागं महामुणिं महायसं महावीरं ।
अमरनररायमहियं तित्थयरमिमस्स तित्थस्स ।।१०५७।। नि० ८१।।

भागोऽचिंता सत्ती स महाभागो महप्पभावोत्ति ।
स महामुणी महंतं जं मुणइ मुणिप्पहाणो वा ।।१०५८।।

तिहुयणविक्खायजसो महाजसो नामओ महावीरो ।
विक्कंतो व कसायाइसत्तुसेन्नप्पराजयओ ।।१०५९।।

ईरेइ विसेसेण व खवेइ कम्माइं गमयइ सिवं वा ।
गच्छइ य तेण वीरो स महं वीरो महावीरो ।।१०६०।।

अमरनररायमहियंत्ति पूइयं तेहिं किमुय सेसेहिं ।
संपइ तित्थस्स पहू मंगल्लमहोवगारिं च ।।१०६१।।

एक्कारसऽवि गणहरे पवायए पवयणस्स वंदामि ।
सव्वं गणहरवंसं वायगवंसं पवयणं च ।।१०६२।। नि० ८२।।

पुज्जो जहऽत्थवत्ता सुयवत्तारो तहा गणहराVि ।
पुज्जा पवायगा पवयणस्स ते बारसंगस्स ।।१०६३।।

जह वा रायाऽऽणत्तं रायनिउत्तपणओ सुहं लहइ ।
तह जिणवरिंदविहियं गणहरपणओ सुहं लहइ ।।१०६४।।

जह मूलसुयप्पभवा पुज्जा जिणगणहरा तहा जेहिं ।
तदुभयमाणीयमिदं तेसिं वंसो किह न पुज्जो ।।१०६५।।

जिणगणहरुग्गयस्सवि सुयस्स को गहणधरणदाणाइं ।
कुणमाणो जइ गणहरवायगवंसो न होज्जाहि ।।१०६६।।

सीसहिया वत्तारो गणाहिवा गणहरा तयत्थस्स ।
सुत्तस्सोवज्झाया वंसो तेसिं परंपरओ ।।१०६७।।

पगयं पहाणवयणं पवयणं बारसंगमिह तस्स ।
जइ वत्तारो पुज्जा तंपि विसेसेण तो पुज्जं ।।१०६८।।

ते वंदिऊण सिरसा अत्थपुहत्तस्स तेहिं कहियस्स ।
सुयनाणस्स भगवओ निज्जुत्ति कित्तइस्सामि ।।१०६९।। नि० ८३।।
ते तित्थयराईएऽभिवंदिउं सुकयमंगलायारो ।
निविग्घमओ वोच्छं पगयमुवग्घायनिज्जुत्तिं ।।१०७०।।
अत्थो सुयस्स विसओ तत्तो भिन्नं सुयं पुहुत्तंति ।
उभयमिदं सुयनाणं नियोजणं तेसि निज्जुत्ती ।।१०७१।।
अत्थस्स पिहुभावो पुहुत्तमत्थस्स वित्थरत्तंति ।
इह सुयविसेसणं चिय अत्थपुहुत्तं व से सण्णा ।।१०७२।।
अत्थाओ व पुहुत्तं जस्स तओ वा पुहुत्तओ जस्स ।
जं वा अत्थेण पिहुं अत्थपुहुत्तंति तब्भावो ।।१०७३।।

'**वन्दामी**'त्यादि सभाष्या गाथाः । सुखोन्नेया इति । नवरं 'भागो'ऽचिन्त्या शक्तिः' । अथवा "भज सेवाया"मिति भजनं 'भागो' भक्तिरित्यर्थः । महान् भागोऽस्येति 'महाभागो' महातिशेपभजनम् । अथवा महद्भिरिन्द्रादिभिर्भागो भजनं सेवेति । "मन ज्ञाने" इति 'मन्यतेऽसा'वित्येवमादि । 'वन्दे' 'वन्दामी'ति च प्राकृते सर्वत्रोभयपदोपदर्शनार्थमिति ।।१०५७ (निर्युक्तिगाथा ८१)—१०६१।।

[गणधरादिवन्दना]

अथ वक्तुर्मङ्गलार्थं वन्दनमभिधायाधुना सूत्रकर्तृप्रभृतीनामप्याह—'**एक्कारसऽवी**'त्यादि । 'एकादशे'ति संख्या 'अपिः' समुच्चये । अनुत्तरज्ञानदर्शनादिधर्मगणं धारयन्तीति ते 'गणधरा'स्तान् । प्रकर्षेण प्रधाना आदौ वा वाचकाः 'प्रवाचका'स्तान् । कस्य ? 'प्रवचनस्य' आगमस्य । किम् ? 'वन्दामि' । एवं तावन्मूलगणधरवन्दनम् । तथा 'सर्वं' निरवशेषम् । 'गणधरा' आचार्यास्तेषां प्रवाहो 'वंश'स्तम् । तथा 'वाचका' उपाध्यायास्तेषां 'वंश'स्तम् । तथा 'प्रवचनं च' आगमं च । वंदामीति सम्बन्धः । तत्रैतत्स्यात्—वंशद्वयस्य प्रवचनस्य च कथं वन्द्यतेति ? उच्यते, यथा अर्थसूत्रप्रणेतारस्तीर्थंकरगणधरा वन्द्या एवं यैरिदमर्थसूत्ररूपं प्रवचनमानीतं तद्वंशोऽप्यानयनद्वारेणोपकारित्वाद् वन्द्य एवेति । प्रवचनं तु साक्षाद्वृत्त्यैवोपकारीति गाथार्थः ।।१०६२।। निर्युक्तिगाथा ८२।।

'**पुज्जो**' इत्यादि । भाष्यगाथाः षडेतदनुसारेणानुसर्त्तव्याः ।।१०६३-१०६८।।

[श्रुतज्ञाननिर्युक्तिकरणप्रतिज्ञा]

प्रकृतमुपदर्शयन्नाह—'**ते**'[1] इत्यादि । **ते तित्थे**'त्यादि । ते तित्थगरादीएऽ'**भिवंदिउं सिरसा**' सुकृतमङ्गलोपचार इत्यर्थः । किमत आह—'**णिज्जुत्तिं** '**कित्तइस्सामि**' प्रकृतामुपोद्घातनिर्युक्तिं वक्ष्ये । कस्येत्यत आह—'श्रुतज्ञानस्य भगवतः' ।

1 Padds ते.

स्वरूपं चैतत् । किंविशिष्टस्येत्यत आह—'तै'स्तीर्थकरादिभिः 'कथितस्य' । पुनरपि किंविशिष्टस्येत्यत आह—'अत्थपुहुत्तस्स'त्ति सूत्रार्थोभयरूपस्य । 'अर्थाद्वा पृथग्भूतस्ये'त्येवमादीति गाथार्थः ॥१०६९-१०७०॥

साम्प्रतं—"अत्थपुहुत्तस्स णिज्जुत्ति" इत्येतद् व्याचिख्यासुराह—'अत्थो' इत्यादि । अर्य्यत इ'त्यर्थः' । असा'वर्थः श्रुतस्य विषयो' वाच्यत्वात्तस्य । कस्येत्यत आह—'श्रुतस्य' श्रुतज्ञानस्य तस्य वाचकत्वात् । ततश्चानेन "अत्थ" त्ति व्याख्यातम् । तच्च 'श्रुतं ततो भिन्नं' ततोऽर्थादर्थान्तरं सक्तिमित्यत आह—'पुहुत्त' त्ति पृथक्त्वमाख्यायते, विषयविषयिणोर्भेदात् । ततश्चार्थश्च पृथक्त्वं चेति द्वन्द्वः । इह 'चोभयमिदं 'सुयनाणं'ति उभयमिदमर्थपृथक्त्वलक्षणं श्रुतज्ञानं भगवदभिधीयते । निर्युक्तिस्तु का अभिधीयत इत्याह—'नियोजनं' निश्चितं सम्बन्धनं 'तयो'विषयविषयिणो'र्निर्युक्ति'रभिधीयत इति गाथार्थः ॥१०७१॥

'अत्थस्स वे'त्यादि ॥ 'वा' इत्यथवा । 'पृथुविस्तार' इति । 'अर्थो' हि प्राङ्निरूपितशब्दार्थः । 'तस्य पृथुभावो' विस्तरभावः 'पृथुत्व'मुच्यते । अत एवाह—'अत्थस्स वित्थरत्त'' ति । ततश्च 'इह' व्याख्याने 'सुयविसेसणं चिय' त्ति श्रुतस्यैव भगवतो विशेष्यस्येदमर्थविस्तरत्वं विशेषणं वर्त्तते । तद्यथा—घटस्य लक्षणं कीर्त्तयिष्यामि । किंविशिष्टस्य ? रत्तस्स । तत्र रक्तस्येति वक्तव्ये रक्तत्वस्येति जातम् । एवमत्रापि श्रुतज्ञानस्य निर्युक्तिं वक्ष्ये । किंविशिष्टस्य ? "अत्थपुहुत्तस्स" इत्यादि । तत्रार्थपृथोरिति वक्तव्येऽर्थपृथुत्वस्येत्युच्यते । अर्थविस्तरस्येति जायते । स्थापना

| लक्षण | घट | रक्त |
|---|---|---|
| निर्युक्ति | श्रुत | अर्थ |

[1] ।

आह—एवमत्र घट इव सामानाधिकरण्यं न प्राप्नोति, भावप्रत्ययश्रवणात् । उच्यते, न दोषः, प्राकृतशैल्या भावप्रत्ययश्रवणस्यानादृतत्वात् । बहुव्रीहिर्वा । अर्थपृथोर्भावो यस्मिंस्तदर्थपृथु श्रुतम् । तद्भावो'ऽर्थपृथुत्वम्' । तस्या"र्थपृथुत्वस्य" श्रुतज्ञानस्य निर्युक्तिं वक्ष्यत इति । 'अत्थपुहुत्तं व से सण्ण' त्ति । 'से' तस्या'र्थपृथक्त्वं वा संज्ञा' वर्त्तते । ततश्चार्थपृथक्त्वसञ्ज्ञितस्याऽर्थपृथक्त्वनाम्नः श्रुतस्य निर्युक्तिं वक्ष्यत इति गाथार्थः ॥१०७२॥

'अत्थाओ वे'त्यादि । 'अर्थाद्वा' सकाशात् 'पृथक्त्वं' नानात्वं 'यस्य' श्रुतस्य तदर्थपृथक्त्वं तस्येति । 'तओ वा' असौवाऽर्थः । 'पुहुत्तओ' भेदेन वर्त्तते 'यस्य' तत्तथा तस्येति । 'जं वे' ति यद्वा । किमत आह—'अर्थेन पृथु' अर्थपृथु, 'तद्भावोऽर्थपृथत्वं', तस्य "निर्युक्तिम्" । किं ? "कीर्त्तयिष्यामी"ति गाथार्थः ॥१०७३॥

---

1 लक्षणं घटस्य रक्तस्य / निर्युक्ति श्रुतस्य अर्थस्य P.

[आवश्यकादिनिर्युक्तिकरणप्रतिज्ञा]

किमविशेषेण ? न, तद्विशेषाणामिति । आह च—

आवस्सयस्स दसकालियस्स तह उत्तरज्झमायारे ।
सुयगडे निज्जुत्ति वोच्छामि तहा दसाणं च ॥१०७४॥ नि० ८४॥

कप्पस्स य निज्जुत्ति ववहारस्सेव परमनिउणस्स ।
सूरियपण्णत्तीए वोच्छं इसिभासियाणं च ॥१०७५॥ नि० ८५॥

एएसिं निज्जुत्ति वोच्छामि अहं जिणोवएसेण ।
आहरणहेउकारणपयनिवहमिणं समासेणं ॥१०७६॥ नि० ८६॥

हेऊ अणुगमवइरेगलक्खणो सज्झवत्थुपज्जाओ ।
आहरणं दिट्ठंतो कारणमुववत्तिमेत्तं तु ॥१०७७॥

एवं पयाण निवहो हेऊदाहरणकारणत्थाणं ।
अहवा पयनिवहो च्चिय कारणमाहरणहेऊणं ॥१०७८॥

इय सव्वसंगहाईएँ जेणमावासयं अहिकयं च ।
सामाइयं च तस्सवि तो पढमं तस्स वोच्छामि ॥१०७९॥

'आवस्सए'त्यादि । 'कप्पस्स ये'त्यादि । 'एएसि'मित्यादि । पाठसिद्धम् । तृतीयगाथापश्चार्द्धमाह—'हेऊ' इत्यादि । हिनोति गमयति जिज्ञासितधर्मविशिष्टानर्थानिति हेतुः । स चनुमान[1]लक्षणः, सकलसपक्षव्यापित्वाद्, 'व्यतिरेकलक्षणश्चै'कान्तेन विपक्षव्यावृत्तत्वात् । किं द्विरूप एव ? नेत्याह—'साध्यवस्तुपर्यायः, सिसाधयिषितधर्मविशिष्टधर्मिधर्म इत्यर्थः । 'आहरणं तु दृष्टान्तः' । साधर्म्येतरो द्वेधा । क्रमेण चेमौ थाष्यकृतोक्तौ, प्रयोगक्रमस्याङ्गीकृतत्वात् । सूत्रकृता त्वादावाहरणमभ्यधायि । तथाविधन्यायोपदर्शनार्थम् । तथाहि—अस्त्यसावपि न्यायो यत्र हेतुमनभिधायापि दृष्टान्त उच्यते । तद्यथा—गतिलक्षणो धर्मास्तिकायो मत्स्यजलवदित्येवमादि । क्वचिच्च हेतुरेव केवलोऽभिधीयते, यथाऽस्ति धर्मास्तिकायो जीवपुद्गलयोर्गत्यन्यथाऽनुपपत्तेः । 'कारणमुपपत्तिमात्रम्' । यथा निरुपमसुखः सिद्धः, ज्ञानावाधाप्रकर्षात्, उपपत्तिमात्रताऽस्याऽऽविद्वदङ्गनादिलोकप्रसिद्धोपमानासंभवात् । तत्राहरणार्थाभिधायकं पद'माहरणपदम्' । एवं 'हेत्वर्थपदम्' । कार(ण)पदम्' । पुनश्च द्वन्द्वः । तेषा निवहः—सङ्घातो यस्यां सा तथोच्यते तामिति गाथार्थः ॥१०७४-१०७६॥ निर्युक्तिगाथा ८४-८६॥१०७७॥

अमुमेवार्थमाह—'एव'मित्यादि । 'एवं पदानां' वहूनाम् । किमर्थानामित्याह—'हेतूदाहरणकारणार्थानाम्' । किमित्याह—'निवहः' सङ्घातो यस्यां सा हेतूदाहरणकारणपदनिवहा' । तां वक्ष्ये । 'अथवा' आहरणं च हेतुश्च तौ, तयोः कारण'माहरणहेतुकारणम्' । आहरणहेतुकारणं चासौ पदनिवहश्च 'आहरणहेतुकारणपदनिवहः' । स विद्यते यस्यां सा तथोच्यत इति गाथार्थः॥१०७८॥

1 P has गम for मान.

## [सामायिकनिर्युक्तिकरणप्रतिज्ञा]

एवं तावदुपन्यस्तगाथात्रयमाख्याय यथोद्देशं निर्देश इति न्यायमाश्रित्याभिप्रेतार्थविवेचनार्थमुत्तरगाथासम्बन्धमाह—'इय' इत्यादि। अथवाऽऽह—अशक्यैषा प्रतिज्ञा, युगपद्वक्तुमशक्यत्वात्। अत्रोच्यते—'इय' इत्यादि। सुगमा। नवरं 'तो तस्स पढमं वोच्छामि' उवग्घायनिज्जुत्ति न्ति ॥१०७९॥

सामाइयनिज्जुत्तिं वोच्छं उवएसियं गुरुजणेणं।
आयरियपरंपरएण आगयं आणुपुव्वीए ॥१०८०॥ नि० ८७॥

जिणगणहरगुरुदेसियमायरियपरंपरागयं तत्तो।
आयं व परंपरया पच्छा सयगुरुजणुद्दिट्ठं ॥१०८१॥

उज्जेणीओ नीया जहेट्टगाओ पुरा परंपरया।
पुरिसेहिं कोसंबिं तहाऽऽगएयं परंपरया ॥१०८२॥

दव्वस्स परंपरओ जुत्तो भावसुयसंकमो कत्तो।
सद्दोऽवि नागओऽयं स एव जिणगणहरुच्चरिओ ॥१०८३॥

आगयमिवागयं तं तत्तो जत्तो समुब्भवो जस्स।
स परंपरओ य जओ तमागयमिओ तदुवयारो ॥१०८४॥

'समाइए'त्यादि। 'सामायिकं'—वक्ष्यमाणशब्दार्थम्। 'तस्य निर्युक्ति'-र्वक्ष्यमाणशब्दार्थैव। 'तस्य निर्युक्तिस्तां वोच्छं' वक्ष्ये। 'उप'—समीप्येन 'देशितां गुरुजनेन' तीर्थकरावल्यादिलक्षणेन। पुनश्चोपदेशकालादारभ्या'चार्यपारंपर्येणागताम्'। स च परंपरको द्वेधा—द्रव्यतो भावतश्च। दव्वपरंपरओ इट्टाणं, भावओ एस च्चिय उवग्घा[1]यनिज्जुत्ती। कथमायातामित्याह—'आनुपूर्व्या' परिपाट्या। तथाहि—"जंबूओ पभवेणं तत्तो सेज्जंभवेण आणीया" इत्येवमादि। अथवाऽऽचार्यपारंपर्येणायातां पुनश्च स्वगुरुभिराख्यातामिति।

दव्वपरंपरए उदाहरणं—सागेयं णगरं। जियसत्तू राया। सयलरायंगपडिपुण्णो। तस्स य णगरस्स पुरत्थिमे दिसीभाए आराममज्झे आययणं। तत्थ सुरप्पिओ णाम जक्खो वसइ। सण्णिहियपाडिहेरत्तणेण मंडलप्पसिद्धो। सो य वरिसे वरिसे चित्तिज्जइ। महो य से कीरइ। चित्तिओ य चित्तयरं मारेइ। अह ण चित्तिज्जइ जणं मारेइ। ततो राया अप्पबहुयं आलोएउं चित्तावेइ। चित्तयरा य पलायंता रण्णा णाया। संकलियापाडहुयाय काउं रुद्धा। णामाणि य लिहिउं कलसे पक्खित्ताणि। ततो वरिसे वरिसे जस्स णामं उच्छल[2]इ सो चित्तेउं मरइ। तत्थ य एगा थेरी। तीसे पुत्तो सोमडओ णाम। [3]सयलविण्णाणिउव्वरिओ त्ति[3]। वच्चइ कालो। अण्णया य कोसंबीओ दारओ विन्नाणनिमित्तं सोमदेवो नाम आगओ। तस्स गिहे ओयरिओ। सिक्खइ। वच्चइ कालो। अण्णया य सा थेरी

---

1 घा P. 2 ल्ल P. 3...3 सयलचित्तसेणि ओव्वरिउत्ति P.

वगरक्खस '(वारऽक्खमं)[1] वारयागमणसंकाए रुयंती तेण भणिया—किं अम्मो ! रुयसी सा भणइ—पुत्त! णियवावारं कुरु, "जो य ण दुहिए०" गाहा । तीए कहियं । भणइ—अहं चित्तिस्सं । सा भणइ—सरिसं चेव रोवणयं । तुमंपि मे पुत्तोत्ति । ततो तेण सा बोहिया । तहाऽहं एईए जत्ताए चित्तिस्सं जहा ण मारिस्संति । तीएऽवि पडिवन्नं । कयाइ एयंपि भवइत्ति । तओ तहिं चेव वरिसे उच्छल्लियं **सोमडयस्स** णामयं । खेडिओ वारओ । तत्तो **सोमदेवो** छट्ठभत्तं काऊण गतो जक्खगिहं । ण्हाय सुइ[2]भूओ धोयं[2] वत्थजुयलं परिहियं । अट्ठगुणाए य पोत्तीए मुहकमलमावरियं णवयेहिं ण्हवणकलसेहिं मज्जिओ जक्खो । णवयेहिं य कुच्चएहिं उग्घुट्ठो । सुईए मल्लए पोंडवद्धणियाए सेडियार अलेस्सं[3] ववलिओ पवित्तोदगरायवदृगादीहिं वण्णएहिं चित्तिऊण पाएसु पडिओ । भणितो—

"फुडमरगयदलसामल विबुद्धवरकमलपत्तसरिसच्छ ।
जक्ख ! तुमे खमियव्वो तुम्ह कओ जो मए दोसो ।।१।।"

जक्खोऽवि भणति—तुट्ठो वरेहि वरं ति । तेण भणियं—सत्ताणमभयं देहि । जक्खो भणति—दिण्णं चेव जं तुमं ण मउ त्ति, किमेयेण । अण्णं वरेहि । सो भणति—जइ एवं तो जस्स सचेयणाचेयणस्स दुपयचउप्पयाइयस्स एगावयवंपि पस्सेज्जा तस्साहं [4]तव्विधं ठाणयं[4] लिहेज्जा । जक्खेण दिण्णो वरो । ततो सो ते चित्तगरे खरंटेत्ता सिद्धकज्जोत्ति कोसंविं गओ । तत्थ य **सयाणिओ** णाम राया । सो अण्णया कयाइ सुहासणगओ दूयं पुच्छइ—जं अण्णेसिं राईणं तं ममं किं णत्थि ? दूयेण भणियं—चित्तसभा, मणसा देवाणं वायाए पत्थिवाणं । तक्खणमेत्तमेव आणत्ता चित्तकरा । तेहिं सभाओवासा विभइत्ता चित्तिया । तस्स वरदिण्णगस्स जो रन्नो अन्तेउरकिड्डा[5] (पएसो) सो पएसो दिण्णो । तेण तत्थगयाणुरूवेसु निम्मिएसु कयाइ **मिगावईए** जालकिडगंतरेणं पायंगुट्ठओ दिट्ठो । उवमाणेणं णायं जहा **मिगावईए**त्ति । तेण तदंगुट्ठगाणुसारेण देवीए रूवं निव्वत्तियं । तीसे [6]चक्खुम्मिल्लंतस्स[6] एगो मसिविंदू ऊरूअन्तरे पडिओ । तेणं पुच्छिदो । ण य सा सोहइ । पुणोवि उम्मिल्लिज्जंतेसु पडिओ । एवं तिण्णि वारा । पच्छा तेण णायं—एएण एवमेव भवियव्वं । तओ चित्तसभा णिम्माया । ततो राया चित्तसभं पलोएंतो तं पएसं पत्तो जत्थ सा देवी लिहिया । तं णिव्वण्णंतेण सो विंदू दिट्ठो । तं दट्ठूण रुट्ठो । एएण मम पत्ती धरिसिय त्ति काऊण वज्झो आणत्तो । तओ चित्तकरसेणी उवट्ठिया । सामि ! एस वरलद्धओत्ति । तओ से खुज्जाए मुहं दाइयं । तेण सा तदाणुरूवा लिहिया । तहवि तेण संडासओ छिंदावियो णिव्विसओ य आणत्तो । सो पुणोऽवि तस्सेव जक्खस्स उववासेण ठिओ । भणिओ य—वामेण चित्तेहिसि । तओ सो **सयाणियस्स** पओसं गओ । तेण चिंतियं—**पज्जोओ** एयस्स पीदिं पिवेज्जा । तओऽणेण **मिगावईए** रूवं फलए चित्तेऊण **पज्जोयस्स** उवट्ठावियं । तेण दिट्ठं । पुच्छियं । तेण इओ

1...1 Wanting in P. 2...2 भूएणाहयं P. 3 P has अल्लेसं for अलेस्सं. 4...4 बिइट्ठाययं P. 5 डा P. 6...6 चक्खुंमि उम्मिल्लंते P.

पेसिओ। जइ णं पट्ठवेसि ततो एमि। तेण असक्कारिओ णिद्धमणेण णिछूढो। तेण सिट्ठं। इमोऽवि तेण इमवयणेण रूट्ठो सव्ववलेण कोसंबिं एइ। तं आगच्छंतं सोऊण सयाणिओ अप्पवलो अतिसारेण मओ। ताहे मिगावईए चिंतियं—मा इमो वालो मम पुत्तो विणस्सिहि त्ति, एस खरेण न सक्कइ। पच्छा दूओ पट्ठविओ। भणिओ—एस कुमारो वालो। अम्हेहिं गतेहिं मा सामन्तराइणा केणइ अण्णेण वा पेल्लिज्जिहि त्ति। सो भणति—अहं भलामि, को पेल्लेइ? सा भणइ—उस्सीसये सप्पो जोयणसए वेज्जो किं कीरिहिइ? तो णयरं[2] दढं करेहि। तो भणति—आमं करेमि। ताए भण्णइ—उज्जेणीए इट्टाओ वलियाओ, ताहिं कीरउ, आमंति। तस्स च चोद्दस राइणो वसवत्तिणो। तेण ते सवला ठविया। पुरिसपरंपरएण तेहिं आणियाओ इट्टगाओ। कयं (दढं)[3] णगरं। ताहे ताए भण्णइ—इयाणिं धण्णस्स भरेहिं णगरं[4], तओ तेण भरियाओ। जाहे णगरी रोहगसज्जा जाया ताहे सा विसंवइया। चिंतियं च णाए—धण्णा णं ते गामागरणगर...जाव...सण्णिवेसा जेसु णं सामी विहरइ। जइ य सामी इहं एज्जा तओ अहं पव्वज्जं गेण्हेज्जा। तओ भगवं विहरंतो आगंतूण तत्थेव वाहिरियाए समोसढो। तओ वेरा पसमंति। मियावई णिग्गया अब्भितरियाओ। इओ य सामी समोसढोत्ति सोउं एगो पच्चंतमाहणतणओ संसयावन्नो आगंतूण पच्छण्णं मणसा पुच्छइ। ततो सामिणा भणिओ—वायाए पुच्छ देवाणुप्पिया! वहवे सत्ता संवुज्झंति त्ति। एवमवि भणिते तेण भणियं—भगवं! जा सा सा सा? तत्थ भगवया भणियं—आमं ति। भणिए गोयमसामिणा भणियं किमेयेण जा सा सा स त्ति भणियं? एत्थ तीसे उट्ठाणपारियाणियं सव्वं भगवं परिकहेति त्ति। तेणं समयेणं चंपाणामाए णगरीए। तत्थेगो सुवण्णगारो इत्थीलोलो। पंच सुवण्णसयाणि दाऊण जा पहाणा कण्णाणं परिणेइ। एवं तेण पंचसया पिंडिया एक्केक्काए तिलगचोद्दसं अङ्गाभरणं करेइ। जद्दिवसं च जाए समं भोगे भुंजिहिइ तद्दिवसं देइ अलङ्कारं। सेसकालं न देइ। सो इस्सालुओ तं घरं ण कयाइ मोक्कलं मुचइ। न वा अण्णस्स अल्लिउं देइ। सो अण्णया मित्तेहिं पगए वाहितो अणिच्छंतो वला णीओ। तं च विप्पगिट्ठं। तओ तहिं गओत्ति नाऊण ताहिं चिन्तियं—किं अम्हाणं एएणं सुवण्णएणं ति। अज्ज पइरिक्कं ण्हामो समालभामो आविहेमो[5] य। ण्हायाओ पइरिक्कमज्जणविहीए तिलगचोद्दसगेणं अलङ्कारेणं अलङ्कारेऊण अद्दागं गहाय पेहमाणीओ चिट्ठन्ति। सोऽवि य अवरत्तयेण नियत्तो। पहाणपत्तीए से अग्गला अवणिया। तं पसाहियं दट्ठूण कसायालडज्झमाणेणं तालगेणं मारिया। ताओ अण्णाओ य भणंति—एस अम्ह एक्केक्कियं मोरेहिति त्ति। तम्हा एयं एत्थ अद्दागपुंजं करेमो। तत्थेगूणेहिं पंचहिं महिलासएहिं पंच एगूणाइं अद्दागसयाइं जमगसमगं

1 च्छ P. 2 P has नागरीं for णयरं. 3 Wanting in P.
4 रिं P. 5 ह्म P.

पक्खित्तानि[1]। तत्थ सो अट्ठागपुंजो जाओ। पच्छा पुणोऽवि तासिं पच्छादावो जाओ—का गई अम्ह पइमारियाणं भविस्सइ? लोए य उद्धंसणाओ सहियव्वाओ। ताहे ताहिं घणकवाडणिरंतरं णिच्छिड्डाइं ठवेऊण अग्गी दिण्णो सव्वओ समंतओ। तेण पच्छायाणुतावेण साणुक्कोसयाए य ताए य अकामणिज्जेराए पच्चंते मणुस्सा[2] उववण्णा। पंचवि सया चोरा जाया एगंमि पव्वए परिवसंति। सोऽवि य कालगओ अप्पट्ठिइतिरिक्खेसु उववण्णो। तत्थ जा सा पढमं मारिया साऽवि तिरिएसु अप्पठिईसु उववण्णा तओ उव्वट्टिऊण बंभणकुले चेडो आ[3]ओ। सो य पंचवरिसो। सोऽवि य सुवण्णकारो तिरिक्खेहिं तो उव्वट्टिऊण तंमि चेव य कुले दारिया जाया। सो चेडो तीसे बालग्गाही। सावि य असुहभावा णिच्चमेव रुवइ। तओ तेण उदरयोप्पयं करंतेण कहवि सा जोणिदारे हत्थेण आहया। तह चेव ठिया रोविउं। तेण णायं, जहा लद्धो मए उवाओत्ति। एवं सो णिच्चकालमेव करेइ। सो तेहिं मायापितीहिं णाओ। ताहे हणिऊण धाडिओ। साऽवि अपडुप्पण्णा चेव विद्दाया। सो य चेडो पलायमाणो चिरणगरविणट्ठदुट्ठसीलायारो जाओ। गतो एगं चोरपल्लिं जत्थ ताणि एगूणगाणि पंच चोरसयाणि परिवसंति। साऽवि पइरिक्कं हिंडंती एगं गामं गया। सोऽवि गामो तेहिं चोरेहिं पेल्लिओ। सा य अण्णेहिं गहिया। सा तेहिं पंचहिंपि चोरसएहिं परिभुत्ता। तेसिं चिंता जाया—अहो इमा वराई एत्तियाणं धरिसणं सहइ। जइ अण्णा से वितिज्जिया लभेज्जा तो से विस्सामो होज्जा। ततो तेहिं कयाइ तीसे वितिज्जिया आणिया। जद्दिवसं च सा आणिया तद्दिवसं चेव सा तीसे छिद्दा[4]इं मग्गइ, केण पुण उवाएण एयं मारेज्जा। ते य चोरा अण्णया ओधाइया[5]। ती[6]एवि सा भणिया--हला पेच्छ कूवे किंपि दीसइत्ति। तओ सा उज्जुययाए दट्ठूमारद्धा। तीए तत्थेव छूढा। चोरा आगया पुच्छंति। तीए भण्णइ—अप्पणो महिलं[7] किं न सारवेह? तेहिं णायं—जहा एईए मारिया, तओ तस्स बंभणचेडगस्स हियए ठियं, जहा एसा सा मम पावकम्मा भगिणित्ति। चिंतेइ य—भगवं महावीरो सव्वण्णू सव्वदरिसी य त्ति वादो सुव्वइ। ततो एस इहागओ समोसरणे पुच्छइ। ताहे सामी भणइ—स च्चेव सा तव भगिणी, एत्थ सो संवेगमावन्नो पव्वतिओ। एयं च कहाणयं सोउं सव्वा सा परिसा पयणुरागा संवुत्ता। ततो सा मिगावती देवी जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ। उवागच्छित्ता समणं भगवं महावीरं एवं वयासी—भगवं! जाव रायं पज्जोयं आपुच्छामि ततो तुम्ह सगासे पव्वयामि त्ति भणिऊणं पज्जोयं आपुच्छइ तओ सो पज्जोओ तीसे महइमहालियाए सदेवमणुयासुरपरिसाए लज्जाए ण तरइ वारेउं ति विसज्जिया।

---

1 णि P.
2 P has णूसा for णुस्सा.
3 P adds या.
4 ड्डा P.
5 P has उद्धाइया for ओधाइया.
6 ता P.
7 ला.

तओ मिगावई पज्जोयस्स उदयणं कुमारं णिक्खेवणिमित्तं[1] काऊण पव्वइया। पज्जोयस्सवि अट्ठ अंगारवईपमुहाओ देवीओ आउं[2]च्छिऊण पव्वइयाओ। ताणि पंच सयाणि तेण साहुणा गंतुं वोहियाणि पव्वावियाणि य। एयं पसंगेणं भणियं, एत्थ इट्टग[3]परंपरयेण अधिगारो, एस दव्वपरंपरओ त्ति गाथार्थः ॥ १०८०॥ निर्युक्तिगाथा ८७॥

[जिनगणधरादिदेशनापरम्परा]

पश्चार्द्धं व्याचिख्यासुराह—'जिणे'त्यादि। 'उज्जेणी'त्यादि। भावितवत् ॥ १०८१-१०८२॥

त[4]त्राह 'दव्वे'त्यादि। 'द्रव्यस्ये'ष्टकादेः 'परम्परकः' हस्तसञ्चारेण गमनं 'युक्तो' घटते। 'भावश्रुतसंक्रमस्तु कुतः' ? तस्यात्मपर्यायत्वेनान्यत्र संक्रमायोगात्। तत्रैतत् स्यात्—भावश्रुतहेतोर्द्रव्यस्यागमनतस्तदुपचारादागतव्यपदेशः। तदप्यसाधु, यतो'ऽयं स एव जिणगणधरोच्चरितः शब्द इत्येवं नागतः', श्रुत्यनन्तरमेवोपरमादिति गाथार्थः ॥१०८३॥

उच्यते—'आ' इत्यादि। 'जस्स जत्तो समुब्भवो तत्त' आगतमिवागतम्'। तद्यथा—रूपकाद् घृतं, घटात् तद्विज्ञानम्। दार्ष्टान्तिकमाह—'यतस्तत्' सामायिक'मिहगातं परम्परतः' पारम्पर्येणे'त्यसौ परम्परक उपचारात्'। एतदुक्तं भवति—सामायिकमाचार्यपारम्पर्यप्रत्ययत्वात्तस्मादागतमित्युच्यते। न चायमागतशब्दो गमिक्रियावचनः। किं तर्हि उत्पत्तिवचनो वोधवचनो वेति गाथार्थः ॥१०८४॥

[श्रुतपरिपाटी]

निज्जुत्ता ते अत्था जं वद्धा तेण होइ निज्जुत्ती।
तहवि य इच्छावेइ विभासिउं सुत्तपरिवाडी ॥१०८५॥ नि० ८८॥

जं निच्छयाइजुत्ता सुत्ते अत्था इमीएँ वक्खाया।
तेणेयं निज्जुत्ती निज्जुत्तत्थाभिहाणाओ ॥१०८६॥

सुत्ते निज्जुत्ताणं निज्जुत्तीए पुणो किमत्थाणं।
निज्जुत्ते ऽवि न सव्वे कोइ अवक्खाणिए मुणइ ॥१०८७॥

तो सुयपरिवाडि च्चिय इच्छावेइ तमणिच्छमाणं पि।
निज्जुत्ते ऽवि तदत्थे वोत्तुं तदणुग्गहट्ठाए ॥१०८८॥

फलयलिहियं पि मंखो पढइ पभासइ तहा कराईहिं।
दाएइ य पइवत्थुं सुहबोहत्थं तह इहं पि ॥१०८९॥

---

1 P has निद्दित्तं for निमित्तं.  2 पु P.
3 P has इमं for इट्टग.  4 अ P.  5 त्त P.

अहवा सुयपरिवाडी सुत्रोवएसोऽयमेव जदवस्सं ।
सोयव्वं निस्संकिय सुयविणयत्थं सुबोहं पि ॥१०९०॥

इच्छह विभालिउं मे सुयपरिवाडिं न सुट्ठु बुज्झामि ।
नातिमई वा सीसो गुरुमिच्छावेइ वोत्तुं जे ॥१०९१॥

कत्तो पसूयमागयमायरियपरंपराएँ सुयनाणं ।
सामाइयाइयमिदं सव्वं चिय सुत्तमत्थो वा ॥१०९२॥

एयं नणु भणियं चिय अत्थपुहुत्तस्स तेहिं कहियस्स ।
इह तेसिं चिय सीलाइकहणगहणप्फलविसेसो ॥१०९३॥

अथ निर्युक्तिरिति कः शब्दार्थ इत्यत आह—'णिज्जुत्ती' इत्यादि । निश्चयेन साधु आधिक्येनादौ वा युक्ता घटिता इति 'निर्युक्ताः' । के ? 'अर्था'मन्दरमकराकरादयः श्रुतगोचरा जीवादयश्च । एतदुक्तं भवति—'ते ह्यर्थाः' सूत्रे "करोमी"त्यत्र 'प्रतिवद्धा' एव सन्तो 'निर्युक्ताः' सम्यग्व्यवस्थापिताः खल्वनया गाथापद्धत्या । 'ज'मिति यद् येन कारणेन 'तेन' कारणेन 'भवती'यम् । केत्याह—'णिज्जुत्ती' । अत्र च निर्युक्तानां युक्तिर्निर्युक्तयुक्तिरिति प्राप्ते 'निर्युक्ति'रेकस्य 'युक्त'शब्दस्य लोपात् । उष्ट्रमुखी कन्येति यथा । निर्युक्तार्थानां व्याख्या 'निर्युक्ति'रित्यर्थः । आह—ये सकृत्सूत्रे निर्युक्तास्ते निर्युक्ता एव । किमपरेषा[1]मस्यां नियोजनेन येनैषा निर्युक्तयुक्तिरिति प्राप्नोति । उच्यते, सत्यमेवमेतत् । किन्तु 'तथाऽपि च' सूत्रे तान्निर्युक्तानपि सत 'एपयति' संगच्छयति 'विभापितुं' विभाणयितुम् । का ? 'सूत्रपरिपाटी' सूत्रपद्धतिः । सूत्रौलीति यावत् । कम् ? व्याख्यातारमिति सामर्थ्याद् गम्यते । कथं ? हे व्याख्यातः भण भण मामस्मै, नायं मामवगच्छतीति । त्वयैव तेपां निर्युक्तत्वात् किमहं करोमीति चेत् । उच्यते—"णिज्जुत्तेऽवि ण सव्वे कोइ अवक्खाणिए मुणइ" । 'सुत्तपरिवाडि' वा । तदाऽऽचार्य शिष्यः । स चानया भाष्य[2]त इति गाथार्थः ॥१०८५॥

व्याख्या—'ज'मित्यादि । 'यदनया सूत्रे निश्चयादियुक्ताः सन्तोऽर्था व्याख्यातास्तेनेयं निर्युक्तयुक्ति'रिति वाच्ये निर्युक्तिरभिधीयते, युक्तध्वनिलोपात् । किमित्यत आह—'निर्युक्तार्थव्याख्यानादि'ति गाथार्थः १०८६॥

चोदक आह—'सुत्ते' इत्यादि । 'सुत्ते णिज्जुत्ताणं अत्थाणं' सुयगोयराणं पुणो य णिज्जुत्तीए किं' ? सूत्र एव नियोजितत्वेन सुबोध्यत्वात् । उच्यते, 'यतस्तत्र निर्युक्तानपि सतः सर्वान् न कश्चिज्जडधीर्जानाति' शिष्यस्तस्मादस्त्यनया प्रयोजनम्, 'अव्याख्यातानाममुणनादि'ति गाथार्थः ॥१०८७॥

'तो' इत्यादि । 'तत'स्तस्मात् 'श्रुतपरिपाट्येव' कर्त्तृभूता 'तमि'ति तं व्याख्यातार'मनिच्छन्तमपि', अनभ्युपगच्छन्तमपि, 'एपयति' ग्राहं कृत्वा । किं तदित्याह—'वोत्तुं' व्याख्यानयितुम् । कान् ? 'निर्युक्तानपि सतस्तदर्थान्'

1 P has किमपरमेपा for किमपरेपा. 2 प P.

सूत्रार्थान्। किमर्थम्? 'अनुग्रहार्थम्'। एतदुक्तं भवति—अप्रतिबुध्यमाने श्रोतरि तमसावनुग्रहार्थमुपरोधयति, इच्छतेच्छत मामस्मै व्याख्यातुमितीत्थं प्रयोजयतीवेति गाथार्थः ॥१०८८॥

आह—किं बहुनाऽनेनोक्तेन? यदस्पष्टं तदन्यथा (नया) स्पष्टं क्रियते। अत्राचार्यो दृष्टान्तं कथयन्नाह—'फलये'त्यादि। यथेह 'मङ्खः फलकलिखितमपि' सत् अवालुपाटिकादि 'पठति रङ्कास(श?)कलादिना तथा करादिभिश्च दर्शयन् प्रभाषते'—इदमनयाऽन्यजन्मनि द्रोह्यं कृतमिति। अत एवाह—'दर्शयति च प्रतिवस्तु' पूर्वकृतकर्मविपाकम्। यथाऽनयाऽन्यजन्मनि भर्तृमित्र आयाते मुखकोणको दत्त आसीत् ततोऽस्याः शिरस्थाने कणृकवृक्षः समुद्गत इत्येवमादि। किमर्थम्? 'सुखबोधार्थम्'। दार्ष्टान्तिकोपसंहारमाह—'तथेहापि' श्रोतृवैचित्र्यं पश्यन् सर्वानुग्रहणप्रवणबुद्धिर्भगवान् भद्रबाहुस्वामी सूत्रे निर्युक्तानपि सतोऽर्थाननया दर्शयति विनेयानामिति गाथार्थः ॥१०८९॥

'अहवे'त्यादि। 'अथवा' मूलगाथापूर्वार्द्धे व्याख्याते "तहवि य इच्छावेई" केत्याह[1]—'सुयपरिवाडी' श्रुतविधिर्यदुत 'श्रुतोपदेशः' श्रुता'ज्ञेयमेव, यदवश्यं सुबोध्यमपि श्रोतव्यं, निःशङ्कितश्रुतार्थं विनयार्थं चे'ति गाथार्थः ॥१०९०॥

पाठान्तरमधिकृत्याह—'इच्छहे'त्यादि। 'वे'त्यथवा। 'नातिमतिः शिष्यो गुरु'-माचार्य'मिच्छावेइ' एषयति 'वोत्तुं जे' वक्तुम्। कथमित्याह—'इच्छह विभासिउं मे'त्ति इच्छतेच्छत विभाषितुं मम 'सूत्रपद्धतिं, नाहमेनां सुष्ठ्ववबुध्य' इति गाथार्थः। अथवाऽप्रतिबुध्यमाने श्रोतर्यनन्तरत्वान्निर्युक्तिरेवानुप्रयोक्त्री भवति—इच्छतेच्छत विभाषितुं सूत्रपरिपाटिं, नायमवबुध्यत इति निर्युक्तिशब्दार्थः ॥१०९१॥

अथ यदुक्तमनन्तर[2]गाथायां "आयरियपरंपरयेणमागय"न्ति, तत्रायमुत्तरगाथासम्बन्धनार्थं प्रश्नः—'कत्तो' इत्यादि। 'कुतः पुनः प्रसूतामिमामायरियपरंपरागतां' वक्ष्यसे। 'कत्तो वा आगतमाचार्यपारंपर्येण सुयणाणं सामाइयादियमिदं सव्वं चिय सूत्रादिरूप'मिति गाथार्थः ॥१०९२॥

तीर्थकरादिभ्य इति चेदेतदाशङ्क्याह—'एत'मित्यादि। 'नन्वेतत्कथितमेव'। केन ग्रन्थेनेत्यत आह—'अत्थे'त्यादि। अत्राचार्य आह—सत्यं, किं'न्त्विह' वक्ष्यमाने प्रकृते 'तेषामेव' तीर्थकरगणधरादीनां 'शीलादिकथनफलविशेष' उत्कीर्त्यते। तद्यथा—भगवतः 'शीलं'—तपोनियमज्ञानादीनि। 'आदि'शब्दस्तपआदिषु स्वभेदप्रख्यापकः। एतान्येव वृक्षः 'कहण'त्ति तदारोहणेऽभिधानक्रिया। 'फलविसेसो'त्ति भव्यजनबोधनार्थता। गणधराणां त्विह ग्रहणग्रन्थनफलविशेष उत्कीर्त्यते। तत्र 'ग्रहणं' सामर्थ्यप्रापितं, तत्'फलं' ग्रथनं, संदर्भणमित्यर्थः। 'फलाविशेषः' प्रवचनार्थता सुखग्रहणार्थता चेति ॥१०९३॥

---

1 P has केत्यत आह for केत्याह. 2 This refers to निर्युक्तिगाथा No. 87.

अत उच्यते—

[वृक्षादिरूपकम्]

तवनियमनाणरुक्खं आरूढो केवली अमियनाणी ।
तो मुयइ नाणवुट्ठिं भवियजणविबोहणट्ठाए ॥१०९४॥ नि० ८९॥

तं बुद्धिमएण पडेण गणहरा गेण्हिउं निरवसेसं ।
तित्थयरभासियाइं गंथंति तओ पवयणट्ठा ॥१०९५॥ नि० ९०॥

'तवे'त्यादि । 'तं बुद्धी'त्यादि । 'तपो' द्वादशप्रकारमनशनादि । 'नियम' इन्द्रियनियमो नोइन्द्रियनियमश्च । 'ज्ञानं' केवलज्ञानं संपूर्णं गृह्यते । तपश्च नियमश्च ज्ञानं चेति समासः । तान्येव 'वृक्षः' । रूपणे च कारणं वक्ष्यामः । तम् 'आरूढः' अधिष्ठितः । केवलस्य[1] सम्पूर्णताख्यापनार्थं[2]वेत्याह—'केवली'[2] केवलमस्यास्तीति 'केवली' । अयमपि चतुर्धा श्रुतसम्यक्त्वचारित्रक्षायिकज्ञानभेदात् । अथवा श्रुतावधिमनःपर्यायकेवलज्ञानभेदात् । अत आह—'अमितज्ञानी' सर्वज्ञ इत्यर्थः । 'तो' ततस्तमाज्ज्ञानवृक्षात् । 'मुञ्चति' विसृजति । 'ज्ञानवृष्टि' ज्ञानकारणामृतरसास्वादोपमशब्दवृष्टिम् । किमर्थमित्यत आह—अनादिपारिणामिकभव्यभावयुक्तो जनो 'भव्यजन'स्तद्धितार्थाय [3]'तद्विबोधनार्थाय'[3] । अभव्यजनस्य तु मुक्ताऽपि नानुग्रहायासौ, स्वदोषदुष्टत्वाद् आदित्यविस्तृ[4]तकरनिकरवदुत्पलानामिति गाथार्थः । 'तं' तां मुक्तां ज्ञानवृष्टिम् । 'बुद्धिमयेन' बुद्धिविशेषप्रसरतन्त्वात्मकेन । 'पटेन' आधारविशेषेण । 'गृहीत्वा' आदाय । 'निरवशेषां' सस्ताम् । के ? 'गणधराः' तदन्वतिशयिनः पुरुषविशेषाः, बीजादिबुद्धित्वात् । किं कुर्वन्ति ? अत आह—भाषणानि 'भाषितानि' । तीर्थकराणां भाषितानि 'तीर्थकरभाषितानि' कुसुमकल्पानि 'ग्रथ्नन्ति' सूत्रीकुर्वन्ति, विचित्रकुसुममालामिव । किमित्यत आह—'प्रवचनार्थं' द्वादशाङ्गगणिपिटकप्रविभागार्थं, सङ्घार्थं वा प्रवक्तीति प्रवचनत्वात्तस्येति गाथाद्वयार्थः ॥१०९४-१०९५॥ निर्युक्तिगाथा ८९-९०॥

तपआदीनां रूपणे किं प्रयोजनमित्यत आह—

रुक्खाइरूवयनिरूवणट्ठमिह दव्वरुक्खदिट्ठंतो ।
जइ कोइ विउलवणसंडमज्झयारट्ठियं रम्मं ॥१०९६॥

तुंगं विउलक्खंधं साइसओ कप्परुक्खमारूढो ।
पज्जत्तगहियबहुविहसुसुरभिकुसुमोऽणुकंपाए ॥१०९७॥

कुसुमत्थिभूमिचिट्ठियपुरिसपसारियपडेसु पक्खिवइ ।
गंथंति तेऽवि घेत्तुं सेसजणाणुग्गहट्ठाए ॥१०९८॥

1 P adds सम्पूर्णत्वात्. 2...2 चाह P.
3...3 Lacking in P. 4 स्त P.

लोगवणसंडमज्झे चोत्तीसाइसयसंपदोवेओ ।
तवनियमनाणमइयं स कप्परुक्खं समारूढो ॥१०९९॥
मा होज्ज नाणगहणम्मि संसओ तेण केवलिग्गहणं ।
सोऽवि चउहा तओऽयं सव्वण्णू अमियनाणित्ति ॥११००॥
पज्जत्तनाणकुसुमो ताइं छउमत्थभूमिसत्थेसु ।
नाणकुसुमत्थिगणहरसियबुद्धिपडेसु पक्खिवइ ॥११०१॥
कीस कहेइ कयत्थो किं वा भवियाण चेव बोहत्थं ।
सव्वोपायविहिण्णू किं वाऽभव्वे न बोहेइ ॥११०२॥
नेगंतेण कयत्थो जेणोदिन्नं जिणिंदनामं से ।
तदवंझफलं तस्स य खवणोवाओऽयमेव जओ ॥११०३॥
जं व कयत्थस्सवि से अणुवकयपरोवगारिसाभव्वं ।
परमहियदेसियत्तं भासयसाभव्वमिव रविणो ॥११०४॥
किं व कमलेसु राओ रविणो बोहेइ जेण सो ताइं ।
कुमुएसु व से दोसो जं न विबुज्झन्ति से ताइं ॥११०५॥
जं बोहमउलणाइं सूरकरामरिसओ समाणाओ ।
कमलकुमुयाण तो तं साभव्वं तस्स तेसिं च ॥११०६॥
जह वोलूगाईणं पगासधम्मोऽवि सो सदोसेणं ।
उइओऽवि तमोरूवो एवमभव्वाण जिणसूरो ॥११०७॥
सज्झं तिगिच्छमाणो रोगं रागी न भण्णए वेज्जो ।
मुणमाणो य असज्झं निसेहयंतो जह अदोसो ॥११०८॥
तह भव्वकम्मरोगं नासंतो रागवं न जिणवेज्जो ।
न य दोसि अभव्वासज्झकम्मरोगं निसेहंतो ॥११०९॥
मोत्तुमजोग्गं जोग्गे दलिए रूवं करेइ रूवारो ।
न य रागद्दोसिल्लो तहेव जोगे विबोहेंतो ॥१११०॥
तं नाणकुसुमवुट्ठिं घेत्तुं बीयाइबुद्धओ सव्वं ।
गंथंति पवयणट्ठा माला इव चित्तकुसुमाणं ॥११११॥
पगयं वयणं पवयणमिह सुयनाणं कहं तयं होज्जा ।
पवयणमहवा संघो गहेंति तयणुग्गहट्ठाए ॥१११२॥
घेत्तुं व सुहं सुहगुणणधारणा दाउं पुच्छिउं चेव ।
एएहिं कारणेहिं जीयंति कयं गणहरेहिं ॥१११३॥ नि० ९१॥
मुक्ककुसुमाण गहणाइयाइं जह दुक्करं करेउं जे ।
गुच्छाणं च सुहकरं तहेव जिणवयणकुसुमाणं ॥१११४॥

पयववक्कपगरणज्झायपाहुडाइनियतक्कमप्पमाणं ।
तदणुसरता सुहं चिय घेप्पइ गहियं इदं गेज्झं ॥१११५॥
एवं गुणणं धरणं दाणं पुच्छा य तदनुसारेण ।
होइ सुहं जीयंति य कायव्वमिदं जओऽवस्सं ॥१११६॥
सव्वेहिं गणहरेहिं जीयंति सुयं जओ न वोच्छिन्नं ।
गणहरमज्जाया वा जीयं सव्वाणुचिन्नं वा ॥१११७॥
जिणभणिइ च्चिय सुत्तं गणहरकरणम्मि को विसेसोऽत्थ ।
सो तदवेक्खो भासई न उ वित्थरओ सुयं किंतु ॥१११८॥

'रुक्खादिरूवये'त्यादिगाथाः १७ सुगमाः ॥१०९६-१११२॥

'घेत्तुं वे'त्यादि । प्रयोजनान्तरप्रतिपिपादयिषया चेदमुच्यते 'ग्रहीतुं चा'- दातुं च ग्रथितं तत्सूत्रीकृतं 'सुखं' भवति, अर्हद्ववचनवर्षणं, मुक्तमुक्तत्वात् कुसुम- संघातवत् । 'चः' समुच्चये । एतदुक्तं भवति—नानासंदर्भितं सत् तत् पदवाक्य- प्रकरणाध्ययनादिना प्रतिपन्नमयत्नेनाप्युपादातुं शक्यमिति । 'एवं सुखेनैव गुणनधारणे' अस्य क्रियेते । तत्र गुणनमेतावदधीतमेतावच्चाध्येयम् । धारणम- प्रच्युत्या । तथा 'दातुं प्रष्टुं चे'ति । 'चः' समुच्चये । 'एव' । एवकारावधारणाद् ग्रहीतुं सुखमेव भवतीति । दानं शिष्येभ्यो निसर्गः । प्रश्नः संशये निःसन्देहार्थम् । विद्वत्संनिधौ स्वविवक्षासूचकं वाक्यमिति । 'एभिः कारणै'रनन्तरोक्तैर्हेतुभूतैः । 'जीवित'मित्यव्यवच्छित्तिनयाभिप्रायतः सूत्रमेव । 'जीतं'ति प्राकृतशैल्या । 'कृतं' रचितं गणधरैः । अथवा 'जीत'मित्यवश्यं गणधरैः कर्त्तव्यमेतदिति, तन्नामकर्मोदयादिति गाथार्थः ॥१११३॥

व्याख्या—'मुक्के'त्यादि । स्पष्टा ॥१११४॥

तथा च—'पदे'त्यादि । अनेकवर्णसमुदायः 'पदम्' । अनेकपदसमुदायो 'वाक्यम्' । एवं कृतमर्हद्वचनं कृतमत'स्तदनुसरता' पदाद्यनुसरता साधुनेति । शेषं स्पष्टम् ॥१११५॥

'एव'मित्यादि गतार्था ॥१११६॥

'सव्वे ही'त्यादि । यद्वा 'सर्वै'रारचितं तत् 'जीतमिति' पञ्चमव्यवहार- वत् । अव्यवच्छेदनयाभिप्रायात् 'सूत्रमेव' जीवितमुच्यते । 'जीयं' ति प्राकृता- भिधानात् । इति गाथार्थः ॥१११७॥

उत्तरगाथासम्बन्धमाह—'जिने'त्यादि । 'जिनभणितिरेव सूत्रं, गणधर- भाषणे को विशेषः' ? उभयोरपि सूत्रभणनात् । उच्यते—'स' तीर्थकृत् 'तदपेक्षं' गणधरापेक्षं भाषते, मातृकापदाक्षराणि 'उप्पन्ने वे'त्येवमादि । अत एवाह— 'न पुनर्विस्तरेणाचारादिना 'श्रुत'माह । किन्तु ॥१११८॥

अत्थं भासइ अरहा सुत्तं गंथंति गणहरा निउणं ।
सासणस्स हियट्ठाए तओ सुत्तं पवत्तइ ॥१११९॥ नि० ९२॥

नणु अत्थोऽणभिलप्पो स कहं भासइ न सद्दरूवो सो ।
सद्दंमि तदुवयारो अत्थप्पच्चायणफलम्मि ॥११२०॥

तो सुत्तमेव भासइ अत्थप्पच्चायगं न नामऽत्थं ।
गणहारिणोऽवि तं चिय करिंति को पइविसेसोऽत्थ ॥११२१॥

सो पुरिसावेक्खाए थोवं भणइ न उ बारसंगाइं ।
अत्थो तदवेक्खाए सुत्तं चिय गणहराणं तं ॥११२२॥

अंगाइसुत्तरयणानिरवेक्खो जेण तेण सो अत्थो ।
अहवा न सेसपवयणहियत्ति जह बारसंगमिणं ॥११२३॥

पवयणहियं पुण तयं जं सुहगहणाइ गणहरेहिंतो ।
बारसविहं पवत्तइ निउणं सुहुमं महत्थं च ॥११२४॥

नियमगुणं वा निउणं निद्दोसं गणहराऽहवा निउणा ।
तं पुण किमाइपज्जंतपमाणमिह को व से सारो ॥११२५॥

'अत्थ'मित्यादि ॥१११९॥ निर्युक्तिगाथा ९२॥

अस्य व्याख्या—'णणु' इत्यादि । 'नन्वर्थो' घटादि'रनभिलाप्यो' वर्त्तते । 'सः' तीर्थकृत् 'कथं तं भाषते' येनोक्तं "अत्थं सो भासइ"त्ति । स शब्दश्चेत् । तन्न । यतो 'न शब्दरूपोऽसा'वध्वनित्वात् । उच्यते—'सद्दंमि' मधुरमनोहारिण्यस्मिन्[1] स्वामिमुखपङ्कजान्निर्याति सति 'तदुपचारो'ऽर्थोपचारः क्रियते । 'अर्थप्रत्यायनफलत्वा'च्छब्दस्येति गाथार्थः ॥११२०॥

आह—'तो' इत्यादि । 'तत' उपचारेऽपि कृते सति । शेषं सुगमम्[2] ॥११२१॥

अत्रापि परिहारमाह—'सो' इत्यादि । पुव्वद्धं कंठं । ततश्च मातृकापदभाषणं भगवतोऽर्थो वर्त्तते । किमपेक्षयेत्यह आह—'तदपेक्षया' द्वादशांगा[3]पेक्षया । यावति चोक्ते शेषमनुक्तमपि जानते बीजबुद्धीत्वात् । तदपेक्षयाऽर्थः । 'गणधराणां तु त'त्पदत्रयं 'सूत्रमेवा'र्थो वेति गाथार्थः ॥११२२॥

कथं पुन"रर्थो वे"त्युक्तमत आह—[4]"अंगाइ०' गाहा । 'स' इति "उत्पन्ने वे""त्यादि ।[4] शब्दो गणभृतां 'अंगादिसुत्तरयणानिरवेक्खो जेण तेण अत्थो, सेसपवयणं संघो' । अत आह—'अथवे'त्यादि । 'तो सो अत्थो' ॥११२३॥

प्रवचनहितं तु कतमदित्यत आह—'पवयणे'त्यादि । सुगमा । नवरं 'निपुणं ति सूक्ष्मत्वान्महार्थत्वाच्चे'ति ॥११२४॥

प्रकारान्तरमाह—'णियये'त्यादि । 'नियतगुणत्वा'द्वा संनिहिताष्टगुणत्वाद्वा 'निपुणं, निर्दोषत्वा'द्वा द्वात्रिंशद्दोषविरहात् । पाठान्तरेण 'णिउणा वा गणधरा' इति मूलगाथार्थः । उत्तरगाथासम्बन्धमाह—'तं पुण' सुयणाणं 'किमाइ किंपज्जंतं, किंपमाणं, को व से सारो' इति ॥११२५॥

1. स्मत् P.
2 P has स्पष्टम् for सुगमम्.
3 त्य P.
4...4 अंगेत्यादि । स उप्पणेति वे P.

अत आह—

[चरणप्रशंसा]

सामाइयमाईयं सुयनाणं जाव बिन्दुसाराओ ।
तस्सवि सारो चरणं सारो चरणस्स नेव्वाणं ॥११२६॥ नि० ९३॥
सोउं सुयण्णवं वा दुग्गेज्झं सारमेत्तमेतस्स ।
घेच्छं तयंति पुच्छइ सीसो चरणं गुरू भणइ ॥११२७॥
अन्नाणओ हयत्ति य किरिया नाणकिरियाहिं नेव्वाणं ।
भणियं तो किह चरणं सारो नाणस्स तमसारो ॥११२८॥
चरणोवलद्धिहेउं जं नाणं चरणओ य नेव्वाणं ।
सारोत्ति तेण चरणं पहाणगुणभावओ भणियं ॥११२९॥
नाणं पयासयं च्चिय गुत्ति-विसुद्धिप्फलं च जं चरणं ।
मोक्खो य दुगाहीणो चरणं नाणस्स तो सारो ॥११३०॥
जं सव्वनाणलाभाणंतरमहवा न मुच्चए सव्वो ।
मुच्चइ य सव्वसंवरलाभे तो सो पहाणयरो ॥११३१॥
लाभेऽवि य जस्स मोक्खो न होइ जस्स य स होइ स पहाणो ।
एवं चिय सुद्धनया नेव्वाणं संजमं बेंति ॥११३२॥

'सामाइये'त्यादि । सामायिकमादिर्यस्य त'त्सामायिकादि' । 'जाव बिन्दुसाराओ' बिन्दुसारपर्यन्तम् । 'याव'च्छब्दाद् "द्वयनेकद्वादशभेद"मिति गम्यते । 'तस्यापि' श्रुतज्ञानस्य 'सारः' फलं 'चरणम्' । 'चरणं' वा चारो, भावे ल्युट्प्रत्ययः । चर्यते वाऽनेनेति 'चरणम्' । परमपदं गम्यत इत्यर्थः । 'सार'शब्दः प्रधानफलपर्यायो वर्त्तते । 'अपि'शब्दात्सम्यक्त्वस्यापि सारश्चरणमेव । अथवा व्यवहितः सम्बन्धः । तस्य सारश्चरणमपि । 'अपि'शब्दान्निर्वाणमपि । अन्यथा ज्ञानस्य निर्वाणहेतुत्वं न स्यात् । चरणस्यैव च ज्ञानरहितस्य स्यात् । अनिष्टं चैतत्, सम्यग्दर्शनादित्रयान्मोक्षाभ्युपगमात् । इह त्वनन्तरफलत्वाच्चरणस्य, तदुपलब्धिनिमित्तत्वाच्च श्रुतस्य, निर्वाणहेतुत्वसामान्ये सत्यपि ज्ञानचरणयोर्गुण-प्रधानभावादित्थमुपन्यास इति गाथार्थः ॥११२६॥ निर्युक्तिगाथा ९३॥

'सोउ'मित्यादि । अथवा 'सोउं सुयण्णवं दुग्गेज्झं' महत्त्वात्परिमितत्वादायुषः स्वतश्च जडत्वात् । 'सारमात्रकमस्य ग्रहीष्य इति कृत्वा तत्पृच्छति शिष्यः' – कोऽस्य सारः ? 'गुरुर्भणति—चरणम्' । अपृष्ट एवाह—"तस्यापि मोक्षमात्रक"मिति गाथार्थः ॥११२७॥

अत्र दृढमूढतया परस्तस्यापि सारश्चरणमित्यक्षमन्नाह—'अण्णाणओ' इत्यादि । 'अण्णाणओ हयत्ति किरिया', अकिरियाओवि हयं णाणं ति कृत्वा 'ज्ञानक्रियाभ्यां निर्वाणं भणितं भगवता । 'तो किह णाणस्स चरणं सारो, तं तु' णाणं 'असार'मित्युच्यते ॥११२८॥

ननूक्तं सारशब्दः प्रधानफलपर्यायवचन इति । तत्रैतत् स्यात्—एतदेव न क्षम्यत इति । अत आह—'चरणे'त्यादि । 'यत्' यस्मात् । 'ज्ञानं चरणोपलब्धिहेतु'श्चारित्रस्य कारणम् । 'चरणतश्च निर्वाणं', साक्षात्कारणत्वात् । 'तेन' कारणेनास्य 'सारश्चरणम्' । कोऽत्र भावार्थ इति । अत आह—उभयसंयोगान्मोक्ष इति । अत्रोच्यत—'प्रधानभावश्च गुणभावश्च सः' । तस्माद् 'भणित'मुक्तं "चरणं मोक्षकारणं" मूलगाथायामित्युत्तरोत्तरप्राधान्येन पूर्वपूर्वगुणभावादिति गाथार्थः ।।११२९।।

अपि च ज्ञानवादिन् ! 'णाण'मित्यादि । यस्माज्जीवगृहकर्मकचवरविशुद्धौ कर्त्तव्यायां 'ज्ञानं प्रकाशमात्रकरणेनो'पकुरुते, द्रव्यगृहरजोविशुद्धौ प्रदीपवत् । 'चरणं च यस्मात् गुप्तिविशुद्धिफलम्' । गुप्तिश्च विशुद्धिश्च फलञ्च गुप्तिविशुद्धिफलानि, तानि यस्मिन् सन्ति तद् 'गुप्तिविशुद्धिफलम्' । 'गुप्तिः' सप्तदशविधः संयमो । 'विशुद्धि'र्बाह्याभ्यन्तरतपःफला निर्जरा । ततः किमित्यत आह—'मोक्षो द्वयाधीनः' संवरनिर्जरायत्तः । तत एवमिति गाथार्थः ।।११३०।।

एवं तावत्क्षायोपशमिकभावमङ्गीकृत्योक्तम् । अथ क्षायिकमप्यङ्गीकृत्याह—'जं'मित्यादि । [1]'जं सव्वणाणलाभानन्तरं न मुच्यते सर्व' एव प्राणी कर्मणा, 'मुच्यते च सर्वसंवरलाभे ततोऽसा'वेव संवरः 'प्रधानतरः' । केवलज्ञानानन्तरं मोक्षानवाप्तेः ।।११३१।।

तथाहि—'लाभेऽवी'त्यादि । संवरस्तु प्रधानस्तद्भावभावित्वान्मोक्षस्य । अत एव सर्वनयाः संवरमेव निर्वृतिमाहुः, कारणे कार्योपचारादत्यन्तप्रत्यासत्तेर्न तु ज्ञानं व्यवहितत्वादिति गाथार्थः ।।११३२।।

आह पहाणं नाणं न चरित्तं नाणमेव वा सुद्धं ।
कारणमिह न उ किरिया सावि हु नाणप्फलं जम्हा ।।११३३।।

जह सा नाणस्स फलं तह सेसंपि तह बोहकालेऽवि ।
नेयपरिच्छेयमयं रागादिविणिग्गहो जो य ।।११३४।।

जं च मणोचिंतियमंतपूयविसभक्खणाइ बहुभेयं ।
फलमिह तं पच्चक्खं किरियारहियस्स नाणस्स ।।११३५।।

जेणं चिय नाणाओ किरिया तत्तो फलं च तो दोऽवि ।
कारणमिहरा किरियारहियं चिय तं पसाहेज्जा ।।११३६।।

नाणं परंपरमणंतरा उ किरिया तयं पहाणयरं ।
जुत्तं कारणमहवा समयं तो दोन्नि जुत्ताइं ।।११३७।।

कारणमंतं मोत्तुं किरियमणंतं कहं मयं नाणं ।
सहचारित्ते व कहं कारणमेक्कं न पुणरेक्कं ।।११३८।।

---

1 P adds अथवा.

2 P has शुद्ध for सर्व.

रागाइसमो संजमकिरियच्चिय नाणकारणा होज्जा ।
तीसे फले विवाओ तं तत्तो नाणसहियाओ ॥११३९॥
परिजवणाई किरिया मंतेसुवि साहणं न तम्मत्तं ।
तण्णाणओ य न फलं तं नाणं जेणमविकरियं ॥११४०॥
तो तं कत्तो भन्नइ तं समयनिबद्धदेवओवहियं ।
किरियाफलं चिय जओ न मंतनाणोवओगस्स ॥११४१॥
वत्थुपरिच्छेयफलं हवेज्ज किरियाफलं च तो नाणं ।
न उ निच्चसत्थमिट्ठं सुद्धं चिय तं जओऽभिहियं ॥११४२॥
सुयनाणम्मिवि जीवो वट्टंतो सो न पाउणइ मोक्खं ।
जो तवसंजममइए जोगे न चएइ वोढुं जे ॥११४३॥ नि० ९४॥
सक्किरियाविरहाओ इच्छियसंपावयं न नाणंति ।
मग्गण्णू वाऽचेट्ठो वायविहीणोऽहवा पोओ ॥११४४॥
जह छेयलद्धनिज्जामओऽवि वाणियग इच्छियं भूमिं ।
वाएण विणा पोओ न चएइ महण्णवं तरिउं ॥११४५॥ नि० ९५॥
तह नाणलद्धनिज्जामओऽवि सिद्धिवसहिं न पाउणइ ।
निउणोऽवि जीवपोओ तवसंजममारुयविहूणो ॥११४६॥ नि० ९६॥
संसारसागराओ उब्बुड्डो मा पुणो निबुड्डेज्जा ।
चरणगुणविप्पहूणो बुड्डइ सुबहुंपि जाणंतो ॥११४७॥ नि० ९७॥
संसारसागराओ कुम्मो इव कम्मचम्मविवरेण ।
उम्मज्जिउमिह जइणं नाणाइपगासमासज्ज ॥११४८॥
दुलहंपि जाणमाणो सयणसिणेहाइणा तयं चत्तो ।
संजमकिरियारहिओ तत्थेव पुणो णिबुड्डेज्जा ॥११४९॥
आहऽण्णाणी कुम्मो पुणो निमज्जेज्ज न उण तन्नाणी ।
सक्किरियापरिहीणो बुड्डइ नाणी जहऽन्नाणी ॥११५०॥
नेच्छइयनयमएण व अन्नाणी चेव सो मुणंतोऽवि ।
नाणफलाभावाओ कुम्मो व निबुड्डइ भवोहे ॥११५१॥
सुबहुपि सुयमहीयं किं काही चरणविप्पहूणस्स ।
अंधस्स जह पलित्ता दीवसयसहस्सकोडी वि ॥११५२॥ नि० ९८॥
संतंपि तमण्णाणं नाणफलाभावओ सुबहुयंपि ।
सक्किरियापरिहीणं अंधस्स पईवकोडिव्व ॥११५३॥
अंधोऽणवबोहोच्चिय बोहफलं पुण सुयं किमण्णाणं ।
बोहोऽवि तओ विफलो तस्स जमंधस्स वऽवबोहो ॥११५४॥
अप्पंपि सुयमहीयं पगासयं होइ चरणजुत्तस्स ।
एक्कोऽवि जह पईवो सचक्खुअस्सा पयासेइ ॥११५५॥ नि० ९९॥

किरियाफलसंभवओ अप्पंपि सुयं पगासयं होइ ।
एक्कोऽवि हु चक्खुमओ किरियाफलदो जह पईवो ॥११५६॥

नहि नाणं विफलं चिय किलेसफलयंपि चरणरहियस्स ।
निप्फलपरिवहणाओ चंदणभारो खरस्सेव ॥११५७॥

जहा खरो चंदणभारवाही भारस्स भागी न हु चंदणस्स ।
एवं खु नाणी चरणेणहीणो नाणस्स भागी न हु सुग्गईए ॥११५८॥
नि० १००॥

हयं नाणं कियाहीणं हया अन्नाणओ किया ।
पासंतो पंगुलो दड्ढो धावमाणो य अंधओ ॥११५९॥ नि० १०१॥

हयमिह नाणं किरियाहीणंति जओ हयंति जं विफलं ।
लोयणविन्नाणंपिव पंगुस्स महानगरदाहे ॥११६०॥

काहिइ नाणच्चायं किरियाए चेव मोक्खमिच्छंतो ।
मा सीसो तो भन्नइ हया य अन्नाणओ किरिया ॥११६१॥

अइसंकडपुरदाहम्मि अंधपरिधावणाइकिरियव्व ।
तेणंऽन्नोन्नावेक्खा साहणमिह नाणकिरियाओ ॥११६२॥

पत्तेयमभावाओ नेव्वाणं समुदियासुऽवि न जुत्तं ।
नाणकिरियासु वोत्तुं सिकतासमुदायतेल्लं व ॥११६३॥

वीसुं न सव्वहच्चिय सिकतातेल्लं वा साहणाभावो ।
देसोवगारिया जा सा समवायम्मि संपुण्णा ॥११६४॥

संजोगसिद्धीइ फलं वयंति न हु एगचक्केण रहो पयाइ ।
अंधो य पंगू य वणे समेच्चा, ते संपउत्ता नगरं पविट्ठा ॥११६५॥
नि० १०२॥

दुगसंजोगम्मि फलं सम्मं किरिओवलद्धिभावाओ ।
इट्ठपुरागमणं पिव संजोए अंधपंगूणं ॥११६६॥

वइरेगो जं विफलं न तत्थ सम्मकिरिओवलद्धीओ ।
दीसंति गमणविगले जहेगचक्के भुवि रहम्मि ॥११६७॥

सहकारित्ते तेसिं किं केणोवकुरुते सहावेणं ।
नाणचरणाणमहवा सहावनिद्धारणमियाणिं ॥११६८॥

नाणं पयासयं सोहओ तवो संजमो य गुत्तिकरो ।
तिण्हंपि समाओगे मोक्खो जिणसासणे भणिओ ॥११६९॥
नि० १०३॥

असहायमसोहिकरं नाणमिह पगासमेत्तभावाओ ।
सोहेइ घरकयारं जह सुपगासोऽवि न पईवो ॥११७०॥

न य सव्वविसोहिकरी किरियावि जमपगासधम्मा सा ।
जह न तमोगेहमलं नरकिरिया सव्वहा हरइ ॥११७१॥

दीवाइपयासं पुण सकिरियाए विसोहियकयारं ।
संवरियकयारागमदारं सुद्धं घरं होइ ॥११७२॥

तह नाणदीवविमलं तवकिरियासुद्धकम्मयकयारं ।
संजमसंवरियमुहं जीवघरं होइ सुविसुद्धं ॥११७३॥

संजमतवोमई जं संवरनिज्जरफला मया किरिया ।
तो तिगसंजोगोऽवि हु ताउच्चिय नाणकिरियाओ ॥११७४॥

'**आहे**'त्यादि । ज्ञाननय 'आह'—ननु च 'प्रधानं' सारश्चारित्रस्य 'ज्ञानमेव, न तु चारित्रं' मूलत्वात् । 'अथवा ज्ञानमेव शुद्ध'मसहायं 'कारणमिह' मोक्षस्येति प्रकृतम् । अनभिमतप्रतिषेधमाह—'न तु क्रिया' । किमित्यत आह—'असावपि' मोक्षफला क्रिया, 'यस्माज्ज्ञानफलमेव' ज्ञानकार्यमेव मोक्षवत् । तथाहि ज्ञानं मोक्षस्य कारणीभवदपान्तरालवर्तिशैलेश्यवस्थाया अपि कारणीभवत्येव, यथा मृद् घटस्य मृत्पिण्डादीनामपि ॥११३३॥

तथा च—'**जह सा**' इत्यादि । 'यथाऽसौ' क्रिया 'ज्ञानस्य' कारणस्य 'फलं' कार्य 'तथा शेषमपि' क्रियावी[1]र्य मोक्षाख्यं ज्ञानफलमेव । यथा हि मृदो मृत्पिण्डः फलमेवं तत्फलोऽपि घटः, 'तथा बोधकालेऽपि ज्ञेयपरिच्छेदात्मक'मात्मरूपं ज्ञानस्यैव फलं तदन्तरेण तदभावात् । 'यश्च रागादिविनिग्रहः' स चे ति गाथार्थः ॥११३४॥

'**जं चे**'त्यादि । 'यच्च मनश्चिन्तित मन्त्रपूत विषभक्षणनभोगमनादि बहुभेदमिह फलं दृश्यते तत्प्रत्यक्षसिद्धं क्रियारहितस्यैव ज्ञानस्य' फलमिति । एवमदृष्टमपि मोक्षाख्यं वस्तु ज्ञानस्यैव फलमिति पूर्वपक्षः ॥११३५॥

उच्यते '**जेण**'मित्यादि । 'यत एव ज्ञानात् क्रिया' जायते 'ततः' क्रियातश्च 'फलं' मोक्षाख्यम् । 'तो' त्ति । 'अत एव द्वे अपिकारण'मिति ब्रूमः । 'इतरथा क्रियारहितमेव' क्रियानिरपेक्षमपि 'तत्' ज्ञानं 'प्रसाधयेत्' मोक्षं, क्रियामिवेति गाथार्थः ॥११३६॥

यदि नाम—'**णाण**'मित्यादि । 'ज्ञानं व्यवहितकारणं, क्रिया त्वनन्तरकारणमतस्तत्' क्रियानुष्ठानं 'प्रधानतरं युक्तं कारणं मोक्षस्य । 'अथ चेत्समकं' कारणं विवक्षया, 'ततो द्वे अपि युक्ते', न युक्तमप्राधानात्यं क्रियाया इति गाथार्थः ॥११३७॥

अपि च ज्ञानमोक्षवादिन् ! '**कारण**'मित्यादि । 'क्रियामन्त्यं कारणं मुक्त्वाऽनन्त्यं कथं मतं' मोक्षकारणं ? सहचारित्वं चेदुच्यते—'**सहे**'त्यादि स्पष्टम् ॥११३८॥

---

1 का P.

यच्चाभ्यधायि—"रागादिविणिग्गहो जो य"त्ति तदधिकृत्याह—रागादित्यागो 'रागादिप्रशमः' संयमक्रियैव, नान्यत्किञ्चित् । सा च बहुव्रीहिन्यायेन 'ज्ञानकारणा' । ज्ञानफला न स्यादित्युच्चैरिदमभिदध्महे । किन्तु 'तीसे' किरियाए 'फले' शान्तौ विवादः । तथाहि—'त'न्मोक्षफलं किं 'ततः' क्रियाया उत 'ज्ञानसहिता'च्चरणादित्यत्र विचारः । तत्र वयं ब्रूमो—ज्ञानसहितायाः क्रियायाः, न तु ज्ञानमात्राद्रागादिशमक्रियादिवदिति व्यतिरेकोति गाथार्थः ॥११३९॥

यच्चोक्तं "जं चे"त्यादि । अत्रोच्यते **'परो'**त्यादि । **'मंतेसु वि'**त्ति मंत्रज्ञानेष्वपि विषनिर्घातं कुर्वत्सु सत्सु 'परिजपनादिक्रिया' विद्यत एव यत्सहायं तत्करोतीति 'न तन्मात्रं' ज्ञानमात्रं तत्करोति । तत्रैतत्स्यात्—प्रत्यक्षविरुद्धमेतत् क्वचिज्ज्ञानमात्रादेव फलदर्शनात् । अत्रोच्यते, मन्त्र'ज्ञानादेव न फलं' नभोगमनादि । नहि 'तज्ज्ञानं साक्षात्फलमुपाहरदुपलक्ष्यते, मन्त्रज्ञान'स्याक्रियत्वात्' । कथञ्चिदिति शेषः । ततश्चावबोधमात्रशक्तिकं ज्ञानमात्रमित्यर्थः । तथा चोक्तम्—"न योषिद्भक्ष्य भोगज्ञो ज्ञानमात्रात्सुखी भवेदि"ति । प्रयोगः—ज्ञानमात्रं विवक्षितफलसाधनायालं न भवति, अक्रियत्वात्, आकाशवत् । व्यतिरेकेण कुलाल इति गाथार्थः ॥११४०॥

आह—यद्येवं 'तो' इत्यादि । 'ततस्तत्' प्रत्यक्षसिद्धं नभोगमनादिकार्यं कुतः ? उच्यते । भवानेवात्र पृष्टव्यो य एवमाह । न चेज्ज्ञायते, 'भण्यते—'त'त्कार्यं 'मन्त्राक्षरपरिपाटीनिबद्धदेवताप्रसादजनितम् । सा च क्रिया । तत्फलमेव तदि'ति गाथार्थः ॥११४१॥

अत्राविकृत भावार्थप्रतिपादनव्याजेनोपसंजिहीर्षुराह—**'वत्थु'**इत्यादि । **'तो'** ततः पारिशेष्याज्'ज्ञानं वस्तुपरिच्छेदः फलं यस्य' सकललोकालोकनिर्भेदलक्षणस्तत्तथोच्यते । स्यादेतदनेनांशेन सक्रियं भोग्यं, एतदवबोधादिति । 'तदनन्तरं क्रियाफलं च स्यात्' तद्भोगादिति भावार्थः । 'न तु स्वतंत्रमेव जनकं[1] मोक्षस्येति । अत्र स्वमनीषिकां परिहरन्नाह—'यतो भणितं' भगवता ॥११४२॥

किं भणितमित्यत आह—**'सुयणाणम्मि वी'**त्यादि । 'स जीवः श्रुतज्ञाने', 'अपि'शब्दान्मतिज्ञानादिष्वपि 'वर्त्तमानो न मोक्षं प्राप्नोती'ति पक्षः । क्षायोपशमिकत्वादिति सूत्रसूचितो हेतुः । अवधिज्ञान इवेत्युपरिष्टाद्वक्ष्यति । कोऽयमित्यत आह—'यस्तपःसंयमात्मकान् योगान् न शक्नोति वोढु'मित्यनेन हेत्वर्थः सूचितः । दृष्टान्तस्त्वभ्यूह्य इति गाथार्थः ॥११४३॥ निर्युक्तिगाथा ९४॥

अथैतद्व्याख्यानार्थमुत्तरग्रन्थसम्बन्धनार्थं च प्रयोगमाह—**'सक्की'**त्यादि । 'ज्ञानमात्रमभीप्सितार्थप्रापकं न भवति, सत्क्रियाशून्यत्वात्, मार्गज्ञाचेष्टवत्, सद्वातप्रेरणहीनयानपात्रवद्वे'ति गाथार्थः ॥११४४॥

सौत्रमेव दृष्टान्तमाह—'जहे'त्यादि । 'तहे[2]'त्यादि । सुचर्चम् ॥ ११४५-११४६॥ निर्युक्तिगाथा ९५-९६॥

---

1 P adds स्पष्टं  2 चे P.

तस्माच्चरित्रेऽप्रमादवता भवितव्यं येन **'संसारे'**त्यादि। **'संसारसागराद्'** ह्रदादिव कूर्मः। 'उव्वुड्डो' उन्मग्नः, कथञ्चित्काकतालीयन्यायात्, 'मा पुनः' भूयोऽपि तत्रैव 'निमज्जेत्'। नन्वज्ञान्यसावित्यत आह—**'चरणे'**त्यादि। स्पष्टम् ॥११४७॥ निर्युक्तिगाथा ९८॥

**'संसारे'**त्यादि। अत्र भावार्थः—जहा हरदो तहा 'संसारसागरो'। जहा तस्स कहंचि 'चम्मविवरं' तहा 'कम्मविवरं'। जहा 'कुम्मो' तहा जीवो। जहा तस्स उम्मज्जणं तहा जीवस्स सुमाणुसत्तलाभो। जहा तस्स कौमुदीचन्द्रप्रकाशप्राप्तिस्तथा जीवस्स[1] 'जिनधर्मप्राप्तिः'। जहा 'सो तयं दुलभंपि जाणमाणो तओ सयणसिणेहाइणा हेउणा मोहिअ तत्थ पडिवज्झइ'। एवं एसोऽवि नाणी नियं सयणं छड्डेउं परजणमत्तणीकरेइ। अतः प्रतिषेधोऽभिधीयते—मैवं कार्षीः। तथा च 'संयमक्रियारहितस्तत्रैव'—यतो निर्गतस्तत्रैव, 'निमज्जे'न्नात्र सन्देह इति। इति गाथार्थः ॥११४८-११४९॥

**'आहे'**त्यादि। स्पष्टा ॥११५०॥

अथवा—**'नेच्छई'**त्यादि। स्पष्टा॥११५१॥

अतः स्थितमेतत्—**'सु'** इत्यादि ॥११५२॥ निर्युक्तिगाथा ९८॥

**'संतं पी'**त्यादि। 'सदपि'—अधीतमपि। शेषं स्पष्टम् ॥११५३॥

चोदक आह—**'अंधो'** इत्यादि। 'अन्धः'—अज्ञ एवा'लोकाववोधशून्यत्वात्' कूर्मवत्। 'श्रुतं तु किमज्ञानं वोधफलत्वात्', चक्षुष्मत् प्रदीपवत्। उच्यते, 'तस्यासौ वोधोऽपि यस्मादवोध एव', हिताहितविवेकशून्यत्वेन 'विफलत्वादन्धस्येवे'ति गाथार्थः ॥११५४॥

व्यतिरेकमाह—**'अप्पं पी'**त्यादि ॥११५५॥ निर्युक्तिगाथा ९९॥

**'किरिया'**त्यादि। स्पष्टम् ॥११५६॥

अपि च—**'ण ही'**त्यादि ॥११५७॥

**'जहा'** इत्यादि ॥११५८॥ निर्युक्तिगाथा १००॥

तस्मात् **'हय'**मित्यादि ॥११५९॥ निर्युक्तिगाथा १०१॥

**'हये'**त्यादि ॥११६०॥

**'काहिई[2]'**त्यादि ॥११६१॥

किंवदित्याह—**'अई[3]'**त्यादि। 'तेने'ति तेन कारणे'नान्योऽन्यापेक्षे' सत्यौ ज्ञानक्रिये 'साधन'मित्युभयोः संयोगे मोक्ष इति ॥११६२॥

प्रक्रम आह—**'पत्तेये'**त्यादि। स्पष्टा ॥११६३॥

उच्यते—**'वीसु'**मित्यादि। व्यतिरेकी दृष्टान्तः ॥११६४॥

---

1 स्य P. 2 दी P. 3 दी P.

आह च— **'संजो'ग'** इत्यादि ।।११६५।। निर्युक्तिगाथा १०२।।

**'दुग'** णाणकिरियाओ ।।११६६।।

**'वइरेगो'** इत्यादि ।।११६७।।

उत्तरगाथासम्बन्धनार्थमाह—'सहे'त्यादि । **'तेसि'**न्ति णाणचरणाणं ।। ११६८।।

**'नाण'**मित्यादि । सुचर्चा ।।११६९।। निर्युक्तिगाथा १०३।।

'असहाय'मित्यादि ।।११७०।।

**'न ये'**त्यादि । तमःप्रधानं गृहं तमोगृहं, तस्मिन् मलमिति ।।११७१।। [**'दीवे'**त्यादि ।।११७२।।]

**'तहे'**त्यादि । स्पष्टम् ।।११७३।।

आह—एवं द्वयकारणाभ्युपमविरोधः ? उच्यते—**'संजम'** इत्यादि । **'जं'**ति यतः । 'क्रिया' चारित्रात्मिका, एकैव सती 'संयमतपोमयी मता' । किंविशिष्टेत्यत आह—'संवरनिर्जरफला' यथासंख्यमिति । शेषं स्पष्टम् । आह—एवमपि "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः" इति विरुध्येत । सम्यग्दर्शनसाधनाङ्गाभ्युपगमात् । तत्र केचित्परिहारं व्यावर्णयन्ति "पूर्वस्य लाभे भजनीयमुत्तरम् उत्तरलाभे तु नियतः पूर्वलाभ" इति न्यायेनोत्तरग्रहणे पूर्वग्रहमेवेति न विरोधः । अत्रोच्यते—नायं न्यायो ज्यायान्, क्रियामात्रग्रहणप्रसङ्गात्, क्रियालाभेचाद्यद्वयलाभात् । अपि च, नायमागमिकः, ज्ञानशून्यसम्यक्त्वादर्शनात् । अनवबुद्धे श्रद्धानायोगात् । इतश्च न सम्यग्दृष्टिरतः "सम्यग्दृष्टेर्मतिर्मतिज्ञान"मित्येवमादिवचनात् । यच्चाहुः—न निसर्गसम्यग्दर्शनलाभकाले श्रुतमस्ति किल परोपदेशाभावात् । तदपि न मृष्यते । परोपदेशत्वेन शब्दस्य द्रव्यश्रुतमात्रत्वात् । द्रव्यश्रुतस्य चानधिकृतत्वात् । भावश्रुतस्य चाधिकृतत्वात्, तस्य च "सम्मद्दिट्ठिस्स सुयं सुयनाण"मिति वचनेनानिषिद्धत्वात् । मतिज्ञानसद्भावाच्च । मतिज्ञानस्य च श्रुतज्ञानाशून्यत्वात्, "जत्थ मतिनाणं तत्थ सुयनाणं"ति वचनात् । पारिशेष्याज्ज्ञानविशेष एव सम्यक्त्वमिति ज्ञानग्रहणादवरुध्यते । न लाभक्रमनियमात् । कथं पुनः ? उच्यते, यथा बोधात्मिकाया मतेरनाकारत्वादवग्रहेहे दर्शनं, साकारत्वाच्चापायधारणे ज्ञानम्, एवं व्यवसायात्मकत्वेऽवायस्य श्रद्धानावगमतोऽव्यवसायभेदेन सम्यक्त्वज्ञानलक्षणो भेद इति सुष्ठूच्यते—"नाणं पगासय"मित्येवमादीति गाथार्थः ।।११७४।।

अथ पौर्वापर्येणोत्तरगाथासम्बन्धनार्थममुं प्रपञ्चेनाह—

**न लहइ सिवं सुयम्मिवि वट्टंतो अचरणोत्ति जं तस्स ।**
**हेऊ खओवसमओ जह वट्टंतोऽवहिण्णाणे ।।११७५।।**
**सव्विकरियम्मिवि नाणे मोक्खो खइयम्मि न उ खओवसमे ।**
**सुत्तं च खओवसमे न तम्मि तो चरणजुत्तेऽवि ।।११७६।।**

1 यो P.

जं सुयचरणेहिंतो खाइयनाणचरणाणि लब्भंति ।
तत्तो सिवं सुयं तो सचरणमिह मोक्खहेउ त्ति ॥११७७॥
आहं व निज्जिण्णे च्चिय कम्मे नाणंति किं इथ चरणेणं ।
न सुयं खयओ केवलनाणचरित्ताइं खइयाइं ॥११७८॥
तेसु य ठियस्स मोक्खो तो सुयमिह सचरणं तदट्ठाए ।
तं किह मीसं खइयं च केवलं जं सुएऽभिहियं ॥११७९॥
भावे खओवसमिए दुवालसंगंपि होइ सुयनाणं ।
केवलियनाणलंभो नण्णत्थ खए कसायाणं ॥११८०॥ नि० १०४॥
सव्वंपि किमुय देसो केवलवज्जाणि वाविसट्ठेणं ।
चत्तारि खओवसमे सामइयाइं च पाएणं ॥११८१॥
सव्वकसायावगमे केवलमिह नाण-दंसण-चरित्तं ।
देसक्खए वि सम्मं धुवं सिवं सव्वलइएसुं ॥११८२॥

'न लभे'त्यादि । 'न लभइ सिवं' न पाउणइ मोक्खं । 'सुयम्मिवि वट्टंतो' सुयनाणंमि वि वट्टंतो सो 'अचरणो त्ति' । 'जं' ति जं भणियं पूर्वम् । 'तस्स' त्ति । तस्य पक्षत्वात्कारणा'द्धेतु'र्वक्तव्यः । स चायं 'खयोवसमयो'त्ति तस्य क्षायोपशमिकत्वात् । अवधिज्ञान इवेति दृष्टान्तः ॥११७५॥

आह—सचरणेऽपि ज्ञाने मा प्राप्नोतु तत एव हेतोस्तद्वत् । उच्यते, सत्यमेवम् । किन्तु—'सक्की'त्यादि । 'सक्रियेऽपि ज्ञाने मोक्षो' भवति 'क्षायिके', क्षपकश्रेण्युत्तरकालभाविज्ञानचरणाभ्यामित्यर्थः । 'न तु क्षायोपशमिके' । ततः किमित्यत आह—'सूत्रं च' श्रुतज्ञानं च 'क्षायोपशमिके' भावे पठ्यते । तत'स्त-स्मिंश्चरणसहितेऽपि' सति न मोक्ष इति गाथार्थः ॥११७६॥

आह—यद्येवं ततो यदादावुक्तं "सुयनाणंमि वि जीवो वट्टंतो सो न पाउणइ मोक्खं"ति एतन्न वक्तव्यम् । अत्यन्तासंभवेन विवक्षाया अप्यप्रवृत्तेः । उच्यते, साक्षात्प्रतिवाधो, न पारंपर्येणेति । आह च—'ज'मित्यादि । 'यत्' यस्मा'च्छ्रुतचरणयोर्मिश्रयोः क्षायिके ज्ञानचरणे लभ्येते, तयोश्च शिवं' लभ्यते, आनन्तर्येणेति गम्यते । प्रकृतोपसंहारमाह—'तो' ततः 'श्रुतं सचरणमिह मोक्षहेतुः' पारम्पर्येणेति गम्यते । अतो युक्तोऽसावुपन्यास इति गाथार्थः ॥११७७॥

आह—कुतोऽयं हेतुः प्रामाणिक इत्यत आह—"भावे खओवसमिए"[1] इत्यादि । अहवाऽपरं सम्बन्धमाह—'आह' इत्यादि । 'अथवाऽऽहा'नन्तरगाथा[2]यां "त्रयाणामपि समायोगे मोक्ष" इत्युक्तं, तच्चायुक्तं, यतः '**णिज्जिण्णे च्चिय कम्मे णाणं**'ति परिक्षीण एव कर्मणि ज्ञानलाभो, नोदिते । 'अतः किमत्र चरणेन' । एतदुक्तं भवति—यथा कर्मक्षयाज्ज्ञानं जातमेवं मोक्षोऽपि भविष्यति किं चारि-

1 This refers to निर्युक्तिगाथा १०४. 2 This refers to निर्युक्तिगाथा १०३.

त्रेणेति ? उच्यते, 'ण सुयं खयदो'। यदा त्वेवं[1] तदा क्वेदं भ[2]वितुं युज्यते ? किन्तु 'केवलज्ञानचरणे क्षायिके' कर्मनिर्जरणानन्तरमुत्पत्तेः ॥११७८॥

ततः किमित्यत आह—'तेसु' इत्यादि। तयोश्च स्थितस्य मोक्षो' दृष्टः। 'तो सुयमिह सचरणं तदट्ठाए', क्षायिकद्वयार्थमाद्रियते। तत्र च वर्त्तमानो न प्रोप्नोतीत्युक्तम्। पृच्छति—'तत्कथं' श्रुतं 'मिश्रं' क्षायोपशमिकं, क्षायिकं केवलं चारित्रं च ? उच्यते—'यतः श्रुतेऽभिहितम्' ॥११७९॥

[सम्यक्त्वादिलाभक्रमः]

'भावे' इत्यादि। भवनं भवतीति वा 'भावः'। स चौदयिकादिरपि स्यादत आह—'क्षायोपशमिके' प्राग्निरूपितशब्दार्थे। 'श्रुतज्ञानं' श्रुतं 'भवति' वर्तते। किंविशिष्टमित्याह—द्वादश अङ्गानि यस्मिन्निति तद् 'द्वादशाङ्गम्'। 'अपि'शब्दादङ्गबाह्यमपि। अथवा मत्यादित्रयमपि। अथवा सामायिकचतुष्टयमपि। किं तर्हि क्षायिकमित्यत आह—केवलभावः 'कैवल्यं' घनघातिकर्मविरहः। तस्मिन् ज्ञानं 'कैवल्यज्ञानम्'। तस्य 'लाभ' इति विग्रहः। स 'क्षय' एव 'कषायाणां' स्यात्। 'नण्णत्थ'ति नान्येन प्रकारेणेत्यर्थः ॥११८०॥ निर्युक्तिगाथा १०४॥

'सव्वं पी'त्यादि। 'सर्वमपि, आस्तां तावद्देश' इति। शेषं स्पष्टम् ॥११८१॥

पश्चार्द्धव्याचिख्यासयाऽऽह 'सव्वे'त्यादि। 'त्रीण्यप्येतानि षोडशकषायक्षये। देशक्षयेऽप्य'नन्तानुबन्ध्यादिलक्षणे 'सम्यक्त्वलाभो' भवति। 'ध्रुवं' निश्चितम्। 'शिवं' निर्वाणम्। 'सव्वखइएसु' षोडशस्वपि क्षीणेषु, केवलवदिति गाथार्थः॥११८२॥

अथ यदुक्तं "चत्तारि खयोवसम" इत्यादि तदधिकृत्य प्रश्नद्वारेणोत्तरगाथाघटनार्थमिदमाह—

**कहमेयाणमलाभो लाभो व कमो तदावरणया वा।**
**आवरणखयोवसमो समो खओ वा कहं कस्स ॥११८३॥**

**अहवा तवाइमइयं कहमारूढो तरुं जिणो कह वा।**
**तत्तो पवक्खमाणा जाया जिणपवयणुप्पत्ती ॥११८४॥**

**निज्जुत्तिसमुत्थाणप्पसंगओ नाणतरुसमारोहो।**
**वच्चइ य वक्खमाणा समयं जिणपवयणप्पत्ती ॥११८५॥**

'कह'मित्यादि। 'कथमेतेषां' सम्यक्त्वश्रुतदेशसर्वविरतिसामयिकानां 'लाभो न भवति' जीवस्य, कथं वा 'लाभः', 'क्रमो वा' लाभे कः, कस्य वा किं'मावरणं, कस्य वा कथमावरणक्षयोपशमः, कथं वोपशमः क्षयो वे'ति द्वारगाथौघार्थः ॥११८३॥

'अथवे'त्यादि। यदुक्तमवस्तात्—"तव णियमणाणरुक्ख"मित्येवमादि। अत्राजानानः पृच्छति—'तपोनियमज्ञानात्मकं तरुं कथं' केन हेतुना, केन वा

1 त्वे P. 2 भा P

क्रमे'णारूढो जिन' इति। 'कथं वा ततो' जिनात् 'प्रवक्ष्यमाणा जाता जिनप्रवचनोत्पत्ति'रिति सम्बन्धत्रयमिति गाथार्थः ॥११८४॥

इह च पौर्वापर्येण द्वारविधेर्भूतभाविग्रन्थैदपर्यमाह—'णिज्जुती'त्यादि। 'निर्युक्तिसमुत्थान प्रसंगतो'—निर्युक्तिप्रसवाधिकारेण 'ज्ञानवृक्षसमारोहो व्रजति' गच्छति 'समकं' युगपत्। तथा 'वक्ष्यमाणा जिनप्रवचनोत्पत्तिश्च'। 'च'शब्दस्य भिन्नक्रमत्वात् 'व्रजति च समक'मिति वर्त्तत इति गाथार्थः ॥११८५॥

अट्ठण्हं पयडीणं उक्कोसठिईए वट्टमाणो उ।
जीवो न लहइ सामाइयं चउण्हंपि एगयरं ॥११८६॥ नि० १०५॥

वीस अयरोवमाणं कोडाकोडीउ नामगोयाणं।
सयरी मोहस्स ठिई सेसाणं तीसमुक्कोसा ॥११८७॥

आउस्स सागराइं तेत्तीसं अवरओ मुहुत्तंतो।
अट्ठ य नामा-गोए वेयणिए बारस मुहुत्ता ॥११८८॥

मोहस्सुक्कोसाए ठिईएँ सेसाण छण्हमुक्कोसा।
आउस्सुक्कोसा वा मज्झिमिया वा न उ जहण्णा ॥११८९॥

मोहविवज्जुक्कोसयठिईएँ मोहस्स सेसियाणं च।
उक्कोस मज्झिमा वा कासइ व जहण्णिया होज्जा ॥११९०॥

सम्म-सुय-देस-सव्वव्वयाण सामाइयाणमेक्कं पि।
उक्कोसठिईएँ न लहइ भयणा उण पुव्वलद्धाइं ॥११९१॥

सव्वजहण्णठिईउऽवि न लभए जेण पुव्वपडिवन्नो।
आउयजहण्णठिइओ न पवज्जंतो न पडिवन्नो ॥११९२॥

'अट्ठण्ह'मित्यादि। 'अष्टानां' ज्ञानावरणीयादिकर्म'प्रकृतीनामुत्कृष्टस्थितौ वर्तमानो जीवो न लभते सामायिकम्'। किंविशिष्टम्? 'चतुर्णामन्यतरदिति'। त्वपिशब्दौ व्याख्यास्यामः। एताश्च प्रतिसमयोपचीयमानादिस्वभावाऽन्यत्रायुषो "जाव णं अयं जीवे" इत्येवमादिवचनात्। केवली त्वसांपरायिकवन्धक इति समुदायार्थः। 'अपि'शब्दान्मत्यादि च न लभते। अपि च न केवलं न लभते। पूर्वप्रतिपन्नकोऽपि न भवत्युत्कृष्टस्थितिः। तथाहि—सकृदवाप्तसम्यक्त्वस्तत्परित्यागेऽपि न पुनरुत्कृष्टां कर्मस्थितिं वध्नाति, ग्रन्थेरनतिक्रमात् सकृद्भेदे च भेदात्। एवं तावत्समुदायमङ्गीकृत्य। आयुष्कोत्कृष्टस्थितौ तु द्वयोः पूर्वप्रतिपन्नः स्यात्। तद्यथा—उपपातेऽनुत्तरविमानवासी सुर इति। 'तु' शब्दात्सर्वजघन्यस्थितिमानपि सत्त्वविशेषो न लभते, तस्य सूक्ष्मसम्परायच्छद्मस्थवीतरागकेवलित्वेन त्रितयप्रतिपन्नत्वात्। तथाहि—सूक्ष्मसंपरायो मोहनीयजघन्यस्थितिमान्, अनन्तरमेतत् परिशाटविधानात्। इतरो ज्ञानदर्शनावरणान्तरायाणि प्रतीत्य, इतरोऽपि च शैलेश्यवस्थायां भवोपग्राहिकर्मत्रयमङ्गीकृत्य, न त्वायुष्कम्। तस्यैवं जघन्यस्थितित्वे सत्यपि तद्व्यपदेशस्याविवक्षितत्वात्। इतरेषां

किमेवं विवक्षेति चेत्। उच्यते, इह सप्तानामायुष्कवर्जानां जघन्यस्थितीनां कर्मणां स्थितिर्बन्धप्रधाना, नत्वनुभवप्रधाना, जघन्यस्यं ज्ञानावरणस्योत्कृष्टेन महदनुभवेन सह वेदनात्। एवं यावदन्तरायस्य। न त्वेवमायुष्के न्यायोऽयं, यत उत्कृष्टवन्वेतन्मात्रमेव वेद्यते। एवं मध्यमे जघन्ये च। इतश्चैतेष्वयं न्यायः। उत्तरप्रकृतिसंक्रमाच्च। तथाहि—मतिज्ञानावरण एव सर्वज्ञानावरणप्रक्षेपवेदनात्। अत्र तु नैवम्। नहि नारकायुष्केऽन्यदायुष्कान्तरं प्रक्षिप्य भुंक्ते, प्रतिनियतत्वात्। तस्मात् परिभाषितमेवात्रानयोपपत्त्याऽऽयुष्कम्। अतो जघन्यायुष्कस्थितिमांस्तूभयप्रतिपिद्धस्तस्य क्षुल्लकभवग्रहणाधारत्वादिति गाथार्थः ॥११८६॥ निर्युक्तिगाथा १०५॥

अथ किंविशिष्टा खल्वासां स्थितिरित्यत—'वीस'मित्यादि। स्पष्टा ॥११८७॥

'आउस्से'त्यादि। 'आयुपस्तु त्रयस्त्रिंशत्सागरोपमाणी'ति। 'अवरओ' त्ति जहण्णेणं 'महुत्तंतो' अन्तर्मुहूर्त्तं स्थितिः। तद्यथा—पढमबिअउत्थपंचमअट्ठाणं कम्मपयडीणं, यत आह—पच्छद्धं कंठं ॥११८८॥

यतः—"आह किमेया समयं उक्कोसठितीउ आउ [1]एगा उ। एय[2] कहवि अण्णह च्चिय वेचित्तं ? सुण विहिं वोच्छं।" 'मोह' इत्यादि। 'मोहनीयस्योत्कृष्टायां स्थितौ शेषाणां षण्णामुत्कृष्टैव' भवति। मूलवृद्धावुत्तरवृद्धेः। आयुषः को विधिरित्याह—'आयुष' आयुष्कस्य 'तूत्कृष्टा वा स्यात्' सप्तममहीनारकस्येव, 'मध्यमा वा' शेषनारकमनुष्यतिर्यगादेरिव। अनभिमतप्रतिषेधमाह—'न तु जघन्या'ऽऽयुष्यस्य स्थितिः। अस्याः क्षुल्लकभवग्रहणभावित्वात्, तत्र च मोहनीयोत्कृष्टस्थित्यभावादिति गाथार्थः ॥११८९॥

तथा—'मोहे'त्यादि। 'उक्कोसठितीय[3]' त्ति अन्यतरस्य ज्ञानावरणीयादेरन्तरायांत'स्योत्कृष्टायां स्थितौ' सत्याम्। किंविशिष्टस्ये'त्यत आह—' मोहविवज्जस्स' त्ति मोहनीय वर्जस्य। किमेतद्वर्ज्यत इति चेदुच्यते—एतद्वृद्धावन्यवृद्धेर्नियमितत्वात्। किमित्यत आह—'मोहस्स' मोहनीयस्य 'शेषाणां च' प्रकृतीनाम्। अष्टमं तु न[5] विवक्षितमेवेति भावना। 'उत्कृष्टा वा स्यात्', तद्यथा—ज्ञानावरणवृद्धौ सप्तमपृथिवीनारकस्य सर्ववृद्धिः। 'तथा विमध्यमाऽपि कस्यचित्स्यात्, कस्यचिद्वा जघन्यापि स्याद्', यथा ज्ञानावरणवृद्धावेवायुषो जघन्या, क्षुल्लक विषयत्वादिति गाथार्थः ॥११९०॥

एवम्—'सम्मे'त्यादि। सत्तण्हमुक्कोसाए ठिईए चउण्हंपि 'एगयरं ण लभइ'। आयुषि का वार्त्तेत्याह—'आयुष्यु'त्कृष्टे सति ३३ आद्ययोर्द्वयोः सर्व[6]लब्धे

1 नी P. 2...2 एगाये। उय P. 3 यी P.
4 P adds अन्यतरस्य. 5 P drops न. 6 P has पूर्व for सर्व.

अङ्गीकृत्य 'भजना'—विकल्पना । तथाहि—अनुत्तरोपपातिकः 'पूर्वप्रतिपन्न' आद्ययोः, नाधः सप्तमनारक इति गाथार्थः ॥११९१॥

मूलगाथोक्त"तु"शब्दार्थमाह—'सव्वे'त्यादि । सर्वासां जघन्या स्थितिरस्येति 'सर्वजघन्यस्थितिः' । प्राय आयुष्कं विहायेत्येव बोद्धव्यम् । 'असावपि न लभते' । किं कारणमित्याह—'जेण' पुव्वपडिवन्नो' येनायं पूर्वप्रतिपन्न एव भवति, त्रयाणां सूक्ष्मसंपरायादित्वात् । "पूर्वलब्धसम्यक्त्वादित्रयाः सूक्ष्मसम्परायादय" इति **पूज्यपादाः** । आयुषि का वार्तेत्याह—'आयुर्जघन्यस्थिति'स्तूभयप्रतिषिद्धः, क्षुल्लकभवाधारत्वादिति गाथार्थः ॥११९२॥ अलाभद्वारं गतम् ॥

सत्तण्हं पयडीणं अब्भितरओ उ कोडिकोडीए ।
काऊण सागराणं जइ लहइ चउण्हमेगयरं ॥११९३॥ नि० १०६॥

अंतिमकोडाकोडीएँ सव्वकम्माणमाउवज्जाणं ।
पलियासंखिज्जइमे भागे खीणे हवइ गंठी ॥११९४॥

गंठित्ति सुदुब्भेओ कक्खडघणरूढगूढगंठिव्व ।
जीवस्स कम्मजणिओ घणरागद्दोसपरिणामो ॥११९५॥

भिन्नमि तम्मि लाभो सम्मत्ताईण मोक्खहेऊणं ।
सो य दुलहो परिस्समचित्तविघायाइविग्घेहिं ॥११९६॥

सो तत्थ परिस्सम्मइ घोरमहासमरनिग्गयाइव्व ।
विज्जा य सिद्धिकाले जह बहुविग्घा तहा सोऽवि ॥११९७॥

कम्मट्ठिई सुदीहा खविया जइ निग्गुणेण सेसंपि ।
स खवेउ निग्गुण्णोच्चिय किं थ पुणो दंसणाईहिं ॥११९८॥

पाएण पुव्वसेवा परिमउई साहणम्मि गुरुतरिया ।
होइ महाविज्जाए किरिया पायं सविग्घा य ॥११९९॥

तह कम्मट्ठिइखवणे परिमउई मोक्खसाहणे गुरुई ।
इह दंसणाइकिरिया दुलहा पायं सविग्घा य ॥१२००॥

अहव जओच्चिय सुबहुं खवियं तो निग्गुणो न सेसंपि ।
स खवेइ लहइ य जओ सम्मत्तसुयाइगुणलाभं ॥१२०१॥

करणं अहापवत्तं अपुव्वमनियट्टिमेव भव्वाणं ।
इयरेसिं पढमं चिय भन्नइ करणंति परिणामो ॥१२०२

जा गंठी ता पढमं गंठिं समइच्छओ अपुव्वं तु ।
अनियट्टीकरणं पुण संमत्तपुरक्खडे जीवे ॥१२०३॥

'सत्तण्ह'मित्यादि । 'सप्तानामा'युष्कवर्जानां कर्म 'प्रकृतीनां' स्थितिमङ्गीकृत्यान्त्या या 'सागराणां कोटाकोटी तस्या अभ्यन्तर एव कृत्वा' । कम् ? आत्मानमिति गम्यते । किम् ? 'यदि लभते चतुर्णामन्यतरत्' तत एवं लभते,

नान्यथेति। एतदुक्तं भवति—एवं समुत्थानारोहणोत्पत्तयः स्युर्नान्यथेति गाथार्थः ।।११९३।। निर्युक्तिगाथा १०६।।

व्याख्या—'अंतिमे'त्यादि। स्पष्टा। नवरं 'क्षीणे' इति निर्गुणस्यैवेति बोद्धव्यम्। 'भवति' आविर्भवति ग्रन्थिरिति ।।११९४।।

किमुक्तं भवतीत्याह—'गंठी'त्यादि। 'ग्रन्थिरिति जीवस्य घनरागद्वेषपरिणामो' भवति। अत एव चाह—'कर्मजनितः' कर्मात्मको रागद्वेषपरिणामस्य कर्मफलत्वात्। स च ग्रन्थिरिव ग्रन्थिर्भावग्रन्थित्वात्। किंविशिष्ट इत्याह—'सुदुर्भेदः' सुदुर्मोटः। किंवदित्याह—'कक्खडे'त्यादीनां द्वन्द्वं कृत्वा समानाधिकरणः। तत्र 'कक्खडो'ऽतिपरुषः [1]पलाशमूलवद् वल्कलप्रतिबद्धत्वात्[1]। स च शिथिलोऽपि भवतीत्यत आह—'घनः' सर्वतो निविडः, आकृष्याकृष्य परिपीडितत्वात्। स चार्द्रोऽपि भवतीत्यत आह—'रूढः' शुष्कः। असावप्ययःशलाकादिभिरुद्वेष्ट्यत इत्यत आह—'गूढो'ऽनेकशोऽनेकश्च तत्रैव तत्रैवानुविद्धव्याविद्धत्वात् ।।११९५।।

ततः किमित्यत आह—'तस्मिन्' भावग्रन्थौ 'भिन्ने' सति 'सम्यक्त्वाद्यवाप्ति'रिति। आह च—'भिण्णंमी'त्यादि ।।११९६।।

'सो तत्थे'त्यादि। स्पष्टम् ।।११९७।।

आह—'कम्मे'त्यादि। 'कर्मस्थितिरतिद्राघीयसी यदि निर्गुणेनैव' यथाप्रवृत्तकरणतः 'क्षपिता' ततः 'शेषमपि तथैव क्षपयतु, किमत्र दर्शनादिभि'र्येनोच्यते तद्दर्शनाद्यनुगृहीतः क्षपयित्वा मोक्षं यास्यतीति गाथार्थः ।।११९८।।

उच्यते—'पाएणे'त्यादि। यथेह 'महाविद्यायाः पूर्वसेवा' पूर्वक्रिया 'परिमृद्वी भवति' लघ्वी भवति। 'प्रायो'ऽन्यानपेक्षित्वात्। तथा सिद्धिः 'साधनम्'। तस्मिन् 'साधने' सिद्धिवेलायां कृष्णचतुर्दश्यादिवेलायां [2]'गुरुतरा' गुर्वी[2] गरीयसी भवति, सकलसामग्रीसंविधानापेक्षित्वात्। केत्याह—'क्रिया' जपादिलक्षणा। यथा च 'प्रायः सा सविघ्ना'। ततो महार्थसिद्धेः ।।११९९।।

तथा किमित्याह—'तहे'त्यादि। दार्ष्टान्तिकः सुबोध्यः ।।१२००।।

'अथवे'त्यादि परिहारान्तरम्। 'यत एव निर्गुणेन सता प्रभूतं क्षपितमत एवासौ' सातिशयत्वेन गुणैरधिक्रियते, तत्सहायश्च देशन्यूनकोटाकोटीवेद्यं कर्म 'क्षपयिष्यतीति'ति को दोषः? 'यतश्चासा'वस्यां कर्मावस्थायां 'सम्यक्त्वादिगुणलाभं लभते', कर्मविवरसामर्थ्यात्। एकवाक्यतया चेयं गी[3]यते 'च'शब्दलोपादिति गाथार्थः ।।१२०१।।

तं च करणेनासौ लभते। तच्च त्रिविधमिति। आह च—'करण'मित्यादि। तत्रैकं 'करणं यथाप्रवृत्तं' भवति। यथैव प्रवृत्तं पूर्वोत्तरावस्थयोरविशिष्टत्वात्,

---

1 P has पलाशमूलवल्कप्रतिबद्धत्वात्. 2...2 गुर्या P. 3 नी P.

सांसिद्धिकमित्यर्थः । तथाऽप्राप्तपूर्वं'मपूर्वं' प्रागवस्थाविशिष्ट[1]रूपम् । निवर्त्तनशीलं निवर्त्ति, न निवर्त्ति 'अनिवर्त्ति' । आ सम्यग्दर्शनभावात्[2] । एतच्च त्रयं 'भव्याना-मेव' भवति । 'अभव्यानां त्वाद्यमेव' । 'करणं' त्वात्मपरिणामो भण्यते', अध्यवसायविशेष इति गाथार्थः ॥१२०२॥

अथ कतमत्कथं भवतीत्याह—'जा गंठी'त्यादि । तत्रादितः प्रारभ्य आ ग्रन्थेराद्यं, यत्र प्रभूतकर्मसैन्यजेता विश्राम्यतीति भावार्थः । तथा समाधि[3]र्भूतोल्ल-सदध्यवसायकुन्ताग्रेण 'ग्रन्थिं भिन्दानस्यापूर्वम्' । 'इतरत्तु सम्यक्त्वाभिमुखस्ये'ति गाथार्थः ॥१२०३॥

यथा च प्रभूतं क्षपयित्वा सामायिकमवाप्नोति तथा दृष्टान्तानाह—

पल्लग गिरिसरिउवले पिवीलियापुरिसपहजरग्गहिया ।
कोद्दवजलवत्थाणि य सामाइलाभदिट्ठंता ॥१२०४॥ नि० १०७॥

जो पल्लेऽतिमहल्ले धण्णं पक्खवइ थोवथोवयरं ।
सोहेइ बहुबहुतरं झिज्जइ थोवेण कालेण ॥१२०५॥

तह कम्मधन्नपल्ले जीवोऽणाभोगओ बहुतरागं ।
सोहंतो थोवतरं गेण्हंतो पावए गंठिं ॥१२०६॥

गिरिनइवत्तणिपत्थरघडणोवम्मेण पढमकरणेणं ।
जा गंठी कम्मठिईखवणमणाभोगओ तस्स ॥१२०७॥

खितिसाभावियगमणं थाणूसरणं तओ समुप्पयणं ।
थाणं थाणुसिरे वा ओरुहणं वा मुइंगाणं ॥१२०८॥

खिइगमणंपिव पढमं थाणूसरणं व करणमप्पुव्वं ।
उप्पयणंपिव तत्तो जीवाणं करणमनियट्टिं ॥१२०९॥
थाणुव्व गंठिदेसे गंठियसत्तस्स तत्थऽवत्थाणं ।
ओयरणं पिव तत्तो पुणोऽवि कम्मट्ठिइविवुड्ढी ॥१२१०॥

जह वा तिन्नि मणूसा जंतडविपहं सहावगमणेणं ।
वेलाइक्कमभीया तुरंति पत्ता य दो चोरा ॥१२११॥
दट्ठुं मग्गतडत्थे तत्थेगो मग्गओ पडिनियत्तो ।
बितिओ गहिओ तइओ समइक्कंतो पुरं पत्तो ॥१२१२॥
अडवी भवो मणूसा जीवो कम्मट्ठिई पहो दीहो ।
गंठी य भयत्थाणं रागद्दोसा य दो चोरा ॥१२१३॥
भग्गो ठिइपरिवुड्ढी गहिओ पुण गंठिओ गओ तइओ ।
सम्मत्तपुरं एवं जोएज्जा तिण्णि करणाइं ॥१२१४॥
उवएसओ सयं वा लहइ पहं कोइ न लभइ कोई ।
गंठित्थाणं पत्तो सम्मत्तपहं तहा भव्वो ॥१२१५॥

1 P adds मात्म. 2 P has लाभात् for भावात्. 3 वि P.

भेसज्जेण सयं वा नस्सइ जरओ न नस्सई कोई ।
भव्वस्स गंठिदेसे मिच्छत्तमहाजरोऽव्वेवं ॥१२१६॥

नासइ सयं व परिकम्मओ व जह कोद्दवाण मयभावो ।
नासइ तह मिच्छमओ सयं व परिकम्मणाए वा ॥१२१७॥

अप्पुव्वेण तिपुंजं मिच्छत्तं कुणइ कोद्दवोवमया ।
अनियट्टीकरणेण उ सो सम्मद्दंसणं लहइ ॥१२१८॥

तित्थकराइपूयं दट्ठूणऽण्णेण वावि कज्जेण ।
सुयसामाइयलाहो होज्ज अभव्वस्स गंठिम्मि ॥१२१९॥

मयणा दरनिव्वलिया निव्वलिया य जह कोद्दवा तिविहा ।
तह मिच्छत्तं तिविहं परिणामवसेण सो कुणइ ॥१२२०॥

जहवेह किंचिमलिणं दरसुद्धं सुद्धमंबु वत्थं च ।
एवं परिणामवसा करेइ सो दंसणं तिविहं ॥१२२१॥

सम्मत्तम्मि उ लद्धे पलियपुहुत्तेण सावओ होइ ।
चरणोवसमखयाणं सागरसंखंतरा होंति ॥१२२२॥

एवं अप्परिवडिए सम्मत्ते देवमणुयजम्मेसु ।
अण्णयरसेढिवज्जं एगभवेणं व सव्वाइं ॥१२२३॥

अहुणा जस्सोदयओ न य लभई दंसणाइसामइयं ।
लद्धं व पुणो भस्सइ तदिहावरणं कसायाई ॥१२२४॥

अहवा खयाइओ केवलाइं तं जेसिं ते कइ कसाया ।
को वा कस्सावरणं को व खयाइक्कमो कस्स ॥१२२५॥

'पल्लये'त्यादि । द्वाराणि नव ॥१२०४॥

आद्यद्वारव्याचिख्यासयाऽऽह—'जो 'पल्ले' इत्यादि'[1] । अथमस्याः सम्बन्धः । परश्चोदयति—ननूक्तं सर्वस्य संसारिणो योगवतः प्रतिसमयं कर्मणश्चयापचयौ स्याताम् । तथा च मिथ्यादृष्टिरेवम् । यत उक्तम्—

"पल्ले महइमहल्ले कुंभं पक्खिवइ सोहए नालिं ।
अस्संजए अविरए वहु वंधइ निज्जरे थोवं ॥१॥

पल्ले महइमहल्ले कुंभं सोहेइ पक्खिवे णालिं ।
जे संजए पमत्ते वहु निज्जर[2] वंधती थोवं ॥२॥

पल्ले महइमहल्ले कुंभं सोहेइ पक्खिवे ण किंचि ।
जे संजएऽपमत्ते वहुनिज्जर वंधइ ण किंचि ॥३॥"

यतश्चैवं कथमसंयतमिथ्यादृष्टिरियत्याः कर्मस्थितेरपचेता भविष्यति येनायं ग्रन्थिदेशमवाप्नुयादिति । उच्यते—प्रायोवृत्तिरेषा यदुक्तमाद्यगाथायां—

1...1 पल्लयेत्यादि P. 2 रे P.

"पल्ल" इत्यादिना । अन्यथोपचयावस्थानाभावेन कर्मपुद्गलमाना[1]नवस्थानतः सर्वपुद्गलवन्धप्रसङ्गः स्यात् । तथा च सति सम्यग्दृष्ट्याद्यभावः । दृश्यंते च सम्यग्दृष्ट्यादयः । तस्मादिह कस्यचिद्बन्धहेतुप्रकर्षात् पूर्वोपचितकर्मानुभूतिहेतुवैकल्याच्चोपचय प्रकर्षः । कस्यचिद् वन्धानुभवहेतुसाम्यादुपचयापचयसाम्यम् । कस्यचित्तु मन्दपरिणामतया वन्धहेतुवैकल्यादनुभवनहेतुप्रकर्षाच्चापचयप्रकर्षस्तद्यथा—'जो पल्लेऽइमहल्ले'[2] ॥१२०५॥

'तहे'त्यादि । सुगमम् । दारं ॥१२०६॥

कथं पुनरनाभोगतोऽपचय इति द्वितीयं द्वारमाह—'गिरी'त्यादि । 'गिरिसरिदुपलघट्टनौपम्येने'ति । यथाहि गिरिनदीपाषाणाः परस्परतः संघृष्यमाणा नैकाकृतयो जायन्ते । (तथा भव्या) अनभिप्रायवन्तोऽपि । केनेत्याह—'प्रथमकरणेन, तस्यानाभोगात्कर्मक्षपणं यावद् ग्रन्थि'रिति गाथार्थः ॥१२०७॥ दारं ॥

'खिई'त्यादि । 'मुइंगाणं' पिपीलिकानाम् । किमुक्तं भवति ? यथेह पिपीलिकानां 'खिइसाहाविययगमणं' ति पृथिव्यां स्वाभाविकमवसर्पणं प्रागवस्थायाः खल्वविशिष्टमितश्चेतश्च वम्भ्रमणमित्यर्थः । एवमनाभोगतो जीवस्य द्राघीयः कर्मस्थितिक्षपणम् (१) । 'थाणूसरणं' ति यथा च तासां पुनः 'स्थाणौ सरण'मारोहणम् । तथा जीवानामपूर्वकरणं किलाप्राप्तपूर्वत्वेन विशिष्टतरत्वात् (२) । 'ततो समुप्पयणं' ति यथा च तासामेव ततः स्थाण्वारोहणादुत्पतनं संजातपक्षत्वाद्विहायोगमनम् । एवमनिवृत्तिकरणमिति (३) । तथा 'थाणं थाणुसिरे व'त्ति । अथवा यथा स्थाणुशिरस्येव तासां स्थानमितश्चेतश्चाजिगमिषयाऽऽसनम्, एवं ग्रन्थिकसत्त्वस्य, तत्र संमोहो "णो हव्वाए णो पाराए" त्ति कृत्वा । 'ओरुहणं व' त्ति यथा वा तासां ततः स्थाणुशिरसोऽवतरणं, तथा ग्रन्थिकसत्त्वस्य पुनरप्युत्कृष्टकर्मस्थितिपरिवृद्धेस्त एव दरास्त एव मेढका इति ॥१२०८॥

आह च—'खिइगमण'मित्यादि । 'थाणुव्वे'त्यादि । देशतश्च दृष्टान्त इति विरोधचोदना परिहर्त्तव्येति ॥१२०९-१२१०॥ द्वारम् ॥

[3]'जह वे'त्यादि[3] । पुरुषदृष्टान्तस्तु सोपनयः सुगमः ॥ दारं ॥१२११-१२१४॥

'उव' इत्यादि । तथा ग्रन्थिस्थानं प्राप्तो भव्यः सम्यक्त्वपन्थानमुपदेशादिभ्यो लभत इति ॥१२१५॥ द्वारम् ॥

'भेस' इत्यादि । भैषज्य'मुपदेश इति ॥१२१६॥ द्वारम् ॥

'नासइ' इत्यादि ॥१२१७॥

इह चायमात्मा 'अपुव्वे'त्यादि । 'अपूर्वकरणेन मिथ्यात्वं त्रिपुञ्जीकरोति' । कयोपमयेत्याह—मदनार्द्धशुद्धशुद्ध'कोद्रवोपमानेन' । ततो'ऽनिवृत्तिकरण'विशेषात् त्रयेऽपि 'सम्यक्त्व'मेवानुपतति । एष [5]'भावद्रव्यो'[5] ग्रन्थयन्तः-

1 P has परिमाण for मान. 2 P adds त्यादि. 3...3 Wanting in P.
4 ज P. 5...5 तावद्भ्यो P.

स्थितः, तत्परित्यागेऽपि पुनर्लभन्नित्थमेव मिथ्यात्वं करिष्यति, तत्राप्यपूर्वमिवापूर्वमिति **जिनभटाचार्यपूज्यपादा** इति गाथार्थः ॥१२१८॥

'तित्थ'मित्यादि। 'अभव्यस्य तु ग्रन्थौ'व्यवस्थितस्य 'तीर्थकरादिस्नात्रपूजासंस्कारादिदर्शनाद्' आहारदेवलोकप्राप्तिश्रवणाद्वा 'श्रुतसामायिकमात्रलाभ' इति गाथार्थः ॥१२१९॥

"अपुव्वेण तिपुंज"मित्यस्य विवरणमाह—'**मयणा**' इत्यादि ॥१२२०॥ द्वारम् ॥

'जहे'त्यादिद्वारद्वयं स्पष्टम् ॥१२२१॥

'लाभोव' त्ति गतम्। ततः '**सम्म**' इत्यादि। 'सम्यक्त्व एव' सम्यक्त्वमात्रके 'च लब्धे' सति ग्रन्थिभेदप्रसादात् पुनस्तस्याः सर्वचरमकोटीकोटेः[1] 'पल्योपमपृथक्त्वेन' क्षीणेन सता 'श्रावकः स्यात्'—देशविरतिं प्रतिपद्येत। ततः संख्येयेषु सागरोपमेषु क्षीणेषु 'चारित्री' स्यात्, ततः संख्येयेष्वे'वोपशमी' स्यात्, संख्येयेषु च 'क्षयी'ति गाथार्थः ॥१२२२॥

कथमयं क्रम इत्यत आह—'**एव**'मित्यादि। 'एव'मयं क्रम उक्तः। 'अप्परिवडिए संमत्ते'। केसु ? 'देवमणुयजम्मेसु'। एतदुक्तं भवति—सम्यक्त्वं लब्ध्वा मनुष्यः सन्नुपशामश्रेण्यां मृत्वा सर्वार्थं व्रजति। पुनर्मनुष्यो भूत्वा क्षपकश्रेणिमवाप्य मोक्षं गच्छति। षट्षष्टिसागरोपमविषयत्वात्सम्यक्त्वसन्ततेः। तथाऽधस्त्येष्वपि देवलोकेष्वेनां सम्यक्त्वस्थितिं नयति मनुष्यभवेषु च, विरोधाभावात्। तदेवमनया विवक्षयाऽयं क्रम उच्यते। अन्यथा '**अन्नयरे**'त्यादि स्पष्टम्। यदा अंते उपशमकश्रेणी तदाऽनुत्तरादौ गच्छति। यदा तु क्षपकश्रेणी तदा मोक्षमित्यभिप्राय इति गाथार्थः ॥१२२३॥ क्रमद्वारं गतम् ॥

## [कषायविवरणम्]

उत्तरगाथासम्बन्धनार्थमाह—'**अधुणे**'त्यादि। 'तदिहावरणं' प्रतन्यते गाथायाम्। तच्च 'कषायादि'। एतदुक्तं भवति—सम्यक्त्वसामायिकस्यावरणं कषायादि मिथ्यादर्शनं च। श्रुतस्य ज्ञानावरणं, चारित्रमोहनीयं च चारित्रस्येति गाथार्थः ॥१२२४॥

'**अथवे**'त्यादि। 'अथवे'ति सम्बन्धान्तरप्रदर्शनार्थः। यदुक्तं 'क्षयादितः केवलज्ञानप्राप्त्यादि'। 'तद् येषां' क्षयादितो लभ्यते। 'आदि'शब्दात्क्षयोपशमः परिगृह्यते। 'ते कति कषायाः, को वा' कषायः 'कस्य' सामायिक'स्यावरणम्'। उपरितनस्यापिसम्बन्धनार्थमाह—'को वा क्षयक्षयोपशमक्रमः कस्य' कषायादेरिति गाथार्थः ॥१२२५॥

---

1 ट्याः P.   2 सा P.

अत आह—

पढमिल्लुयाण उदये नियमा संजोणाकसायाणं ।
सम्मद्दंसणलंभं भवसिद्धियावि न लहंति ॥१२२६॥ नि० १०८॥
खवणं पडुच्च पढमा पढमगुणविघाइणोत्ति वा जम्हा ।
संजोयणाकसाया भवादिसंजोयणाओ त्ति ॥१२२७॥
कम्मं कसं भवो वा कसमाओ सिं जओ कसाया ते ।
कसमाययंति व जओ गमयंति कसं कसाय त्ति ॥१२२८॥
आओ व उवादाणं तेण कसाया जओ कसस्साया ।
चत्तारि बहुवयणओ एवं बिइयादओऽवि मया ॥१२२९॥
भवसिद्धियावि भणिए नियमा न लहंति तयमभव्वावि ।
अविसद्देण व गहिया परित्तसंसारियाईया ॥१२३०॥

'पढमी'त्यादि । प्रथमा एव 'प्रथमिल्लुकाः' । देशीवचनतो यथा 'पढमिल्ला एत्थ घरे'[1] इत्येवमादि । 'तेषा'मनन्तानुबन्धिनां क्रोधादीनामित्युक्तं भवति । प्राथम्यं चामीषां सम्यक्त्वाख्यप्रथमगुणघातित्वात् क्षपणक्रमाद्वेति । 'उदये' 'उदीरणावलिकागततत्पुद्गलोद्भूतजीवाशुभभावपरिणतौ । किंविशिष्टानामित्याह— कर्मणा तत्फलभूतेन वा संसारेण सह संयोजयन्तीति 'संयोजनाः' । 'संयोजनाश्च ते कषाया'श्चेति समासः । तेषाम् । किमत आह—'नियमात्' नियमेन 'सम्यग्दर्शनलाभं' सकलकल्याणपरम्परामूलम् । भवे सिद्धिर्येषां ते 'भवसिद्धिकाः' । ननु च सर्वेषामेव भवे सति । सिद्धिर्भाविनी[2]ति । उच्यते—एवमेतत् । किन्त्विह प्रकरणात्तद्भवोऽधिक्रियते । ततश्च भविष्यत्सिद्धिका अपि चरमशरीरा अपि, आस्तां तावदभव्यादयो, 'न लभन्ते' नासादयन्ति अशुद्धदलिकोपरक्तत्वादिति गाथार्थः ॥ १२२६॥ निर्युक्तिगाथा १०८॥

'खवण'मित्यादि । गतार्था ॥१२२७॥

अथवा—'कम्म'मित्यादि । 'कर्म कषं' कष्यत आत्माऽस्मिन्निति कृत्वा, सुवर्णवत् । 'भवो वा' कष्यतेऽनेनेतिकृत्वा । तथा कर्म भवो वा 'आयो' लाभो येषां ते 'कषायाः' । अथवा यतः कषमाययन्ति' गमयन्त्यतः कषाया इति गाथार्थः ॥१२२८॥

'आयो[3]'इत्यादि । 'अथवा' यत 'आय उपादानं' हेतुः । 'तेन कषस्याया ये ते कषायाः । ते च 'चत्वारो' भवन्ति । कुतो ज्ञायत इत्याह—'बहुवचनः' । "पढमिल्लुयाणं"ति वचनात् । 'एवं द्वितीयादयोऽपि' द्वितीयतृतीयचतुर्था 'मता' उत्तरोत्तरगुणघातित्वेनेति गाथार्थः ॥१२२९॥

---

1...1 पढमिल्लाए छप्परे P.  2 P has भवती for भाविनी
3 ओ P.

'भवे'त्यादि । गतार्थेति[1] मूलगाथार्थः ॥१२३०॥

वीयकसायाणुदए अप्पच्चक्खाणनामधेयाणं ।
सम्मद्दंसणलंभं विरयाविरइं न उ लहंति ॥१२३१॥ नि० १०९॥

सव्वं देसो व जओ पच्चक्खाणं न जेसिमुदयम्मि ।
ते अपच्चक्खाणा सव्वनिसेहे मओऽकारो ॥१२३२॥

सम्मद्दंसणलंभं लहंति भविय त्ति वक्कसेसोऽयं ।
विरयाविरइविसेसणतुसद्दसंलक्खिओऽयं च ॥१२३३॥

'बीये'त्यादि । देशविरतिलक्षणद्वितीयगुणघातित्वात् क्षपणक्रमाद्वा 'द्वितीयाः' क्रोधादय एव 'कषाया' निरूपितनिरुक्ताः, द्वितीयाश्च ते कषायाश्चेति 'द्वितीयकषायाः' । 'तेषामुदये' । किंविशिष्टानां ? 'न विद्यते प्रत्याख्यानं' काकमांसभक्षणनिवृत्तिरूपमपि 'येषू'दयप्राप्तेषु ते तथोच्यन्ते । प्रसज्यप्रतिषेधश्चायमत्र नञिति । 'त एव नामधेयं येषां' ते तथोच्यन्ते । तेषां किमत आह— 'सम्यग्दर्शनलाभं' भव्या लभन्त इति वाक्यशेषः । अयं च वाक्यशेषो विरत्य[2]-विरतिविशेषणात्तुशब्दादध्यवसीयते । तथा चाह—विरमणं 'विरतम्' । न विरतिरविरतिः' । 'विरमणं चाविरतिश्च यस्यां' निवृत्तौ सा तथोच्यते । तां 'विरताविरतिम्' । 'न तु लभन्ते' । 'तु'शब्दात्सम्यग्दर्शनं तु लभन्ते प्रथमकषायक्षयोपशमतः, प्रशमादिगुणोपेतत्वादिति गाथार्थः ॥१२३१॥ निर्युक्तिगाथा १०९॥

'सव्व'मित्यादि । 'सम्म'मित्यादि । गतार्थम् ॥१२३२-१२३३॥

तइयकसायाणुदए पच्चक्खाणावरणनामधेज्जाणं ।
देसेक्कदेसविरइं चरित्तलंभं न उ लहंति ॥१२३४॥ नि० ११०॥

सव्वं पच्चक्खाणं वरेंति ते जं न देसभेएणं ।
पच्चक्खाणावरणा आ मज्जादीसदत्थेसु ॥१२३५॥

नासंतस्सावरणं न सतोऽभव्वाइविरमणपसंगा ।
पच्चक्खाणावरणा तम्हा तस्संभवावरणा ॥१२३६॥

उदए विरइपरिणई न होइ जेसिं खयाइओ होई ।
पच्चक्खाणावरणा न इह जहा केवलावरणं ॥१२३७॥

'तइये'त्यादि । सर्वविरतिलक्षणतृतीयगुणघातित्वात् क्षपणक्रमाद्वा 'तृतीयाः' । 'कषायः' प्राग्वत् । पुनश्च सामानाधिकरणः । तेऽपि च क्रोधादय एव चत्वार'स्तेषा मुदये' । किंविशिष्टानाम् ?—आवृण्वन्ती'त्यावरणाः' । 'प्रत्याख्यानं' विरतिरूपं चारित्रम् । तस्यावरणा इति 'प्रत्याख्यानावरणाः' । 'प्रत्याख्यानावरणा एव नामधेयं येषां' ते तथोच्यन्ते । तेषाम् । तत्रैतत्स्यात्—अप्रत्याख्याननामधेयानामुदये न प्रत्याख्यानं लभ्यते, नञः प्रतिषिद्धत्वात् । इहापि चावरणशब्देन तस्यैव प्रतिषेधात् क एषां मिथो विशेष इति उच्यते—तत्र हि नञ् सर्वप्रतिषेधे । इह

1 P has गतार्थमिति for गतार्थेति— 2 ता P.

इह पुनराङो मर्यादिपदथवचनत्वान्मर्यादया वृण्वन्तीत्यावरणास्तश्च सर्वविरति-निषेधार्थएवायं वर्त्तते, न देशविरतिनिषेधार्थोऽप्यावरणशब्दः। तथा चाह—देशश्चैकदेशश्च 'देशैकदेशौ' स्थूरप्राणातिपातः। 'एकदेश'स्तस्यैव यथादृश्य-वनस्पतिकायातिपातः। 'तयोर्विरति'र्निवृत्ति'स्ताम्'। लभन्त इति शेषः। अत्रापि वाक्यशेषश्चारित्रविशेषणात् 'तु'शब्दादाक्षिप्यत इत्याह—'चारित्रलाभं न तु लभन्ते'। देशविरतिं पुनर्लभन्ते, अन्त्यकोटाकोटीतः[1] क्षीणपल्योपमपृथक्त्वादिति गाथार्थः ॥१२३४॥ निर्युक्तिगाथा ११०॥

'सव्व'मित्यादि। 'ते हि यतः सर्वं प्रत्याख्यातं वृण्वन्त्युदिताः सन्तः, किन्तु न देशम्'। 'एतेणे'त्यादि स्पष्टम् ॥१२३५॥

ननु चाऽऽवृण्वन्तीत्यावरणा इत्युक्तम्। अतोऽभिदध्महे—किं सतः प्रत्याख्यानस्यावरणास्ते उतासतः? किं चातः। यद्यसतस्ततो 'नासंत' इत्यादि। 'नाऽसतो'ऽविद्यमानस्य प्रत्याख्यानस्य ते 'आवरणं', खरविषाणावरणप्रसङ्गाद-भावाविशेषात्। अथ चैवं पठ्यतां—खरविषाणावरणनामवेज्जाणंत्ति। सतश्चेत्। आह—'न सतो' न विद्यमानस्य तेऽस्यावरणम्। किं कारणमित्यत आह—'अभव्यस्यापि विरमणप्रसङ्गात्'। तेषामप्येतत्कषायसद्भावात्। एतदुक्तं भवति—अस्ति तेषामिदं यदि नामावृतमिति। उच्यते—'तस्मात्' पारि-शेष्यात् 'तत्संभवावरणात्' प्रत्याख्यानपरिणत्यावरणाद्धेतोः प्रत्याख्यानावरणाः प्रतिपादिता निर्युक्तिकृता, परिणतिशब्दलोपात्। सा चाभव्यानां नास्ति, तत्त्वेनैव तदयोग्यत्वात्। तदयोग्यत्वे[2] च तत्त्वविरोधात् ॥१२३६॥

तथा च—'उदये'त्यादि। 'येषामुदये विरतिपरिणतिर्न भवति, क्षयादितश्च भवति, त इह प्रत्याख्यानावरणाः'। दृष्टान्तमाह—'यथा हि केवलावरणे' क्षीणे तत्परिणतिरसती जायते, एवमियमपि प्रत्याख्यानपरिणतिः स्वावरणक्षयादिभ्यो जायत इति भावनीयम्। इह केचित् केवलमपि विद्यमानमेवाव्रियत इति मन्यन्ते। द्रव्यस्य स्वपर्यायाशून्यत्वात्। तच्च न। अभव्यादिकेवलास्तित्वप्रसङ्गात्। अस्ति तदाव्रियत इति चेत्। न। अकेवलत्वप्रसङ्गात्। तथाहि—अव्रियते केवलमिति चेति व्याहन्यते। भवतु वाऽस्यावृतत्वम्। तथाप्यन्तः स्वात्मप्रकाशनप्रसङ्ग इति प्रतिजानीमहे। बहिरावृतत्वात् मल्लकसंपुटस्थगितो ज्वलज्ज्वलत्प्रदीपवत्। तथाऽऽवरण[3]क्षयेऽपि च तदनन्तगुणावरणसद्भावात्, सदा[ऽ]नाविर्भावप्रसङ्गात्। सकलसंसारिप्रतिबद्धज्ञानावरणीयादिकर्मपुद्गलेभ्य एकाकाशप्रदेशावगाढपुद्गला-नामनन्तगुणत्वात्, तस्य तथाभूतासंख्येयप्रदेशावगाढत्वात्, तेषां च सकल-लोकापन्नज्ञानावरणादिकर्मपुद्गलाधारत्वेन तदाधारत्वात्। तस्मादसंभवी खल्वावृताविभावः। किन्तु तदुदये तद्विविशिष्टसंक्लेशे सति तत्परिणतिर्न भवतीति ब्रूम इति गाथार्थः ॥१२३७॥

---

1 P drops तः.  2 P has तद्योग्यत्वे.  3 P adds परि.

उक्तमेवार्थं संग्रहन्नाह—

मूलगुणाणं लंभं न लहइ मूलगुणघाइणो उदए।
संजलणाणं उदए न लहइ चरणं अहक्खायं ॥१२३८॥ नि० १११॥

सम्मत्तसमेयाइं महव्वयाणुव्वयाइं मूलगुणा।
मूलं सेसाहारो बारस तग्घाइणो एए ॥१२३९॥

निसिभत्तविरमणंपि हु नणु मूलगुणो कहं न गहियं तं।
वयधारिणो च्चिय तयं मूलगुणो सेसयस्सियरो ॥१२४०॥

आहारविरमणाओ तवोव्व तव एव वा जओऽणसणं।
अहव महव्वयसंरक्खणत्तणाओ समिइउ व्व ॥१२४१॥

तहवि तयं मूलगुणो भण्णइ मूलगुणपालयं जम्हा।
मूलगुणग्गहणम्मिय तं गहियं उत्तरगुणव्व ॥१२४२॥

जम्हा मूलगुणच्चिय न होंति तव्विरहियस्स पडिपुन्ना।
तो मूलगुणग्गहणे तग्गहणमिहऽत्थओ नेयं ॥१२४३॥

जइ मूलगुणो मूलव्वओवगारित्ति तं तवाईया।
तो सव्वे मूलगुणा जइ व्व न तो तंपि मा होज्जा ॥१२४४॥

सव्वव्वओवकारी जह तं न तहा तवादओ वीसुं।
जं ते तेणुत्तरिया होंति गुणा तं च मूलगुणो ॥१२४५॥

ईसिं सयराहं वा संपाए वा परीसहाईणं।
जलणाओ संजलणा नाहक्खायं तदुदयम्मि ॥१२४६॥

अकसायमहक्खायं जं संजलणोदए न तं तेणं।
लब्भइ लद्धं च पुणो भस्सइ सव्वं तदुदयम्मि ॥१२४७॥

नहु नवरिमहक्खाओवघाइणो सेसचरणदेसंपि।
घाएंति ताणमुदये होइ जओ साइयारं तं ॥१२४८॥

'मूल' इत्यादि। मूलभूता गुणा 'मूलगुणाः'। उत्तरगुणाधारा इत्यर्थः। ते च सम्यक्त्वमूलाः पञ्चाणुव्रतमहाव्रतादय.। 'तेषां लाभं न लभते' नासादयति। 'मूलगुणान् घातयितुं शीलं येषां ते' तथोच्यन्ते। ते चाद्या द्वादश क्रोधादयः। 'तेषामुदये' सति। तथेषज्ज्वलनात्'संज्ज्वलनाः' सपदि परीषहादिसंपातज्वलनाद्वा क्रोधादय एव चत्वारः। 'तेषामुदये न लभते चारित्रम्'। किं सर्वमेव? नेत्याह—यथैवाख्यातं 'यथाऽऽख्यात'मकषायमित्यर्थः। सकषायं तु लभत एव। न च यथाख्यातचारित्रमात्रोपघातिनः संज्वलनाः, किन्तु शेषचारित्रदेशोपघातिनोऽपि, तदुदये शेषचारित्रदेशातिचारसिद्धेरित्युत्तरगाथाऽभिसम्बन्ध इति गाथार्थः ॥१२३८॥ निर्युक्तिगाथा १११॥

व्याख्या—'सम्मत्ते'त्यादि। गतार्था ॥१२३९॥

अत्राऽर्थेन न्यायेनाक्षिप्तमनवगच्छन्नाह—'निसी'त्यादि। ननु 'निशिभक्तविरमणमपि मूलगुण एवातः कथं तन्न' साक्षान्मूलगुणत्वेन 'गृहीतम्'? एतदुक्तं भवति—इह त्रय[1]स्याप्युपादानं कर्त्तव्यमविशेषेण मूलगुणत्वाद्, अन्यतरपदवत्। उच्यते, असिद्धो हेतुर्यतो महाव्रतधारिण एव तन्मूलगुणो, गृहिणस्तूत्तरगुण एव ॥१२४०॥

कुत इत्याह—'आहारे'त्यादि। 'आहारविरमणात्तपोवत्'। तथा 'तव एव व'त्ति गृहिण इदमुत्तरगुणस्तपोविशेषत्वादनशनवत्। इहा[2]व्याहार्यो दृष्टान्तोऽनुक्तत्वात्। कथं च तपोविशेषः? उच्यते—'यतोऽनशन'माहारनिवृत्तिश्चतुर्थादिवत्। 'अथवा' उत्तरगुण इदं, 'महाव्रतसंरक्षणहेतुत्वात् समितय इव'। तदेवमस्यौघत उत्तरगुणत्वं साधितमिति गाथार्थः ॥१२४१॥

अत्राह—यद्येवं व्रतधारिणोऽपि किमिति तन्मूलगुण इत्यत आह—'तह वी'त्यादि। 'तथाऽप्ये'वमुत्तरगुणत्वे सत्यपि 'तत्' साधोर्मूलगुणो भण्यते, मूलगुणपालनात्' प्राणातिपातादिविरमणवत्, अन्तरङ्गत्वाच्चेति। तदनेनैतज्ज्ञापयति—एतत्सुस्थ्ये शेषं सुतस्थम्। अन्यथा विपर्यय इति। प्रकृतं योजयन्नाह—'मूलगुणग्रहणे च' महाव्रतोपादाने च 'त'द्रात्रिभोजनं 'संगृहीत'मार्थ्येन न्यायेन, न तु शाब्देन। नैश्चयिकं दृष्टान्तमाह—'उत्तरगुणवत्' ॥१२४२॥

किमित्यत आह—'जम्हे'त्यादि स्पष्टा। नवर'मिहे'ति "सम्मत्ते"त्यादिगाथायामिति ॥१२४३॥

एवं स्थितेऽतिप्रसङ्गविरोधावाह—'जदी'त्यादि। 'जति तं मूलगुणो, मूलव्रतोपकारित्वात् ततः सर्वे तपआदयो मूलगुणा'मूलव्रतोपकारित्वादित्युच्छिन्नेदानीमुत्तरगुणवार्त्तेति। 'यदि च न ते' मूलगुणा ननु 'तदपि मा भूत'। न ह्यर्द्धं कुक्कुटयाः पच्यतेऽर्द्धं प्रसवाय कल्प्यते, उपकारित्वा विशेषात्। तथा विरोधश्च। ननु स्मर्यतामुक्तं भवता—"अधव महव्वयसंरक्खणत्तणओ समितत्तो व्वे"ति गाथार्थः ॥१२४४॥

उच्यते—तस्योभयधर्मकोत्केर्न विरोधः। अथवा विशेषहेतुरभिधीयते—'सव्वे'त्यादि। 'यथा हि तत् सर्वव्रतोपकार्य'न्तरङ्गत्वादेवं 'न तहा तवादयो वीसुं'। 'यत्' यस्मादेवं तेन 'ते तस्योत्तरगुणा एव' भवन्ति साधोः। किमिति तद्वार्त्तोच्छेद उद्घुष्यते। 'तच्च मूलगुण' इति। का नामात्राश्लिष्टतेति। एतदुक्तं भवति—साधोरारम्भजप्राणातिपातनिवृत्तत्वात् तदासेवने च तद्भावात्। इतरस्तु ततो न निवृत्त इति निशि भुञ्जानोऽपि न मूलगुणान् खण्डयत्यनिवृत्तत्वादिति गाथार्थः ॥१२४५॥

पश्चार्द्धविवृतिमाह 'ईसि'मित्यादि। 'अकसाय'मित्यादि। 'णहु' इत्यादि। गतार्थाः ॥१२४६-१२४८॥

---

1 येऽ P.  2 त्य P.

सव्वेऽविय अइयारा संजलणाणं तु उदयओ होंति ।
मूलच्छेज्जं पुण होइ बारसण्हं कसायाणं ॥१२४९॥ नि० ११२॥

आइयारा छेदंता सव्वे संजलणहेयवो होंती ।
सेसकसाओदयओ मूलच्छेज्जं वयारुहणं ॥१२५०॥

अहवा संजममूलच्छेज्जं तइयकलुसोदए नियमं ।
सम्मत्ताईमूलच्छेज्जं पुण बारसण्हं पि ॥१२५१॥

मूलच्छेज्जे सिद्धे पुव्वद्धे मूलगुणघाइगहणेणं ।
इह कीस पुणो गहणं अइयारविसेसणत्थं ति ॥१२५२॥

पगयमहव्वयंति य अइयारे तम्मि चेव मा जोए ।
तो मूलच्छेज्जमिणं सेसचरित्ते निओएइ ॥१२५३॥

'सव्वे' इत्यादि । इह 'संज्वलनानामेवोदयतः सर्वेऽपि च', अपिशब्दात्कियन्तोऽपि वा'ऽतिचारा भवन्ति', चारित्रपटलाञ्छनविशेषा भवन्ति । एतदुक्तं भवति—"आलोयण पडिक्कमणे मीस विवेगे तहा विओसग्गे । तव छेया" एतावत्प्रायश्चित्तशोध्याश्चारित्रस्खलनाः संज्वलनकृता इति । 'द्वादशानां पुनः कषायाणा'माधस्त्यानामुदये 'मूलेना'ष्टमप्रायश्चित्तेन 'छिद्यते'—विदार्यते यद्दोपजातं त'न्मूलच्छेद्य'मभिधीयते । तद् 'भवति' । किञ्च तत् पुनरपि महाव्रतारोपणमित्युक्तं भवति । अथवा 'मूलच्छेज्जं पुण होइ बारसण्हं कसायाणं उदये' । कथं ? यथायोगमिति सिद्धान्तपरिज्ञानात् ज्ञायते । तथाहि—प्रत्याख्यानावरणोदये सर्वचारित्रविनाशः । अप्रत्याख्यानोदये देशविरति प्रणाशः । अनन्तानुबन्ध्युदये च सम्यक्त्वहानिरिति गाथार्थः ॥१२४९॥

'अइयारा' इत्यादि । 'छेदंता' इति । किमुक्तं भवति ? 'छेदंतेण' पायच्छित्तेण अन्तो जेसिं ते छेदंतंता इति वाच्ये 'छेदंता' भण्ण'ति, एकान्तशब्दलोपात् । 'शेषकषायोदयतस्तु मूलच्छेद्यं' क्रियत इति वाक्यशेषः । तद्विशुद्धये च प्रायश्चित्तं 'व्रतारोपणम्' ॥१२५०॥

द्वितीयव्याख्यापक्षमधिकृत्याह—'अहवे'त्यादि । 'संयममूलच्छेद्यं' सर्वविरतेरपनयनं 'तृतीयकषायोदये नियत'मावश्यकम् । 'सम्यक्त्वादीनां' सम्यक्त्वदेशविरतिसर्वविरतीनां 'पुनर्मूलच्छेद्यं' भवति 'द्वादशाना'मप्युदये यथायोगम् [४. ८. १२ सं. दे. सा.] ॥१२५१॥

अथ पौर्वापर्यं शोधयन्नाह—'मूल' इत्यादि । इह 'पूर्व'मनन्तरातीतगाथापूर्वार्द्धेन 'मूलच्छेद्ये सिद्धे' लब्धे सति, केन ग्रन्थेनेत्यत आह—'मूलगुणघातिग्रहणेन' । "मूलगुणघाइणो[2] उदय"त्ति वचनात् । 'इह' "सव्वेऽविय"त्ति

1 घ P.

2 ऐ P.

अस्यां गाथायां 'किमिति भूयोऽपि ग्रहणं' पश्चार्द्धेन मूलच्छेद्यस्य ? उच्यते । 'अतिचारविशेषणार्थं' नैते यथाख्याते । तथाहि पूर्वगाथापश्चार्द्धादारभ्य "संजलणाणं उदये ण लहइ चरणं अहक्खायं" इति यथाख्यातं प्रकृतमनुवर्त्तते । इतोऽपि च पूर्वार्द्धमुक्तं—'सव्वेऽवि य अइयारा संजलणाणं च उदयओ होंती'त्यतः प्रकृतस्यैव मा प्राप्नुयुः । अतो मूलच्छेद्यग्रहणात्पुनःशब्दविशेषणाच्च शेषचारित्रे क्षायोपशमिके गम्यन्ते । एतदुक्तं भवति—यस्यैव मूलच्छेद्यं चारित्रस्य तस्यैवातिचारा अप्यवस्थाभेदेनेति ॥१२५२॥

तथा चामुमेवार्थमाह—'पगय'मित्यादि । इहानन्तरगाथायां 'प्रकृतं यथाख्यातम्' । 'ततश्चातिचारांस्तस्मिन्नेव मा कश्चिद् योजयेत्' "सव्वेऽवी"त्यादिना । 'तत इद'मेतद्गाथापश्चार्द्धवर्त्ति'शेषचारित्रे योजयति', न त्वौपशमिकक्षायिकयोरिति गाथार्थः ॥१२५३॥ आवरणद्वारम् ॥

## [सामायिकादिचारित्रभेदाः]

यतश्चैवमतः—

**बारसविहे कसाए खइए उवसामिए व जोगेहिं ।**
**लब्भइ चरित्तलंभो तस्स विसेसा इमे पंच ॥१२५४॥ नि० ११३॥**

**खविए उवसमिए वा वासद्देणं खओवसमिए वा ।**
**बारसविहे कसाए पसत्थझाणाइजोगेहिं ॥१२५५॥**

**खीणा निव्वायहुयासणोव्व छारपिहिउव्व उवसंता ।**
**दरविज्झायविहाडियजलणोवम्मा खओवसमा ॥१२५६॥**

**खवओ वा समओ वा खओवसमओ व तिण्णि लब्भंति ।**
**सुहुमाहक्खायाइं खयओ समओ य नऽण्णत्तो ॥१२५७॥**

**लब्भइ चरित्तलाभो खयाइओ बारसण्ह नियमोऽयं ।**
**न उ पंचविहनियमणं पंच विसेसत्ति सामण्णं ॥१२५८॥**

**जं तिण्णि बारसण्हं लब्भंति खयाइओ कसायाणं ।**
**सुहुमं पण्णरसण्हं चरिमं पुण सोलसण्हंपि ॥१२५९॥**

'बारसे'त्यादि ॥१२५४॥ निर्युक्तिगाथा ११३॥

[1]'खविए' इत्यादि । क्षीणादीनां लक्षणमाह—'खीणा' इत्यादि । प्रतीतार्था ॥१२५५-५६॥

"लब्भइ"त्ति व्याचष्टे—'खयदो वे'त्यादि । पश्चानुपूर्व्या व्याख्या—'त्रीणि' सामायिकानि आद्यानि । 'लभ्यन्ते' प्राप्यन्ते जीवेन । कथमित्यत आह—'क्षयोपशमतो वा, प्रसिद्धमेतत् । तथा 'समतो वा' उपशमकश्रेणिप्रतिपत्तेः । अत एव मध्यमतीर्थानामपीयं स्यात् । छेदोपस्थापनं तु न भवतीत्यभिप्रायः ।

1 P adds व्याख्या.

तथा 'क्षयतो वा' सूक्ष्मसंपरायलाभादधः। एवं छेदोपस्थानं क्षयोपशमादित्रयात्। एवं परिहारविशुद्धिकं क्षयोपशमादुपशमात् क्षयाद्वा यथाऽविरोधेन सर्वमेतत्सूक्ष्मसंपरायात्प्राग् लभ्यते साम्प्रतं[1] चेति। **क्षमाश्रमणटीका**ऽपीयं "तत्र सामायिकादित्रयस्यापि लाभस्तावत्प्रायः क्षयोपशमात्। श्रेणीद्वयेऽवतिष्ठमानस्य प्राक् सूक्ष्मसंपरायलाभादुपशमात् क्षयाद्वा संभवतः प्राग्लाभः साम्प्रतो. वेति श्रेणिद्वयान्तर्भावात्तदपेक्षत्वाच्च सूक्ष्मसम्परायथाख्याते क्षयोपशमान्न लभ्येते।" एतदुक्तं भवति—श्रेणिद्वयशिखरापेक्षत्वादिति गाथार्थः ॥१२५७॥

साम्प्रतं मूलगाथाचरमावयव सम्बन्धनार्थमाह—**'लब्भयो'**त्यादि। **'बारसण्ह'** कसायाणा **'खयादिश्रो लब्भइ चरित्तलाभो, नियमऽयं'**त्य[2]त्रैतावति नियमः। अतः काक्वा मूलगाथा पठ्यते—"बारसविहे कसाये खविए उवसामिए व जोएहि। लब्भइ चरित्तलंभो" न लभ्यते। क्व तर्ह्यि नियम इत्यत आह—**'न उ पंचविहनियमणं'**त्ति। न तु पञ्चविधमपि क्षयादिभ्यो नियम्यते। किं तर्हि यतः कुतश्चिल्लब्धस्य 'पञ्च विशेषा' इति पञ्चभेदा भवन्ति। कथमित्यत आह—**'सामण्णं'**ति सामान्येन। [3]विशेषस्य नियतत्वात्[3]। एतदुक्तं भवति—त्रयाणां त्रित्रिस्वभावत्वात्, द्वयोर्द्विद्विस्वभावत्वात् ॥१२५८॥

आह—'ज'मित्यादि। गतार्था ॥१२५९॥

| | | | | |
|---|---|---|---|---|
| सा ३। | छ ३। | प ३। | सु २। | य २। |
| १२ | १२ | १२ | १५ | १६ |

ते चामी—

सामाइय त्थ पढमं छेओवट्ठावणं भवे बीयं।
परिहारविसुद्धीयं सुहुमं तह संपरायं च ॥१२६०॥ नि० ११४॥

तत्तो य अहक्खायं खायं सव्वम्मि जीवलोयम्मि।
जं चरिऊण सुविहिया वच्चंतऽयरामरं ढाणं ॥१२६१ नि० ११५॥

सव्वमिणं सामइए छेयाइविसेसओ पुणो भिन्नं।
अविसेसियसामइयं ठियमिह सामन्नसन्नाए ॥१२६२॥

सावज्जोगविरइत्ति तत्थ सामाइयं दुहा तं च।
इत्तरमावकहं चिय पढमं पढमंतिमजिणाणं ॥१२६३॥

तित्थेसुमणारोवियवयस्स सेहस्स थोवकालीयं।
सेमाणमावकहियं तित्थेसु विदेहयाणं च ॥१२६४॥

नणु जावज्जीवाए इत्तरियंपि गहियं मुयंतस्स।
होइ पइण्णालोवो जहाऽऽवकहियं मुयंतस्स ॥१२६५॥

1 -प्रमत्ताप्रमत्तगुणयोः P.  2 अ P.
3...3 विशेषस्यानियमितत्वात् P

णणु भणियं सव्वं चिय सामाइयमिणं विसुद्धिओ भिन्नं ।
सावज्जविरइमयं को वयलोवो विसुद्धीए ।।१२६६।।
उन्निक्खमओ भंगो जो पुण तं चिय करेइ सुद्धयरं ।
सन्नामेत्तविसिट्ठं सुहुमंपिव तस्स को भंगो ।।१२६७।।
परियायस्स य छेओ जत्थोवट्ठावणं वएसुं च ।
छेओवट्ठावणमिह तमणइयारेयरं दुविहं ।।१२६८।।
सेहस्स निरइयारं तित्थंतरसंकमे न तं होज्जा ।
मूलगुणघाइणो साइयारमुभयं च ठियकप्पे ।।१२६९।।
परिहारेण विसुद्धं सुद्धो व तवो जहिं विसेसेण ।
तं परिहारविसुद्धं परिहारविसुद्धियं नाम ।।१२७०।।
तं दुविगप्पं निव्विस्समाणनिविट्ठकाइयवसेण ।
परिहारयाणुपरिहारियस्स कप्पट्ठियस्सऽविय ।।१२७१।।
परिहारो पुण परिहारियाण सो गिम्हसिसिरवासासु ।
पत्तेयं तिविगप्पो चउत्थयाई तवो नेओ ।।१२७२।।
गिम्हसिसिरवासासुं चउत्थयाईणि बारसंताइं ।
अड्ढोक्कंतीइ जहण्णमज्झमुक्कोसय तवाणं ।।१२७३।।
सेसा उ निययभत्ता पायं भत्तं च ताणमायामं ।
होइ नवण्हवि नियमा न कप्पए सेसयं सव्वं ।।१२७४।।
परिहारियाणुपरिहारियाण कप्पट्ठियस्सवि य भत्तं ।
छच्छम्मासा उ तवो अट्ठारसमासिओ कप्पो ।।१२७५।।
कप्पसमत्तीए तयं जिणकप्पं वा उवेंति गच्छं वा ।
ठियकप्पे च्चिय नियमा दो पुरिसजुगाइं ते होंति ।।१२७६।।
कोवाइ संपराओ तेण जओ संपरीइ संसारे ।
तं सुहुमसंपरायं सुहुमो जत्थावसेसो सो ।।१२७७।।
सेढिं विलग्गओ तं विसुज्झमाणं तओ चयंतस्स ।
तह संकिलिस्समाणं परिणामवसेण विन्नेयं ।।१२७८।।
अहसद्दो जाहत्थे आङ्नोऽभिविहीए कहियमक्खायं ।।
चरणमकसायमुदितं तहमक्खायं जहऽक्खायं ।।१२७९।।
तं दुविकप्पं छउमत्थकेवलिविहाणओ पुणेक्केक्कं ।
खयसमजसजोगाजोगकेवलिविहाणओ दुविहं ।।१२८०।।
भणियं खओवसमओ अहुणोवसमेणं लहइ जह जीवो ।
सामइयं तं भण्णइ सो जं च खओवसमपुन्नो ।।१२८१।।

अहवा खओवसमओ चरणतियं उवसमेण खयओ वा ।
सुहुमाऽहक्खायाइं तेणोवसमक्खया कमसो ।।१२८२।।

सेढिगयस्स व सुहुमं सेढीओ निग्गयस्सऽहक्खायं ।
सा ओवसमक्खयओ पढमं तत्थोवसमसेढी ।।१२८३।।

'सामायिए'त्यादि । 'तत्तो ये'त्यादि द्वारगाथाद्वयम् ।।१२६०-१२६१।। निर्युक्तिगाथा ११४-११५।।

व्याख्या —'सव्व'मित्यादि । 'सर्वमेत'पञ्चविधं चारित्रं 'सामयिकं' समभावलक्षणत्वाविशेषात् । किन्तु 'छेदादिविशेषत एव भि-नम्' । सदर्थतः संज्ञातश्च नानात्वं प्रतिलभते । 'तत्राविशेषितमाद्यं' निर्विशेषणमाद्यं चारित्रं यतस्ततः[2] 'स्थितमिह'—प्रवचने 'सामान्यचिन्ता'या' सामायिकमिति ।।१२६२।।

साम्प्रतं प्रपञ्चमभिदधत् सामायिकमङ्गीकृत्य तावदिदमाह—'सावज्जे'-त्यादि । 'तित्थे'त्यादि 'तत्रे'ति निर्द्धारणार्थः । 'सावद्ययोगविरतिरिति सामायिकम्' । 'तच्च द्वेधा' । 'इत्वर'—मित्वरकालिकम् । यावदप्यात्मनः कथेति 'यावत्कथम्' । अथेदं संभवतोऽर्द्धतृतीयेषु द्वीपसमुद्रेषु निरूपयन्नाह—'पढमं' इत्त'रियं सामायिकं 'प्रथमान्त्यजिनयोः' ऋषभवर्द्धमानस्वामिनाम्नो'स्तीर्थयोरनारोपितव्रतस्य शिक्षकस्य भवति, स्तोककालीयत्वात् । शेषतीर्थकरतीर्थेषु तु २२ विदेहगा[5]नां च तीर्थेष्वादावेव यावत्कथ'मृजुप्रज्ञत्वादिति गाथा[6]र्थः ।।१२६३-१२६४।।

तदत्रेत्वरसद्भावे दोषमुद्भावयन्नाह—'णणु' इत्यादि । 'ननु तेनानगारेणेत्वरमपि यावज्जीवया गृहीतं' "करेमि भंते ! सामाइय"मित्येवमाद्यधीतत्वात् । ततश्च छेदोपस्थापनीयप्रतिपत्तौ त'न्मुञ्चतः प्रतिज्ञालोपो भवति', अनिर्व्यूढत्वाद्, उन्नि[7]ष्क्रमणविधौ 'यथा यावत्कथिकं मुञ्चत' इति गाथार्थः ।। १२६५।।

उच्यते—'णणु' इत्यादि । 'ननूक्तं' पञ्चविधमपीदं 'सामायिकं' समभावलक्षणत्वा[8]दित्यायतः[8] 'को व्रतलोपः' ? का चानिर्व्यूढता ? 'विसुद्धीए'त्ति विशुद्धतरं प्रतिपद्यमानस्येति गाथार्थः ।।१२६६।।

भद्र ! 'उण्णी'त्यादि । 'उत्प्रव्रजतो भङ्गो' भवति व्रतस्य । 'यः पुनस्तदेव' प्राग्गृहीतं 'विशुद्धतरं गृह्णाति' । किंविशिष्टम् ? 'सञ्ज्ञामात्रविशिष्टं' छेदोपस्थापनमिति । 'सूक्ष्मसम्परायमिव परिहारविशुद्धिकमिव वा, तस्य को भङ्गः' ? नैव । उक्तं सप्रभेदं सामायिकद्वारम् ।।१२०६७।।

---

1 ये P. 2 P has तत for ततः 3 P adds संज्ञा.
4 त्ति P. 5 P has गा for ग्गा. 6 P adds द्वय.
7 ण्निः P. 8...8 दित्यादि अतः P.

द्वितीयस्य शब्दार्थमाह—'परियाये'त्यादि । 'यतः प्राक्पर्यायस्य च्छेद उपस्थापनं च महाव्रतेपु' यतः साधोरिति गम्यते । 'तदपि च सातिचारमनतिचारं चेति' गाथार्थः ॥१२६८॥

कस्य कतमदित्याह—'सेहस्से'त्यादि । 'शिक्षकस्य' यदारोप्यते त'न्निरतिचारम्' । नच प्राक्पर्यायोच्छेदस्तस्यापि लब्धत्वात् । यद्वा 'तीर्थान्तरप्राप्तिपत्तौ', यथा पार्श्वनाथतीर्थात्तदपत्यानां वर्द्धमानतीर्थं सङ्क्रामताम् ॥ द्वारम् ॥ तथा 'मूलगुणघातिनः' साधोः 'सतिचारं' तच्छेदोपस्थापनं स्यात् । 'उभयं' चैतत्सातिचारानतिचारं[1] च्छेदोपस्थापनीयं[2] चारित्रद्वयं स्थितकल्प एव स्यात् । आद्यचरमतीर्थकरतीर्थयोरिति गाथार्थः ॥१२६९॥ दारं ॥

तृतीयशब्दार्थमाह—'परी'त्यादि । परिहरणं 'परिहार'स्तपोविशेषस्तेन विशुद्धम्' । 'विशुद्धो वा सो तवो विसेसेण जत्थ तत्परिहारविशुद्धं, तदेव परिहारविशुद्धिकम्' । 'नामे'ति निपात इति गाथार्थः ॥१२७०॥

भेदमाह—'त'मित्यादि । 'तदपि द्वेधा—निर्विश्यमानकं निर्विष्टकायिकं च' । तत्र निर्विश्यमानमासेव्यमानं प्राप्यमाणं चेति ४।४।१। अथवा तदनुष्ठातारो निर्विशमानकास्तत्सहयोगादितस्तदपि निर्विशमानकम् । तथा निर्विष्टः कायो यैस्ते[3] निर्विष्टकायिकाः स्वार्थिकप्रत्ययोपादानात् । तत्सहयोगादितो निर्विष्टकायिकं, तस्य च वोढारः परिहारकाश्चत्वारः ४ अनुपरिहारिकाश्चचत्वारः ४ कल्पस्थितश्चैकः १ इति नवको गणः । तत्र 'परिहारिकाणां' निर्विश्यमानकम्, 'अनुपरिहारिकाणां' निर्विष्टकायिकं, 'कल्पस्थितस्य चे'ति गाथार्थः ॥१२७१॥

कथं पुनरयं नवको गणस्तपः करोतीत्याह—'परिहार' इत्यादि । 'परिहारः पुन'रस्य[4] ज्ञेयः 'परिहारिकाणां' वोढॄणां 'ग्रीष्मशिशिरवर्षासु प्रत्येकं त्रिविकल्पः' । किमुक्तं भवति परिहार इति । अत्र आह—'तपः, कर्मकञ्चुकसंतापकारी तपोविशेष इत्यर्थः । स्थापना

| | | | |
|---|---|---|---|
| ४ | ६ | ८ | ग्री. |
| ६ | ८ | १० | शि. |
| ८ | १० | १२ | वा. |

।

तथा चाह—'गिम्हे'त्यादि । स्पष्टा । नवरं पौर्वापर्ययन्त्रकभावनागाथेति वोद्धव्यम् । [5]एवमिमे (षु?)[5] षण्मासांस्तपः कुर्वत्स्वितरेषु को विधिरित्यत आह—'सेसा' इत्यादि । 'शेषाः पुन'रनुपरिहारिकाः कल्पस्थितश्च 'प्रायः' । 'प्रायो'ग्रहणं स्वेच्छयोपवासकरणाविरोधात् । 'नियतभक्ता' इति प्रतिदिवसायामाम्लभोजिनः । तथा चाह– 'भत्त'मित्यादि । पाठसिद्धम् ॥१२७२-१२७४॥

एवम्—'परी'त्यादि । 'परिहारियाणं'ति णिव्विस्समाणाणं इयरे पडियरणं करेंति, भक्तं चोभयोरपि यथायोगमुक्तवद् भावनीयम् । तथा 'अणुपरिहारियाणं'

1 र P. 2 य P. 3 P adds निर्विष्टकाया निर्विष्टकाया एव P.
4 सौ P. 5...5 एवमिमेष्वायामाम्लेन P.

तं तवं चरंताणं इतरे निर्विष्टकायत्वात्प्रतिजागरणं कुर्वन्ति, भक्तं च भावितवत्। ततः 'कल्पास्थितस्यापि भक्तं' तेन विधिनाऽऽसेविततपोवृद्धावितरेऽष्टौ प्रतिजागरणमातन्वते, एवं त्रयाणामपि 'छच्छम्मासा उ तवो'त्ति 'अट्ठारसमासा' लग्गंतित्ति गाथार्थः ॥१२७५॥

ततः किं कुर्वन्तीत्यत आह—'कप्पे'त्यादि। तत्परिसमाप्तौ' कदाचित्पुनस्त'मेव प्रतिपद्येरन् जिनकल्पं वोपयन्ति, गच्छं वा प्रविशन्ति'। क्वेदं पुनश्चरणमित्यत आह 'स्थितकल्प एव नियमात्', नास्थितकल्प इति। तस्मिन्नपि 'द्वयोः पुरुषपुङ्गवयोस्ते स्युः'। एतदुक्तं भवति—तीर्थकृत्समीपे चेदं प्रतिपद्येयुः, तीर्थकृत्समीपप्रतिपन्नान्यसमीपे वा, णो उवट्ठावियठावगा इति गाथार्थः ॥१२७६॥द्वारम्॥

चतुर्थशब्दार्थमाह—'कोवादी'त्यादि[1]। 'कोपादिः' क्रोधमानमायालोभाख्यः कषायव्रातः 'संपरायो' भण्यते। 'संस'[2]पर्येत्येभिः संसारमिति' संपरायाः। तदिह 'यत्रासौ' संपरायः 'सूक्ष्मोऽवशेषो' लोभांशावशेषतयाऽणीयांस्'तत्सूक्ष्मसंपरायमि'ति गाथार्थः ॥१२७७॥

तदपि द्वेधेत्यत आह—'सेढि'मित्यादि कण्ठसिद्धः[3] ॥१२७८॥द्वारम्॥

पञ्चमस्य शब्दार्थमाह—'अहे'त्यादि। 'अथे'त्यव्य[4]यम्। याथातथ्यार्थे। 'आङभिविधावेव'। 'ततश्च' याथातथ्येनाभिविधिना 'वा ख्यातं कथितमि'ति यथाख्यातमनतिचारत्वादकषायत्वादि'ति गाथार्थः ॥१२७९॥

'त'मित्यादि। 'तद् द्विविधं, छद्मस्थविधानतः केवलविधानतश्च। पुनरेकैकं द्विविधम्'। तत्राद्यं 'खयसमयविधाणदो द्विविधं', द्वितीयं तु 'सजोगिकेवलिविधाणदो अजोगिकेवलिविधाणदो वे'ति गाथार्थः ॥१२८०॥

साम्प्रतं निगमयन्नाह—'भणिय'मित्यादि। स्पष्टा। नवरं स इत्युपशमः ॥१२८१॥

'अहवे'त्यादि। यद्वाऽऽद्यं 'चारित्रत्रयं क्षयोपशमतः शमतः क्षयतश्चोक्तम्। 'उपशमात् क्षयाच्च' येनोपरिमे द्वे, 'तेनोपशमं भणित्वा क्षयं वक्ष्य' इति गाथार्थः ॥१२८२॥

'सेढी'त्यादि। 'वा' इत्यथवा। 'श्रेण्यन्तर्भाविनः सूक्ष्मसंपरायमुक्तं, तस्या निर्गतस्य च यथाख्यातम्'। अतः श्रेणीद्वयमाधातम्। उभयश्रेणीलाभे 'चोपशमश्रेणिरादौ' ॥१२८३॥

[उपशमश्रेणिविचारः]

अतः सैव तावदुपदिश्यत इत्यत आह—

अण दंस नपुंसित्थीवेयच्छक्कं च पुरिसवेयं च।
दो दो एगंतरिए सरिसे सरिसं उवसमेइ ॥१२८४॥ नि० ११६॥

1 इ P. 2 P drops स. 3 द्धा P. 4 P drops व्य.

उवसामगसेढीए पट्ठवओ अप्पमत्तविरओ उ।
पज्जवसाणे सो वा होइ पमत्तो अविरओ वा ॥१२८५॥
अन्ने भणंति अविरयदेसपमत्तापमत्तविरयाणं।
अन्नयरो पडिवज्जइ दंसणसमणम्मि उ नियट्टी ॥१२८६॥
भवमणुबंधंसि जओऽणंतमणंताणुबंधिणो तेणं।
ते चत्तारि वि समयं समेइ अंतोमुहुत्तेणं ॥१२८७॥
तत्तो य दंसणतिगं तओऽणुइण्णं जहन्नयरवेयं।
तत्तो बितियं छक्कं तओ य वेयं सयमुदिन्नं ॥१२८८॥
मज्झिल्लकसायाणं कोहाइसमाणजाइए दो दो।
एक्केक्केणं तरिए संजलणेणं उवसमेइ ॥१२८९॥
संजलणाईण समो जुत्तो संजोयणादओ जे उ।
ते पुव्वं चिय समिया नणु सम्मत्ताइलाभम्मि ॥१२९०॥
आसि खओवसमो सिं समोऽहुणा भणइ को विसेसो सिं।
नणु खीणम्मि उइण्णे सेसोवसमे खओवसमो ॥१२९१॥
सो चेव नणूवसमो उइए खीणम्मि सेसए समिए।
सुहुमोदयया मीसे न तूवसमिए विसेसोऽयं ॥१२९२॥
वेएइ संतकम्मं खओवसमिएसु नाणुभावं से।
उवसंतकसाओ पुण वेएइ न संतकम्मं पि ॥१२९३॥
संजोयणाइयाणं नणूदओ संजयस्स पडिसिद्धो।
सच्चमिह सोऽणुभावं पडुच्च न पएसकम्मं तु ॥१२९४॥
भणियं च सुए जीवो वेएइ नवाऽणुभावकम्मंति।
जं पुण पएसकम्मं नियमा वेएइ तं सव्वं ॥१२९५॥
नाणुदियं निज्जीरइ नासंतमुदेइ जं तओऽवस्सं।
सव्वं पएसकम्मं वेएउं मुच्चए सव्वो ॥१२९६॥
किह दंसणाइघाओ न होइ संजोयणाइ वेदयओ।
मंदाणुभावयाए जहाऽणुभावम्मि वि कहिंचि ॥१२९७॥
निच्चोदिन्नं पि जहा सयलच्चउण्णाणिणो तदावरणं।
न विघाइ मंदयाए पएसकम्मं तहा नेयं ॥१२९८॥
किरियाएँ कुणइ रोगो मंदं पीलं जहाऽवणिज्जंतो।
किरियामेत्तकयं चिय पएसकम्मं तहा तवसा ॥१२९९॥
दंसणमोहाईओ भण्णइ अनियट्टिबायरो परओ।
जाव उ सेसो संजलणलोभसंखेज्जभागोत्ति ॥१३००॥

दंसणतिगे पसंते करणतिगं कुणइ मोहसमणत्थं ।
आदिदुगंमि विसोही केवलमणियट्टिकरणस्स ॥१३०१॥

संखिज्ज इमे तो सेसे लोभोवसमओ कमो कम्मे ।
जाव उ सेसो संजलण लोभसंखेज्जभागोत्ति ॥१३०२॥

तदसंखेज्जइभागं समए समए समेइ एक्केक्कं ।
अन्तोमुहुत्तमेत्तं तस्सासंखेज्जभागंपि ॥१३०३॥

लोभाणुं वेयेंतो जो खलु उवसामओ व खवओ वा ।
सो सुहुमसंपराओ अहखाया ऊणओ किंचि ॥१३०४॥ नि० ११७॥

उवसामगाहिगारे तस्समभागोत्ति खवगनिद्देसो ।
सुहुमसरागातीतोऽहक्खाओ होइ निग्गंथो ॥१३०५॥

बद्धाऊ पडिवन्नो सेढिगओ वा पसंतमोहो वा ।
जइ कुणइ कोइ कालं वच्चइ तोऽणुत्तरसुरेसुं ॥१३०६॥

अनिबद्धाऊ होउं पसंतमोहो मुहुत्तमेत्तद्धं ।
उइयकसाओ नियमा नियत्तए सेढिपडिलोमं ॥१३०७॥

**'अणे'**त्यादि । **'अणे'**त्यनन्तानुबन्धिनो वक्ष्यमाणशब्दार्थश्चत्वारः क्रोधमानमायालोभाः । तांश्चतुरोऽपि अन्तर्मुहूर्त्तेन युगपदुपशमयति, एकान्तनिस्फुरान् करोति तिरश्चीनरचितत्वात् । तदो **'दंस'**त्ति मिथ्यादर्शनादित्रयमेवेति भावना । ततो **'नपुंस'**त्ति । पुरुषस्य प्रक्रान्तत्वादनुदीर्णजघन्यतरवेदं, स्त्रीवेदस्य मध्यमतरत्वात्, अतिरश्चीनत्वेनैकत्वात् । तथैव भावना । ततो **'इत्थि'**त्ति 'स्त्रीवेदं', मध्यममित्यर्थः । ततो हास्यरत्यरतिभयशोकजुगुप्सा-'षट्कम्' । 'चः' समुच्चयार्थः । ततः प्रधानत्वादात्मीयत्वात्'पुरुषवेदम्' । 'चः' प्राग्वत् । शेषं च ततो 'द्वौ द्वौ' सदृशत्वेन समानजातीयौ क्रोधावप्रत्याख्याननामवेयप्रत्याख्यानावरणौ । एवं मानौ माये लोभौ च । प्राय 'एकैकेन' सजातीयेनैव संज्वलनेन क्रोधादिना'ऽन्तरितौ' व्यवहितौ । 'सदृशमे'कस्मिन्नेकस्मिन्नन्तर्मुहूर्त्ते 'उपशमयति', तिरश्चीन[1]रचितावन्तर्मुहूर्त्तेनैकरचनं चेत्युक्तं भवति । सकलश्रेणीपरिसमाप्तिकालोऽप्यन्तर्मुहूर्त्तमेवेति भावनीयम् । इह च किल सञ्ज्वलनलोभमुपशमयंस्त्रिधा करोति । ततो द्वौ भागौ युगपदुपशमयति । ततस्तृतीयं खण्डं संख्येयभागशः कृत्वा पृथक् पृथक्कालभेदेन शमयति । तच्चरमखण्डमप्यसंख्येयानि खण्डानि कृत्वा एकैकमणुं समये समये उपशमयति, बलवत्त्वाल्लोभस्य । इह च दर्शनसप्तके प्रशमिते निवृत्ति[2]बादरः, तत ऊर्ध्वमनिवृत्ति[3]बादर इति गाथासमुदायार्थः ॥१२८४॥

स्थापना त्वियम् । व्याख्या—**'उवसामे'**त्यादि । कः पुनरस्याः प्रारम्भक इत्यत आह—'अस्याः प्रस्तोताऽप्रमत्तसंयत' एव तावत् । अवसानमङ्गीकृत्याह—

1 नं P.
2 P has निवर्ति for निवृत्ति.
3. P has नियर्ति for निवृत्ति.

**'पज्जवसाणे'** तस्याः प्रतिपतन् 'स वा भवेद'प्रमत्तसंयतो वा स्यात्, 'प्रमत्तो वाऽविरत'सम्यग्दृष्टिर्वा । 'वा'शब्दात् सम्यक्त्वमपि जह्यादिति गाथार्थः ॥१२८५॥

**'अण्णे'** इत्यादि । 'अन्ये भणन्ति—अविरतदेशप्रमत्ताप्रमत्तसंयतानामन्यतरः प्रतिपद्यते', इह 'दर्शनसप्तकोपशमे निवर्त्त्य'भिधीयत इति गाथार्थः ॥१२८६॥

शब्दार्थं कथयन्नाह–**'भवे'**त्याद्युक्तार्था ॥१२८७॥

**'तत्तो ये'**त्यादि । स्पष्टा । नवरं यथायोगं पूर्वानुवृत्तिर्योज्या ॥१२८८॥

**'मज्झिल्ले'**त्यादि । अनन्तानुवन्धिसंज्वलनयोरन्तरालवृत्तौ 'मध्यमकषाया' विति । शेषं स्पष्टम् ॥१२८९॥

अत्रानिष्णातवुद्धिर्दुर्विदग्धधीश्चोदक आह—**'संजलणे'**त्यादि । इह श्रमणस्य 'संज्वलननामादिशब्दाद्धास्यादे'श्चेदानीं 'शमो युक्तः' प्रागुदयसद्भावात् तदुदयसंभवाविरोधाद्वा । केषां तु न युक्त इत्याह—'ये' द्वादश 'संयोजनादिकषायाः' । 'आदि'शब्दान्मिथ्यात्वादि च । 'ते प्रागेव शमिताः' । ननु । कदेत्याह—'सम्यक्त्वादिलाभकाले' । तद[1]शमने तदलाभ इति गाथार्थः ॥१२९०॥

**'आसो'**[2]त्यादि । तस्मिन् कालेऽमीषां क्षयोपशम आसीत्' । अत एव तानि क्षायोपशमिकानीति 'अधुना तूपशम उच्यते' । इत्युक्ते भणति चोदकः—'कोऽनयोः' क्षयोपशमयो'र्भेदः' ? उच्यते—'ननूदीर्णे'मिथ्यात्वादौ 'क्षीणे' 'सति—भस्मतां याते सति । "क्षीणा निर्वाणहुताशनव"दिति लक्षणात् । **'सेसोवसमे'**त्ति शेषोपशान्ते प्रायोऽपनीतशक्तिके 'क्षयोपशम' उच्यते, "दरविज्झायविहा[3]डिये"-त्यादिवचनात् ॥१२९१॥

पुनर्विभागमलभमान आह—**'सो चेवे'**त्यादि । **'उदिते खीणंमि सेसए समिए'** जो होइ **'सो चेव समोऽवि'** भण्णइ । उच्यते—मूढ ! 'सूक्ष्मोदयता' मनाग् मनाक् स्फुरणता 'मिश्रे'ऽस्ति, "दरे"त्यादिवचनात्, 'न तूपशमिते' साऽस्ति, "छारपिहिउ व्व उवसंता" इत्यधस्ताद'वगतत्वात् । 'अयमनयोर्विशेष' आवृतानावृताभोगाभोगकृतइति भावनेति गाथार्थः ॥१२९२॥

तथा चाह—**'वेदेदी'**त्यादि । गतार्था । नवरं 'सत्कर्मे'ति प्रदेशकर्म आह । तस्मादिहैषां शम उच्यत इति प्रतिष्ठितम् ॥१२९३॥

पुनरप्याह—**'स'**मित्यादि । 'ननु संयोजनादेरुदयः संयतस्थ निषिद्ध'-स्तत्किमुच्यते "समोऽधुण"त्ति । उच्यते । 'सत्यम् । इहासा'[4]वुदयो'ऽनुभावं प्रतीत्य' प्रतिपिध्यते, 'न प्रदेश'मङ्गीकृत्य', नियमवेद्यत्वात् प्रदेशानुभवस्येति गाथार्थः ॥१२९४॥

---

1 P adds नुप. 2 P adds दि. 3 ढ P. 4 ढे P.

तथा चोक्तमागमे—"एवं खलु गोअमा ! मए दुविहे कम्मे पण्णत्ते । तं जहा—पएसकम्मे य अणुभावकम्मे य । तत्थ णं जं तं पएसकम्मं तं नियमा वेएइ । तत्थ णं जं तं अणुभावकम्मं तं अत्थेगदियं वेदेइ अत्थेगदियं नो वेएइ ।" तथा चाह—'**भणियं चे**'त्यादि । प्रतीतार्था ॥१२९५॥

तथाहि—'**ण**' इत्यादि । 'न कर्मानुदितं निर्जी'र्यते, न चासदुदेति' । किं तर्हि ? सदुदेति । सतश्च प्रदेशानुभवकालानुभवौ । 'यस्मादेवं तस्मात्सर्वं सत्कर्म संवेद्य सर्वो मुच्यते' । तस्मात्प्रदेशवेद्यानाममीषामधुना शम उच्यत इति ॥१२९६॥

प्रकरणं पुनरप्याह—'**किहे**'त्यादि । पुव्वद्धं कंठं । नवरं प्रदेशत इति वाच्यम् । उच्यते—'मन्दानुभावतया, यथेह क्वचिदनुभवनकर्मापि' नापि विघाताय दृष्टम् ॥१२९७॥

को दृष्टान्त इत्यत आह—'**णिच्चो**' इत्यादि । 'नित्योदितमपि' मतिज्ञाना-वरणीयादि चतुष्टयं 'सकलचतुर्ज्ञानिनो न' मत्यादिज्ञान—'विघाताय मन्दानुभावत्वात्, तद्वत्प्रदेशकर्मापी'ति गाथार्थः ॥१२९८॥

अपि च—'**किरिए**'त्यादि । 'जहा रोगो किरियाए' खीराइपाण-लक्खणाए 'अवणिज्जंतो मंदं पीलं करेइ' तत्पानकृतदुःखमात्रत्वात्, नोदयकृतां महतीम् । एवं जहा रोगो तथा पएसकम्मं, जहा खीरपाणं तहा तवो, पीडा तुल्ला, ततः शुभं । कथं ? इह निरयगतिनामादिप्रकृतयो नहि नारकादि-भावेनानुभूयन्ते यतिना । न चाननुभूय तद्विनिवृत्तिः । अतोऽवसीयते 'तपसा प्रदेशकर्मणोऽनुभूति'रिति गाथार्थः ॥१२९९॥

स च दर्शनसप्तकोपशमात् । परतस्तु क उच्यत इत्यत आह—['**दंसणे**' त्यादि ।] '**दंसणे**'-त्यादि ॥१३००-१३०१॥

'**संखेज्ज**' इत्यादि ॥१३०२॥

'**तद**' इत्यादि । गतार्थम् । '**तस्सासंखिज्जभागं वि**' त्ति तस्य लोभस्या-संख्येयतममपि भागमुपशमयन् सूक्ष्मसंपरायो भण्यते । एतच्चोत्तर—गाथा-संबन्धनार्थमस्यधायि ॥१३०३॥

आह च—'**लोभाणु**'मित्यादि । 'लोभचरमासंखेज्जभागे खंडे वेएंतो उवसामगसेढीए वा खवगसेढीए वा सुहुमसंपरायो भन्नइ, यथाख्यातात् किञ्चिन्न्यून' इति गाथार्थः ॥१३०४॥ निर्युक्तिगाथा ११७॥

"खवओ" त्ति अप्रस्तुताभिधानं [इति] चेत्तन्न, यतः—'**उव**' इत्यादि । '**तस्समभागो**' तत्समानदेश इति भावना । ततः 'सूक्ष्मे'त्यादिसम्बन्ध इति गाथार्थः ॥१३०५॥ स च—'**बद्धायू**[1]' इत्यादि । 'बद्धायुः प्रतिपन्नः श्रेणिगतो वा' सामान्येन 'प्रशान्तमोहो वा' विशेषेण 'यदि कश्चित् कालं करोति ततोऽनुत्तर-वैमानिकेषूत्पद्यते', बद्धस्यायुष्कस्य वेद्यमानत्वात् । च्युते त्वनियमो, नाना-गतित्वादिति गाथार्थः ॥१३०६॥

---

1 क्ष P.

'अणो'त्यादि । 'अथानिवद्धायुः' प्रतिपद्यते ततो 'भूत्वा प्रशान्तमोहो मुहूर्त्तमात्राद्धां कालं उदितकषायः' प्रोद्दीप्तलोभाणुः क्वचिद्दण्डकादौ विषये 'निवर्त्तते' प्रतिपतति 'श्रेणिप्रतिलोमं' अधोमुख इवेति । एतावत्कालस्थितित्वादस्या इति ॥१३०७॥

महदेतदत्यद्भुतं, निधानलाभेऽपि न दौर्गत्यापगमो हतजीवस्य भवतीत्यत उपदेशमाह—

उवसामं उवणीया गुणमहया जिणचरित्तसरिसं पि ।
पडिवायंति कसाया किं पुण सेसे सरागत्थे ॥१३०८॥ नि० ११८॥

दवदूमियंजणदुमो छारच्छन्नोऽगणि व्व पच्चयओ ।
दावेइ जह सरूवं तह स कसाओदए भुज्जो ॥१३०९॥

तम्मि भवे निव्वाणं न लभइ उक्कोसओ व संसारं ।
पोग्गलपरियट्टद्धं देसूणं कोइ हिंडेज्जा ॥१३१०॥

जइ उवसंतकसाओ लहइ अणंतं पुणोऽवि पडिवायं ।
न हु भे वीससियव्वं थोवेवि कसायसेसम्मि ॥१३११॥ नि० ११९॥

अणथोवं वणथोवं अग्गीथोवं कसायथोवं च ।
न हु भे वीससियव्वं थोवंपि हु तं बहुं होइ ॥१३१२॥ नि० १२०॥

दासत्तं देइ अणं अइरा मरणं वणो विसप्पंतो ।
सव्वस्स दाहमग्गी देंति कसाया भवमणंतं ॥१३१३॥

ओवसमं सामाइयमुइयं खाइयमओ पवक्खामि ।
सुहुममहक्खायं पि य खयसेढिसमुब्भवं तं च ॥१३१४॥

अण-मिच्छ-मीस-सम्मं अट्ठ नपुंसित्थिवेयछक्कं च ।
पुमवेयं च खवेई कोहाईए य संजलणे ॥१३१५॥ नि० १२१॥

पडिवत्तीए अविरय-देस-पमत्ता-ऽपमत्तविरयाणं ।
अन्नयरो पडिवज्जइ सुद्धज्झाणोवगयचित्तो ॥१३१६॥

पढमकसाए समयं खवेइ अंतोमुहुत्तमेत्तेणं ।
तत्तो च्चिय मिच्छत्तं तओ य मीसं तओ सम्मं ॥१३१७॥

बद्धाऊ पडिवन्नो पढमकसायक्खए जइ मरेज्जा ।
तो मिच्छत्तोदयओ चिणेज्ज भुज्जो न खीणम्मि ॥१३१८॥

तम्मि मओ जाइ दिवं तप्परिणामो य सत्तए खीणे ।
उवरयपरिणामो पुण पच्छा नाणामइगईओ ॥१३१९॥

खीणम्मि दंसणतिए किं होइ तओ तिदंसणाईओ ।
भण्णइ सम्मद्दिट्ठी सम्मत्तखए कओ सम्मं ॥१३२०॥

निव्वलियमयणकोद्दवरूवं मिच्छत्तमेव सम्मत्तं ।
खीणं न उ जो भावो सद्दहणालक्खणो तस्स ॥१३२१॥

सो तस्स विसुद्धयरो जायइ सम्मत्तपोग्गलक्खयओ ।
दिट्ठिव्व सण्हसुद्धब्भपडलविगमे मणूसस्स ॥१३२२॥

जह सुद्धजलाणुगयं वत्थं सुद्धं जलक्खए सुतरं ।
सम्मत्तसुद्धपोग्गलपरिक्खए दंसणंऽपेवं ॥१३२३॥

तम्मि य तइयचउत्थे भवंमि सिज्झंति खइयसमत्ते ।
सुरनरयजुगलिसु गई इमं तु जिणकालियणराणं ॥१३२३॥[1]

सेसन्नाणोवगमे सुद्धयरं केवलं जहा नाणं ।
तह खाइयसम्मत्तं खओवसमसम्मविगमम्मि ॥१३२४॥

निव्वलियमयणकोद्दवभत्तं तेल्लाइमीसियं मदए ।
न उ सोऽवाओ निव्वलियमीसमयकोद्दवच्चाए ॥१३२५॥

तह सुद्धमिच्छसम्मत्तपोग्गला मिच्छमीसिया मिच्छं (मीसं) ।
होज्ज परिणामओ वा सोऽवाओ खाइए नत्थि ॥१३२६॥

बद्धाऊ पडिवन्नो नियमा खीणम्मि सत्तए ठाइ ।
इयरो अणुवरओ च्चिय सयलं सेढिं समाणेइ ॥१३२७॥

बिइयतइए कसाए अट्ठारंभेइ समयमेसिं च ।
खवियम्मि मज्झभागे पयडीओ सोलस खवेइ ॥१३२८॥

नरयतिरियाणुपुव्वी गई उ चत्तारि आदिजाईओ ।
आयावं उज्जोयं थावर साहरणं सुहुमं ॥१३२९॥

तिन्नि महानिद्दाओ अट्ठगसेसं तओऽणुदिण्णाणं ।
वेयाण जहन्नयरं तत्तो बीयं तओ छक्कं ॥१३३०॥

तत्तो य तइयवेयं एक्केक्कं तो कमेण संजलणं ।
सव्वत्थ सावसेसे मग्गिल्ले लग्गइ पुरिल्ले ॥१३३१॥

दंसणमोहक्खवणे नियट्टि अनियट्टिबायरो परओ ।
जाव उ सेसो संजलणलोभसंखेज्जभागो त्ति ॥१३३२॥

तदसंखिज्जइभागं समए समए खवेइ एक्केक्कं ।
तत्थ य सुहुमसरागो लोभाणू जावमेक्कोऽवि ॥१३३३॥

खीणे खवगनिग्गंठो वीसमए मोहसागरं तरिउं ।
अंतो मुहुत्तमुदहिं तरिउं थाहे जहा पुरिसो ॥१३३४॥

छउमत्थकालदुचरिमसमए निद्दं खवेइ पयलं च ।
चरिमे केवललाभो खीणावरणंतरायस्स ॥१३३५॥

'उवे'त्यादि ॥१३०८॥ निर्युक्तिगाथा ११८॥

---

1 This *gatha* is not noted in the Commantary. Hence it is not numbered separately.

व्याख्या—'**दवे**'त्यादि । 'यथेह दावानलानुभूषितोऽञ्जनद्रुमः' पुनरुदकासेचनादिप्रत्ययलाभादंकुरादिरूपतां 'भूयोऽप्याप्नोति, भस्मच्छन्नो वाऽनलः, तथाऽसा'वपि जीवो भूत्वा तथाभूतो भूयोऽपि तथा भवति । येन—'**तम्मी**'-त्यादि । अथवा स च 'तस्मिन्नेव भवे निर्वाणं न लभते', तस्य क्षपकश्रेण्यायत्तत्वात् । द्वितीयभवे तु लभेतापि । 'उत्कृष्टतस्तु सम्यग्दृष्टिकाल'इति ॥१३०९-१३१०॥

एवम्—'**जदी**'त्यादि । '**अण**'त्यादि । '**अणं**' ऋणम् । शेषं स्पष्टम् ॥ १३११-१३१२॥ निर्युक्तिगाथा ॥११९-१२०॥

'**दासत्त**'मित्यादि । स्पष्टा ॥१३१३॥

[क्षपकश्रेणिविचारः]

'**ओव**' इत्यादि । यतश्च '**सुहुमे**'त्यादि ॥१३१४॥

'**अण**'इत्यादि ॥१३१५॥ निर्युक्तिगाथा १२१॥

अस्य व्याख्या—'**पडी**'त्यादि । प्रतीतार्था । नवरं पूर्वविदप्रमत्तः शुक्लध्यान्यपि । शेषास्तु धर्मध्यातार एवेति ॥१३१६॥

अत्र च '**पढमे**'त्यादि । प्रतीतार्था । इह च '**बद्धाऊ**' इत्यादि । असावेतत्प्रस्तोता यदि नारकादौ 'बद्धायुः प्रतिपन्नः' स्यात्, स च 'यद्यनियतकालत्वादायुरन्तस्य 'प्रथमकषायक्षयमात्रे म्रियेत ततो भूयोऽप्यसौ तांश्चिनुयात्' । किं कारणमित्यत आह—'मिथ्यात्वोदयकारणावस्थानात्' । 'क्षीणे' मिथ्यात्वे किममूलं प्रवर्त्तत इति गाथार्थः ॥१३१७-१३१८॥

'**तम्मी**'त्यादि । 'तस्मिन्' कषायचतुष्टये क्षीणे 'मृतो देवलोकं याति' । तथाच 'सप्तके क्षीणे' भस्मतां याते, दिवं यातीति वर्त्तते, 'क्षपकश्रेणिपरिणामः' सन्, न तूत्तरकालम् । आह च—'उपरतपरिणामः पुनः पश्चान्नानामतित्वाच्चित्रगतिः'स्यात्, चतुर्गतिकत्वादिति गाथार्थः ॥१३१९॥

ननु च—'**खीणम्मी**'त्यादि । 'क्षीणे दर्शनत्रये', सप्तक इत्यर्थः । किमसौ भवति ? उच्यते—'त्रिदर्शनातीतः' । एकवाक्यतया वा प्रश्नः । 'उच्यते—सम्यग्दृष्टिः', श्रेणिकवत् । आह—मोहनीयांशत्वात् सम्यक्त्वस्य 'तत्क्षये कुतः सम्यक्त्व'मिति ॥१३२०॥

अत आह—'**णिव्वलिए**'त्यादि । एवंरूपं 'मिथ्यात्वमेव यत्तु 'क्षीणं न तु यो भावः श्रद्धानलक्षणस्तस्य' जन्तोस्तस्येदानीमेवोदिततरत्वात् ॥१३२१॥

तथाहि—'**सो**' इत्यादि । 'स तस्य' दृष्टिलक्षणो भावो 'विशुद्धतरो जायते सम्यक्त्वपुद्गलक्षयात्' सांसिद्धिकत्वात् । 'दृष्टिरिव' चक्षुरिव ॥१३२२॥

अनुग्रहायाह—'**जहे**'त्यादि । सुगम् ॥१३२३॥

'सेस' इत्यादि । 'यथा वा ज्ञानचतुष्टयापगमे शुद्धतरं क्षायिकं ज्ञानान्तरं' प्रादुरस्ति, न त्वज्ञो भवति, 'एवं क्षायोपशमिकसम्यक्त्वाभावे क्षायिकदर्शनं' भवतीति गाथार्थः ॥१३२४॥

तथा चानयोः सापायानपायत्वमाह—'णिव्वलिए'त्यादि । 'मदननिर्वलितकोद्रवभक्तं तैलक्षीरादिमिश्रितं मदयेत्' विदध्याद् भ्रमिं, नात्र संदेहः, सापायत्वादशुद्धप्रकृतित्वात् । 'न त्वसौ' विपर्यये 'दोष' इति गाथार्थः ॥१३२५॥

'तहे'त्यादि । 'तह सुद्धमिच्छत्त'पोग्गले हितो जे जाया 'संमत्तपोग्गला' ते 'मिच्छत्तमीसिया वा मिच्छं होज्ज परिणामयो वे'ति द्वयी गतिरिति । 'सोऽपायः क्षायिके नास्ति' । न ह्यभुञ्जानः पुद्गलेभ्योऽपराध्यतीति गाथार्थः ॥१३२६॥

इह—'बद्धाऊ'[1] इत्यादि । आयुष्कस्य दोषादिति हृदयम् । शेषं स्पष्टम् ॥१३२७॥

ततो दर्शनमोहनीयक्षयानन्तरं—'बिइए'त्यादि । 'द्वितीयतृतीयौ' चतुर्णामपि मध्यमौ तौ 'चाष्टौ तान् युगपत् प्रस्तौति', क्षपणमङ्गीकृ'[2]यैतेषां च स्वतत्त्वं क्षपयन् विमध्यभागोद्देशेऽन्याः षोडश प्रकृतीः' प्रक्षिप्य 'क्षपयति' ग्रसति[3], प्रशस्तासाधारणरुचित्वादर्द्धोपभुक्तग्रासाग्रकरमर्दकपिसार्द्रकेशकलादिवदिति गाथार्थः ॥१३२८॥

ताश्चैता 'णरये'त्यादि । 'णरयाणुपुव्वि'त्ति प्रथमं तावन्नरकानुपूर्वी नाम यज्जीवस्य तद्गतिनिबन्धनं, वृषभनासिकन्यस्तरज्जुस्थानीयत्वाद्, यया कर्मपुद्गलसंहत्या[4] तत्र नीयत इत्यर्थः । यया वोर्द्धोत्तमाङ्गाधश्चरणादिरूपो भवति (१) । एवं सर्वत्र । तथा 'तिरियाणुपुव्वि'त्ति तिर्यगानुपूर्वीनामाप्येवमेव (२) । तथा 'नारकगति'त्ति यदुदयान्नारकगतावाविर्भवति सा (३) । एवं 'तिरियगति'त्ति यया च तिर्यग्गताविति (४) । तथा 'चतस्रश्चाद्याः जातय' एकेन्द्रियद्वीन्द्रियत्रिचतुःसञ्ज्ञिताः (५-८) । तथा'ऽऽतपनामादिपञ्चकम्' (९-१३) ॥१३२९॥

'तिण्णी'त्यादि । 'तिस्रश्च महानिद्रा'—निद्रानिद्रा प्रचलाप्रचला स्त्यानर्द्धिरिति च (१४-१६) । ततो'ऽष्टानां शेषम्' । पश्चार्द्धं तु पूर्ववत् ॥१३३०॥

'तत्तो ये'त्यादि । इह दर्शनसप्तकस्थायिनं सम्यक्त्वकषायाष्टके मुक्त्वा 'सर्वत्र सावशेषे पाश्चात्ये' तिष्ठति सति 'पौरस्त्ये लगति', अत्यन्तपटुत्वात्, प्रदीर्घशुष्कशष्पकाष्ठशीर्णपतितपत्रगोमयादिसंभृतदावानलवत् । सर्वं चैतत् पौर्वापर्येणान्तर्मुहूर्तमिति गाथार्थः ॥१३३१॥

---

1 उ P. 2 ने P.
3 P has सन्त for सद. 4 हि P.

स च—'दंसणे'त्यादि[1]। 'दर्शनमोहनीयक्षये निर्वत्तिवादरः' श्रेणिकवत्। 'परतस्त्वनिवर्त्तिवादरः आ-संज्वलनलोभ[2]संख्येयभागादि'ति गाथार्थः ॥१३३२॥

'तदे[3]'त्यादि। 'तस्य' संज्वलनलोभान्त्यसंख्येयभाग'स्यासंख्येयभागम्'। शेषं भावितवत् ॥१३३३॥

एवं 'खीणे'इत्यादि। 'क्षीणे'ऽष्टाविंशतिविधे मोहनीये 'क्षपकनिर्ग्रन्थो' यथाख्यातचारित्री भण्यते। स च तस्यामवस्थायां 'विश्राम्यति तीर्णमोहसागरत्वात्'। कियन्तं कालं यावदित्याह—'अन्तर्मुहूर्त्तम्'। द्रव्यसमुद्रतरितृवदिति गाथार्थः ॥१३३४॥

'छउमत्थे'त्यादि। 'छद्म' आवरणम्। छद्मनि तिष्ठतीति 'छद्मस्थः'। तद्विषयः कालश्छद्मस्थकालः'। द्विसमयन्यूनमन्तर्मुहूर्त्तमित्यर्थः। तस्माच्छद्मस्थकालाद् द्वितीयश्चरमः समयोऽस्येति 'छद्मस्थकालद्विचरमसमयः। तस्मिन् निद्रां क्षपयति प्रचलां च' प्रागक्षपितत्वात्। 'च'शब्दादक्षपितं चान्यत्। उक्तञ्च—"देवगति आणुपुव्वी, विउव्वि संघयण पढमवज्जाइं। अण्णयरं संठाणं" मुक्त्वा यत्र व्यवस्थित इत्यर्थः। तथा तीर्थकरनाम योऽतीर्थकरो भवति आहारनाम चेति। इतरसमयव्यापारमाह—'चरमे'समये छद्मस्थकालस्य 'केवलज्ञानोत्पत्तिर्भवति'। किंविशिष्टस्य सत इत्याह—'क्षीणज्ञानदर्शनावरणान्तरायस्ये'ति। उक्तञ्च—"चरिमे णाणावरणं" इत्येवमादि। ततः "संभिण्ण"मित्यत्रापि[4] सम्बन्धो भविष्यति ॥१३३५॥ इह चावरणक्षयात्केवलोद्भूतिरिति व्यवहारनिश्चयौ ब्रूतः।

[केवलोत्पत्तौ व्यवहारनिश्चयनयौ]

तत्र तावत्—

आवरणक्खयसमए नेच्छइअनयस्स केवलुप्पत्ती।
तत्तोऽणंतरसमए ववहारो केवलं भणइ ॥१३३६॥

नाणं न खिज्जमाणे खीणे जुत्तं जओ तयावरणे।
न य किरियानिट्ठाणं कालेगत्तं जओ जुत्तं ॥१३३७॥

जइ किरियाए न खओ को हेऊ तप्परिक्खए अन्नो।
अह ताए किह काले अन्नत्थ तई खओऽण्णत्थ ॥१३३८॥

किरियाकालम्मि खओ जइ नत्थि तओ न होज्ज पच्छावि।
जइ वऽक्किरियस्स खओ पढमम्मि वि कीस किरियाए ॥१३३९॥

जं निज्जरिज्जमाणं निज्जिण्णंति भणियं सुए जं च।
नोकम्मं निज्जरिज्जइ नावरणं तेण तस्समए ॥१३४०॥

---

1 P has णमित्यदि for णेत्यादि. 2 भा P.
3 दि P. 4 मि P.

जइ नाणमणावरणेऽवि नत्थि तो तं न नाम पच्छावि ।
जायं च अकारणओ तमकारणओ च्चिय पडेज्जा ।।१३४१।।

नाणस्सावरणस्स य समयं तम्हा पगासतमसो व ।
उप्पायव्वयधम्मा तह नेया सव्वभावाणं ।।१३४२।।

उभयावरणाईओ केवलवरनाणदंसणसहावो ।
जाणइ पासइ य जिणो नेयं सव्वं सयाकालं ।।१३४३।।

'आवरणे'त्यादि । आवरणविचटनसमय एव नैश्चयिकनयस्य केवलज्ञान-मुन्मु[1]क्तिमातनुते', क्रियाकालनिष्ठाकालयोरभेदात्, क्रियमाणकृतवत् । भेदे च क्षयक्रियाऽभावभावित्वेन ग्रन्थ्यभेदकालेऽपि स्यात् । 'ततः क्षयसमयानन्तरे समये केवलमुत्पद्यत इति व्यवहारो भणति' । क्रियाकालनिष्ठाकालयोर्भेदात् कृते[2] कृतवत् । अभेदे च कृतत्वेन क्रियावैयर्थ्यमपि स्यात् स्यात् ।।१३३६।।

तथाहि 'णाण'मित्यादि । 'ज्ञानं' केवलज्ञानाविर्भवनं 'न क्षीयमाणे' न द्राग् दश दिशो विचटति सति केवला[3]वरणे संभवति । किं कारणमित्यत आह—'युक्तं' घटमानकं 'तदावरणे' केवलावरणे 'क्षीणे' सति यतः । एतदुक्तं भवति—आद्यसमयस्यावरणक्षयक्रियाकालत्वात् द्वितीयस्य च निष्ठाकालत्वात् न क्रिया-काले तत्, किन्तु क्रियोत्तरकालम् । 'न च क्रियानिष्ठयोरेकसमयता युक्ता' क्रियावैयर्थ्यप्रसङ्गात् । अतो नाद्यसमय इदं, किन्तु द्वितीय गाथार्थः ।।१३३७।।

उच्यते—भवतो ह्यावरणक्षयोऽक्रियया क्रियया वेति ? किं चातः । 'जदी'-त्यादि । यदि 'क्रियया' सदनुष्ठानलक्षणया 'न क्षयो' न विचटनं तदावरणस्य, ततः 'तत्परिक्षये' आवरणपरिक्षये 'कोऽन्यो हेतुः' ? क्षय्यं च तदावयोः, सर्वज्ञा-भ्युपगमात् । 'अथ' मन्यसे 'तया' तत् परिक्षय इति । 'कहं अण्णत्थ तयी' क्रिया ? प्रथम इति भावना । 'खयोऽण्णत्थ'त्ति क्षयस्त्वन्यत्र, द्वितीय इति भावना । न त्वेकसामयिक एव क्रियानिष्ठाऽभ्युपगमे क्रियासाफल्यमिति गाथार्थः ।।१३३८।।

अपि च—'किरिये[4]'त्यादि । 'क्रियाकाले'ऽप्याद्यसमयवर्त्तिनि 'क्षयो यदि नास्ति ततोऽसौ पश्चादपि न स्याद्' अक्रियत्वात् प्राग्वत् । अपि चैवं त्वदभिप्रेत-समयेऽपि केवलोत्पत्तिर्न, क्रियाशून्यत्वात्, क्षपकनिर्ग्रन्थत्वान्यतरसमयवत् । तथा 'यदि च' द्वितीयसमये'ऽक्रियस्य क्षयस्ततः प्रथमसमयेऽपि किं क्रियया' ? तामन्तरे-णैव क्षयोऽस्त्विति गाथार्थः ।।१३३९।।

अपि च—न प्रतिज्ञामात्रेणैतन्नीयते, आर्षेऽप्येतदेवास्ते इति । आह च—'ज'मित्यादि । 'यस्मान्निर्जीर्यमाणं निर्जीर्णमिति सूत्रे भणितं' । "चलमाणे चलिते जाव णिज्जरिज्जमाणे णिज्जिण्णे"त्ति । अतः क्षीयमाणमावरणं क्षीण-

1 ऽमं P.
2 तं P.
3 P adds ज्ञान.
4 P has क्रिये for करिये.

मेवेति नानयोः कालभेदः । 'जं च'त्ति यस्माच्च 'भणितं सुत्ते' इत्यनुवर्त्तते । 'नो कर्म निर्जीर्यते', किं तर्हि वेद्यते । यतश्चैवं तेन कारणेन 'तत्समये नावरणं[1]' न प्रतिवन्धकमस्ति । अप्रतिवंधकस्य तु केवलं को निरुणद्धि ? अहं चेत्, उच्यते ।।१३४०।।

'जदी'त्यादि । 'यदि ज्ञानं' केवलज्ञान'मनावरणेऽपि' आवरणविघटन-वेलायामपि 'णत्थि'त्ति नोत्पद्यते, उत्पद्यते त्वन्यकाले यदि 'तो' तत'स्त'ज्ज्ञानं 'न नाम पश्चादपी'ति सर्वज्ञाभावाद् दृष्टं हृदि मीमांसकानां भवितेति । अपि च—एवं 'जातं च अकारणदो' यथा त[2] द्वितीयसमय इति शेषः । तह 'तं अकारणदो[3] च्चिय पडेज्जा' । एतदुक्तं भवति—कारणाज्जायमानं सद्वस्त्वा-स्थानियममासादयति । यदि त्वकारणाज्जायते, नन्वकारणादेव च्यवेत[4], निमित्ताविशेषात् । द्वितीयेऽपि न केवलं, निरावरणत्वादाद्यसमयवत् । ततश्च "नित्यं सत्त्वमसत्त्वं वे"त्यादिदोषः । निर्हेतुकविनाशे निर्हेतुकोत्पादात् । न चैवमिति गाथार्थः ।।१३४१।।

'णाणस्से'त्यादि । तस्मात्कालाभेदेन वोद्धव्याविमाविति वाक्यशेषः । कौ ? उत्पादव्ययधर्मौ । कयोरिवेत्याह—प्रकाशतमसोरिव । किं केवलस्यैवेयं गतिः ? नेत्याह—यथाऽस्य 'तथा सर्वेषां भावना'मेवमिमौ 'ज्ञेयावि'ति गाथार्थः ।।१३४२।।

ततश्च—'उभये'त्यादि । स्पष्टा ।।१३४३।।

अत उक्तम्—

संभिन्नं पासंतो लोगमलोगं च सव्वओ सव्वं ।
तं नत्थि जं न पासइ भूयं भव्वं भविस्सं च ।।१३४४।। नि० १२२।।
बाहिं जहा तहंतो संभिन्नं सव्वपज्जवेहिं वा ।
अत्तपरनिव्विसेसं सपरप्पज्जायओ वावि ।।१३४५।।
संभिन्नग्गहणेण व दव्वमिह सकालपज्जवं गहियं ।
लोगालोगं सव्वं ति सव्वओ खित्तपरिमाणं ।।१३४६।।
तं पासंतो भूयाइं जं न पासइ तओ तयं नत्थि ।
पंचत्थिकायपज्जयमाणं नेयं जओऽभिहियं ।।१३४७।।
तवनियमनाणरुक्खं आरूढोऽयं जिणो अमियनाणी ।
एत्तो स परंपरओ एत्तो जिणपवयणुप्पत्ती ।।१३४८।।
निज्जुत्तिसमुत्थाणप्पसंगओ जाव पवयणुप्पत्ती ।
पासंगियं गयमियं वोच्छामि इओ उवग्घायं ।।१३४९।।

---

1 P has चरमसमये for नाऽऽवरणं. 2 Wanting in P.
3 तो P. 4 त् P.

अच्छउ तावुग्घाओ का पुण जिणप्पवयणप्पसूइ त्ति ।
तं कित्तियाभिहाणं पवयणमिह को विभागो से ॥१३५०॥

एयं पसंगसेसं वोत्तुमुवग्घायवित्थरं वोच्छं ।
तो सेसद्दाराइं कमेण तस्संगहो चेमो ॥१३५१॥

'संभिण्ण'मित्यादि ॥१३४४॥ निर्युक्तिगाथा १२२॥

व्याख्या । 'बाहि'मित्यादि । 'स' मेकीभावेन 'भिन्नम्' । 'संभिन्नम्' । किमुक्तं भवतीत्याह—'यथा वहिस्तथाऽन्तः' । घटं हि यथाऽन्तरन्त्यप्रतरे पश्यत्येवं वाह्यान्त्यप्रतरेऽपि यावन्मध्यप्रतरद्वय इत्यर्थः । तथा 'सर्वपर्यायभिन्नं वा' । संभिन्नमिति वर्त्तते । घटपरमाणून् ह्यनन्तानन्तपर्यायानुविद्धान् पश्यतीत्यभिप्रायः । तथा'ऽऽत्मपरनिर्विशेषं वा संभिन्नम्' । यथाऽऽत्मानमेवं परमपि जानतः संभिन्नं दर्शनमुच्यते । 'स्वपरपर्यायभेदेन' वा पश्यतः 'संभिन्न'मिति गाथार्थः ॥१३४५॥

'संभिण्णे'त्यादि । अथवा 'संभिन्नमिति द्रव्यं गृह्यते' । कोऽत्र भावार्थः ? 'कालपर्यायौ' हि तत्पर्यायौ । ताभ्यां समस्ताभ्यां, समन्ताद्वा भिन्नं 'संभिन्नम्' । शेषं सुगमम् ॥१३४६॥

[जिनप्रवचनोत्पत्तिः]

'तं'इत्यादि च । 'तवे'त्यादि । तदेवमुक्तेन ग्रन्थकलापाटोपेन । 'अयं' ति असौ 'जिनोऽमितज्ञानी यस्तपोनियमज्ञानवृक्षमारूढः' स उक्तः । तथा 'एत्तो'त्ति अतो जिनात् 'स भावपरंपरको' लग्नो येनेयं सामायिकनियुक्तिरायाता । 'एतस्मा'च्च वक्ष्यमाणा 'जिनप्रवचनोत्पत्तिः' प्रस्तुतेति गाथार्थः ॥१३४७-१३४८॥

एतच्च प्रासङ्गिकमुक्तमिति । आह च भाष्यकारः—'णिज्जुत्ती'त्यादि । 'निर्युक्तिसमुत्थानप्रसङ्गत'स्तपोनियमज्ञानवृक्षारोहणादारभ्य । कियतीं भुवं यावत्प्रवचनोत्पत्तिः । एतत् किमित्याह—प्रासङ्गिकमेतद् 'गतं' प्रसङ्गेनैतदुक्तम् । इदानीं प्राक्प्रतिज्ञातव्यवहितस्फुरन्मतिर्भूयोऽप्याह—'इत' ऊर्ध्व'मुपोद्घातं वक्ष्ये', कृतमङ्गलोपचार इति गाथार्थः ॥१३४९॥

अथाद्याप्यपान्तराले वक्तव्यमुत्पश्यन्नन्यदेवाह—'अच्छउ' इत्यादि । 'तिष्ठत्व'द्यापि 'तावदुपोद्घातः' सान्न्यासिकोऽनवसरत्वात् । 'का पुनरियं जिनप्रवचनोत्पत्तिर्नामेति, कियदभिधानं चेह तत् प्रवचनं' ? 'से' तस्य को वाऽभिधानविभागः ? ॥१३५०॥

'एय'मित्यादि । 'एतत्' जिनप्रवचनोत्पत्त्यादि 'प्रसङ्गशेष वक्तुं' तत इमं वक्ष्ये', प्रतिज्ञातत्वात् । 'ततः शेषद्वाराणि' "दारविवी य" इत्येवमादीनि, 'तत्सङ्ग्रहश्चायम्' ॥१३५१॥

तद्यथा—

जिणपवयणउप्पत्ती पवयणएगट्ठिया विभागो य।
दारविही य नयविही वक्खाणविही य अणुओगो ॥१३५२॥
नि० १२३॥

पासंगियमाइतियं दारविहित्ति विहिउ उवग्घाओ।
अणुओगद्दारं पुण चउत्थमिट्ठं नयविहित्ति ॥१३५३॥
सीसायरियपरिक्खा वक्खाणविहित्ति कहणमज्जाया।
सुत्तप्फासियणिज्जुत्ति सुत्ताणुगमोऽयमणुओगो ॥१३५४॥
किं पुण चउत्थदारं नयविहिमभिधाय तोऽणुओगो त्ति।
चउदारासंगहिया वक्खाणविहित्ति किं गहिया ॥१३५५॥
बंधाणुलोमयाए केई न जओ तई कमेणं पि।
तीरइ निबंधिउं जे तेणेयं बुद्धिपुव्व त्ति ॥१३५६॥
अंतम्मि उवण्णसिउं पुव्वमणुगमस्स जं नए भणई।
तं जाणावेइ सम्मं वच्चंति नयाऽणुओगो य ॥१३५७॥
सुत्ताणुगमावसरे गुरुसीसाणुग्गहोवएसत्थं।
वक्खाणविहिं जंपइ मूलद्दाराणहिकयं पि ॥१३५८॥
अहवा साहिकय च्चिय वक्खाणंगं ति जं तओऽणुगमे।
जं जं वक्खाणंगं तं तं सव्वं जओऽणुगमो ॥१३५९॥
सुत्ताणुगमाईए वक्खाणविही जओ तदंगं सा।
जं च सुयावसरे च्चिय सफलाइं गवाइनायाइं ॥१३६०॥
जइ साणुगमंगं चिय दारविहीए तओ किमाईए।
ओयारेउं भन्नइ उक्कमकरणे गुणो को णु ॥१३६१॥
दारविहीवि महत्था तत्थ वि वक्खाणविहिवज्जासो।
मा होज्ज तदाईए वक्खाणविहिं निरूवेइ ॥१३६२॥
एत्थेव गुरु सीसं सीसो य गुरुं परिच्छिउं पच्छा।
वोच्छिइ सोच्छिई व सुहं मोच्छिइ व सुदिट्ठपेयालो ॥१३६३॥
साऽणुगमंगंपि इहं जइ भन्नइ किं न कीरइ इहेव।
दाएइ पयत्तयरं वक्खाणविही य सुत्तम्मि ॥१३६४॥
अणुओगाइविभागे वक्खाणविहीवि तप्पसंगेणं।
जंपंति केइ तेसिं वोत्तुं सोउं व को जोगो ॥१३६५॥
संगहगाहाए पुण अणुओगाईएँ बेंति दाएंता।
जो वन्निओऽणुओगो सोऽयं स विही जदत्थं ति ॥१३६६॥

सुयमिह जिणपवयणं तस्सुप्पत्ती पसंगओऽभिहिया ।
जिणगणहरवयणाओ इमाइं तस्साभिहाणाइं ॥१३६७॥

'जिणे'त्यादि । तत्र 'जिनात्प्रवचनोत्पत्तिस्तथा तदेकार्थिकान्येकार्थिकविभागश्चैतत्त्रयं प्रसङ्गस्य शेषमास्ते । तथा 'द्वारविधिरचो'पोद्घातः । अयं च प्रकृतो भविष्यतीत्यभिप्रायः । तथा 'नयविधि'श्चतुर्थं मूलद्वारं प्रकृतम् । तथा 'व्याख्यानविधि'श्च शिष्याचार्ययोरधिकृतः । 'अनुयोगश्च' सूत्रस्पर्शसूत्रानुगमलक्षणोऽधिकृतः । इत्ययं तावत्सङ्ग्रहगाथापिण्डार्थः ॥१३५२॥ निर्युक्तिगाथा १२३॥

'पासंगिय'मित्यादि । 'सिस्से'त्यादि गतार्थम् ॥१३५३-१३५४॥

एवं तावत्सामान्येनायमर्थः । अथ चोदकः—उपक्रमो निक्षेपोऽनुगमो नय इति क्रमापतितेनेमेनां गाथामवबुध्यमानो भावार्थं चानवबुध्यमानः क्रमोपन्यासमस्याः प्रविघट्टयन्नाह—'किं पुण' इत्यादि । 'किं पुनश्चतुर्थं द्वारमभिधाय' । कतमदित्याह—'नयविधिं' मूलनयद्वारमित्यर्थः । 'तो' ततः पश्चा'दनुयोगो'ऽभिहितो येनोच्यते—'णयविही अणुओगो'त्ति । नन्वेवं क्रियतां 'अणुओगोवक्खाणविहीणयविही'त्येकं चोद्यम् । द्वितीयमाह—'चतुर्द्वारासंगृहीतत्वाद् व्याख्यानविधिर्वा किं गृहीतः' ? नन्वेवमुच्यतां 'दारविही य णयविही अणुयोगो होइ पंचमओ'[1] । एषां च रूढ्या स्त्रीलिङ्गम् । अन्यथा "धुः सं किरुपसर्गपूर्वः पुंसी"ति—वचनात् पुंलिङ्ग एवेति गाथार्थः ॥१३५५॥

अत्राचार्यदेशीयोऽस्याद्यचोद्यस्य परिहारमाह 'बंधे'त्यादि । 'केचन' परिहारमाचक्षते 'बन्धानुलोम्या'दिदमभ्यधायि भद्रबाहुस्वामिना "दारविही य णयविही वक्खाणविही यऽणुओगो"त्ति । एतच्च 'ण', हठमात्रत्वात् । किमित्यत आह—'जतो तई' यतोऽसौ नयविधिः 'क्रमेणापि पार्यते निबन्धितुम्' । तद्यथा—'दारविही वक्खाणविधि अणुओगो णयविही य' । 'तेनेयं' नयविधि'र्बुद्धिपूर्वा'साभिप्रायिकी । द्वारविधेरनन्तरमिति शेषः । नयानुयोगयोर्व्यत्ययः साभिप्रायः इति गाथार्थः ॥१३५६॥

कश्चासावभिप्राय इत्याह—'अंतमि'त्यादि । इह भद्रबाहुस्वामी "अस्य च चत्वार्यनुयोगद्वाराणि भवन्ती"त्यत्राध्ययनादौ 'पुव्व'त्ति । 'पूर्वमन्त उपन्यस्य' नयद्वारमस्यां तु गाथाया'मनुगमस्य'—अनुयोगस्य पूर्वं 'यन्नयान् भणति' व्यत्ययं कृत्वा तज्ज्ञापयति—'नयानुयोगौ' प्रतिसूत्रं 'युगपद् गच्छत'स्तद्गर्भत्वात् । आदौ तु क्रमोपन्यासो युगपद्वक्तुमशक्यत्वादेवमादीति गाथार्थः ॥१३५७॥

द्वितीयचोद्यपरिहारमाह—'सुत्ता' इत्यादि । 'सूत्रानुगमावसरे'ऽनुगमद्वितीयभेदव्याख्यानवेलायाम् । किम् ? 'व्याख्यानविधिं' शिष्याचार्यपरीक्षा-

---

1 Here P टीका remarks : अणुयोगो छट्ठउ होइ त्ति पाठो न्यायः । अयं स्वपपाठः सम्भाव्यते ।

प्रकारं 'मूलद्वारेष्वनधिकृतमप्य'नुक्तमपि 'जल्पत्य'भिधत्ते संग्रहगाथायाम् । किमर्थमित्यत आह—'गुरुश्च शिष्यश्च' तौ । 'तयोरनुग्रह' इति विग्रहः । तदुपलक्षित उपदेशस्तथोच्यते । 'तदर्थम्' । एतदुक्तं भवति—सुश्रव्यं सुव्याख्येयं च कथं नाम शास्त्रं स्यादित्येवमर्थमिति । यदुक्तं भवति गुणवताऽऽचार्येण गुणवते शिष्यायास्खलितादि सूत्रमुच्चार्य देयमित्येवमर्थमित्यतः क इवापराधः ? ।।१३५८।।

एवं तावदनधिकारपक्ष उक्तः । अधिकारपक्षेऽप्यमुं दोषं परिजिहीर्षुराह—**'अहवे'**त्यादि । **'जं साऽहिकय च्चिय'** त्ति । 'यस्मादसौ' व्याख्यानविधि'रधिकृत एव'—प्रस्तुत एव । क्व'—'अनुगमे' तृतीये द्वारे । कुत एतदित्याह—'व्याख्यानाङ्गत्वात्' । ततः किमिति चेदुच्यते—**'ततो'**त्ति । 'तत'स्तस्मान्न दोषश्चतुर्द्वारासंग्रहलक्षणः । एतदेव भावयन्नाह—'यद्यद् व्याख्यानाङ्गं तत्तत्सर्वं यतोऽनुगम' इत्यतोऽधिकृतैव सेति गाथार्थः ।।१३५९।।

अस्मिन्नेव च पक्ष इदमपरमाह—यतश्च **'सुत्ते'**[2]त्यादि । **'सुत्ताणुगमादीये वक्खाणविहीजओ'** भणिओ न्यायविदा परमेश्वरेण "सुत्तं पयं पयत्थो" इत्याद्येतदुपलक्षकवचनात्, अतो'ऽनुयोगाङ्गं से'ति । 'यस्माच्च श्रुतावसर एव' सूत्रानुगमप्रस्ताव एव 'सफलानि' प्रयोजनवन्ति 'गवाद्युदाहरणानि' भवन्ति "गोणी चंदणकंथे"त्यादीन्युत्सर्गेण । तस्मादनुगमाङ्गं सेति को वक्तीयं चतुर्द्वारासंग्रहीतेति । अयं चात्र भावार्थः—अवश्यमेव सूत्रे व्याख्यायमाने योग्यायोग्यनिभालनं कर्त्तव्यम् । यत उक्तम्—

"आमे घडे निहित्तं जहा जलं तं घडं विणासेइ ।
इय सिद्धंतरहस्सं अप्पाहारं विणासेइ ।।१।।"

इति[1] गाथार्थः ।।१३६०।।

तदेवं स्थिते भाविवस्त्वङ्गीकृत्य चिचोदयिषुराह—**'जदी'**त्यादि । 'यद्यसौ' व्याख्यानविधि'रनुगमाङ्गं' सूत्रानुगमादेः कारण'मेव, ततः द्वारविधे'रुपोद्घातस्या'दाववतार्य किं भण्यते' कस्माद् भणिष्यत इत्यर्थः । येनोच्यते—"गोणी चंदनकंथा" ततः "उद्देसे णिद्धेसेय णिग्गमे" इत्यादि । 'ननु को ह्युत्क्रमकरणे गुणो लभ्यत' इति ।।१३६१।।

उच्यते—**'दारे'**त्यादि । 'द्वारविधिरपि' "उद्देसे निद्देसे" इत्येवमादिका 'महार्था' बहुवृत्तान्ता कल्याणहेतुत्वात् सूत्रवत् । ततश्च 'तत्रापि व्याख्यानविधिविपर्यासो'ऽविनीतादिप्रदानलक्षणोऽतिरोषणपार्श्वश्रवणलक्षणो वा 'मा भूद'-तस'तदादा'वुपोद्घातविधेरादौ 'व्याख्यानविधिं निरूपयति' । अतस्ततोऽयमवतार्येह भण्यत इति गाथार्थः ।।१३६२।।

---

1 P adds इत्याह. 2 P adds इ. 3 P has त्ति for इति.

[गुरुशिष्यपरीक्षणम्]

कथं नु नाम[1]—'एत्थेवे'त्यादि'। 'अत्रैव' द्वारविधा'वाचार्यो' जिज्ञासितगुणदोषाय गुणवते 'शिष्याया'नुयोगं 'वक्ष्यति'। 'शिष्यश्च गुणवदाचार्यसंनिधावेव श्रोष्यति'। 'मोक्ष्यति वा' दोषवन्तं शिष्यमाचार्य इति गाथार्थः ॥१३६३॥

तदेवमप्युक्ते निरुक्तकारी चोदक आह—'स' इत्यादि। 'स' व्याख्यानविधि'रनुगमाङ्गमपि' सन् 'इहा'स्मिन् द्वारविधेरादौ 'यदि भण्यते' अपि बहुवृत्तान्ततततयः इमा परिभ्राम्य, ततः 'किं' किमिति 'इहैवा'स्यामेव संग्रहगाथाया'मसौ नोपन्यस्यते'। एवं यदुत[2]—

"जिणपवयणउप्पत्ती पवयणएगट्ठिया विभागो य।
वक्खाणविही दारविहि णयविही होइ अणुओगो ॥१॥"

येनोच्यते—"सुत्ताणुगमाईए सा भणिय"त्ति। उच्यते, संग्रहगाथायां पष्ठस्थानेऽस्योपन्यासं कुर्वन् 'व्याख्यानविधेः' शिष्याचार्यपरीक्षाविधेः 'प्रयत्नतरं दर्शयत्य'त्रवश्यमसौ कार्यत्यर्थः। क्वेत्याह—'सूत्रे' सूत्रानुगम इति। एतदुक्तं भवति—यद्यपि कथञ्चिदुपोद्घातादौ न कृतो नाम, सूत्रानुगमावसरे त्ववश्यं कर्त्तव्य इति ज्ञापनार्थम्। उपन्यासं त्वेवं चक्रे कृतेति न दोषः। अयं तावद् भाविवस्तुसंग्रहगाथाया मध्यमभङ्ग्या अर्थ उक्तः ॥१३६४॥

'अणि'योग' इत्यादि। इह केचिज्जल्पन्ति। किम्? अत आह—'व्याख्यानविधिरपि' संग्रहगाथापष्ठद्वारभावी अनुयोगादिविभागे "अणुओगो य णिओय[3]" इत्याद्यत्र वक्ष्यमाणे 'तत्प्रसंगेना'नुयोगाद्यवसरे 'भण्यते'। कया प्रत्यासत्त्येत्याह—'तेषा'मनुयोगादीनां 'को योग्यः' क उचितो 'वक्तुं श्रोतुं वा'? इत्यनया प्रत्यासत्त्या ॥१३६५॥

संग्रहगाथायां तु पष्ठद्वारे मीलयन्तः किमुक्तवन्त इत्यत आह—'संग' इत्यादि। 'संग्रहगाथायां त्वनुयोगस्य सप्तमद्वारस्यादौ दर्शयन्त' एतां 'ब्रूवते'। किमित्याह—'जो वे'त्यादि। 'यः' सविभागद्वारे 'वर्णितो' व्यावर्णितोऽनुयोगः' सूत्रार्थयोरनुकूलः सम्बन्धः "वच्छगे"त्यादिना। 'सोऽय'मिति स इदानीमुच्यते। क्व? सूत्रानुगमादाविति सामर्थ्याद् गम्यते। किंविशिष्ट इत्याह—'स विधिः' व्याख्यानविधि'र्यदर्थं', मूलद्वारासंगृहीतोऽप्यस्यामभिधीयते निर्युक्तिकृतेति गाथार्थः ॥१३६६॥

'सुत' इत्यादि। यदुक्तं केयं जिनप्रवचनोत्पत्तिरिति, ननूक्त'मर्हद्वचनं जिनप्रवचनम्'। 'अस्य च' निर्युक्तिसमुत्थान'प्रसङ्गात एवोत्पत्तिरुक्ता जिनगणधरेभ्यः

1 Mutilated lines upto गुणवदाचार्य in the manuscript.
2 This is followed by a number of blank lines in the manuscript.
3 णु P. 4 श्रो P. 5 दो P.

सकाशात्' । यत्पुनरुक्तं तद्वा जिनप्रवचनं कियदभिधानमभिधानविभागो वाऽस्य क इति ॥१३६७॥

## [प्रवचनपर्यायाः]

अत्रोच्यते—

एगट्ठियाइं तिन्नि उ पवयण सुत्तं तहेव अत्थो य ।
एक्केक्कस्स य एत्तो नामा एगट्ठिया पंच ॥१३६८॥ नि० १२४॥

जमिह पगयं पसत्थं पहाणवयणं व पवयणं तं च ।
सामन्नं सुयनाणं विसेसओ सुत्तमत्थो य ॥१३६९॥दारं॥

सिंचइ खरइ जमत्थं तम्हा सुत्तं निरुत्तविहिणा वा ।
सूएइ सवइ सुव्वइ सिव्वइ सरए व जेणत्थं ॥१३७०॥

अविवरियं सुत्तं पिव सुट्ठियवावित्तओ व सुत्तं ति ।
जो सुत्ताभिप्पाओ सो अत्थो अज्जए जम्हा ॥१३७१॥

सह पवयणेण जुत्ता न सुयत्थेगत्थया परोप्परओ ।
जं सुत्तं वक्खेयं अत्थो जं तस्स वक्खाणं ॥१३७२॥

जुज्जइ व विभागाओ तिण्हवि भिन्नत्थया नचेयरहा ।
एगत्थाणं पि पुणो किमिहेगत्थाभिहाणेहिं ॥१३७३॥

मउलं फुल्लंति जहा संकोयविवोहमित्तभिन्नाइं ।
अत्थेणाभिन्नाइं कमलं सामण्णओ चेगं ॥१३७४॥

अविवरियं तह सुत्तं विवरियमत्थो त्ति बोहकालम्मि ।
किंचिम्मत्तविभिन्ना सामन्नं पवयणं नेयं ॥१३७५॥

सामन्नविसेसाणं जह वेगाणेगया ववत्थाए ।
तदुभयमत्थो य जहा वीसुं बहुपज्जवा ते य ॥१३७६॥

एवं सुत्तत्थाणं एगाणेगत्थया ववत्थाए ।
पवयणमुभयं च तयं तियं च बहुपज्जयं वीसुं ॥१३७७॥

अहवा सव्वं नामं वंजणसुद्धियनयस्स भिन्नत्थं ।
इयरस्साभिन्नत्थं संववहारो य तदवेक्खो ॥१३७८॥

संववहारट्ठाए जम्हा जेणेगया न निच्छयओ ।
तो जुत्ताइं तेसिं वीसुं पज्जायनामाइं ॥१३७९॥

'एगट्ठिये'त्यादि । अभिन्नैकार्थवाचकानि वचना'न्येकार्थिकानि' । तानि च 'त्रीण्ये'व भवन्ति । न द्वे चत्वारि वेति । कस्य ? श्रुतज्ञानस्येति गम्यते । कानि च तानीत्यत आह—'प्रवचनं सूत्रं तथैवार्थश्च' । सर्वे एते ध्वनयस्तद्वाचका इति भावनीयम् । तथा 'एकैकस्य' प्रवचनादे'र्नामानि' अभिधानानि

'पञ्च पञ्च भवन्ति, एकार्थिकविभागा' इत्यर्थः। यद् वक्ष्यति "सुतधम्मे"- त्येवमादि। "सुत्तं तं त"मित्येवमादि। "अणियोगो ये"त्येवमादि। अयं तावत्समुदायार्थ इति द्वारगाथार्थः ॥१३६८॥ निर्युक्तिगाथा १२४॥

प्रवचनद्वारं व्याचिख्यासुराह—'जमिहे'त्यादि। 'इह हि यत् प्रगतं' जीवादिषु श्रद्धेयज्ञेयचरणरूपतया तत्'प्रवचनम्'। 'प्रशस्तं वा' यद्वचनं माङ्गलिकत्वात्। 'प्रधानवचनं वा' यत्सकलसत्त्वहितप्रवृत्तत्वात्। 'तं च'त्ति तच्च 'सामण्णं' ति सामान्येन 'श्रुतज्ञान'मुच्यते। 'विशेषतस्तु सूत्रमर्थश्चे'ति गाथार्थः ॥१३६९॥ इति द्वारम् ॥

द्वितीय[1]द्वारमाह—'सिचदी[2]'त्यादि। "सिच क्षरणे" इ'त्यर्थक्षरणात्' श्रुतम्। तथा 'निरुत्तविहिणा वा सुयं' विउप्पाइज्जइ त्ति। तत्राह—'सूते' इत्यादि। 'अर्थसूचना'त्सूत्रम् ॥१३७०॥

'अवी'त्यादि। 'अविवियमाण'मर्थतः 'सुप्तमिवा'स्ते सुप्तपुरुषवदिति प्राकृताभिधानात् सुत्तं। तथा 'सुस्थितत्वात्' सूक्तं, 'व्यापित्वा'च्चार्थेषु 'सूक्तं' पुनः 'सुत्तं' ति द्वारम्। अर्थद्वारमाह—'यत्सूत्राभिप्रायः सोऽर्थोऽर्यमाणत्वादि'ति। अत उक्तम्—"एगट्ठियाणि तिण्णि उ पवयण सुत्तं तहेव अत्थो य।"त्ति गाथार्थः ॥१३७१॥

आह—'सहे'त्यादि। 'प्रवचनेन सह' प्रवचनेन सार्द्धं 'युक्ता'। कयोः केति ? उच्यते—मिथः सूत्रार्थयोरेकार्थतेति गम्यते। कुतः ? सूत्रस्य प्रवचनत्वात्, प्रवचनस्य च सूत्रत्वात्। अर्थस्य प्रवचनत्वात् प्रवचनस्यापि चार्थत्वात्। का तर्हि न युक्तेत्यत आह—'ण सुत्तत्थेगया परोप्परओ' त्ति। कुतः ? सूत्रस्यानर्थत्वात्, अर्थस्यापि चासूत्रत्वात्। तथा चाह—'ज'मित्यादि। स्पष्टम्। इत्येकं चोद्यमिति गाथार्थः ॥१३७२॥

पर एवाह—'जुज्जइ वे'त्यादि। 'युज्यते वा' घटते वा, 'त्रयाणामपि' प्रवचनादीनां 'भिन्नार्थता' पृथगर्थतैव युज्यते, न केवलं सूत्रार्थयोः। कुतः ? 'विभागात्' विभागसद्भावात्। 'न चेद्' भिन्नार्थता युज्यते तत 'इतरथा'ऽन्यथा 'एकार्थिकत्वे सति त्रयाणामपि पुनरेकार्थिकाभिधानमनर्थकं' यत्प्रतिज्ञातं "एक्केक्कस्स ये"त्यादिना पश्चार्द्धेनेति गाथार्थः ॥१३७३॥

सवत्राचार्यो भावार्थमाह—'मउल'मित्यादि। 'जहे'ति। 'यथा' येन प्रकारेण 'मउलं फुल्लं'ति मकुलफुल्ले, अविकसितविकसितौ पद्मविशेषौ। ते च 'सङ्कोचविकाश'प्रवचनं' प्रवचनमेव। इतरदपि द्वयम्, एवं सूत्रमर्थः। प्रवचनं 'कमलं' पद्ममरविन्दं पङ्कजम् (१)। सूत्रं मकुलं कुड्मलं वृन्दं सङ्कुचितम् (२)। अर्थः फुल्लं विकचं (३) विकसितं विबुद्धं[3] मात्रपर्यायभिन्ने कमलात्,

---

1 र्यं P. 2 ती P.

3...3 This portion is not in order. It requires further scrutiny.

'अर्थेनत्वभिन्ने कमलसामान्येनैकत्वात्' । न चैतेषां पुनरेकार्थिकविभागो न युक्तः, किं तर्हि दृष्ट एव । तद्यथा—कमलस्यैकार्थिकानि पद्मारविन्दपङ्कजसरोजतामरसजलरुहादीनि । मुकुलस्य तु सङ्कुचितवृन्दकुड्मलपोण्डाप्रविबुद्धमित्यादि । फुल्लस्य तु विकचं विकसितमुत्फुल्लं बुद्धमुद्भिन्नमेवमादीनि । अतः सर्वं युक्तमित्येष दृष्टान्तइति गाथार्थः ॥१३७४॥

दार्ष्टान्तिकमाह—'अवी'त्यादि । 'तथा' तेन प्रकारे'णाविवृतं' सच्छब्दवस्तु[1] सूत्रं व्या[1]ख्यायते, संमुग्धाकारत्वात्, कुड्मलादिवत् । तदेव 'बोधकालंमि'त्ति बोधकाले व्याख्यानकाले 'विवृतं सदर्थं' उच्यते, प्रकटीभूतत्वाद्विकचादिवत् । तथा 'किञ्चिन्मात्रविभिन्नौ' सूत्रार्थौ 'सामान्यं प्रवचनं ज्ञेय'मुभयतटस्पर्शित्वात् पद्मादिवत् । न चै[2]षां प्रवचनसूत्रार्थानां पुनरेकार्थिकाभिधानं न युक्तं, किं तर्हि युक्तमेव । यद् वक्ष्यति "सुयधम्मे"त्येवमादीति गाथार्थः ॥१३७५॥

अस्यैवार्थस्य विवेचनार्थमुदाहरणान्तरमाह—'सामण्णे'त्यादि । 'यथा वेह सामान्यविशेषयोरेकता दृष्टा तथाऽनेकता च दृष्टा' । कुत एतदित्युच्यते—सामान्यस्य विशेषेभ्योऽन्यत्वाभावाद् विशेषमात्रस्य चाभावात् । एवं विशेषाणामपि सामान्यान्यत्वाभावात् सामान्यमात्रस्य चाभावात् । कथमेतदित्याह—'व्यवस्थया' विवक्षयेत्यर्थः । तथा यथा चैत'त्सामान्यविशेषोभयमर्थाभिधानादवरुध्यते'—अर्थशब्देनोच्यते, उभयपरिणामसंनिधानरूपत्वादर्थस्य । 'यथा च ते' सामान्यविशेषार्थाः 'वीसु'ति प्रत्येकं प्रत्येकं 'वहुपर्याया' दृष्टास्तद्यथा—सामान्यं सत्ता भाव इति, तथा विशेषो भेदः पर्याय इति, द्रव्यं वस्त्वर्थ इति गाथार्थः ॥१३७६॥

एवं किमित्यत आह—'एव'मित्यादि । 'एवं सूत्रार्थयोः' सामान्यविशेषकल्पयोः 'व्यवस्थयैकताऽनेकता च' वर्त्तते । 'पवयणमुभयं च तयं' ति । तच्चोभयं सूत्रार्थलक्षणं प्रवचनाभिधानादवरुध्यते प्रवचनमुच्यते, उभयसंनिध्युपचितत्वात्तस्येति । 'तियं च' सूत्रार्थप्रवचनलक्षणं 'वीसुं' पत्तेयं पत्तेयं 'वहुपर्यायं' वर्त्तते इति । "सुयधम्म" इत्यादिना प्रकारेण कोऽत्र विरोध इति गाथार्थः ॥१३७७॥

'अहवे'त्यादि । 'यद्वा सर्वं नाम' सर्वमभिधानं 'व्यञ्जनशुद्धिकनयस्य' मतेन 'भिन्नार्थ'मपूर्वापूर्वार्थं, शब्दभेदे त्वर्थभेदतोऽर्थभेदात्, घटपटकटशकटवटचटध्वजादिशब्दवत् । 'इतरनयाभिप्रायात्वभिन्नार्थं' किञ्चिद्वचनं शब्दभेदेऽप्यर्थाभेदाद्, इन्द्रशक्रपुरन्दरादिवत् । अथवा संव्यवहारप्रत्ययप्रदर्शनाद्, घटकुटकुम्भादिवत् । प्रायोवृत्त्या च 'व्यवहारनयापेक्षया' लोकस्य[3] 'व्यवहारप्रसिद्धे'रिति गाथार्थः ॥१३७८॥

'संवे'त्यादि । 'यस्माद्' येन कारणे'नैकता', एकार्थता 'संव्यवहारार्थतया, न तु निश्चयतः' । 'तो' तस्माद् 'युक्तानि' घटमानकानि 'तेषां' प्रवचनसूत्रार्थानां

---

1...1 सन्नमा P. 2 P adds ते. 3 सं P.

'वीसुं' प्रत्तेयं पत्तेयं 'पर्यायनामानि' एकार्थिकानि व्यवहारनयादेशात इति ॥१३७९॥

अत आह—

सुयधम्म तित्थ मग्गो पावयणं पवयणं च एगट्ठा ।
सुत्तं तंतं गंथो पाढो सत्थं च एगट्ठा ॥१३८०॥ नि० १२५॥

बोहो सुयस्स धम्मो सुयं व धम्मो स जीवपज्जाओ ।
सुगईए संजमम्मि य धरणाओ वा सुयं धम्मो ॥१३८१॥

तित्थं ति पुव्वभणियं संघो जो नाणचरणसंघाओ ।
इह पवयणं पि तित्थं तत्तोऽणत्थंतरं जेण ॥१३८२॥

मज्जिज्जइ सोहिज्जइ जेणं तो पवयणं तओ मग्गो ।
अहवा सिवस्स मग्गो मग्गणमन्नेसणं पंथो ॥१३८३॥

पगयाइ अभिविहीए पवयणं पावयणमाइवयणं वा ।
सिवपावयवयणं वा पावयणं पवयणं भणियं ॥१३८४॥

सुत्तं भणियं तंतं तणिज्जए तेण तम्मि व जमत्थो ।
गंथिज्जइ तेण तओ तम्मि व तो तंमयं गंथो ॥१३८५॥

पढणं पाढो तं तेण तम्मि व पढिज्जएऽभिधेयं ति ।
सासिज्जए तेण तहिं व नेयमाया व तो सत्थं ॥१३८६॥

अणुओगो य निओगो भास विभासा य वत्तियं चेव ।
एए अणुओगस्स उ नामा एगट्ठिया पंच ॥१३८७॥ नि० १२६॥

अणुओयणमणुओगो सुयस्स नियएण जमभिधेएणं ।
वावारो वा जोगो जो अणुरूवोऽणुकूलो वा ॥१३८८॥

अहवा जमत्थओ थोवपच्छभावेहिं सुयमणुं तस्स ।
अभिधेए वा वावारो जोगो तेणं व संबंधो ॥१३८९॥

'सुत' इत्यादि । प्रवचनं 'श्रुतधर्मो'ऽभिधीयते । 'श्रुतस्य धर्मः' स्वभावः 'श्रुतधर्मो', बोधस्वभावत्वात् । श्रुतस्य बोधो धर्म उच्यते । जीवपर्यायित्वाद्वा समानाधिकरणः । सुगतिधरणाद्वा श्रुतं धर्म उच्यते । 'तित्थं' प्राग्वत् । 'मृज्यते' शोध्यतेऽनेनात्मेति 'मार्गः' । शिवान्वेषणं वा । तथा प्रगतमभिविधिना जीवादिष्विति वचनं प्राग्वत् । 'प्रवचनं' तु प्राग्वत् । प्रवचनविभाग उक्त इति । 'सुत्त'त्ति प्राग्वत् । "तनु विस्तारे" । तन्यतेऽनेनार्थ इति 'तन्त्र'मित्येवमादिकारकयोजना । अर्थग्रन्थनाद् 'ग्रन्थ' इत्येवमादि । अभिधेयपठनात्'पाठः' । शासनाच्च 'शास्त्र'मिति सूत्रविभाग इति द्वारगाथार्थः ॥१३८०॥ निर्युक्तिगाथा १२५॥

'बोधो' इत्यादि । सर्वं भाष्यमुक्तार्थं सुगमं चेति ॥१३८१-१३८६॥

[अनुयोगपर्यायाः]

अधुनाऽनुयोगादिविभागमाह—'अणुओगे'त्यादि द्वारगाथा । तत्रानुयोजन-'मनुयोगः' । किञ्च तत् ? श्रुते निजाभिधेयसम्बन्धनम् । अथवा 'योग' इति व्यापार उच्यते । ततश्चानुरूपोऽनुकूलो वा योगो । यथा घटशब्देन घटो भण्यते । अणुना वा योगो अणुयोग इत्येवमादि । तथा 'निश्चितो योगो' यथा घटध्वनिना घट एवोच्यते, नान्य इत्येवमादि । भापणं 'भापा', व्यक्तीकरणमित्यर्थः । तद्यथा घटनाद् घटः, चेष्टावानित्यर्थः । विविधा भापा 'विभापा', यथा घटः कुटः कुम्भः इत्येवमादि । 'वार्तिकम्' । वृत्तौ भवं वार्त्तिकम् । अशेपपर्यायकथनमित्यर्थः । 'अनुयोगस्य पुनरमूनि एकार्थिकानि पञ्चे'ति समुदायार्थः ।।१३८७।। निर्युक्तिगाथा ।।१२६।।

आद्यं द्वारं तावद् भाष्यकार आह—'अणु' इत्यादि । 'अधवे'त्यादि । उक्तार्थम् ।।१३८८-१३८९।।

[अनुयोगस्य नामादिनिक्षेपाः]

साम्प्रतमाद्यद्वारे प्रतिद्वारगाथामाह—

नामं ठवणा दविए खेत्ते काले य वयण भावे य ।
एसो अणुओगस्स उ निक्खेवो होइ सत्तविहो ।।१३९०।। नि०१२७।।

नामस्स जोऽणुओगो अहवा जस्साभिहाणमणुओगो ।
नामेण व जो जोग्गो जोगो नामाणुओगो सो ।।१३९१।।

ठवणाए जोऽणुओगोऽणुओग इति वा ठविज्जए जं च ।
जा वेह जस्स ठवणा जोग्गा ठवणाणुओगो सो ।।१३९२।।

दव्वस्स जोऽणुओगो दव्वे दव्वेण दव्वहेऊ वा ।
दव्वस्स पज्जवेण व जोगो दव्वेण वा जोगो ।।१३९३।।

बहुवयणओऽवि एवं नेओ जो वा कहे अणुवउत्तो ।
दव्वाणुओग एसो एवं खेत्ताइयाणं पि ।।१३९४।।

दव्वस्स उ अणुओगो जीवदव्वस्स [वा अ]ऽजीवदव्वस्स ।
एक्केक्कम्मि वि भेया हवंति दव्वाइया चउरो ।।१३९५।।

दव्वेणेगं दव्वं संखाईयप्पएसमोगाढं ।
कालेऽणाइअनिहणो भावे नाणाइयाऽणंता ।।१३९६।।

एमेव अजीवस्स वि परमाणू दव्व एगदव्वं तु ।
खेत्ते एगपएसे ओगाढो सो भवे नियमा ।।१३९७।।

समयाइठिइ असंखा ओसप्पिणीओ हवंति कालम्मि ।
वण्णाइभावऽणंता एवं दुपएसमाई वि ।।१३९८।।

दव्वाणं अणुओगो जीवाजीवाण पज्जवा नेया ।
तत्थ वि य मग्गणाओऽणेगा सट्ठाणपरठाणे ॥१३९९॥

वत्तीए अक्खेण व करंगुलाईण वावि दव्वेणं ।
अक्खेहि य दव्वेहिं अहिगरणे कप्प-कप्पेहिं ॥१४००॥

पन्नत्ति जंबुदीवे खेत्तस्सेमाइ होइ अणुओगो ।
खेत्ताणं अणुओगो दीवसमुद्दाण पन्नत्ती ॥१४०१॥

जंबुद्दीवपमाणं पुढविजियाणं तु पत्थयं काउं ।
एवं मविज्जमाणा हवंति लोगा असंखेज्जा ॥१४०२॥

खेत्तेहि बहू दीवे पुढविजियाणं तु पत्थयं काउं ।
एवं मविज्जमाणा हवंति लोगा असंखेज्जा ॥१४०३॥ दारं ॥

खेत्तम्मि उ अणुओगो तिरियं लोगम्मि जम्मि वा खेत्ते ।
अड्ढाइयदीवेसु छलद्धवीसाए खेत्तेसु ॥१४०४॥

कालस्स समयरूवण कालाण तदाइ जाव सव्वद्धा ।
कालेणऽनिलाऽवहारो कालेहि उ सेसकायाणं ॥१४०५॥

कालम्मि बीयपोरिसि समासु तिसु दोसु वा वि कालेसु ।
वयणस्सेगवयाई वयणाणं सोलसण्हं तु ॥१४०६॥

वयणेणायरियाइ एक्केणुत्तो बहूहिं वयणेहिं ।
वयणे खओवसमिए वयणेसु उ नत्थि अणुओगो ॥१४०७॥

भावस्सेगयरस्स उ अणुओगो जो जहट्ठिओ भावो ।
दोमाइसंनिगासे अणुओगो होइ भावाणं ॥१४०८॥ दारं॥

भावेण संगहाईणऽण्णयरेणं दुगाइभावेहिं ।
वयणे खओवसमिए भावेसु य नत्थि अणुओगो ॥१४०९॥

अहवा आयाराइसु भावेसु वि एस होइ अणुओगो ।
सामित्तं आसज्ज व परिणामेसुं बहुविहेसुं ॥१४१०॥ दारं॥

दव्वे नियमा भावो न विणा ते यावि खेत्तकालेहिं ।
खेत्ते तिण्हवि भयणा कालो भयणाए तीसु पि ॥१४११॥

आधारो आधेयं च होइ दव्वं तहेव भावो य ।
खेत्तं पुण आहारो कालो नियमाउ आहेओ ॥१४१२॥

एसोऽणुरूवजोगो गओऽणुओगो अओ विवज्जत्थं ।
जो सो अणणुओगो तत्थेमे होंति दिट्ठंता ॥१४१३॥

'णाम'मित्यादि ॥१३९०॥ निर्युक्तिगाथा १२६॥

आद्यद्वारव्याचिख्यासयेदमाह—'णामस्से'त्यादि । स्पष्टा । नवरं 'योग्यो'ऽनुकूल इत्येवं सर्वत्र ॥१३९१॥ द्वारम् ॥

'ढवणे'त्यादि । सुगमा ।। १३९२।। द्वारम् ।।

द्रव्यानुयोगद्वारमाह—'दव्वस्से'त्यादि । 'बहु' इत्यादि । 'द्रव्यस्य योऽनुयोगः' सो 'दव्वाणुयोग' इत्यत्र सम्बन्धः । तथा 'द्रव्ये' निपद्यादावधिकरणभूते 'द्रव्येण' करणभूतेन क्षीरपाषाणदलकेन । इह च 'द्रव्यस्य द्रव्येण द्रव्य' इत्येवं[1] द्रष्टव्यम् । 'द्रव्यहेतुर्वा योऽनुयोगः स द्रव्यानुयोगः । द्रव्यस्य वा पर्यायेण योऽनुरूपो योगो द्रव्येण वा योऽनुकूलो योगः' । एवं 'वहुवचनतोऽपि वाच्यम्' । यथा द्रव्याणां द्रव्यैर्द्रव्येष्विति । 'यो वा'ऽर्थं 'कथयत्यनुपयुक्त' इति । 'एवं क्षेत्रकालभावत्रयेऽपि' वाच्यमिति संक्षेपार्थः ।।१३९३-१३९४।।

साम्प्रतं विशेषतो द्रव्यानुयोगं तावदाह—'दव्वे'त्यादि । 'द्रव्यस्य त्वनुयोगो' द्वेधा । कथमित्यत आह—'जीवद्रव्यस्य वा अजीवद्रव्यस्य वे'ति । पुन'श्चैकैके' जीवद्रव्ये अजीवद्रव्ये च 'द्रव्यादींश्चतुरो भेदान्' जानीहि । तांश्च क्रमेणाह—दव्वेणे'त्यादि । 'द्रव्येण' द्रव्यत 'एकं द्रव्यं' । तच्च '**संखातीयप्पदेसमोगाढं**' । स च जीवः 'कालेऽधिकृतेऽनाद्यनिधनः, भावे चाधिकृतेऽस्य ज्ञानादयोऽनन्ताः' पर्याया इति गाथार्थः ।।१३९५-१३९६।।

'**ए'मेवे**'त्यादि । '**समयादी**'त्यादि । स्पष्टम् । इति द्रव्यस्यानुयोग इति गतम् । वहुवचनत आह—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| द्रव्यस्य | द्रव्येण | द्रव्याणां | द्र अनं | द्र अनं | खे. | का० | द्रव्यैः |
| जी अ | द्रव्ये | जी अ | | | खे ३ | का ३ | द्रव्येषु |
| ४ ४ | | ४ ४ | अनं प | अनं प | अ | अ | |

'**दव्वाण**'मित्यादि इह 'द्रव्याणां' वहूना'मनुयोगः' । जीवाजीवाना'मनन्ता ज्ञानकृष्णादि'पर्यायाः' । 'तत्रापि चानेका मार्गणाः स्वस्थाने' जीवाजीवद्रव्याणाम् । तत्र द्रव्यतोऽनन्तानि अनन्तपर्यायाणि च । 'परस्थानतः' क्षेत्रकालाभ्यामसंख्येयानि, प्रायोविवक्षयेति । द्रव्याणामपि गतम् । एवं—'**वत्तीए**' इत्यादि । 'वर्त्यादिना'ऽनुयोगो द्रव्येण । दारं । 'अक्षै'स्त्वनुयोगो द्रव्यैः । दारं । 'अधिकरणे कल्प' एकत्र व्यवस्थितोऽनुयोगं यदा करोति । दारं । 'कल्पेषु' तु वहुष्विति गाथार्थः ।।१३९७-१४००।। द्रव्यानुयोगः समाप्तः ।।

खेत्तस्स खेत्ताणं वाऽणुयोगमाह—'**पन्नती**'त्यादि । स्पष्टम् ।।१४०१।।दारं।।

क्षेत्रेणाह—'**जंबुद्दीवे**'त्यादि । स्पष्टा । वहुवचनमङ्गीकृत्याह—'**खेत्तेहो**'-त्यादि । स्पष्टैव ।।१४०२-१४०३।।दारं।।

अधिकरणमङ्गीकृत्याह—'**खेत्तम्मी**'त्यादि । एकवचनवहुवचनतः स्पष्टैव । '**छलद्धवी**'साए'त्ति अद्धछव्वीसाए जणवएसु त्ति गाथार्थः ।। १४०४ ।। दारं ।। खेत्ताणुयोगो गदो ।

---

1 च P. 2 P adds च. 3 P has छव्वी for छलद्धवी ।

'कालस्से'त्यादि । पुव्वद्धे एगवयणवहुवयणाइं । 'कालेनानुयोगोऽनिलाप-हार:' । वादरवायुकायिकवैक्रियलब्धिसमन्वितानामद्धापल्योपमासंख्येयभागेन ह्रियन्त वायव इति शेप इति । 'कालैस्तु शेपकायानामि'ति गाथार्थः ॥१४०५॥ दारं ॥

'कालम्मी'त्यादि । एगवयणवहुवयणाइं पुव्वद्धेण । कालानुयोगो गतः ॥१४०६॥

'वयणे'त्यादि । एगवयणवहुवयणाइं पच्छद्धेण । 'तु'शब्दाद् द्विवचनानां वहुवचनानां चेति । द्वारम् । 'वयणे'त्यादि । वचनेनैकेन सूरिरनुयोगं प्रस्तौति, वचनैर्वहुभिरभ्यर्थितः सन्निति । दारं । 'वचने क्षापोपशमिकेऽनुयोगो' । 'वचनेपु तु नास्ती'ति गाथार्थः ॥१४०७॥ द्वारम् ॥

'भावस्से'त्यादि । पण्णां भावानां 'यथावस्थितान्यतरप्ररूपणं भावस्यानु-योगः' । एवं 'द्वयो'र्भावयोरौदयिकौपशमिकलक्षणयोः । 'आदि'शब्दात्त्रिकादि-संयोगः । 'संनिकाशे' संयोगे, भावाना'मनुयोग' इति गाथार्थः ॥१४०८॥

'भावेणे'त्यादि । 'भावेण संगह'ट्ठयाए, कहं णाम इमे सिस्सा सुत्तत्थाणं संगहं करेस्संति त्ति (१)। 'आदि'शब्दात् उवग्गहट्ठयाए, कहं णाम इमे वत्थादुप्पायगा होहिन्ति (२) । एवं णिज्जरट्ठाए (३), कहं णाम ममं पि इमे वाय[1]यन्तस्स णिज्जरा होहिइ (४) । एवं सुयपज्जवजाएणं अवोच्छित्तीए य (५) । तथा 'भावैरनुयोगः द्विकादिभिः' । 'भावे क्षायोपशमिके' । भावेपु तु नास्ति । अस्ति वेत्याह—'अहवे'त्यादि । सुवोधा[2] । इति मूल-गाथाऽवयवार्थः ॥१४०९-१४१०॥

इह च 'दव्वे'त्यादि । 'द्रव्ये' इति द्रव्यविपयेऽनुयोगे 'नियमाद् भावानु-योगो'ऽस्ति, [3]तदव्याख्याने द्रव्यस्यैवाव्याख्यानात्[3] । 'तौ चापी' द्रव्यभावानु-योगौ 'क्षेत्रकालाभ्यां विना न' भवतः, तद्विशिष्टत्वात्तयोः । तथाही—पर्याया-धारं द्रव्यं व्याख्यानयन्नवश्यमेव क्वचिदवगाढं व्याचष्टे स्थितिमच्चेति । 'खेत्ते'त्ति क्षेत्रानुयोगे 'त्रयोऽपि' द्रव्यभावकाला अनुयोगा 'भाज्याः' । कदाचित् सन्ति कदाचिन्न । अलोके द्रव्या'नुयोगायोगात्, तस्य चानुयोगयोगाद्, अगुरु-लघ्वादीनां चाविवक्षितत्वात्, १ तथा 'तीसु पि' द्रव्यक्षेत्रभावेष्वनुयोगे सति 'कालो भजनया' वर्त्तते । समयक्षेत्रात्परतः कालायोगात्, तत्र विलम्बिघण्टा-लालान्यायस्थितत्वादादित्यमण्डलानां तदनुयोगायोगात् । तथा—'आधारो' इत्यादि । 'द्रव्यमाधारो' भवति पर्यायाणा'माधेयं च' क्षेत्रस्य । 'तथैव भावश्चा'-धेयो द्रव्यस्याधारश्च कालस्य । तथाहि—नीलादयः कालाधाराः । 'क्षेत्रं त्वाधार

1 P drops य.
2 ध्या P.
3...3 तद्व्याख्याने द्रव्यस्यैव व्याख्यानाद् P.
4 P adds ध.

एव'। 'पुनः' शब्दस्य विशेषणार्थत्वात्। 'कालस्त्वाधेय एव' द्रव्यपर्यायाधारत्वादिति गाथार्थः ॥१४११-१४१२॥

तदेवं प्रतिद्वारगाथायाः समतिक्रान्तत्वान्मूलद्वारनिगमनायाह—'एसो' इत्यादि। 'एषोऽनुयोगः समाप्तः'। अतोऽस्यार्थाक्षिप्तं विपर्ययमाह—'अतो' इत्यादि। स्पष्टम् ॥१४१३॥

[अननुयोगे दृष्टान्ताः]

ते चामी—

**वच्छगगोणी खुज्जा सज्झाए चेव बहिर उल्लावे।**
**गामेल्लए य वयणे सत्तेव य होंति भावम्मि ॥१४१४॥ नि० १२८॥**

**सावगभज्जा सत्तवईए य कोंकणगदारए नउले।**
**कमलामेला संवस्स साहसं सेणिए कोवो ॥१४१५॥ नि० १२९॥**

'**वच्छगगोणी**'त्यादि।

"णामं ठवणा दविए खेत्ते काले य वयण भावे य।
एसोऽणणुयोगस्सा णिक्खेवो होइ सत्तविहो ॥१॥"

तत्र 'वत्सकगौ'रिति द्रव्यानुयोगाननुयोगयोरुदाहरणम्। तद्यथा—जदि दोहओ बहुलाए वच्छयं सबलाए जोएइ, सावलेरं वा बहुलाए, तोऽननुरूपयोगादननुयोगः, क्षीरस्य चाप्रवृत्तिः, पार्ष्णिप्रहारतो जानुकादिचूर्णनं च स्यात्। यथायोगे च सर्वकल्याणमिति। एवं जीवधर्मैरजीवद्रव्ये व्याख्यायमाने जीवद्रव्ये वाऽजीवधर्मैरननुयोगो। दोषांश्च भाष्यकारो वक्ष्यति। यथायोगे च निर्वाणप्राप्तिरिति (१)।

'खुज्ज'त्ति क्षेत्रानुयोगाननुयोगयोस्तु कुब्जोदाहरणम्। तद्यथा—पइट्ठाणे णगरे **सालवाहणो** राया। सो वरिसे वरिसे णहवाहणं रोहेइ। वर्षाकालप्राप्तौ च प्रतिष्ठानमेवायातीति व्रजति कालः। अन्यदा तेन रोधकेनायातेन जिगमिषुणा मणिभूवि[1]चित्रास्थायिकामण्डपिकायामप्रतिग्रहे निष्ठीवनं कृतम्। तच्च पार्श्वस्थितया कुब्जया दृष्ट्वा चिन्तितं—नूनं जिगमिषू राजेति। परिचितयानपालायावेदितम्। असावपि चोषसि सकलयानविशेषसंयन्त्रिमकरोत्। तां च दृष्ट्वा सकलस्कन्धावारः प्रस्थितो महानितश्चेतश्च शङ्खादिध्वनिसंनिपातः संवृत्तः। राजाऽपि स्कन्धावाररेणूत्करोद्गुण्डनभयात् कतिपयाश्ववारपरिवृतोऽग्रत एव गच्छामीति कृत्वा उपस्थेवोत्थितः। [2]पश्यति चोच्चलितं[2] सकलकटकनिवेशमिति। न मया कस्मैचित्स्वाभिप्रायो निवेदित इति विस्मयवताऽन्विष्टम्। लब्धं यावत्कुब्जेति। तया चा[3]ख्यातम्—एवं मयाऽभिप्रायस्ते ज्ञात इति। एस अणणुयोगो।

---

1 मि P. 2...2 चोच्चक्कं P. 3 ष्या P.

तीसे मंडवियाए खेत्तं चेव चिंतिज्जइ। विपरीतस्त्वननुयोगः। एवं असंखेज्जपए-सियं लोयं णिप्पएसत्तणेण पण्णवेंतस्साणणुयोगो, यथाऽवस्थितप्रज्ञापने त्वनुयोगः, स्वधर्मविनियोगात् (२)।

'सज्झाए चेव'त्ति। कालानुयोगाननुयोगयोरर्द्धरात्रस्वाध्यायकारी साधुः।

"पाओसिय परियट्टण रहसेण ण याणई तओ कालं।
पंताए 'छलणभयदो'[1] स वोहिओ तक्ककुडएण ॥१॥

भद्दाए देवयाए तस्स पुरा आसि अणणुयोगोत्ति।
पच्छा पुण अणुयोगो कालद्दारे इमं णायं ॥२॥"(३)

'वहिरउल्लावे'त्ति। एगंसि गामे वहिरकुडंवयं परिवसइ। थेरो थेरी पुत्तो वहुया य। सो पुत्तो छेत्ते हलं वाहेंतो पंथसारिएण पंथं पुच्छिओ भणइ—घरजायया मम इमे वइल्ला, मा णे सिंगेहि त्ति। सो गओ। ततो वहुया से भत्तं गेण्हिऊणागया, वित्थरियं भोत्तुमारद्धो। कहेइ य से हला! अज्ज मम इमे वइल्ला अद्धसिगिया आसि त्ति। सा विय उट्ठे चल्लंते दट्ठुं भणाइ—ण याणामो लोणं वा अलोणं वा माउया ते रद्धं ति। ततो सा तं 'भत्तगोहणं'[4] कंकोडयाण भरेत्ता आगया। कत्तंतीए सासुयाए कहियं—अम्मो! पुत्तो ते भणति—अलोणयं भत्तं ति। सा भणइ—थुल्लं वा होउ वरडं वा, थेरस्स पोत्ती होहिति। सा थेरी पवड्ढमाणाणुसयवसरा थेरं भणइ—सुहिया ते सुण्हा। सा णेच्छइ थुल्लंति। सोऽवि भणइ—पीउं ते जीवियेण जइ मया एक्कोऽवि तिलकणो भक्खिओ त्ति। एवं जइ एगवयणं परूवेअव्वंति दुवयणं परूवेइ, दुवयणं वा एग-पयणंति, तो अणणुयोगो, विवज्जए विवज्जय इति (४)।

'गामेल्लय'त्ति। अत्रैव द्वितीयम्—एक्का णागरमहिला भत्तारे मए गामे पवुत्था कट्ठाइसयंगाहलाभाओ। तीसे य पुत्तो खुड्डुलओ। सो वद्धंतो मायरं पुच्छइ—कहिं मे पिय त्ति? सा भणइ—मओ। सो केणोवाएण जीवियाइओ? सा भणइ—ओलग्गाए। सो भणइ—ताऽहं ओलग्गामि। सा भणइ—ण याणसि तुमं ओलग्गिउं। सो भणइ—कहं पुण ओलग्गिज्जइ? सा भणइ—विणएण। सो भणइ—केरिसो विणओ जो मए कायव्वो त्ति? सा आह—

दिट्ठो जो हारिज्जइ, जं जं सो भणइ तं च कायव्वं।
पडियासूरेयव्वं, ण कयाइ वि पाणचाएऽवि ॥१॥

तओ सो आमंति भणित्ता पट्ठिओ णगराभिमुहो—

झाडंतरमयलिक्के, पेच्छइ आगरिसिएहि धणुहेहिं।
वाहे ते दट्ठूणं, महया सद्देण जोक्कारे ॥२॥

---

1...1 च्छलणभया P.  2 से P.
3 ज्ज P.  4...4 भत्तगभायणं P.

तओ हरिणेसु पलाइ[1]एसु तेहिं सो वद्धो पिट्टिओ। सब्भावे कहिए मुक्को। भणिओ[2] णेहिं—

जइ पेच्छसि एरिसयं पुणोऽवि तो सणियगं णिलुक्कंतो।
ओयरिओ वच्चेज्जसु, तुसिणीओ णिण्णदेसेण॥

सो एवं होउ त्ति पट्ठिओ णगराभिमुहो। तया[3] य पुरओ रयगा वत्थाणि धोवंति।

हरइ य दिवसे दिवसे तेसिं वत्थाणि कोइ चोरो त्ति।
तो खड्डासं[4]गेसुं, तेहिं तया थाणयं दिण्णं॥१॥

सोऽवि य तहेव खड्डाएँ एंतओ तेहिं रयगवुड्ढेहिं।
दिट्ठो गहिओ वद्धो, कहिए मुक्को य सब्भावे॥२॥

भणिओ य हियट्ठाए जइया दीसइ इमेरिसं तइया।
होउह सुद्धं खारो पडउ[5] य एवंति भणिऊण॥३॥

पुणो णगराभिमुहो पट्ठिओ—

पेच्छइ य मंगलसएहिं वप्पिणं करिसगेहिं वुप्पंतं।
भणितं च तहा वद्धो, मुक्को कहिए य परमत्थे॥४॥

भणिओ य भणिज्जसु एरिसंमि भंडि भरेसु[6] एयस्स।
वहुयं च होउ एयं पुणो पुणो एरिसं तुम्हं॥५॥

एवं होउ त्ति पुणो पट्ठिओ—

पेच्छइ णगरदुवारे मयगं णीणिज्जमाणमिइ भणिये।
वद्धो कहिएँ मुक्को भणिओ य भणिज्जए एवं॥६॥

एएण एरिसेणं, कज्जेणं होउ भे विओगो त्ति।
मा एरिसयं कज्जं, पावेज्जह अण्णजम्मेऽवि॥७॥

ततो एवं भणिऊण णगररत्थाये—

हत्थिक्खंधवरगयं दट्ठूणं वहूवरं विभूईए।
गच्छंतं दु[7]डिकाहलसद्देणं तो[8] तयं भणति॥८॥

'एएण' इत्येवमादिगाथा[9]।

वद्धो भणिए[10] मुक्को भणिओ य हियट्ठयाए सो तेहिं।
मूढ! भणेज्जसु एवं दिणे दिणे होउ भे एयं॥९॥

सो एवं ति भणित्ता पुणो पट्ठिओ। अण्णदा रायउत्तं णियलियं पेच्छिऊणाऽऽह—

---

1 P drops इ.
2 P adds य.
3 त्थ P.
4 सिं P.
5 ऊ P.
6 ह P.
7 डु P.
8 सो P.
9 This refers to the *gatha* no. 7 above.
10 P drops भणिए.

जाव णहचंदसूरा तवंति गयणंगणे गुणविसाले ।
ताव तुह एरिसं होउ, णाह ! जमहं णियच्छामि ॥१०॥
वद्धो मुक्को भणिओ य एरिसे भण्णए इमं मूढ !
तुम्ह इमं अज्जं चिय विहल[1]उ किं कालखेवेण ॥११॥

ताहे एवं ति भ[2]णिऊणं पट्ठिओ पेच्छइ य—

दोण्ह सुवहुयकालविरुद्धाण णरवरिंदाणं[3] ।
साहुपुरिसेहिं सद्धिं णिग्घट्टं कीरमाणीं सो ॥१२॥

सो भणइ—

तुब्भ एयं विहडउ अज्जेव किं थ कालेण ।
इय सो कहिंचि जीओ, एगस्सोलग्गओ जाओ ॥१३॥

अण्णया दुब्भिक्खे तस्स तस्सामिणो भज्जाये अंविलजाऊ सिद्धिल्लिया । सो य से तस्सामीओलग्गओ गओ। सो तीए भणिओ—गच्छाहि, भोइयं भणाहि 'एहि जाव अंविलजाऊ ण सीयलीहोहिति' त्ति । सो गओ । तेण रण्णो अत्थाइयाये तहेव महया सद्देण सो हक्कारिओ । विलक्खो य जाओ। घरगतेण य अंवाडिओ, भणिओ य—एरिसे कज्जे सणियं कण्णमूले ठाइऊणं विभाए कहिज्जए । तओ से अण्णया घरं पलित्तं । भोइणीए पट्ठविओ भोइयं हक्कारेहि । सो गओ । पत्थावे लद्धे चिराओ कण्णे कहेइ । एवं च जाव सो आगच्छइ ताव सव्वो घरवासो झामिओ । तत्थवि अंवाडिओ, भणिओ य—एरिसे जाहे चेव धूममेत्तंपि होइ ताहे लहुं चेव उदयं उवरिं दिज्जइ जाव कंजियं ति । एवं अण्णया भोइओ पावारयं ओढिऊण अगुरुणा धूवेइ । धूमो निग्गओ। तेण से उदगतक्कदुद्धाइ संनिहियं अपेच्छंतेण कोसीराकंजिणी सिरए से उक्किरिया, जहा तहा विज्झायउ त्ति । एवं जो अण्णम्मि वत्तव्वे अण्णं कहेइ तस्स अणणुओगो होइ, विवज्जए अणुओगो त्ति । अत आह— **'वयणे'** त्ति । वचने द्वे अप्येते उदाहृती इति (४) ।

तथा 'सप्तैव भवन्ति भावे'ऽनुयोगाननुयोगयोः प्रतिपादकान्युदाहरणानि । तद्यथा—**'सावगे'**त्यादि ।

अत्र **'सावगभज्ज'** त्ति । एगेण सावगेण णियभज्जाए वयंसिया ओरालसरीरा दिट्ठा । सो तीए अज्झोववण्णो । चिताये पइदिणं दुव्वलीभवंतो भज्जाए पुच्छिओ । ण य कहेइ लज्जाए । णिव्वन्धे य कए कहिओ सब्भावो । तीएऽवि ससंभमं भणिओ—हा किमेत्तियं कालं ण कहियं ति ? तओ तीए सो भणिओ । घडिया सा मए तुहं । किं तु सा तुह वियाले सोवणियं पविसंती पदीवं णिव्वावेहि त्ति । तओ तीए वयंसियाए कुंडलाइयाभरणं सोहग्गललियचुण्णियाजुयलयं च परिहियं । ततो तस्स वासभवणं पदीवालोयरमणिज्जं पविसिऊण

1 इ P. 2 भा P. 3 ण P.

णिव्वाविओ दीवो। अच्छिया। किंपि जंपियं सरविसेसो वा तहा कदो। वसिया।[1]विभायाए रयणीए णियए चेव वा[2]से ठिया। पविट्ठा य वासभवणं। गोस[3] संजमणी कया। सड्ढोऽवि तओ दिवसाओ अहिययरं दुब्बलीहोइउं पयत्तो—

सयलसुरासुरपणमियचलणेहिं जिणेहिं जं इहं भणियं।
तं परभवसंबलयं हा हा मे खंडियं सीलं ॥१॥ त्ति

भज्जाए जाणंतीएवि भ[4]णिओ—विणिया ते सद्धा। तओऽवि दुब्बलीहोहिसि त्ति। तेण भणियं—इहइ अकज्जं कयं पच्छत्ति। तओ तीए साभिण्णाणं पत्तियाविओ। सड्ढियो जाओ। एवं जो ससमयवत्तव्वयं परसमयवत्तव्वयं ति भणति, उदइयलक्खणेण वा उवसमियं भणइ,[5] ताहे अणणुओगो। सम्मं परूविज्जमाणे विवज्जओ त्ति (१)।

सप्तभिः पदैर्व्यवहरतीति 'साप्तपदिकः'। एक्कंमि पच्चंतगामे एक्को ओलग्गयमणूसो समणमाहणादीणमुवएसं ण सुणेइ। ण वा अल्लियइ। ण वा सेज्जं देइ। मा मे धम्मं कहेंति[6] त्ति, सदयो होक्खामि त्ति। अण्णया य तं गामं साहुणो आगया। वसहिं मग्गंति। तओ खेड्डाविक्खएहिं गामि[7]ल्लएहिं सो चेव चिंधिओ—एरिसो तारिसो एस सावगो त्ति। गया। दिट्ठो, धम्मलाभिओ य। ण उण आढाइ। तओ एक्केण साहुणा भणियं—पवंचिया वा तेहिं। ण वा सो एसो त्ति। तेण भणियं—किं किं भणहि त्ति? साहूहिं—जहा तुमं सावगो एरिसो तारिसो त्ति। वसहिं पयच्छाहि। तेण चिंतियं—भो! ममाओ वि तेसिं अणज्जया जे एएसिं पवंचं पउंजंति। तम्हा माऽहं तेसिं उवहासो होमि त्ति करेमि इमं कज्जं ति। तेण पगासं भणियं—ठाह भो! एयाए सालाए जइ मे धम्मं ण कहेह त्ति। तेहिं पडिवण्णं। ठिया सज्झायज्झाणपरायणा। वासारत्ते पव्वते[8] गच्छंतेसु य म[9]णुव्वयंतेण भणियं—ण मे किंचि वयं गहियं। ते कहेंति। ण य मधुमज्जमंसपाणवहाइओ विरमिउमुच्छहति। तओ से पच्छा सत्तवतीयं वयं दिण्णं। जहा मारिउकामेणं जावइएणं कालेणं सत्त पयाणि ओसक्किज्जंति। एवइयं कालं पडिक्खिउं मारेयव्वं ति, संबुज्झिस्सइ त्ति काउं। गया। अण्णया सो चोरियाए गओ। अवसउणेणं णियत्तो। रत्तिं सणियं घरं एइ त्ति पस्सामि केरिसो मम घरपवंचो त्ति। तद्दिवसं च तस्स भगिणी आगएल्लिया। सा पुरिसणेवत्थं काऊण भाउज्जा[10]ए समं गोज्झं[11] पेच्छिया गया। ततो चिरेण आगया। तओ ताओ दुएवि निद्दक्कंताओ एक्कंमि चेव सयणे सइयाओ। इयरोऽवि आगओ। भज्जाए सह पुरिसं पासुत्तं पेच्छइ। तओ असिं करिसित्ता आहणामि त्ति (उद्धाइओ)। व[12]तं स्मृतं। तं ठिओ सत्तपयंतरं। एयंमि अंतरे भगिणीए

---

1 वे P. 2 से P. 3 भा P.
4 ये P. 5 P has भन्नइ for भणइ. 6 P has कहेहि for कहेंति.
7 मे P. 8 P has य वते for पव्वत्ते. 9 अ.
10 P adds या. 11 ज्झं P. 12 व P.

से वाहा भज्जाए अक्कंतिया। तओ दुक्खाविज्जंतीए भणियं—हला ! अवणेहि वाहाओ सीसं। तेण वि य सरेण णाया भगिणी एसा पुरिसणेवत्थि[1]य त्ति। लज्जिओ जाओ। अहो मणा मए अकज्जं ण कयं ति। उवणओ जहा सावग-भज्जाए। तओ सो संबुद्धो पव्वइओ (२)।

इयाणि '**कोंकणगदारगो**'दाहरणं। कोंकणगविसए एक्को दारगो। तस्स माया मया। पिया से अण्णं महिलियं ण लभइ सवत्तिपुत्तो अत्थि त्ति काउं। तओ सो अण्णया सपुत्तओ कट्ठाणं गओ। ताहे णेण चिंतियं—एयस्स तणएण महिलं ण लभामि, ता इमं मारेमि त्ति। कंडं घत्तियं। आणत्तो य—वच्च कंडं आणेहि। सो पहाविओ कंडं जओ। पिट्ठओ य अण्णेण कंडेणं विद्धो। तओ सो चेडेण भणिओ—कीस ते कंडं खित्तं ? विद्धो मि त्ति। तेण पुणो वि खित्तं। एवं सो तडफडंतो मारिओ। पुव्वमयाणंतेण विद्धो त्ति अणणुयोगो। पच्छा मारिज्जामित्ति एयं नाए अणुओगो। अहवा सारक्खणिज्जं 'मारेमि'त्ति अणणुओगो। सारक्खंतस्स अणुओगो। जहा सारक्खणिज्जं मारेंतो विवरीयं करेइ। एवं अण्णं परूवेयव्वं अण्णं परूवेमाणस्स विपरीतत्वादननुयोगो भवति। जहाभूतं परूवेमाणस्स अणुओगो भवइ (३)।

इदानीं '**नकुलो**'दाहरणम्—एगा चारभडिया गब्भिणी जाया। तंसमयं चेव णउलिया गब्भिणी। तत्थेव एइ य जाइ य। ताओ दुवेऽवि [2]समिआओ[2] पसूयाओ। ताए चिंतियं—मम पुत्तस्य रमणओ भविस्सइ। तस्स वि खीरं पहियं च देइ। अण्णया तीसे अविरइयाए कण्डेलियाए जत्थ मंचुल्लियाए सो दारओ ओयारिओ तत्थ सप्पेणं चडित्ता खइओ मओ। इयरोऽवि णउलेण ओयरंतो दिट्ठो मंचुल्लियाओ। तओ णेण खंडाखंडिकओ। ताहे सो रुहिरलित्तेण तुंडेण तीसे अविरइयाए मूलं गंतूण चाडूणि करेइ। जहा पुत्तो तेण मारिओ त्ति। ताए णातं—एएण मम पुत्तो खइओ। तओ अणाए मुसलेणाहणिय मारिओ। ताहे धावंती गया पुत्तमूलं जाव सा सप्पं खंडाखंडीकयं पासइ। ताहे दुगुणयरं अद्धि ई[3] पकया। एवं तीसे अविरइयाए पुव्विं अणणुयोगो, पच्छा अणुयोगो। एवं जो अण्णं परूवेयव्वं अण्णं परूवेइ सो अणणुओगो। जो तं चेव परूवेइ तस्स अणुयोगो भवइ (४)।

इदानीं '**कमलामेलो**'दाहरणम्—**बारवईए बलदेवपुत्तस्स णिसढस्स** पुत्तो **सागरचंदो** णाम रूवेण उक्किट्ठो। **संबाईण** य सव्वेसिं इट्ठो। तत्थ य **बारवईए** वत्थव्वगस्सेव अण्णस्स रण्णो **कमलामेला** णाम धूया उक्किट्ठसरीरा। सा य **उग्गसेणपुत्तस्स णभसेणगस्स** वरितेल्लिया। इओ य—**णारओ सागर-चन्दस्स** कुमारस्स सगासं आगओ। अब्भुट्ठिओ। तओ उवविट्ठं समाणं पुच्छइ—भगवं ! किंचि अच्छेरयं दिट्ठं ? सो भणइ—आमं दिट्ठं।

---

1 च्छि P. 2...2 समयाओ P. 3 इं P.

इत्यतो विवादास्पदीभूतो मे जीवलोक इति । पुनरप्यवष्टम्भं वदन्निवेदमाह— 'अथवा को मां न जानाति' ? अतिप्रकटोऽहमस्मिन् भुवने, सर्वाकारसम्पन्नत्वात्, वियती पूर्णिमाचन्द्रवत् । किमत्र विस्मयादेः कारणमिति गाथार्थः ।।२०२१।।

अपि च 'जदि वे'त्यादि । यदि च 'हृदयगत'त्वादतीन्द्रियं 'मे' मम 'संशयं' सन्देह'मुन्नये'ज्जानीयात्, तथाज्ञातमपि यदि च 'छिन्दीत' छिन्द्यात् ततो 'भवेद्विस्मयो' । नान्यथा । को ह्यदकशब्देनैवोपानहौ जह्यात् ? अयमस्याभिप्रायः— न चासावनेन ज्ञातुं शक्यते परिच्छेत्तुं वा, मत्तोऽन्यसर्वज्ञाभावात् । इदमेव मे आडम्बरं नास्तीत्यत्राप्यूनतां नाशङ्कयामि, अस्य मायाविष्वपि दर्शनात् । उक्तञ्च—"देवागमनभोयान"मित्येवमादि । 'इय चिंतंतो'त्ति एवं बहुविधमात्मसाधारणं चिन्तयन् 'पुनः' द्वितीयां वारां 'भणितः' अभिहित इति गाथार्थः ।।२०२२।।

[गणधरवादे जीवसिद्धिः]

किं मन्ने अत्थि जीवो उयाहु नत्थित्ति संसओ तुज्झ ।
वेयपयाण य अत्थं ण याणसी तेसिमो अत्थो ।।२०२३।।
नि० ४४३।।

जीवे तुह संदेहो पच्चक्खं जं न घिप्पइ घडो व्व ।
अच्चंतापच्चक्खं च नत्थि लोए खपुप्फं व ।।२०२४।।

न य सोऽणुमाणगम्मो जम्हा पच्चक्खपुव्वयं तं पि ।
पुव्वोवलद्धसंबंधसरणओ लिंगलिंगीणं ।।२०२५।।

न य जीवलिंगसंबन्धदरिसणमभू जओ पुणो सरओ ।
तल्लिंगदरिसणाओ जीवे संपच्चओ होज्जा ।।२०२६।।

नागमगम्मोऽवि तओ भिज्जइ जं नागमोऽणुमाणाओ ।
न य कस्सइ पच्चक्खो जीवो जस्सागमो वयणं ।।२०२७।।

जं चागमा विरुद्धा परोप्परमओऽवि संसओ जुत्तो ।
सव्वप्पमाणविसयाईओ जीवो त्ति ते बुद्धी ।।२०२८।।

गोयम ! पच्चक्खो च्चिय जीवो जं संसयाइविन्नाणं ।
पच्चक्खं च न सज्झं जह सुहदुक्खं सदेहम्मि ।।२०२९।।

कयवं करेमि काहं चाहमहंपच्चया इमाओ य ।
अप्पा सप्पच्चक्खो तिकालकज्जावएसाओ ।।२०३०।।

कह पडिवण्णमहं ति य किमत्थि नत्थि त्ति संसओ कह णु ।
सइ संसयम्मि वाऽयं अस्साहंपच्चओ जुत्तो ।।२०३१।।

जइ नत्थि संसइ च्चिय किमत्थि नत्थि त्ति संसओ कस्स ।
संसइए व सरूवे गोयम ! किमसंसयं होज्जा ।।२०३२।।

गुणपच्चक्खत्तणओ गुणीऽवि जीवो घडो व्व पच्चक्खो ।
घडओऽवि घेप्पइ गुणी गुणमेत्तग्गहणओ जम्हा ॥२०३३॥

अन्नोऽणन्नो व गुणी होज्ज गुणेहिं जइ नाम सोऽणन्नो ।
ननु गुणमेत्तग्गहणे घेप्पइ जीवो गुणी सक्खं ॥२०३४॥

अह अन्नो तो एवं गुणिणो न घडादओऽवि पच्चक्खा ।
गुणमेत्तग्गहणाओ जीवम्मि कओ वियारोऽयं ॥२०३५॥

अह मन्नसि अत्थि गुणी न तदवत्थंतरं तओ किंतु ।
देहे नाणाइगुणा सो च्चिय तेसिं गुणी जुत्तो ॥२०३६॥

नाणादओ न देहस्सऽमुत्तिमत्ताइओ घडस्सेव ।
तम्हा नाणाइगुणा जस्स स देहाहिओ जीवो ॥२०३७॥

इय तुह देसेणायं पच्चक्खो सव्वहा महं जीवो ।
अविहयनाणत्तणओ तुह विण्णाणं व पडिवज्ज ॥२०३८॥

एवंचिय परदेहेऽणुमाणओ गेण्ह जीवमत्थि त्ति ।
अणुवित्तिनिवित्तीओ विन्नाणमयं सरूवे व्व ॥२०३९॥

जं च न लिंगेहिं समं मन्नसि लिंगी जओ पुरा गहिओ ।
संगं ससेण व समं ण लिंगओ तोऽणुमेओ सो ॥२०४०॥

सोऽणेगंतो जम्हा लिंगेहिं समं न दिट्ठपुव्वो वि ।
गहलिंगदरिसणाओ गहोऽणुमेओ सरीरम्मि ॥२०४१॥

'किं भण्णे' इत्यादि । हे आयुष्मन् ! गौतम ! 'किं' कस्मात् 'मन्यसेऽस्ति जीव उताहोश्चिन्नास्तीत्येवं संशयस्तव' । त्यज्यतां चायमधुना मत्संप्राप्त्या, अनुचितत्वात्, शेषमिथ्यात्वमलकलङ्कवत् । अथवा 'किमस्ति जीव उताहोश्चिन्नास्तीत्येवं 'मन्ने'ति मन्यते भवान् । 'संशयः 'तुज्झं'ति अयं तव संशयः । कुतः पुनः ? उभयहेतुसद्भावाद्, विरुद्धवेदपदश्रवणादित्यभिप्रायः । ततः किमत आह—'वेदपदानां च' वेदवाक्यानां 'चार्थं' सद्भावं 'न जानासि' नावबुद्ध्यसे, श्रौतेन[1] न्यायेन प्रवृत्तेः । 'तेषां चायमर्थो' यो मया निर्णीयत इति गाथैषार्थः ॥ २०२३॥ निर्युक्तिगाथा ४४३॥

तत्र नास्तित्वहेतवस्तावदमी—'जीवे' इत्यादि । जीवति जीविष्यति जीवितवान् वा 'जीवः' । तस्मिन् 'जीवे' विषयभूते 'भवतः सन्देहः' किल 'प्रत्यक्षं यस्मान्न गृह्यतेघटवदि'ति व्यतिरेकी । प्रत्यक्षेण चाग्रहणं तस्य सत्संप्रयोगजत्वात् । तस्य चात्यन्तासत्त्वेनाप्रत्यक्षत्वात् । अतः पश्चार्द्धवितारः । 'अच्चंतापच्चक्खं च णत्थि लोए खपुप्फं व'त्ति नास्ति जीवोऽत्यन्ताप्रत्यक्षत्वात् खपुष्पवत् । हेतुविशेषणं किमिति चेत् । हेतोरप्रामाणिकत्वनिषेधार्थम् । तथा

1 P has श्रौत्रेण for श्रौतेन.

ह्यप्रत्यक्षा भवन्त्यणवो, न च न सन्ति, द्व्यणुकादिकार्यगम्यत्वात् । व्यतिरेकेण त्वेत एव, घटो वेति गाथार्थः ॥२०२४॥

एवं च मन्यसे—'न य सो' इत्यादि । 'न चासौ जीवोऽनुमानव्यापारगम्यः । तस्यापि प्रत्यक्षपूर्वकत्वात्' । कुत इत्याह—लीनमर्थं गमयतीति 'लिङ्गम्' । लिङ्गमस्यास्तीति 'लिङ्गी' । लिङ्गं च लिङ्गी च 'लिङ्गलिङ्गिनौ' । तयोः 'पूर्वोपलब्धसम्बन्धस्मरणात्' । तथाहि—प्राग् महानसादावग्निधूमयोरन्वयव्यतिरेकवन्तमविनाभावमध्यक्षतो गृहीत्वा तत उत्तरकालमटव्यामटन् क्वचिन्निकुञ्जादावग्निं प्रत्येति । यत्र यत्राहं धूममद्राक्षं तत्र तत्राग्निम्, यथा महानसादौ । तथा चेहाहम् । तस्मादत्राग्निना भाव्यं, व्यतिरेकेणोदकभाजनम् । अगृहीतसम्बन्धस्य च नालिकेरद्वीपनिवासिनस्तद्दर्शनेऽपि तदप्रतिपत्तेरस्य तत्पूर्वकतेति गाथार्थः ॥२०२५॥

एवं चास्मानाशङ्कसे प्रकृतेऽप्येवमेव भविष्यतीति । तन्न । यतः—'न य' इत्यादि । 'न च जीवतल्लिङ्गयोः सम्बन्धदर्शन'मविनाभावग्रहण'मभूत्' कस्यचिद्विमलधियोऽपि, 'यतस्तल्लिङ्गदर्शनाद्' यस्माज्जीवाविनाभूतकार्यग्रहणात्सकाशात् 'पुनः स्मरतः' सतो लिंगलिङ्गिसम्बन्धं 'जीवे'ऽग्निकल्पे 'संप्रत्ययो भवेत्' । तस्मान्माऽमुमस्मादनुमंस्यथ इति । एवं चाशङ्कसे । अथ वक्ष्यथ—सामान्यतो दृष्टादनुमानादात्माऽस्तित्वं सेत्स्यति चन्द्रादित्यादिगतिवत् । गतिमानादित्यो देशान्तरप्राप्तेर्देवदत्तवदिति । एतदपि सव्याजं, देवदत्तदृष्टान्तधर्मिण्यध्यक्षतो गतिमत्त्वमालोक्य ततः सूर्ये सामान्येन ग्रहणात् । न चैवमत्रान्यत्राध्यक्षतो जीवत्वं गृहीत्वा क्वचित्सामान्येन ग्रहणं लभ्यते । यन्नास्ति तन्नास्त्येवेति किं तेनेति गाथार्थः ॥२०२६॥

एवं चाशङ्कसे—आगमात् तद्वगमिष्यामः । तदपि न, यतः 'नागमे'त्यादि । 'नागमगम्योऽप्य'सौ जीवः । किं मनोरथैः । नेत्याह—'यत्' यस्मा'न्नागमोऽनुमानाद् भिद्यते' । घटसन्निधौ सकृद् घटप्रयोगोपलब्धावुत्तरकालं घटमानयेत्युक्तेऽन्वयव्यतिरेकमुखेन घटानुमितिप्रवृत्तेः । न चेत्थमात्मशब्दः शरीरादन्यत्र प्रयुज्यमानो दृष्टो यमात्मशब्दात्प्रतिपद्येमहीति । विवक्षान्वयव्यतिरेकानुविधायित्वेन च कार्यत्वाच्छब्दोऽनुमानान्न भिद्यते, संबन्धादन्यतः प्रतिपत्तेश्च । अथ भवतां मतिः—लिङ्गिनि प्रतिबद्धोऽपि ध्वनिर्न लिङ्गम् । अलिङ्गाच्च या प्रतिपत्तिः स खल्वागम इति । उच्यते, प्रतिपन्नं नामेदं मया । तथाऽपि दृष्ट एवार्थे शब्दानां प्रामाण्यं योक्ष्यते । यथा नदीतीरे गुडशकटं पर्यस्तमिति । अथ वासनामात्रावष्टम्भेनोच्यते भवद्भिरस्त्यसौ 'यस्यादृष्टेऽप्यर्थे ध्वनयः प्रमाणपदवीमवतरिष्यन्ति । उच्यते । 'न च कस्यचित् प्रत्यक्षो जीवो यस्य' सम्बन्धि 'वचनमागम'स्तस्याविद्यापारतन्त्र्येणातीन्द्रियवस्तुदृष्टत्वायोगादिति गाथार्थः ॥२०२७॥

एवं च मन्यसे—'जं चे'त्यादि । 'यस्माच्चागमाः' सर्व एव 'परस्परविरोधिनोऽतोऽपि संशयो मे युक्तः' । यथाहुरेके—

"एतावानेव पुरुषोऽयं यावानिन्द्रियगोचरः ।
भद्रे ! वृकपदं पश्य यद्वदन्त्यबहुश्रुताः ॥१॥"

तथाऽन्ये प्राहुः—"विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति, न प्रेत्य सञ्ज्ञाऽस्ति"। तथा "न रूपं भिक्षवः पुद्गल" इति। तथाऽस्तित्वप्रतिपत्तयः—"न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशत" इति। "अग्निहोत्रं जुहुयात्स्वर्गकाम" इति। "अस्ति पुरुषः अकर्त्ता निर्गुणो भोक्ता चिद्रूप" इत्यतोऽविश्वासः। एवं चाशङ्कसे—उपमानगम्योऽपि न भवति, यतस्तस्येदं लक्षणं—सादृश्यमसन्निकृष्टे[1] बुद्धिमुत्पादयति, यथा गवयदर्शनं गोस्मरणस्येति। तदगम्यत्वं च तस्य सदृशविषयान्तरदर्शनेनान्यत्र प्रतीतिहेतुत्वात्। न चेहान्यः कश्चित् त्रैलोक्येऽप्यात्मानुकारी भावोऽस्ति यद्दर्शनादात्मन्युपमानवृत्तिः स्यात्। कालाकाशदिगादीति चेत्। न, तेषामप्येतदंध्रिवद्धत्वात्। एवं चाशङ्कसे—न पुनरर्थापत्तिसाध्योऽप्यसौ, न को हि नाम दृष्टः श्रुतो वाऽर्थस्तमन्तरेण न सिद्धः ? अग्नेर्हि दाहकशक्तिपरिकल्पनं न्याय्यं, तामन्तरेण दारुणि भस्मानुपलम्भप्रसङ्गादिति। [2]अतः '**सव्वप्पमाणविसयातीतो जीवो**' भावोपलम्भकप्रमाणपञ्चकविषयातीतत्वेन प्रतिषेधसाधकाभावाख्यषष्ठप्रमाणविषयीकृतत्वादिति। एवं 'ते'—तव 'बुद्धिः' मातिरिति पूर्वपक्षः ॥२०२८॥

तदेवं तत्संशयमाज्ञाय छिन्दन्नाह—'**गोतमे**'त्यादि। हे आयुष्मन् ! 'गौतम ! प्रत्यक्ष एवायमात्मा'। किमत्रान्येन साधनेन ? कथमित्यत आह—'यदेतत्संशयादिविज्ञानम्'। एतन्ननु भवतोऽपि प्रत्यक्षं, स्वसंवेदनसिद्धत्वात्। आत्मनश्च ज्ञानानन्यत्वात्। अन्यत्वे च विवक्षितप्रमातुरिव भवतोऽपि यथाविवक्षितेऽपरिच्छेदप्रसङ्गात्। प्रत्यक्षोऽपि साध्य इति चेदुच्यते—'प्रत्यक्षं च न साध्यं' प्रमाणान्तरेणेत्युत्सर्गेण, 'यथा शरीरे सुखदुःखादि'। एतदुक्तं भवति—यथा सुखदुःखादय औदयिका अभिन्नाधिकरणा ज्ञाने[3] गृह्यमाणाः प्रत्यक्षसिद्धत्वान्न साध्याः, एवमात्माऽप्यभिन्नाधिकरणो ज्ञानग्रहणेन गृह्यमाणः प्रत्यक्षत्वान्न साध्य इति गाथार्थः ॥२०२९॥

इतश्च प्रत्यक्ष इत्यत आह—'**कतव**'मित्यादि। 'आत्मा स्वप्रत्यक्षः'। किंवदित्याह—'त्रैलोक्य[4]कार्यव्यपदेशवत्'। अस्य व्याख्यानं—'कृतवान् करोमि करिष्ये चाहमि'ति। एवं उक्तवानहं ब्रवीम्यहं वक्ष्याम्यहम्। एवं ज्ञातवानहं जानेऽहं ज्ञास्येऽहमिति। न चायं 'त्रिकालव्यपदेशहेतुरहंप्रत्यय' आनुमानिको, नाप्यागमिकः। किं तर्हि स्वप्रत्यक्ष इत्यत एनमेवात्मानं प्रतिपद्यस्व। न चायं

---

1 P adds अर्थे.

2 Two folios of the palm-leaf manuscript are interspersed with gaps in many a place.

3 P has ज्ञानेन for ज्ञाने.

4 P has त्रैकाल्य for त्रैलोक्य.

घटादौ। अथवा 'अहंपच्चयादिमायो' त्ति एवमहंप्रत्ययाद्यनुमितश्चाहंप्रत्ययेनानुकूल्येन मितश्च परिच्छिन्नश्च, न केवलं ज्ञानानन्यत्वेन प्रत्यक्ष इति। इह च प्रत्यक्षस्यापि प्रत्यक्षत्वसाध्यतायां न कश्चिद्दोषः, तथा दृष्टत्वात्। अथवा'ऽऽत्मा स्वप्रत्यक्षस्त्रैकालिककार्यव्यपदेशवत्त्वात्'। तदेव कथमित्यत आह—'कृतवान् करोमि करिष्ये चाहमि'त्येवं 'अहंप्रत्ययादिमत्त्वात्'। प्रयोगः—प्रत्यक्ष एव जीवः, स्वरूपेण ग्रहणाद्, घटवत्। यश्चायं प्रत्ययः स द्वेधा—आन्तरो बाह्यश्च। आन्तर आत्मसंयोगमात्रजन्यो, यथाऽहम्। बाह्यस्तु घटः। अत्रात्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेत्यतोऽस्त्यात्मा। स चानुभविक एवेति। अपिचाहं विजानामीति क्रिया कर्त्तारमालम्बते। एतदुक्तं भवति—परिच्छेदक्रियानिष्पादनेनाहं जानामीति प्रत्ययेन आत्मा विषयीक्रियते। आह—नैवम्, अनेकान्ताद्, देहालम्बनत्वादस्य। तथाहि—अहं गुरुरहं गौरोऽहं कृश इति प्रत्ययोऽनुभूयते। उच्यते। न, अस्य प्रत्ययाभासत्वाद्, गुरु मे शरीरमित्यनेन बाधितत्वात्। यश्चास्य प्रमाणसिद्धस्याहमिति प्रत्ययस्याऽऽलम्ब्यः स आत्मेति गाथार्थः ॥२०३०॥

अपि च—'कथ'मित्यादि। 'कथं' केन प्रकारेण 'प्रतिपन्न'मेतत् यदुत 'अहमि'ति। तथा 'किमस्मिन्ना[1]स्मीति संशयः कथं नु'? केन प्रकारेण, विरोधाद् हेतु[2]भावाद्वा। 'सति वा संशये कस्याहंप्रत्ययो युक्तो'ऽनुरूपो? नायं गतासौ देहे इति गाथार्थः ॥२०३१॥

तथा—'जतो'त्यादि। 'यदि नास्त्येव संशयी'—जीव'स्तन्नन्वयमेवं कस्य संशयो'? नैव कस्यचित्। कस्यचित्तु संशयस्य विज्ञानाख्यगुणविशेषत्वात् तस्य चापद्रव्यत्वायोगात्। तस्मात्तत्सत्तावलम्बिनाऽसावभ्युपगन्तव्य इति। न चायं स्थाणोः। अनुरूपधर्मिधर्मत्वाद्बोधरूपत्वाद्वेति। अथवा यदि नत्थि संसइच्चिय तो 'संसइते सव्वे गौतम!' तवान्यत् 'किमसंदिग्धं स्याद्' येन कर्मादि त्वस्तीत्यवसीयते? ततश्चैवमहंप्रत्ययविशिष्टत्वेन स्वप्रत्यक्षमात्मानं निह्नुवानस्य नास्ति जीव इति प्रत्यक्षविरुद्धो नाम पक्षाभासो जायते, यथाऽश्रावणः शब्द इति (१)। तथा भाविनीमनुमानसिद्धिमङ्गीकृत्यानुमानविरोधोऽपि, यथा नित्यः शब्द इति। अत्रानित्यः शब्दः कृतकत्वाद् घटवत्(२)। तथाऽहमस्मि संशयीति प्रागभ्युपगम्योत्तरत्र नास्तीति प्रतिजानानस्य पूर्वाभ्युपगमबाधा, यथा साङ्ख्यस्य सत्कार्यं जायत इत्यभ्युपगम्यासज्जायत इति प्रतिजानतः (३)। तथा गोपालाङ्गनादि प्रति सिद्धमात्मानं न्यत्वकुर्वतो लोकविरोधोऽप्यचन्द्रः शशीति यथा (४)। अहं नाहं चेति गदतः स्ववचनव्याहतिरपि माता वन्ध्येति यथा (५)। एवमस्मिन् पक्षे प्रत्यक्षादिबाधिते हेतुरप्यपक्षधर्मतयाऽसिद्धः। अनैकान्तिकोऽपि, हिमवत्पलाग्रपरिमाणादावपि वृत्तेः। तथाऽक्षकरणाधिष्ठातृकात्मनि विपक्षेऽत्यन्तानुपलब्धेर्लेशतो वृत्तेर्विरुद्धोऽपि हेतुरिति गाथार्थः ॥२०३२॥

---

1 ना P. 2 त्व P.

तदेवमस्य साक्षादध्यक्षतामभिधाय पुनरपि प्रकारान्तरेणाह—'**गुणे**'त्यादि। पुव्वद्धं कंठं। प्रयोगः—'प्रत्यक्षस्तवायमात्मा गुणप्रत्यक्षत्वाद्' व्यतिरेकोपन्यस्त'घटवत्'। तत्रैतत्स्याद्—अनैकान्तिको हेतुर्गुणप्रत्यक्षत्वेऽपि कदाचिद् गुणिनोऽप्रत्यक्षत्वात्, तद्यथाऽऽकाशगुणः शब्द इति। अत्र शब्दः प्रत्यक्षो नाकाशमिति। उच्यते—नाकाशगुणः शब्दः, ऐन्द्रियत्वाद्रूपादिवत्। कारणस्वरूपानुविधायित्वाच्च कार्यस्य नाकाशगुण इति। अतो गुणप्रत्यक्षतया गुणिनं प्रतिपाद्यस्व। स्यादतिस्तोकं ग्रहणमिति तन्न, भवताऽपि 'घटो गुणी गृह्यते' चक्षुपा विपयीक्रियते 'यस्माद् गुणमात्रग्रहणादेव'। 'अपि'शब्दस्यावधारणार्थत्वाद्गन्धादिपरिहारेणोद्धर्वतादिग्रहणादित्यर्थः। किं कारणं? अर्वाग्दर्शित्वाद्भवत इति। अतः कोऽयमकाण्ड एव सर्वात्मनाऽऽत्मग्रहणाभिलापस्तवेति ॥२०३३॥

तथा च—'**अण्णो**' इत्यादि। प्रयोगः—यो यदनर्थान्तरः स तद्ग्रहे गृह्यते, तद्यथा वाससि राग इति गाथार्थः ॥२०३४॥

'**अहे**'त्यादि। 'अथाऽन्यः तत एवं' कृत्वाऽन्येऽपि 'घटादयो गुणिनो न प्रत्यक्षा गुणमात्रग्रहणात्। अतो जीवे' तपस्विनि केवले 'कोऽयं विचारः'? केयं तव नास्तित्वविवक्षेति। तस्मात्प्रत्यक्षो जीवो गुणाद्वारेण ग्रहणात्, दृष्टान्तधर्मिवत्। साध्यविपर्यये दृष्टान्तधर्मिणोऽपि ग्रहणानुपपत्तिर्बाधकम्। न च प्रतिज्ञार्थैकदेशो हेतुः, साधनहेतुवैपरीत्येनानुपलब्धिवल्लक्षणहेतुत्वात्। तत्रैतत्स्याद्—अपद्रव्यो हि गुणो न भवतीति तद्ग्रहणानुपपत्तिद्वारेण घटादिग्रह इति। उच्यते, नात्मन्यप्येवमिति कोशपानव्यक्तमीश्वरशासनमिति गाथार्थः। तस्मादभिन्नगुणप्रत्यक्षत्वेन साक्षाद् गुणी गृह्यत इति स्थितम् ॥२०३५॥

'**अहे**'त्यादि। 'अथास्ति गुणी', न तं प्रत्याचक्ष्महे। 'किन्तु देहार्थान्तरोऽसौ ने'ति ब्रूमः। किमिति? यतो 'देहे ज्ञानादयो गुणाः' समनुभूयन्ते, ततः 'स एव तेषां गुणी युक्तः' स्यात्। देहाश्रया ज्ञानादयः, तत्रैवोपलब्धेर्गौरतादिवदिति गाथार्थः ॥२०३६॥

उच्यते—'**णाणे**'त्यादि। 'यद्यन्मूर्त्तं' चाक्षुषं च 'न तस्य ज्ञानादयो, यथा घटस्य'। तथा च देहः। आत्मा चामूर्त्तो, मूर्त्तिमत्त्वस्य पररूपत्वात्। 'तस्माद् यस्य' धर्मिणः सम्बन्धितया 'ज्ञानादयो वर्त्तन्ते स देहातिरिक्तो जीव' इति भावार्थः। आह—'**णाणादयो न देहस्से**'ति प्रत्यक्षविरुद्धं, यथा—अश्रावणः शब्द ऐन्द्रियकत्वाद्देहवत्। उच्यते। न, अनुमानेन परिकरितत्वात्। तच्चेदं—देहेन्द्रियातिरिक्त आत्मा तदुपरमेऽपि तदुपलब्धार्थानुस्मरणाभ्रंशात्, पञ्चावातायनोपलब्धार्थानुस्मर्त्तृदेवदत्तवद् गृहगवाक्षव्यतिरिक्त इति **वायुभूति**प्रश्नेऽपि वक्ष्याम इति गाथार्थः ॥२०३७॥

उपसंजिहीर्षुराह—'**इय**' इत्यादि। 'देशप्रत्यक्षस्तेऽय'मर्वाग्दर्शित्वेन मर्यादाग्राहित्वाद् घट इव। देशप्रत्यक्षता च वस्तुनोऽनन्तपर्यायप्रमाणत्वात्। भवदादेश्च छद्मस्थत्वेन तदविषयत्वात्, विज्ञानदेशप्रकाशात्मकत्वात्प्रदीपघटक-

देशप्रकाशवत् । 'मम तु सर्वथा प्रत्यक्षो, विहितानन्तज्ञानत्वाद्भवद्विज्ञानवत्' । यथेह भवद्विज्ञानमतीन्द्रियमशेषमहमुपलभे तथा भवज्जीवमपीति । तस्मा'त्प्रतिपद्यस्व' तमिति गाथार्थः ॥२०३८॥

परदेहे कथमित्यत आह—'एव'मित्यादि । 'एवमेव' आत्मशरीर इव 'परशरीरेऽपि गृहाण' जीवं 'यदुतास्तीति' । किंविशिष्टम् ? 'विण्णाणमयम्' । किं प्रत्यक्षतः ? नेत्याह—'अनुमानतः' । तथाहि—परदेहेऽप्यस्ति जीवः 'प्रवृत्तिनिवृत्ति'सद्भावा'द्धिताहितप्रवृत्तिनिवृत्तिदर्शनात्, 'स्वरूप इव' स्वात्मनीवेत्येवमादि स्वधियाऽनुसर्त्तव्यं, व्यतिरेकेण गतासुदेहादाविति गाथार्थः ॥२०३९॥

अनुमानपूर्वपक्षं प्रत्यनुभापयन्नाह—'जं चे'त्यादि । **'ज च मण्णसि ण लिंगेण सोऽणुमेयो'**त्ति । केन निवन्धनेन ? उच्यते, **'न लिंगेहिं समं जतो लिंगी पुरा गहितो'** । साधर्म्यदृष्टान्तमाह—**'संगं ससेण व सम'**न्ति । तत्र प्रतिविधीयते—**'सोऽणेगन्तो'** इत्यादि । 'असावनेकान्तो' यदुत लिङ्गलिङ्गिनोः सम्बन्धग्रहे उत्तरकालं तल्लिङ्गदर्शनात्तदनुमितिरिति । किं वाङ्मात्रेण ? नेत्याह—**'जम्हा गहोऽणुमेयो सरीरंमि'**त्ति । 'अस्मिन् शरीरे ग्रहस्तल्लिङ्गदर्शनाद्', ग्रहलिङ्गाङ्गधूननविकटगमनभ्रूत्क्षेपकृतोपहाराद्युपलब्धेः सकाशात् । किंविशिष्ट इत्याह—'लिङ्गैः सार्द्धमदृष्टपूर्वोऽपि' अविनाभावग्रहणमन्तरेणापीत्यर्थः । एवं ग्रहमिवात्मानमनुमास्याम इति को निवारयिता ? वायुनाऽस्मिन्नेते भवन्तीति वक्तेति चेत् । न, वातिकभयात् तद्गमने शालशिखरादिभङ्गदर्शन' एवं वक्तुमयुज्यमानत्वात् । यद्येवं ततः शशाख्यलिङ्गोपलक्षितं शशविपाणमप्यनुमेयं सम्बन्धाग्रहाविशेपात् । उच्यते, अत एवानेकान्त एकस्यानुमीयमानत्वादपरस्य त्वननुमीयमानत्वादिति गाथार्थः ॥२०४०-४१॥

इदं चानुमानम्—

**देहस्सऽत्थि विहाया पइनिययागारओ घडस्सेव ।**
**अक्खाणं च करणओ दंडाईणं कुलालो व्व ॥२०४२॥**

**अत्थिंदियविसयाणं आयाणादेयभावओऽवस्सं ।**
**कम्मार इवादाया लोए संडासलोहाणं ॥२०४३॥**

**भोत्ता देहाईणं भोज्जत्तणओ नरो व्व भत्तस्स ।**
**संघायाइत्तणओ अत्थि य अत्थी घरस्सेव ॥२०४४॥**

**जो कत्ताइ स जीवो सज्झविरुद्धो त्ति ते मई होज्जा ।**
**मुत्ताइपसंगाओ तं न संसारिणोऽदोसो ॥२०४५॥**

**अत्थिच्चिय ते जीवो संसयओ सोम्म ! थाणुपुरिसो व्व ।**
**जं संदिद्धं गोयम ! तं तत्थऽन्नत्थ वऽत्थि धुवं ॥२०४६॥**

**एवं नाम विसाणं खरस्स पत्तं न तं खरे चेव ।**
**अन्नत्थ तदत्थि च्चिय एवं विवरीयगाहेऽवि ॥२०४७॥**

1 P adds सद.  2 न P.

अत्थि अजीवविवक्खो पडिसेहाओ घडोऽघडस्सेव ।
नत्थि घडोत्ति व जीवत्थित्तपरो नत्थिसद्दोऽयं ॥२०४८॥

असओ नत्थि निसेहो संजोगाइपडिसेहओ सिद्धं ।
संजोगाइचउक्कं पि सिद्धमत्थंतरे निययं ॥२०४९॥

जीवो त्ति सत्थयमिणं सुद्धत्तणओ घडाभिहाणं व ।
जेणऽत्थेण सयत्थं सो जीवो अह मई होज्ज ॥२०५०॥

अत्थो देहो च्चिय से तं नो पज्जायवयणभेआओ ।
नाणाइगुणो य जओ भणिओ जीवो न देहो त्ति ॥२०५१॥

'देह' इत्यादि । यदादिमत् प्रतिनियताकारञ्च तद्विद्यमानकर्तृकं दृष्टम् । यथा घटः । तथा च देहः । तस्मात्तथेति । व्यतिरेकेणाभ्रादिविकारादयः । किं देहस्यैव ? नेत्याह—'अक्षाणां चे'न्द्रियाणां च । तथा च विद्यमानाधिष्ठातृकाणीन्द्रियाणि 'करणत्वाद्विवक्षितदण्डादिवत्' । व्यतिरेकेण त्वाकाशमिति गाथार्थः ॥२०४२॥

तथा—'अत्थो'त्यादि । 'अस्त्यवश्यमादाता' इत्यत्र सम्बन्धः । 'इन्द्रियस्य विषयस्य चादानादेयभावात्, लोए कम्मार इव संडासलोहाणं' करणकम्माणत्ति, यच्च अविद्यमानादातृकं न तत्र तद्भावो, यथा खे इति गाथार्थः ॥२०४३॥

'भोत्ता' इत्यादि । 'देहादीनां भोक्ता' विद्यते, 'भोग्यत्वाद्भुक्तस्येव' । व्यतिरेकेण न किञ्चित् । तथा 'अत्थि य अत्थी'ति विद्यमानस्वामिकमिदं शरीरं, 'संघातादित्तणओ'त्ति संघातत्वाद् 'गृहवत्' । व्यतिरेकेण खरविषाणम् । 'आदि'-शब्दादस्यामेव प्रतिज्ञायां मूर्तिमत्त्वादैन्द्रियकत्वाच्चाक्षुषत्वादित्यादयोऽपि हेतवो दृश्याः । किंवत् ? कुलालवदिति गाथार्थः ॥२०४४॥

मूलतः फलमादर्शयन्नाह—'जो' इत्यादि । 'यश्च कर्त्ता' देहस्य । 'आदि'-शब्दाच्चादात्रादिः परिगृह्यते । 'स जीवो' वर्त्तते । अत्र परमतमाह—'सज्झविरुद्धो त्ति ते मती होज्ज'त्ति । 'इत्येवं मतिर्भवेद् भवतो यदुतायं हेतुः साध्यस्य विरुद्धः साध्यविरुद्धः' । किमुक्तं भवति ? विद्यमानस्वामिकाख्यसाध्यधर्मविशेषविपरीतसाधनः । कुत इत्यत आह—'मूर्त्तादिप्रसङ्गात्' मूर्त्तिमत्त्वसंघातानित्यादिमत्त्वप्राप्तेर्दृष्टान्तसामर्थ्यात् । अत्रोत्तरमाह—'तन्नो'त्ति तदेतन्न भवति । यतोऽयं मूर्तिमत्त्वादिप्रसङ्गः 'संसारिणो'ऽष्टविधकर्ममलपटलाच्छादितस्य जन्तो'रदोषो' नापराध इष्टत्वात् । इष्टसाधने च विरुद्धो भवतीति यदि परं भवत इदमस्माभिराकर्णितमिति गाथार्थः ॥२०४५॥

इतश्चेत्याह—'अत्थी'त्यादि । 'अस्त्येव तव जीवो हे सौम्य ! संशयतः' संशयसद्भावात् । इह यत्र यत्र सदसत्त्वसंशयस्तत्तदस्ति, 'यथा स्थाणुपुरुषौ' । यथेह स्थाणुपुरुषयोरूर्ध्वतारोहपरिणाहादिसामान्यप्रत्यक्षतायां चलनवयोनिलयनादिविशेषाप्रत्यक्षतायां चोभयविशेषस्मृतौ च सत्यामेकतरविशेषोपलिप्सोः किमिदमिति विमर्षः संशयः । तथाऽऽत्मशरीरयोरपि प्रागुपलब्धसामान्यविशेषस्य

तयोः सामान्यप्रत्यक्षतायां विशेषानुस्मृतौ च सत्यामेकतरविशेषोपलिप्सोः किमयमात्मा शरीरमात्रमिति विमर्शः खलूभयविषयो नात्मशरीरयोरेकतराभावे । इत्यस्ति जीवः । तत्रैतत्स्याद्—एकतराभावेऽपि संशयो दृष्टस्तद्यथा—स्थाणुमात्र एवेति किमयं स्थाणुरुत पुरुष इति । न च तदा तत्र पुरुषोऽस्तीति । अ[1]लौकिकमेतत् । इदमाशङ्क्याह—'**गौतम !** यद्व'स्तु 'संदिग्धं' यदधिकरणस्ते संशय'स्तद्व'स्तु 'तत्र वा' प्रदेशे'ऽन्यत्र वाऽस्ति' विद्यते 'ध्रुव'मवश्यमित्येतदेव लौकिकम् । एतदुक्तं भवति—न ब्रूमस्तत्रैवोभयमवश्यमपि तु तत्र वाऽन्यत्र वा विद्यमानयोरेव तयोः संशयजनकत्वं, नाविद्यमानयोः । एवमात्मशरीरयोरपीति कोऽत्र तेऽपरितोष इति गाथार्थः ।।२०४६।।

लब्धावसरः प्राह—'**एव**'मित्यादि । 'एवमि'ति यदि यत्संशयनिमित्तं तदस्तीत्युपपाद्यते । 'नामे'ति निपातः । ततः 'खरस्य विषाण'मस्तीति 'प्राप्तं', तत्संशयसद्भावात् । संशयनिमित्तस्य चास्तित्वात्, जीववत् । उच्यते । उक्तमत्र यदुत विद्यमान एव संशयो भवति, नाविद्यमाने । खरस्य विषाणं खरविषाणमिति कोऽर्थं इत्यत आह—'**ण तं खरे चेव**'त्ति खर एव न तत् विषाणं, किन्तु '**अण्णत्थ**' गवादौ '**तदस्त्येव**', प्रत्यक्षत्वात् । एतदुक्तं भवति—खरगोमस्तकयोर्विषाणस्याभाव[2]निश्चयान्न संशयोऽयुक्त इति । किमुच्यते—'**एव नाम विसाणं खरस्स पत्त**'ति । ऊर्ध्वतासामान्ये तूभयनिश्चयाभावान्न्याय्यः संशय इत्यतः स्थितिमेतद् "अत्थिच्चिय ते जीवो" इत्येवमादीनि । तदेवं संशयोत्पत्त्याऽस्तित्वं प्रसाध्य विपर्ययोत्पत्त्याऽपि प्रसाधयन्नाह—'**एवं विपरीतगाहेवि**'त्ति । एवं विपर्यस्तप्रतिपत्तावपि न्यायो बोद्धव्यः । तथाहि—यथा विद्यमान एव पुरुषे स्थाणौ पुरुषाभिमानः । तथा बुध्यस्व योऽयं भवतः शरीरादावात्माभिमानो नासावात्मानमन्तरेणेत्यतोऽस्त्यात्मेति । नेदं शरीरमात्रमिति गाथार्थः ।।२०४७।।

अपि चायुष्मन् ! '**अत्थी**'त्याद्यक्षरार्थः स्पष्टः । 'प्रतिपक्षवानयमजीवो' व्युत्पत्तिमच्छुद्धपद'प्रतिषेधात्' । यत्र व्युत्पत्तिमतः शुद्धपदस्य च प्रतिषेधोऽनुश्रूयते स प्रतिपक्षवांस्'तद्यथाऽघटः' । अघटो हि व्युत्पत्तिमच्छुद्धपदप्रतिषेधाद् घटप्रतिपक्षवान् । एवमजीवोऽपि जीवप्रतिपक्षवानिति । व्यतिरेकेणाखरविषाणादि । अखरविषाणप्रतिपक्षो हि खरविषाणम् । तच्च सामासिकत्वान्न शुद्धपदमिति । '**नत्थी**'त्यादि पच्छद्धाक्षरार्थः स्पष्टः । प्रयोगः—प्रतिपक्षसाधको नास्त्यात्मेति शब्दः । सतो निषेधात् । नास्ति घट इति शब्दवत् । सतो[3] निषेधेन प्रतिपक्षसाधनव्याप्तेः स्वभावहेतुप्रयोगः, व्यतिरेकेण शुक[4]शुकेति गाथार्थः ।।२०४८।।

स्यादनैकान्तिको हेतुः । असतोऽपि निषेधप्रवृत्तेः । उच्यते—'**असतो**' इत्यादि । यद्वाऽन्य एवायं प्रयोगार्थोऽभिप्रेतो भाष्यकारस्य । तत्र 'असतो'ऽविद्यमानस्य 'नास्ति प्रतिषेधो' न संभवत्यभावाभिधानम् । अपि त्विदं न्यायतः सिद्धं

1 P drops अ. 2 P adds भाव.
3 P has सन्तो for सतो. 4 कु P.

यदुक्तं सतो निषेधः । युक्तिमाह—'संजोगादिपडिसेहतो'त्ति संयोगादिमात्रप्रतिषेधात् । अस्य भावना—इह यन्नास्तीत्युच्यते तस्य विद्यमानस्य सतः संयोगमात्रं निषिध्यते, न पुनः सत्ता । नास्ति गृहे देवदत्त इव । एतदुक्तं भवति—यत्र क्वचन विद्यमानयोरेव तयोः संयोगमात्रं प्रतिषिध्यते, संयोगप्रतिषेधेनेति । 'आदि'शब्दात् समवायपडिसेहतो त्ति । इह यत्प्रतिषिध्यते तस्य विद्यमानस्य सतः समवायमात्रं निषिध्यते, न सर्वथाऽस्तित्वं, तद्यथा—नास्ति खरमस्तके विषाणम् । एतदुक्तं भवति—यत्र क्वचन विद्यमानं विषाणं खरमस्तके समवायवृत्त्या प्रतिषिध्यते समवायप्रतिषेधेनेति । तथा सामण्णपडिसेधतो त्ति । अत्रोदाहरणं—नास्त्यन्यश्चन्द्रमा इत्यत्र विद्यमानस्यैकचन्द्रमसो द्वितीयचन्द्रमसमन्तरेण सामान्यमपोह्यते । एतदुक्तं भवति—सामान्यस्यानेकवृत्तित्वात्, अत्र चानेकत्वादर्शनात्सामान्यमात्रं निषिध्यते सामान्यप्रतिषेधेन । तथा विसेसपडिसेधतो त्ति । अत्रोदाहृतिः—न सन्ति घटप्रमाणा मुक्ताः । अत्रापि घटप्रमाणता नञा निषिध्यते, नान्यत्किञ्चित् । एतदुक्तं भवति—विद्यमानानामेव तासां घटप्रमाणलक्षणविशेषमात्रं निषिध्यते, न तु तदस्तितेति विशेषप्रतिषेधेनेति । अतो नास्त्यात्मेति भणता क्वचित्संयोगमात्रं निषिध्यते, समवायमात्रं वा, सामान्यमात्रं वा, विशेषमात्रं वेति चतुर्द्धा गतिः ? किञ्चातः । तत्र क्वचिदलोकादौ संयोगमात्रेणायं नास्तीति सिद्धं साध्यते । चोद्यं तु परिहरिष्यति । एवं नेह रूपादयः समवेतास्तन्तुषु पट इवेतीष्यत एवेति । सामान्यप्रतिषेधस्त्विहासंभवा'नन्तजीवव्यक्तिसद्भावात्, तत्सद्भावस्य च सामान्याविनाभूतत्वात् । अद्वैतपक्षस्य च निषेत्स्यमानत्वात् । विषेषप्रतिषेधोऽपीष्यत एव, अलोकाकाशात्मप्रमाणानभ्युपगमात् । प्रयोगश्चायम्—अस्त्यात्मा प्रतिषिध्यमानत्वाद् उक्तेन प्रकारेण घटवत् खरविषाणवद्वेति, व्यतिरेकेण शुकशुकेवेति । आह—एवं मत्त्रिलोकेश्वरताऽस्ति पञ्चमप्रतिषेधश्चेति । उच्यते—भवतोऽस्माभिस्त्रिलोकेश्वरतासंयोगमात्रनिषेधोऽभिधीयते, न तु सर्वथेश्वरताभावः । स्वच्छात्रवृन्देश्वरताऽभ्युपगमात् । अथवा भवति हि तत्समवायमात्रं निषिध्यते । तथा पञ्चमविशेषमात्रं निषिध्यते, न त्वविशेषः । एतदुक्तं भवति—पञ्चमो निषिध्यते यथा दशहस्तः पुमान् गृहे वा देवदत्तः । अहमपि जीवमात्रं निराकरोमि, तद्वियुक्तस्तु देहोऽस्त्येवेति चेत् । उच्यते, सामान्येनैवं, विशेषेण त्वध्यक्षविरोधः । आह—ननूक्तं भवतैव संयोगादिमात्रप्रतिषेधादिति । तन्ननु संयोगादीनामसतां प्रतिषेधो, न तु सताम् । एतदुक्तं भवति—गृहे देवदत्तस्यासतः संयोगो नास्ति । एवं खरे सतो विषाणस्य समवायो नास्ति । एवमभवत्सामान्यं निषिध्यते । तथाऽभव[2]द्घटप्रमाणे विशेषो[2] निषिध्यते । तथा च सति यद्यात्मनोऽप्यभवतोऽहं निषेधं करोम्यतः किमुच्यतेऽसकृत् सतो निषेधः ? उच्यते । ननु निषेधविषया एव संयोगादयः खल्वसंतो य इमे भवतो मतिमोहमापादयन्ति, न त्वर्थान्तरविषयाः खल्विष्टिकामाणिक्यमृदुनिम्नादयो विधिविषयाः । ननु देवदत्तादिर्नास्ति । उच्यते, 'संयोगादी'त्यादि पच्छद्धं । यस्मात्संयोगसम-

1 भी श्च P. 2...2 त्फलप्रमाणविशेषो P.

वायसामान्यविशेषाः 'नियतं' निश्चित'मर्थान्तरे' उद्यानगोगवालम्वा[1]दिषु 'सिद्धा एव'। अतः सत एव प्रतिषेधो, नासत इति किं नाद्यापि बुध्यस इति गाथार्थः ॥२०४९॥

तथा—'जीवो' इत्यादि। 'अत्थो' इत्यदि। 'जीव इत्ये'तत्पदं 'सार्थकं' सगर्भ, 'शुद्धपदत्वा'दसमासपदत्वाद् 'घटाभिधानवत्'। तत्रैतत्स्याद्—अनैकान्तिको हेतुः, शून्यमित्यस्य शुद्धपदत्वेऽप्यनर्थकत्वात्। तन्न, व्युत्पत्तिमत्त्वे सत्येवं हेतुविशेषणस्येच्छया व्याप्तत्वात्, अन्यथा वेत्ति को नैतत् न्यायमार्गविचक्षणः। व्यतिरेकेण खरविषाणडित्थादिवचनवत्। 'अथ देह एवास्यार्थो' नार्थान्तरमिति। उक्तञ्च—देह एवायमनुप्रयुज्यमानो दृष्टो यथैष जीवो, यथैनं न हिनस्तीत्यतो देह एवास्यार्थो युक्त इति। 'तच्च न, पर्यायवचनभेदात्'। इह यत्र पर्यायवचनभेदस्तत्रान्यन्यत्वं प्रतीयते, यथा घटाकाशयोः। तथा च घटकुटकुम्भादयो घटपर्यायाः। नभोव्योमाम्बरादयश्चाकाशपर्यायाः। तथा च जीवशरीरयोः। तद्यथा—जीवः प्राणीत्येवमादि। तनुर्वपुरित्येवमादि। पर्यायवचनभेदेऽपि सर्वथैकत्वेऽभिधानसाङ्कर्यादिदोषापत्तिर्बाधकम्। यत्पुनरिदमभ्यधायि यथैतन्न[2] हिनस्तीति तच्छरीरसहचरणस्थानादितो जीवस्य शरीरे तदुपचारः। इदमपि चान्यदनुश्रूयते एव—गतः स जीवो दह्यतामिदं शरीरमिति। 'णणादी'त्यादि। 'यतश्चायं ज्ञानादिगुणो भणितस्तस्मान्न देहो'ऽयमिति। नास्यायमर्थो[3] मूर्तिमत्त्वाच्च घटवत्। तथा "देहेंदियातिरित्तो विन्नाता तदुवलद्धी"त्यादि वक्तव्यमिति गाथार्थः ॥२०५०-५१॥

तदद्याप्यप्रतिबुध्यमाने गौतमस्वामिनि भगवानाह—

जीवोऽत्थि वओ सच्चं मव्वयणाओऽवसेसवयणं व।
सव्वण्णुवयणओ वा अणुमयसव्वण्णुवयणं व ॥२०५२॥
भयरागदोसमोहाभावाओ सच्चमणइवाइं च।
सव्वं चिय मे वयणं जाणयमज्झत्थवयणं व ॥२०५३॥
कह सव्वण्णुत्ति मई जेणाहं सव्वसंसयच्छेई।
पुच्छसु व जं न जाणसि जेण व ते पच्चओ होज्जा ॥२०५४॥

'जीवो' इत्यादि। 'जीवोऽस्तीति वचः सत्यं, मद्वचनत्वाच्छेषवचनवत्'। सत्यानृतं न तन्मद्वचनं, यथा कूटसाक्षिवचनम्। सत्यं जीवोऽस्तीति वचः, 'सर्वज्ञवचनत्वा'द्भवदनुमतसर्वज्ञवचनवत्'। अनुमतं च तत्सर्वज्ञवचनं चा'नुमतसर्वज्ञवचनम्'। अत्रा'नुमत'ग्रहणं नाभिप्रायकं, जैमिनिमनूपदर्शाद्याप्ताभ्युपगमात्। तथा—'भये'त्यादि। 'सर्वं मद्वचः सत्यमनतिपाति च भयरागद्वेषमोहरहितत्वात्, पथिकस्यागतस्य मध्यस्थरागद्वेषवत् सत्यमार्गोपदेशवचनवदिति गाथार्थः ॥२०५२-५३॥

1 P has लम्बा: for लम्बा.   2 P has नैन for तन्न.
3 P has देहाद for मर्थः.

भगवांस्तमारेकते—'कहे'त्यादि । 'कथमहं सर्वज्ञो' न कथञ्चि'दिति मन्यसे' ततश्चासिद्धं प्राग्हेतुद्वयमिति । उच्यते—'जेण संसयच्छेत्ता' । प्रयोगः—सर्वज्ञोऽहं सर्वसंशयच्छेदित्वात् । दृष्टान्ताभावतोऽनन्वयो नाम दृष्टान्तदोष इति चेत् । तन्न, प्रत्यक्षत्वादविप्रतिपत्तेश्च किमत्रान्वयान्वेषणेन ? प्रस्तावान्तरविषयत्वादन्वयान्वेषणस्य । न चेदेवमित्यत आह—'पुच्छे'त्यादि । स्पष्टम् । द्वितीयोऽपि हेतुर्नासिद्धः, तल्लिङ्गादर्शनात् । तल्लिङ्ग[1]दर्शने च तदनुमितावतिप्रसङ्गो बाधे[2]ति । यच्चाभ्यधायि न चोपमानेनेति तत्कामं । अर्थापत्त्या तु प्रसंगतः प्रसाधित एव । स्वस्थानेऽपीच्छादेर्बुद्धिपूर्वकत्वात्, आत्मानमन्तरेण च तदभावात् । न च स्कन्धा एव प्रयत्नवन्तः, तेषां प्रतिक्षणभङ्गुरत्वादनुसन्धानाभावात् । वासनाया अपि द्वयोर्वास्यवासकयोर्दर्शनात्, तिलमालतीपुष्पयोरिवेति ।।२०५४।।

अत आह—

एवमुवओगलिंगं गोयम ! सव्वप्पमाणसंसिद्धं ।
संसारीयरथावरतसाइभेयं मुणे जीवं ।।२०५५।।

जइ पुण सो एगो च्चिय हवेज्ज वोमं व सव्वपिंडेसु ।
गोयम ! तदेगलिंगं पिंडेसु तहा न जीवोऽयं ।।२०५६।।

नाणाजीवा कुंभादयो व्व भुवि लक्खणाइभेयाओ ।
सुहदुक्खबंधमोक्खाभावो य जओ तदेगत्ते ।।२०५७।।

जेणोवओगलिंगो जीवो भिन्नो य सो पइसरीरं ।
उवओगो उक्करिसावगरिसओ तेण तेऽणंता ।।२०५८।।

एगत्ते सव्वगयत्तओ न मोक्खादओ नभस्सेव ।
कत्ता भोत्ता मंता न य संसारी जहाऽऽगासं ।।२०५९।।

एगत्ते नत्थि सुही बहूवघाउत्ति देसनिरुउव्व ।
बहुतरबद्धत्तणओ न य मुक्को देसमुक्को व्व ।।२०६०।।

जीवो तणुमेत्तत्थो जह कुंभो तग्गुणोवलंभाओ ।
अहवाऽणुवलंभाओ भिन्नम्मि घडे पडस्सेव ।।२०६१।।

तम्हा कत्ता भोत्ता बंधो मोक्खो सुहं च दुक्खं च ।
संसरणं च बहुत्तासव्वगयत्तेसु जुत्ताइं ।।२०६२।।

'एव'मित्यादि । सुखोन्नेयेति । आह—'जदी'त्यादि । 'यदि पुनः' संसार्यसंसारित्रसस्थावरादिभेदभिन्नो जीवसङ्घातः 'सर्वपिण्डेषु'—सर्वमूर्तिमत्स्वेक एव स्याद् व्योमवत्' ततः क इव दोषः स्यात् । न चैतत्स्वाभिप्रायमात्रेण पृच्छ्यसे यत उक्तम्—

"एक एव हि भूतात्मा भूते भूते प्रतिष्ठितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ।।१।।

---

1 ज्ञा P. 2 चे P.

यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः ।
सङ्कीर्णमिव मात्राभिर्भिन्नाभिरभिमन्यते ॥२॥
तच्चे[1]दममलं ब्रह्म निर्विकल्पमविद्यया ।
कलुषत्वमिवापन्नं भेदरूपं प्रकाशते ॥३॥"
"ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥४॥
पुरुष एवेदं ग्नि सर्वं यद् भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥
यदेजति यन्नैजति यद्दूरे यदन्तिके ।
यदंतरस्य सर्वस्य यदु सर्वस्यास्य वाह्यतः ॥"

इत्येवमादि । उच्यते । **गौतम** ! 'त'द्वयोम 'एकलिङ्ग'मेकस्वभावं 'पिण्डेषु' मूर्त्तिमत्सु भावेषु यथा 'तथा नायं जीवः' सर्वपिण्डेष्वेकलिङ्ग इति गाथार्थः ॥२०५५-५६॥

प्रयोगः—'**णाणे**'त्यादि । 'भुवि नाना जीवा लक्षणादिभेदात् कुम्भादय इव' । व्यतिरेकेण खम् । 'यतश्च तदेकत्वे सुखदुःखवन्धमोक्षादेरभावः' प्राप्नोति । नारकेन्द्रजीवयोरेकत्वात् तदभावः । संसारिमुक्तजीवयोश्चैकत्वादेकभावः । 'च'शब्दात्कर्त्रभाव इति गाथार्थः ॥२०५७॥

कथं च लक्षणभेद इत्यत आह—'**जेणे**'त्यादि । 'जीवोह्युपयोगचिह्नः' । 'स चोपयोगः प्रतितनु भिन्नो'ऽनुभूयते । कथम् ? 'उत्कर्षापकर्षदर्शनात्' । 'तेन' तद्भेदा'त्तेऽनन्ताः' । उपयोगो नैकस्ततश्च जीवाअपि अनन्ता इति । प्राग्गाथापश्चार्द्धं व्याचिख्यासुराह—'**एगत्ते**' इत्यादि । 'एकत्वे न सुखदुःखवन्धमोक्षाः सर्वगतत्वान्नभस इव' । व्यतिरेकेणास्य देवदत्तः । 'न च' सर्वजगत्सर्वैकत्वे 'कर्त्ता भोक्ता मन्ता संसारी वा', अत एव हेतोस्तद्वत् । '**एगत्ते**' इत्यादि । अपि 'चैकत्वे' मुक्तामुक्तजीवराशेरभ्युपगम्यमाने '**नत्थि सुही**'ति पक्षः, 'वहुपघातत्वात्' । यो यो वहुतरोपघातः स स न सुखी, यथा सर्वाङ्गावयवरोगावृतोऽन्यत्रैकाङ्गुल्यग्रमात्रात् । व्यतिरेकेण संनिहितसुखसाधनसामग्रीको निरुजो देवदत्तः । 'न चा'त्मैकत्वे 'मुक्तो वहुतरवद्धत्वात्' संसारिजीवातेक्षया । इह यो वहुतरवद्धो नासौ मुक्त इति व्यवह्रियते । न चामुक्तः सुखमश्नुते । तथा सर्वाङ्गशीलितः पुमानन्यत्राङ्गुल्यग्रैकदेशात् । यच्च मुक्तो नासौ वहुतरोपनिवद्धः । न च स्वल्पनिवन्धनो, यथाऽशीलितो विष्णुभित्र इति गाथार्थः ॥२०५८-६०॥

अपि चाद्वैतवादिन् ! 'जीव' इत्यादि । 'त्वक्पर्यन्तदेह[2]व्यापी जीवस्तत्रै[3]तद्गुणोपलब्धेर्घटवत्' । तन्मात्र इत्यर्थः । यश्च यत्रासन् न तस्य तत्र गुणोपलब्धिर्यथाऽग्नेरम्भसि । 'यद्वा' तनुमात्रव्यापी जीवो वहि'स्तद्गुणानुपलब्धेर्घटा-

1 थे P. 2 P adds मात्र. 3 P adds व.

त्मनि पटवत्'। यश्च यत्रास्ते न तस्य तत्र गुणानुपलम्भो, यथा स्वाकारे घटस्येति गाथार्थः ॥२०६१॥

'तम्हा' इत्यादि। 'तस्मात्कर्तृत्वादयो वहुत्वासर्वगतत्वयोः सतोर्युक्ताः'। तदेवं प्रमाणसिद्धमेवं—विशिष्टं च गृहाण जीवमिति गाथार्थः ॥२०६२॥

यदा तु मन्यसे यद्यपि वेदपदविहितो जीवस्तथाऽपि पुनर्वाक्यान्तरेण वाधितत्वात्संशय एव मे श्रेयानिति। तदपि मा कृथाः, यतो वेदपदानामर्थं नैव जानासि त्वं, सम्यगर्थं एव विपरीतार्थप्रतिपत्तेः। कथं पुनरिदमेवं? अत आह भाष्यकारः —

गोयम! वेयपयाणं इमाणमत्थं च तं न याणासि।
जं विन्नाणघणो च्चिय भूएहिंतो समुत्थाय ॥२०६३॥

मण्णसि मज्जंगेसु व मयभावो भूयसमुदब्भूओ।
विन्नाणमेत्तमाया भूएऽणु विणस्सइ स भूओ ॥२०६४॥

अत्थि न य पेच्चसण्णा जं पुव्वभवेऽभिहाणममुगोत्ति।
जं धणियं न भवाओ भवंतरं जाइ जीवोत्ति ॥२०६५॥

गोयम! पयत्थमेवं मन्नंतो नत्थि मन्नसे जीवं।
ववकंतरेसु य पुणो भणिओ जीवो जमत्थित्ति ॥२०६६॥

अग्गिहवणाइकिरियाफलं च तो संसयं कुणसि जीवे।
मा कुरु न पयत्थोऽयं इमं पयत्थं निसामेहि ॥२०६७॥

विण्णाणाओऽणण्णो विण्णाणघणोत्ति सव्वसो वाऽवि।
स भवइ भूएहिंतो घडविण्णाणाइभावेणं ॥२०६८॥

ताइं चिय भूयाइं सोऽणु विणस्सइ विणस्समाणाइं।
अत्थंतरोवओगे कमसो विण्णेयभावेणं ॥२०६९॥

पुव्वावरविण्णाणोवओगओ विगमसंभवसहावो।
विण्णाणसंतईए विण्णाणघणोऽयमविणासी ॥२०७०॥

न य पेच्चनाणसण्णाऽवतिट्ठए संपओवओगाओ।
विण्णाणघणाभिक्खो जीवोऽयं वेयपयभिहिओ ॥२०७१॥

एवंपि भूयधम्मो नाणं तब्भावभावओ बुद्धी।
तं नो तदभावम्मिवि जं नाणं वेयसमयम्मि ॥२०७२॥

अत्थमिए आइच्चे चन्दे संतासु अग्गिवायासु।
किंजोइरयं पुरिसो अप्पज्जोइत्ति निद्दिट्ठो ॥२०७३॥

तदभावे भावाओ भावे चाभावओ न तद्धम्मो।
जह घडभावाभावे विवज्जयाओ पडो भिन्नो ॥२०७४॥

एसिं वेयपयाणं न तमत्थं वियाणसि अहव सव्वेसिं ।
अत्थो किं होज्ज सुई विण्णाणं वत्थुभेओ वा ॥२०७५॥

जाइं दव्वं किरिया गुणोऽहवा संसओ तवाजुत्तो ।
अयमेवेति नवायं न वत्थुधम्मो जओ जुत्तो ॥२०७६॥

सव्वं चिय सव्वमयं सपरप्पज्जायओ जओ निययं ।
सव्वमसव्वमयंपि य विचित्तरूवं विवक्खाओ ॥२०७७॥

सामन्नविसेसमओ तेण पयत्थो विवक्खया जुत्तो ।
वत्थुस्स विस्सरूवो पज्जायावेक्खया सव्वो ॥२०७८॥

छिन्नम्मि संसयम्मी जिणेण जरमरणविप्पमुक्केणं ।
सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥२०७९॥
नि० ४४४॥

एवं कम्माईसुवि जं सामण्णं तयं समाउज्जं ।
जो पुण एत्थ विसेसो समासओ तं पवक्खामि ॥२०८०॥

'गोयमे'त्यादि । 'मण्णसी'त्यादि । 'अत्थो'त्यादि । 'गौतम !' इत्यामन्त्रणम् । 'वेदपदानां' श्रुतिवाक्यानाम'मीषां' विवक्षितानां 'न य जाणासि'त्ति नैवावबुध्यसे । किमित्यत आह—'अर्थ'मभिप्रायम् । किं कारणमित्याह—'जं मण्णसि'त्ति संबन्धः । 'यस्मान्मन्यसे'—यस्मादवबुध्यसे त्वम् । किमित्यत आह—"विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति प्रेत्यसंज्ञाऽस्ती"त्यस्य वाक्यस्यार्थ एवं यदुत 'विण्णाणघणोच्चिय'त्ति । अस्य व्याख्या—पृथिव्यादिभूतविज्ञानलवसमुदायो 'विज्ञानघनः' । पृथिव्यादिविज्ञानदेशानां पिण्डीभवनमितियावत् । अवधारणं त्वात्मनो भूतातिरिक्तस्य विज्ञानगुणाश्रयणस्याभावोपदर्शनार्थम् । एतेभ्यो 'भूतेभ्य' इति पृथिव्यादिभ्यः । अन्यथा जीवपर्यायवचनोऽपि भूतशब्दः श्रूयते । ततस्तेभ्यो मा भूत् । एवदुक्तं भवति—न जैनानामिवानेकसत्त्वसंघातघनो विज्ञानघनोऽभिगृह्यते वनस्पताविव । यदाहु—"चक्राकं भज्यमानस्ये" त्येवमादि । 'समुत्थाय' इति संभूय । अनेनाभूतविज्ञानप्रादुर्भावस्ते चेतसि विपरिवर्त्तते, पृथिव्यादिविज्ञानदेशानामपि समुदायनिमित्तपरिणामाङ्गीकरणं, न व्यस्तानामिति यावत् । तान्येवानु विनश्यतीति तान्येव अनुविनश्यन्ति सत्यसावप्यनुम्रियते, न पुनरात्मवादिनामिव शरीरे विनश्यतीति समुत्थायान्यत्र यातीति । अत एवोच्यते—'न प्रेत्यसञ्ज्ञाऽस्ति' । प्रेत्यभवो नाम नारकादिः । य एवायं प्रेत्य नारको देवो वाऽभवत् स मनुष्योऽधुना संवृत्त इत्येवं 'न भवाद्भवान्तर'मस्तीत्युक्तं भवति ॥२०६३-६५॥

अतः—'गोयमे'त्यादि । 'गौतम ! अमुं पदार्थं मन्यमानो'ऽस्य वाक्यस्य 'मन्यसे' अवबुध्यसे 'जीव' आत्मा यदुत 'नास्ति' भूताधिक इत्येकमाशङ्कास्थानम् ।

'जं च पुणो' त्ति । 'यद्'—यस्माच्च 'पुनर्वाक्यान्तरेषु भणितः पुनरस्ति जीवः' प्रतिपादित आत्माऽस्तीति "न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशतः" इति वचनात् ॥२०६६॥

अग्निहवनफलश्रुतेश्च "अग्निहोत्रं जुहुयात्स्वर्गकामः" इति वचनादिति । आह च—'अग्गो'त्यादि पुव्वद्धं कंठं । उच्यते—'मा कुरु' त्ति मा कृथाः संशयं, यतो 'न पदार्थोऽय'मस्य । तस्मा'दमुं पदार्थं' सम्यगर्थमस्य 'शृणु' वक्ष्य इति गाथार्थः ॥२०६७॥

'विण्णाणे'त्यादि । विशिष्टं ज्ञानं 'विज्ञानं' ज्ञानदर्शनोपयोग इत्यर्थः । तस्मा'द्विज्ञाना'दात्मा'ऽनन्य' इतिकृत्वा 'विज्ञानघनः' । 'सव्वसो वावि' त्ति यदि वा सर्वतः प्रतिप्रदेशमनन्तानन्तविज्ञानपर्यायसंघातघटितत्वाद्विज्ञानघन एवेति । 'एव'शब्दाद्विज्ञानघन एवेति निगम्यते, विज्ञानघनानन्यत्वात् । अथवा शेषात्मधर्माणामपि सुखादीनां चेतोवृत्त्यविरोधाद् विज्ञानघनान्तर्भावोपदर्शनार्थं सर्वात्मलिङ्गोपसंग्रहार्थं वा । 'स' विज्ञानघनो 'भवति' उत्पद्यते 'भूतेहिंतो' त्ति 'भूतेभ्यो' घटपटकटशकटरथाभ्रग्न्यादिभ्यो द्रव्येभ्यः सहकारिभ्यः । कथं भवतीत्याह—'घटविज्ञानादिभावेन' । "किममूलं प्रवर्त्तेत" इति वचनात् ॥२०६८॥

"तान्येवानुविनश्यती"त्यस्यार्थः—'ताइं चिये'त्यादि । स च विज्ञानघन'स्तान्येव भूता'न्यालम्बनभूतानि विनश्यन्ति सन्ति विनाशव्यवधानभाञ्जि सन्त्याद्[1]तिभाञ्जि वा सन्ति 'क्रमशः' परिपाट्या 'विज्ञेयभावेन' नीलाद्यवबोधेन 'विनश्यति' व्येति । कदेत्याह—'अर्थान्तरोपयोगे' पीताद्यवबोधोत्पत्तौ सत्याम् । आत्मना त्वजहद्वृत्तिरेवास्त इति ॥२०६९॥

तथा ह्येक एवायं त्रिस्वभावस्थितिरिति । आह च—'पुव्वावरे'त्यादि । गतार्था ॥२०७०॥

"न प्रेत्ये"त्यादि । व्याचष्टे 'न य' इत्यादि । 'न च प्रेत्यज्ञानसञ्ज्ञा' न च प्रागेतनी नीलादिविज्ञानसञ्ज्ञा'ऽवतिष्ठते संपयोवयोगाओ' त्ति वार्त्तमानिकपीताद्याकारो[2]त्पत्त्यापीति[2] । अर्थाद्विभक्तिपरिणतिः । एतद्विघ्नितत्वात्तस्याः । अतः 'विण्णाणे'त्यादि । भावार्थकथनम् ॥२०७१॥

'एवं पी'त्यादि । स्याद् 'बुद्धिः'—'एवमपी'ति एतेभ्य इत्यनेन प्रकारेण 'भूतधर्मो ज्ञानं' भूतधर्मो विज्ञानघनः प्रसजति, 'विषयभावभावित्वादि'ति । 'तन्न, यतस्तदभावेऽपि' विषयात्ययेऽपि 'विज्ञानं श्रुतावुक्तम्' । "आच[3]मिते आदित्ये याज्ञवल्क्यः चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुषः ? आत्मज्योतिः सम्राडिती[4] होवाच" ज्योतिरित ज्ञानमाह । आत्मैव ज्योतिरस्य सोऽयमात्मज्योतिर्ज्ञानात्मक इति यावत् । अतो न ज्ञानं भूतधर्मः ॥२०७२॥

---

1 वृ P. 2...2 त्पत्ताबि P.
3 P has अस्त for आच. 4 ति P.

अमुमेवार्थमाह—'अत्थमिते' इत्यादि गतार्था ।।२०७३।।

इतश्च—'तद्' इत्यादि । 'न भूतधर्मो' विज्ञानघनः, 'तदभावे भावात् तद्भावेऽपि चाभावात्' । दृष्टान्तमात्रमाह—'यथा घटस्य न पटो धर्मो, विपर्ययात्' । प्रयोगः—विवक्षितधर्मिधर्म एव विज्ञानघनः, तद्भावभावित्वाद् घटरक्ततावत् । व्यतिरेकेण तु शून्यत्वमिति गाथार्थः ।।२०७४।।

'एसिं' गाहा । 'जाई'त्यादि । एव'ममीषां' हे गौतम ! त्वं 'वेदपदानामर्थं न वेत्सि, अथवा सर्वेषामपि', यतोऽभिमन्यसे 'अत्थो एएसिं होज्ज किं श्रुतिः' ? किं वेदपदस्य शब्दपदमेवार्थो, यथा भेरीशब्दोऽयमित्येतावन्मात्रमुत 'विज्ञानं', यथा भेरीशब्दो घट इति वा उत 'वस्तुभेदो' यथा श्रुतिज्ञानानन्तरमूर्ध्वकुण्डलौष्ठायतवृत्तरूपार्थे घट इति प्रत्ययः । उत 'जाति'र्यथा गौरिति, उत 'द्रव्यं' यथा दण्डी, उत 'क्रिया' यथा धावतीति, उत 'गुणो' यथा शुक्ल इति । इत्येवं तव 'संशय' एतेषु । 'स चायुक्तो' वस्तुन एवमनवस्थानात् । कथमिति चेदुच्यते—'यतो' यस्माद् 'वस्तुधर्मो' वस्तुपर्यायो 'न युक्तो' न घटते । कथमित्याह—'अयमेव नैवायमि'ति चेत्येवम् । किमिति चेदुच्यते—सर्वासर्वात्मकत्वाद्वस्तुनः । स्वपरपर्यायद्वारेण वस्तुविशेषश्च शब्दस्तस्मान्न तद्धर्मावधारणं युक्तम् ।।२०७५-७६।।

स्पष्टयन्नाह—'सव्वं चिय'—इत्यादि । 'यतो' यस्मात् 'नियतं' निश्चितं 'सर्वमेव' वस्तु 'सर्वात्मकम्' । कयाऽपेक्षयेत्यत आह—'स्वपरपर्यायापेक्षया' सामान्यापेक्षयेत्यर्थः । तथा 'सर्वं' वस्तु 'असर्वमयमपिविशेषविवक्षया', स्वपर्यायाऽपेक्षयेत्यर्थः । एवं गौतम ! 'विविक्तरूपं' वस्तु, अनेकान्तव्यवस्थानादिति गाथार्थः ।।२०७७।।

निगमयन्नाह—'सामण्णे'त्यादि । 'तेन पदार्थो' गर्भार्थो 'युक्तः' । किंविशिष्ट इत्यत आह—'सामान्यमयो विशेषमयश्च विवक्षाप्राधान्यात्' । कस्येत्यत आह—'वस्तुनो' वाक्यादेः 'सर्वो' निखिलः । अत एवाऽऽह—'विश्वरूपो' नानाकारः, स्वपर'पर्यायापेक्षये'त्यर्थ इति गाथार्थः ।।२०७८।।

तदेवमपनीताशेषाशङ्क इन्द्रभूतिर्विस्मयमगमत्—अहो भगवान् सर्वज्ञ इति । दुरुक्तं प्राक् चिन्तितं भाषितं चासीत् । करोति च ममायमधुना नेत्रयोः शरच्छशीवोत्सवमिति निर्भिन्नग्रन्थिरवोचत्—

भगवन् ! यद्यहं योग्यः प्रव्रज्यायास्त्वयेक्षितः ।
मह्यं प्रदीयतामेषा ततः का कालयापना ।।१।।

'छिन्नम्मी'त्यादि । पुव्वद्धं कण्ठ्यम् । 'सः' गौतमस्वामी 'प्रव्रजितः' । पापाद्व्रजितः 'प्रव्रजितो' दीक्षां प्रतिपन्नः । किंविशिष्ट इत्याह—'श्रमणो' "नासंयतः प्रव्रजती"ति वचनात् । किमेकाकी ? नेत्याह—'पञ्चभिः शतैः सह' परिवृतः 'खण्डिकानां' छात्राणाम् । अनेन तेषामन्ताद् अन्तानुयायिनं बहुमानमाहेति गाथार्थः ।।२०७९।। निर्युक्तिगाथा ४४४।।

एकादशैतानि वादस्थानकानि भविष्यन्त्यत आह—'एव'मित्यादि । अनेन जीवप्रसाधनेन 'कर्मादिष्वपि यत्तुल्यं' तुल्ययोगक्षेमं 'तत्' स्वधिया 'समायोज्यं', न तु साक्षादभिधास्यते, ग्रन्थगौरवभयात् । 'यः पुनर्यत्र' कर्मादिद्वारे 'विशेषः संक्षेपतस्तं तु वक्ष्याम्ये'वेति गाथार्थः ॥२०८०॥ "जीवे"त्ति दारं ॥ पढमो गणधरो सम्मत्तो[1] ॥१॥

सुधासोदरसर्वज्ञागमशोधितान्तःकरणश्रीजिनभद्रगणिक्षमाश्रमणकृते श्रीकोट्याचार्यकोडीकृते

विशेषावश्यकभाष्ये प्रथमो भागः समाप्तः ॥

1 हि has गओ ।